हरजीवन दास संस्कृत ग्रन्थमाला
८
******

# वाराहपुराणम्

सम्पादक :
**श्रीहृषीकेश शास्त्री**








**चौखम्बा अमरभारती प्रकाशन**
भारतीय सांस्कृतिक साहित्य के प्रकाशक व विक्रेता
पोस्ट बाक्स संख्या १२८
के० ३७/१३० गोपाल मन्दिर लेन
वाराणसी–२२१००१ ( भारत )

HARJIVANDAS SANSKRIT GRANTHAMALA

8

******

# The

# VĀRĀHA PURĀṆA

*Edited by*

*PANDIT HṚISHIKEŚA ŚĀSTRĪ*



CHAUKHAMBA AMARABHARATI PRAKASHAN
VARANASI

# PREFACE

The characteristics and the difinite number of the *Purāṇas* and *Upapurāṇas* are well known to our readers; so we need not enter into their details here. The *Purāṇa* under notice, viz. the *Varāhapurāṇa*, belongs to the former class, being the twelfth of them in serial number; consequently it is attributed to *Vedavyāsa*, the father of the *Paurāṇic* Literature, as its author. But it may be well inferred that, the *Varāhapurāṇa*, though originally composed by *Vedavyāsa*, might have been recompiled in its present form in comparatively recent times when the present popular forms of the Hindu religion assumed this sectarian character and *Vaishṇavism* took a deep root in several parts of the country. For we find it chiefly advocating the superiority of the God *Vishṇu* in every legend described in it. Although the date of its recompilation cannot be exactly ascertained, still we think the following *śloka* in the beginning of chapter 218, quite competent to throw some light in the matter.

त्रिः सप्तषट्क्षितिमिते नृपविक्रमस्य
काले गते भगवतो हरिबोधनस्य ।
वीरेश्वरेण सह माधवभट्टनाम्ना,
काश्यां वराहकथितं लिखितं पुराणम् ।।

The *Purāṇa* narrated by *Vishṇu* as *Varāha* or the boar incarnation, was written by *Mādhava Bhaṭṭa* associated with *Vīreśvara* in Benares in 1621, the era of the king Vikrama (known by the name of *Saṃvat*), after the waking of the God *Vishṇu*.

The following is Professor Wilson's account of this work.

"It is narrated by *Vishṇu* as *Varāha* or the boar *incarnation* to the personified Earth. Its extent, however, is not half that specified, little exceeding ten thousand stangas."

Nor can the *Varāhapurāṇa* be regarded as a *Purāṇa* agreeably to the common definition, as it contains but a few scattered and brief allusions to the creation of the world and the reign of kings; it has no detailed genealogies either of the Patriarchal or regal families, and no account of the

reigns of the Manus. Like the *Lingapurāṇa*, it is a religious manual almost wholly occupied with forms of prayer and rules for devotional observances addressed to *Vishṇu*.

Rev. William Taylor in his catalogue of Oriental manuscripts says—

> "The use of the *Purāṇa* in illustrating mythology is considerable. In so far as historical inquiries are concerned, the most remarkable sections are 10 and 11. The latter in particular, very clearly relates to the great exterminating war made against the vetaries of Buddha. The combat of *Durgā* against *Mahishāsura* has been by some termed the combat of personified virtue against personified vice. No doubt there are several personifications and mystic allegories."

The Mss. of *Varāhapurāṇa* are very difficult to procure; so after a long and continuous effort I was able to secure only three complete Mss. (क), (ख) and (ग) to consult with. (क) was borrowed from the library of the *Paṇḍit* Madhusudan of Lahore; I received (ख) from the library of the Asiatic Society of Bengal; and my lamented friend *Paṇḍit Durgāprasāda* of Jeypur in *Rājputānā*, who died only five or six months ago, favoured me with (ग), All these were in *Devanāgarī* character and almost correct. In the course of my editing the work, I got also two Bengali Mss. from my native place, which were incomplete, old and incorrect. I have not given preference to any one of the above in particular. But I have tried to pick up correct passages from every one, and the rejected ones have been placed as different readings in the foot notes, where I have given also the modern forms of nearly all the *ārṣa* words. In fact, I have spared no pains in order to render this edition an useful and correct one, but I do not know how far I have been successful.

I must acknowledge have my deep obligations to my learned friend *Paṇḍit Hariśchandra Kaviratna*, assistant Professor of Sanskrit in the Presidency college, who kindly afforded me material help on this occassion.

—*Hṛishīkeśa Śāstrī*

# संपादकीयम्

**नमस्तस्मै वराहाय लीलयोद्धरते महीम् ।**
**खुरमध्यगतो यस्य मेरुः खणखणायते ॥**

अथेदानीं सप्रश्रयं सामोदं च प्रस्तूयते विद्वज्जनसमक्षं महर्षि-श्रीवेदव्यासप्रणीतम् 'वाराहपुराणम्'। १८९३ खिष्टाब्दे श्रीहृषी-केश-शास्त्रिभिः कलिकातानगर्याम् ऐशियाटिकसोसायटी-संस्थातः यद्यप्ययं ग्रन्थः संशोध्य पूर्वं मुद्रापितः, तथापि तद्ग्रन्थस्याधुना दुर्लभत्वात् तत्प्रकाशनस्यावश्यकतां संचिन्त्य संशोधनपूर्वकं तस्य संपादने प्रवृत्तोऽस्मि ।

पुराणस्य चास्य इतः पूर्वं वारत्रयं प्रकाशनं जातम् ।

१. संस्कृतकालेजाध्यापकेन पं० श्रीहृषीकेशशास्त्रिभिः एतद् इदं-प्रथमतया प्राकाश्यं नीतम् । आंग्लभाषीय-प्राक्कथने तैर्मातृकाणां विवरणमप्युपन्यस्तम्। क-चिह्नाङ्कितमातृकारूपग्रन्थः (MSS) लाहोर-स्थस्य पं० मधुसूदनस्य पुस्तकालयतः प्राप्तः । ख-चिह्नाङ्कितमातृका-रूपग्रन्थः ऐशियाटिकसोसायटी-पुस्तकालयतः प्राप्तः। ग-चिह्नाङ्कित-मातृकारूपग्रन्थः जयपुरस्थस्य पं० दुर्गाप्रसादस्यासीत्। तस्मिन् संस्करणे तत्रभवद्भिः शास्त्रिमहोदयैः आर्ष-प्रयोगस्य साधु-असाधु-प्रयोगस्य च विवेचनमपि पादटिप्पण्यां कृतम् । किन्तु सम्प्रति संस्करणेऽस्मिन् आर्ष-प्रयोग-शुद्धाशुद्धानां विवेकस्य आवश्यकतां नावलोक्य असौ मया त्यक्तः । अत्र मया मुद्रितग्रन्थान्तरात् पाठान्तरं संयोजितम् । ग-चिह्नाङ्कितमातृकारूपग्रन्थः जयपुरस्थस्य पं० दुर्गाप्रसादस्य मातृकां लक्षयति । यद्यप्ययं ग्रन्थः ऐशियाटिक-संस्करणे पूर्णतया आधृतोऽस्ति, तथापि बहुशः अप-पाठः ग्रन्थविस्तरभयात् मया अत्र न दीयते । किन्त्वत्र ग्रन्थरक्षणवाञ्छया इदंप्रथमतया संपादकेन शास्त्रिभिः महो-दयैः कृतम् आंग्लभाषीय-प्राक्कथनं मया अविकलं प्रकाश्यते ।

२. तदनन्तरं १३१३ तमे वङ्गीयाब्दे कलिकातास्थ-वङ्गवासि-मुद्रणालयेन पण्डित श्रीपञ्चाननतर्करत्नसंपादितं संस्करणं वङ्गलिपि-मुद्रितं प्राकाश्य प्रापितम् । किन्तु तर्करत्नमहोदयैः प्रस्तुतग्रन्थविषये मातृकाणां किमपि विवरणं नोपन्यस्तम् ।

३. तदनन्तरं १९२३ तमे क्रिस्तीयसंवत्सरे वेङ्कटेश्वर-प्रेस-मुम्बईतः 'पुराणमिदं' प्रकाशितम् । तत्र पाठ-विषये न कोऽपि विमर्शः कृतः ।

एतदतिरिक्तम् एकं पाठ-समीक्षात्मकं संस्करणं स्व० आनन्द-स्वरूपगुप्तमहोदयैः सम्पादितं सर्वभारतीय-काशिराजन्यास-दुर्ग-रामनगर-वाराणसीतः १९८१ खिष्टाब्दे मुद्रितम्। अस्य पुराणस्य पण्डितअहिभूषणभट्टाचार्यमहोदयकृतः आंग्लभाषानुवादोऽपि एतत्-संस्थातः प्रकाशितः। सम्प्रति हिन्दीभाषानुवादसहितस्य संस्करणस्य प्रकाशने रतेयं संस्था विदुषां रमणाय।

हिन्दी-भाषायाः प्रसारो देशे विदेशेऽप्यस्ति---इति विचिन्त्य सर्व-जनसमुदायस्य च महतीमावश्यकतामवलोक्य एतस्य पुराणस्य हिन्दी-अनुवादोऽपि मया कृतः। ग्रन्थस्यास्य प्रकाशनं संस्करणान्तरे समीक्षात्मक-भूमिकोपेतं भविष्यति-इति अस्मदीया योजना।

अत्र शोधनार्थमपेक्षितान् दुर्लभानपि ग्रन्थान् यथावसरमविलम्बेन मत्कृते संगृहीतवतो 'मुखोपाध्याय' इत्युपाधि-लाञ्छितान् पं० श्री-सातकडिशर्ममहोदयान् (अधुना हस्तिनापुरे 'लाइब्रेरी-कांग्रेस'-संस्थायां कार्यरतान्) सादरं स्मर्यते। तत्रभवतां साहाय्यं विना एतद् दुष्करं कार्यं मया असाध्यमेव स्यात्।

वस्तुतस्तु पुराणमेतत् 'चौखम्बा अमरभारती प्रकाशन' इत्याख्य-प्रकाशनसंस्थासंस्थापकेन श्रीनागरदासगुप्तेन पुनरेतन्मुद्रापयित्वा विद्वत्सूपायनीक्रियते। आशास्महे यत् अन्येषामपि पुराणानां प्रकाशने अवधानं दद्युः प्रकाशक-महाभागाः। अपरञ्च काशीस्थ-चौखम्बासंस्कृतपुस्तकालयाधिकृतानां दुर्लभप्राचीनसंस्कृत-ग्रन्थ-रत्नानां प्रकाशने रतानां श्रीसुन्दरदासगुप्तमहोदयानामपि कृतज्ञता स्वीक्रियते।

एवं संशोधितेऽप्यस्मिन् ग्रन्थे ये केचन मानुषमात्रसुलभा दोषा भवेयुः, ते विद्वद्भिः सदयं क्षन्तव्या इति बद्धाञ्जलिरहमभ्यर्थये—

श्रीवाराहपुराणाख्यः ग्रन्थः संशोधितो मया।<br>
सद्भिः सारश्च ग्राह्योऽत्र स्यादसारो हि मत्कृते॥

अन्ते महावराहरूपिणं यज्ञस्वरूपं तमेव विष्णुमहं प्रणमामि—

महावराहो हविषाम्बुभोजनो, जनार्दनो मे हितकृच्चितीमुखः।<br>
क्षितीधरो मामुदधिप्लवे महान्, स पातु विष्णुः शरणार्थिनं तु माम्॥

—वाराहपुराणम् (८.४६)

मकर संक्रान्ति<br>
संस्कृत-पालि विभाग<br>
काशी हिन्दू विश्वविद्यालय<br>
सं० २०३८ (१४-१-८२)

सप्रश्रयं विनिवेदयति<br>
विदुषां वशंवदः<br>
**सुधाकर मालवीयः**

॥ श्रीः ॥

# वाराहपुराणम्

## प्रथमोऽध्यायः

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥
नमस्तस्मै वराहाय लीलयोद्धरते महीम् ।
खुरमध्यगतो यस्य मेरुः खणखणायते ॥ १ ॥
दंष्ट्राग्रेणोद्धृता गौरुदधिपरिवृता पर्वतैर्निम्नगाभिः
साकं मृत्पिण्डवत्प्राग्बृहदुरुवपुषाऽनन्तरूपेण येन ।
सोऽयं कंसासुरारिर्मुरनरकदशास्यान्तकृत् सर्वसंस्थः
कृष्णो विष्णुः सुरेशो नुदतु मम रिपूनादिदेवो वराहः[1] ॥ २ ॥

सूत उवाच

यस्मिन् काले क्षितिः पूर्वं कल्पवाराहरूपिणा[2] ।
उद्धृता विभुना शक्त्या पप्रच्छ परमेश्वरम् ॥ ३ ॥

धरण्युवाच

कल्पे कल्पे भवानेव मां समुद्धरति प्रभो ।
न चाहं वेद ते मूर्तिमादिसर्गेषु केशव ॥ ४ ॥

वेदेषु चैव नष्टेषु मत्स्यो भूत्वा रसातले । प्रविश्य तानथोत्कृष्य ब्रह्मणे दत्तवानसि ॥५॥
अन्यत्सुरासुरमिते त्वं समुद्रस्य मन्थने । धृतवानसि कौर्म्येण मन्दरं मधुसूदन ॥६॥
पुनर्वराहरूपेण आगच्छन्तीं रसातलम्[3] । उज्जहारैकदंष्ट्रेण भगवन्वै महार्णवात् ॥७॥
अन्यद्धिरण्यकशिपुर्वरदानेन दर्पितः । आबाधमानः पृथिवीं स त्वया विनिपातितः ॥८॥
पुनर्निःक्षत्रिया देव त्वया चापि पुरा कृता । जामदग्न्येन रामेण त्वया भूत्वा सकृत्प्रभो॥
पुनश्च रावणो रक्षः क्षपितं क्षात्रतेजसा । बलिः प्रबद्धो भगवन्त्वया वामनरूपिणा[4] ॥

१. क्वचिदेष श्लोको दृश्यते—
यः संसारार्णवे नौरिव मरणजराव्याधिनक्रोर्म्मिभीति-
भक्तानां भीतिहर्त्ता सुरनरकदशास्यान्तकृल्लीकरूपी ।
विष्णुः सर्वेश्वरोऽयं यमिह कृतधियो लीलया प्राप्नुवन्ति
व्यक्तात्मा नो न पापं प्रभवमनुदिनारातिपक्षः क्षितीशः ॥

२. वराहवपुषा तु सा इति क्वाचित्कः पाठः ।

३. पुनश्च गां जगन्नाथ निमज्जन्तीं रसातलादिति कुत्रचिदुपलभ्यते तन्न मनोरमम् ।

४. नन्दगोष्ठेऽवतीर्य्याऽसौ हतः कंसासुरस्त्वया । साम्प्रतं बुद्धरूपेण तिष्ठसे लोकमोहनः ॥ अयं चाधिकः श्लोकः कैश्चित्पठ्यते ।

न च जानाम्यहं देव तव किञ्चिद्वि चेष्टितम् ।
उद्धृत्य मां कथं सृष्टिं सृजसे किञ्च कारणम् ॥ ११ ॥
सकृद्ध्रियेत कृत्वा च पाल्यते चापि केन वा ।
केन वा सुलभो देवो भवेस्त्वं सततं विभो ॥ १२ ॥
कथञ्च सृष्टेरादिः स्यादवसानं कथं भवेत् ।
कथं युगस्य गणना संख्याऽस्यातु चतुर्युगम् ॥ १३ ॥
को वा विशेषस्तेष्वस्मिन्का वा वाञ्छा महेश्वर ।
यज्वानः के च राजानः के च सिद्धि पराङ्गताः ॥ १४ ॥
एतत्सर्वं समासेन कथयस्व प्रसीद मे । इत्युक्तः क्रोडरूपेण जहास परमेश्वरः ॥१५॥
हसतस्तस्य कुक्षौ तु जगद्धात्री ददर्श ह । रुद्रान्देवान्सवसवः सिद्धसङ्घान्महर्षिभिः[1] ॥
सचन्द्रसूर्यग्रहसप्तलोकानन्तःस्थितांस्तत उपात्तधर्मान् ।
इतीदृशं पश्यति सा समस्तं यावत् क्षितिर्वेपितसर्वगात्रा ॥ १७ ॥
उन्मीलितास्यस्तु यदा महात्मा दृष्टो धरण्याऽमलसर्वगात्र्या ।
तावत्स्वरूपेण चतुर्भुजेन महोदधौ सुप्तमथोऽन्वपश्यत् ॥ १८ ॥
शेषपर्यङ्कशयने सुप्तं देवं जनार्दनम् । दृष्ट्वा तन्नाभिपङ्कोरुहान्तःस्थं तं चतुर्भुजम् ।
कृताञ्जलिपुटा देवी स्तुतिं धात्री जगाद ह ॥ १९ ॥

धरण्युवाच

नमः कमलपत्राक्ष नमस्ते पीतवाससे । नमः सुरारिविध्वंसकारिणे परमात्मने॥२०॥
शेषपर्यङ्कशयने धृतवक्षःस्थलश्रिये । नमस्ते सर्वदेवेश नमस्ते मोक्षकारिणे॥२१॥
नमः शार्ङ्गासिचक्राय जन्ममृत्युविवर्जित । नमो नाभ्युत्थितमहाकमलासनजन्मने॥२२॥
नमो विद्रुमरक्तोष्ठपाणिपल्लवशोभिने । शरणं त्वां प्रपन्नास्मि त्राहि नारीमिनागसम्॥२३॥
पूर्णनीलाञ्जनाकारं वाराहं ते जनार्दन । दृष्ट्वा भीताऽस्मि भूयोऽपि जगत्त्वद्देहगोचरे
इदानीं कुरु मे नाथ दयां त्राहि महाप्रभो ॥ २४ ॥
केशवः पातु मे पादौ जंघे नारायणो मम ।
माधवो मे कटिं पातु गोविन्दो गुह्यमेव च ॥ २५ ॥
नाभिं विष्णुस्तु मे पातु उदरं मधुसूदनः । उरस्त्रिविक्रमः पातु हृदयं पातु वामनः॥२६॥
श्रीधरः पातु मे कण्ठं हृषीकशो मुखं मम । पद्मनाभस्तु नयने शिरो दामोदरो मम॥२७॥
एवं न्यस्य हरेर्न्यासं नामानि जगती तदा ।
नमस्ते भगवन्विष्णो इत्युक्त्वा विरराम ह ॥ २८ ॥

इति वाराहपुराणे सम्बन्धे प्रथमोऽध्यायः ।

---

१. रुद्रान्देवान् सह वसून्सिद्धसंघान् महर्षिभिः ॥ इति क्वाचित्कः पाठः ।

# द्वितीयोऽध्यायः

सूत उवाच

ततस्तुष्टो हरिर्भक्त्या धरण्यात्मशरीरगः ।
मायां प्रकाश्य तेनैव स्थितो वाराहमूर्तिना ॥ १ ॥
जगाद किन्ते सुश्रोणि प्रश्नमेतं सुदुर्लभम् । कथयामि पुराणस्य विषयं सर्वशास्त्रतः॥२॥
पुराणानां हि सर्वेषामयं साधारणः स्मृतः ।
श्लोकं धरणि निश्चित्य निःशेषं त्वमतः शृणु ॥ ३ ॥

वराह उवाच

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥४॥
आदिसर्गमहं तावत्कथयामि वरानने । यस्मादारभ्य देवानां राज्ञां चरितमेव च ॥५॥
ज्ञायते चतुरंशश्च परमात्मा सनातनः ॥ ६ ॥
आदावहं व्योम महत्ततोऽणुरेकैव मत्तः प्रबभूव बुद्धिः ।
त्रिधा तु सा सत्त्वरजस्तमोभिः पृथक् पृथक् सत्त्वरूपैरुपेता ॥ ७ ॥
तस्मिंस्त्रिकेऽहं तमसो महान्स सदोच्यते सर्वविदां प्रधानः ।
तस्मादपि क्षेत्रविदूर्जितो यो बभूव बुद्धिस्तु ततो बभूव ॥ ८ ॥
तस्मात्तु तेभ्यः श्रवणादिहेतवस्ततोऽक्षमाला जगतो व्यवस्थिता ।
भूतैर्गतैरेव च पिण्डमूर्त्तिर्मया भद्रे विहिता त्वात्मनैव ॥ ९ ॥
शून्यं त्वासीत्तत्र शब्दस्तु खं च तस्माद्वायुस्तत एवानु तेजः ।
तस्मादापस्तत एवानु देवि मया सृष्टा भवती भूतधात्री ॥ १० ॥
योगे पृथिव्यां जलवत्ततोऽपि सबुद्बुदं कललं त्वण्डमेव ।
तस्मिन्प्रवृद्धिं च गतेऽहमासीदापोमयश्चात्मनात्मानमादौ ॥ ११ ॥
सृष्ट्वा नारस्ता अथो तत्र चाहं येनैव स्यान्नाम नारायणेति ।
कल्पे कल्पे तत्र शयामि भूयः सुप्तस्य मे नाभिजः स्याद् यथाद्य ॥ १२ ॥
एवम्भूतस्य मे देवि नाभिपद्मे चतुर्मुखः । उत्तस्थौ स मया प्रोक्तः प्रजाः सृज महामते॥
एवमुक्त्वा तिरोभावं गतोऽहं सोऽपि चिन्तयन् ।
आस्ते यावज्जगद्धात्रि नाध्यगच्छत्तु किञ्चन ॥ १४ ॥
तावत्तस्य महारोपो ब्रह्मणोऽव्यक्तजन्मनः । सम्भूय तेन बालः स्यादेको रोषात्मसम्भवः॥
यो रुदन्वारितस्तेन ब्रह्मणाव्यक्तमूर्त्तिना । ब्रवीति नाम मे देहि तस्य रुद्रेति सो ददौ ॥
सोऽपि तेन सृजस्वेति प्रोक्तो लोकमिमं शुभे ।
अशक्तः सोऽथ सलिले ममज्ज तपसे धृतः ॥ १७ ॥
तस्मिन्सलिलमग्ने तु पुनरन्यं प्रजापतिम् । ब्रह्मा ससर्ज्ज भूतेषु दक्षिणाङ्गुष्ठतः परम् ॥
वामे चैव तथाङ्गुष्ठे तस्य पत्नीमथासृजत् ॥ १९ ॥

स तस्यां जनयामास मनुं स्वायम्भुवं प्रभुः ।
तस्मात्सम्भाविता बुद्धिः प्रजानां ब्रह्मणा पुरा ॥ २० ॥

धरण्युवाच

विस्तरेण ममाचक्ष्व आदिसर्गं सुरेश्वर ।
ब्रह्मा नारायणाख्योऽयं कल्पादौ चाभवद् यथा ॥ २१ ॥

श्रीभगवानुवाच

ससर्ज सर्वभूतानि यथा नारायणात्मकः । कथ्यमानं मया देवि तदशेषं क्षिते शृणु॥
गतकल्पावसाने तु निशि सुप्तः स्थितः शुभे । सत्त्वोद्रिक्तस्तथा ब्रह्मा शून्यं लोकमवैक्षत॥
नारायणः परोऽचिन्त्यः पराणामपि पूर्वजः । ब्रह्मस्वरूपो भगवाननादिः सर्वसम्भवः॥
इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति । ब्रह्मस्वरूपिणं देवं जगतः प्रभवाप्ययम् ॥२५॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः॥
सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा । अबुद्धिपूर्वकस्तस्य प्रादुर्भूतस्तमोमयः॥
तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः॥

पञ्चधावस्थितः सर्गो ध्यायतः प्रतिबोधवान् ।
स मुख्यसर्गो विज्ञेयः सर्गविद्भिर्विचक्षणैः ॥ २९ ॥
पुनरन्यमभूत्तस्य ध्यायतः सर्गमुत्तमम् ।
तिर्यक्स्रोतस्तु वै यस्मात्तिर्यक्स्रोतस्तु वै स्मृतः ॥ ३० ॥
पश्वादयस्ते विख्याता उत्पथग्राहिणः कृताः ।
तमप्यसाधनं मत्वा तिर्यक्स्रोतश्चतुर्मुखः ॥ ३१ ॥
ऊर्ध्वस्रोतस्त्रिधा यस्तु सात्त्विको धर्मवर्तनः ।
तथोर्ध्वचारिणो देवाः सर्वे गर्भसमुद्भवाः ॥ ३२ ॥
तदा सृष्ट्वान्यसर्गन्तु तदा दध्यौ प्रजापतिः ।
असाधकांस्तु तान्मत्वा मुख्यसर्गादिसम्भवान् ॥ ३३ ॥
ततः सञ्चिन्तयामास अर्वाक्स्रोतस्तु स प्रभुः ।
अर्वाक्स्रोतसि चोत्पन्ना मनुष्याः साधका मताः ॥ ३४ ॥

ते च प्रकाशबहुलास्तमोद्रिक्ता रजोऽधिकाः । तस्मात्ते दुःखबहुला भूयोभूयश्च कारिणः॥
इत्येते कथिताः सर्गाः षडेते सुभगे तव । प्रथमो महतः सर्गस्तन्मात्राख्यो द्वितीयकः॥
वैकारिकस्तृतीयस्तु सर्गश्चेन्द्रियकः स्मृतः । इत्येष प्राकृतः सर्गः संभूतो बुद्धिपूर्वकः ३७॥

मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ।
तिर्यक्स्रोतश्च यः प्रोक्तस्तैर्यक्स्रोतः स उच्यते ॥ ३८ ॥
तथोर्ध्वस्रोतसां श्रेष्ठः सप्तमः स तु मानवः ।
अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च सः ॥ ३९ ॥

पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः । प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः॥
इत्येते वै समाख्याता नव सर्गाः प्रजापतेः । प्राकृता वैकृताश्चैव जगतो मूलहेतवः॥
इत्येते कथिताः सर्गाः किमन्यच्छ्रोतुमिच्छसि ॥ ४१ ॥

धरण्युवाच

नवधा सृष्टिरुत्पन्ना ब्रह्मणोऽव्यक्तजन्मनः ।
कथं सा ववृधे देव एतन्मे कथयाच्युत ॥ ४२ ॥

प्रथमं ब्रह्मणा सृष्टा रुद्राद्यास्तु तपोधनाः । सनकादयस्ततः सृष्टा मरीच्यादय एव च ॥
मरीचिरत्रिश्च तथा अङ्गिराः पुलहः क्रतुः । पुलस्त्यश्च महातेजाः प्रचेता भृगुरेव च ॥
नारदो दशमश्चैव वशिष्ठश्च महातपाः ॥ ४४ ॥
सनकादयो निवृत्त्याख्ये तेन धर्मे प्रयोजिताः ।
प्रवृत्त्याख्ये मरीच्याद्या मुक्त्वैकं नारदं मुनिम् ॥ ४५ ॥
योऽसौ प्रजापतिस्त्वाद्यो दक्षिणाङ्गुष्ठसम्भवः ।
तस्यादौ तत्र वंशे तु जगदेतच्चराचरम् ॥ ४६ ॥
देवाश्च दानवाश्चैव गन्धर्वोरगपक्षिणः ।
सर्वे दक्षस्य कन्यासु जाताः परमधार्मिकाः ॥ ४७ ॥
योऽसौ रुद्रेति विख्यातः पुत्रः क्रोधसमुद्भवः ।
भ्रुकुटीकुटिलात्तस्य ललाटात्परमेष्ठिनः ॥ ४८ ॥
अर्धनारीनरवपुः प्रचण्डोऽतिभयङ्करः । विभजात्मानमित्युक्त्वा ब्रह्म चान्तर्दधे पुनः॥
तथोक्तोऽसौ द्विधा स्त्रीत्वं पुरुषत्वं चकार सः । बिभेद पुरुषत्वं च दशधा चैकधा च सः॥
ततस्त्वेकादश ख्याता रुद्रा ब्रह्मसमुद्भवाः ॥ ५१ ॥
अयमुद्देशतः प्रोक्तो रुद्रसर्गो मयाऽनघे । इदानीं युगमाहात्म्यं कथयामि समासतः ॥
कृतं त्रेता द्वापरञ्च कलिश्चेति चतुर्युगम् ॥ ५३ ॥
एतस्मिन् ये महासत्त्वा राजानो भूरिदक्षिणाः । देवासुराश्च ये चक्रुर्धर्मं कर्म च तच्छृणु॥
आसीत्प्रथमकल्पे तु मनुः स्वायम्भुवः पुरा । तस्य पुत्रद्वयं जज्ञे अतिमानुषचेष्टितम्॥
प्रियव्रतोत्तानपादनामानं धर्मवत्सलम् । तत्र प्रियव्रतो राजा महायज्वा तपोबलः॥
स चेष्ट्वा विविधैर्यज्ञैर्विपुलैर्भूरिदक्षिणैः । सप्तद्वीपेषु संस्थाप्य भरतादीन् सुतान्निजान्॥
स्वयं विशालां वरदां गत्वा तेपे महत्तपः ॥ ५७ ॥
तस्मिन् स्थितस्य तपसि राज्ञो वै चक्रवर्तिनः । उपेयान्नारदस्तत्र दिदृक्षुर्धर्मचारिणम्॥
स दृष्ट्वा नारदं व्योम्नि ज्वलद्भास्करतेजसम् ।
अभ्युत्थानेन राजेन्द्र उत्तस्थौ हर्षितस्तदा ॥ ५९ ॥
तस्यासनञ्च पाद्यञ्च सम्यक् कृत्वा निवेद्य वै ।
स्वागतादिभिरालापैः परस्परमवोचताम् ॥ ६० ॥
कथान्ते नारदं राजा पप्रच्छ ब्रह्मवादिनम् ॥ ६१ ॥

प्रियव्रत उवाच

भगवन् किञ्चिदाश्चर्यमेतस्मिन् कृतसंज्ञिते।
युगे दृष्टं श्रुतं चापि तन्मे कथय नारद ॥ ६२ ॥

नारद उवाच

आश्चर्यमेकं दृष्टं मे तच्छृणुष्व प्रियव्रत। ह्यस्तनेऽहनि राजेन्द्र श्वेताख्यं गतवाहनम् ॥
द्वीपं तत्र सरो दृष्टं फुल्लपङ्कजमालिनम्। सरसस्तस्य तीरे तु कुमारीं पृथुलोचनाम् ॥
दृष्ट्वाहं विस्मयापन्नस्तां कन्यामायतेक्षणाम्। पृष्टवानस्मि राजेन्द्र तदा मधुरभाषिणीम् ॥

काऽसि भद्रे कथं वासि किं वा कार्यमिह त्वया।
कर्तव्यं चारुसर्वाङ्गि तन्ममाचक्ष्व शोभने ॥ ६६ ॥

एवमुक्ता मया सा हि मां दृष्ट्वाऽनिमिषेक्षणा।
स्मृत्वा तूष्णीं स्थिता यावत्तावन्मे ज्ञानमुत्तमम् ॥ ६७ ॥

विस्मृतं सर्ववेदाश्च सर्वशास्त्राणि चैव हि।
योगशास्त्राणि शिक्षाश्च वेदानां स्मृतयस्तथा ॥ ६८ ॥

सर्वं दृष्ट्वैव मे राजन् कुमार्याऽपहृतं क्षणात्।
ततोऽहं विस्मयाविष्टश्चिन्ताशोकसमन्वितः ॥ ६९ ॥

तामेव शरणं गत्वा यावत्पश्यामि पार्थिव। तावद्दिव्यः पुमांस्तस्याः शरीरे समदृश्यत ॥
तस्यापि पुंसो हृदये त्वपरस्तस्य चोरसि। अन्यो रक्तेक्षणः श्रीमान्द्वादशादित्यसन्निभः ॥
एवं दृष्टाः पुमांसोऽत्र त्रयः कन्याशरीरगाः। क्षणेन तत्र कन्यैका न तान् पश्यामि सुव्रत ॥
ततः पृष्टा मया देवी सा कुमारी कथं मम। वेदा नष्टा ममाचक्ष्व भद्रे तन्नाशकारणम् ॥

कन्योवाच

माताहं सर्ववेदानां सावित्री नाम नामतः।
मां न जानासि येन त्वं ततो वेदा हृतास्तव ॥ ७४ ॥

एवमुक्ते तया राजन्विस्मयेन तपोधन। पृष्टा त एते पुरुषा एतत्कथय शोभने ॥७५॥

कन्योवाच

य एष मच्छरीरस्थः सर्वाङ्गश्चारुशोभनः। एष ऋग्वेदनामा तु वेदो नारायणः स्वयम्।
वह्निभूतो दहत्याशु पापान्युच्चारणादनु ॥ ७६ ॥

एतस्य हृदये योऽयं दृष्ट आसीत्त्वयात्मजः। स यजुर्वेदरूपेण स्थितो ब्रह्मा महाबलः ॥
तस्याप्युरसि संविष्टो य एष शुचिरुज्ज्वलः। स सामवेदनामा तु रुद्ररूपी व्यवस्थितः ॥
एष आदित्यवत्पापान्याशु नाशयते स्मृतः ॥ ७९ ॥

एते त्रयो महावेदा ब्रह्मन् देवास्त्रयः स्मृताः। एते वर्णा अकाराद्याः सवनान्यत्र वै द्विज ॥
एतत्सर्वं समासेन कथितं ते द्विजोत्तम। गृहाण वेदाञ्छास्त्राणि सर्वज्ञत्वञ्च नारद ॥

एतस्मिन्वेदसरसि स्नानं कुरु महाद्विज । कृते स्नानेऽन्यजन्मीयं येन स्मरसि सत्तम ॥
एवमुक्त्वा तिरोभावं गता कन्या नराधिप । अहं तत्र कृतस्नानस्त्वां दिदृक्षुरिहागतः ॥

इति वराहपुराणे आदिभूतवृत्तान्ते द्वितीयोऽध्यायः ॥ २ ॥

---

# तृतीयोऽध्यायः

प्रियव्रत उवाच

अन्यस्मिन् भगवज्जन्मन्यासीद्यत्त्वद्विचेष्टितम् । सर्वं कथय देवर्षे महत्कौतूहलं हि मे ॥

नारद उवाच

स्नातस्य मम राजेन्द्र तस्मिन्वेदसरस्यथ ।
सावित्र्याश्च वचः श्रुत्वा तस्मिञ्जन्मसहस्रिकम् ।
स्मरणं तत्क्षणाज्जातं शृणु जन्मान्तरं मम ॥ २ ॥

अस्त्यवन्तीपुरं राजंस्तत्राहं प्राग्द्विजोत्तमः । नाम्ना सारस्वतः पूर्वं वेदवेदाङ्गपारगः ॥
बहुभृत्यपरीवारो बहुधान्यश्च पार्थिव । अन्यस्मिन् कृतसंज्ञे तु युगे परमबुद्धिमान् ॥

ततो ध्यातं मयैकान्ते किमनेन करोम्यहम् ।

द्वन्द्वेन सर्वमेतद्धि न्यस्त्वा पुत्रेषु याम्यहम् । तपसे धृतसङ्कल्पः सरः सारस्वतं द्रुतम् ॥

एवं चिन्त्य मया पृष्टः कर्मकाण्डेन केशवः ।
श्राद्धैश्च पितरो देवा यज्ञैश्चान्ये तथा जनाः ॥ ६ ॥

ततोऽहं निर्गतो राजंस्तपसे धृतमानसः । सारस्वतं नाम सरो यदेतत्पुष्करं स्मृतम् ॥

तत्र गत्वा मया विष्णुः पुराणः पुरुषः शिवः ।
आराधितो मया भक्त्या जपन्नारायणात्मकम् ॥ ८ ॥

ब्रह्मपारमयं राजञ्जपता परमस्तवम् । ततो मे भगवांस्तुष्टः प्रत्यक्षत्वं जगाम ह ॥ ९ ॥

प्रियव्रत उवाच

कीदृशं ब्रह्मपारन्तु श्रोतुमिच्छामि सत्तम । कथयस्व प्रसादेन देवर्षे सुप्रसन्नधीः ॥१०॥

नारद उवाच

परं पराणाममृतं पुराणं पारं परं विष्णुमनन्तवीर्यम् ।
नमामि नित्यं पुरुषं पुराणं परायणं पारगतं पराणाम् ॥ ११ ॥
पुरातनं त्वप्रतिमं पुराणं परापरं पारगमुग्रतेजसम् ।
गम्भीरगम्भीरधियां प्रधानं नतोऽस्मि देवं हरिमीशितारम् ॥ १२ ॥
परात्परं चापरमं प्रधानं परास्पदं शुद्धपदं विशालम् ।
परात्परेशं पुरुषं पुराणं नारायणं स्तौमि विशुद्धभावः ॥ १३ ॥
पुरा पुरं शून्यमिदं ससर्ज तदा स्थितत्वात्पुरुषः प्रधानम् ।
जने प्रसिद्धः शरणं ममास्तु नारायणो वीतमलः पुराणः ॥ १४ ॥

पारं परं विष्णुमपाररूपं पुरातनं नीतिमतां प्रधानम् ।
धृतक्षमं शान्तिधरं क्षितीशं शुभं सदा स्तौमि महानुभावम् ॥१५॥
सहस्रमूर्धानमनन्तपादमनन्तबाहुं शशिसूर्यनेत्रम् ।
तमक्षरं क्षीरसमुद्रनिद्रं नारायणं स्तौम्यमृतं परेशम् ॥ १६ ॥
त्रिवेदगम्यं त्रिनवैकमूर्त्तं त्रिशुक्लसंस्थं त्रिहुतांशभेदम् ।
त्रितत्त्वलक्ष्यं त्रियुगं त्रिनेत्रं नमामि नारायणमप्रमेयम् ॥ १७ ॥
कृते सितं रक्ततनुं तथा च त्रेतायुगे पीततनुं पुराणम् ।
तथा हरिं द्वापरतः कलौ च कृष्णीकृतात्मानमथो नमामि ॥ १८ ॥
ससर्ज यो वक्त्रत एव विप्रान् भुजान्तरे क्षत्रमथोरुयुग्मे ।
विशः पदाग्रेषु तथैव शूद्रान् नमामि तं विश्वतनुं पुराणम् ॥ १९ ॥
परात्परं पारगतं प्रमेयं युधाम्पतिं कार्यत एव कृष्णम् ।
गदासिचर्मण्यभृतोत्थपाणिं नमामि नारायणमप्रमेयम् ॥ २० ॥
इति स्तुतो देववरः प्रसन्नो जगाद मां नीरदतुल्यघोषः ।
वरं वृणीष्वेत्यसकृत्ततोऽहं तस्यैव देहे लयमिष्टवांश्च ॥ २१ ॥

इति श्रुत्वा वचो मह्यं देवदेवः सनातनः । उवाच प्रकृतिं गच्छ विप्रैतत्तु प्रयोजनम्॥
नारं पानीयमित्युक्तं पितॄणां तद्ददौ भवान् । तदाप्रभृति ते नाम नारदेति भविष्यति॥
एवमुक्त्वा गतो देवः सद्योऽदर्शनमुच्चकैः । अहं कलेवरं त्यक्त्वा कालेन तपसा तदा॥
ब्रह्मलोके लयं प्राप्तस्तदोत्पत्तिं च पार्थिव ॥ २५ ॥
दिवसश्च पुनः सृष्टो दशभिस्तनयैः सह । दिनादिर्यो हि देवस्य ब्रह्मणोऽव्यक्तजन्मनः ॥
स सृष्ट्यादिः समस्तानां देवादीनां न संशयः । सर्वस्य जगतः सृष्टिरेषैव प्रभुधर्मतः॥
एतन्मे प्राकृतं जन्म यन्मां पृच्छसि पार्थिव ॥ २८ ॥
यस्मान्नारायणं ध्यात्वा प्राप्तोऽस्मि गुरुतां नृप। तस्मात्त्वमपि राजेन्द्र भव विष्णुपरायणः॥
इति वराहपुराणे आदिभूतवृत्तान्ते नारदजन्मोपाख्यानो नाम तृतीयोऽध्यायः ॥३॥

---

# चतुर्थोऽध्यायः

धरण्युवाच

योऽसौ नारायणो देवः परमात्मा सनातनः । भगवान् सर्वभावेन उताहो नेति शंस मे॥

वराह उवाच

मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ।
रामो रामश्च कृष्णश्च बुद्धः कल्की च ते दश ॥ २ ॥
इत्येताः कथितास्तस्य मूर्तयो भूतधारिणि ।
दर्शनं प्राप्तुमिच्छूनां सोपानानि च शोभने ॥ ३ ॥

यत्तस्य परमं रूपं तन्न पश्यन्ति देवताः ।
अस्मदादिस्वरूपेण पूरयन्ति ततो धृतिम् ॥ ४ ॥
ब्रह्मा भगवतो मूर्ती राजसस्तामसस्तथा ।
याभिः संस्थाप्यते विश्वं स्थितौ सञ्चाल्यते च ह ॥ ५ ॥
त्वमेका तस्य देवस्य मूर्तिराद्या धरा धरे ।
द्वितीया सलिलं मूर्तिस्तृतीया तैजसी स्मृता ॥ ६ ॥
चतुर्थी वायुमूर्तिः स्यादाकाशाख्याऽथ पञ्चमी ।
एतास्तु मूर्तयस्तस्य क्षेत्रज्ञत्वं हि मद्धियाम् ॥
मूर्तित्रयं तथा तस्य इत्येताश्चाष्टमूर्तयः ॥ ७ ॥
अभिव्याप्तमिदं सर्वं जगन्नारायणेन ह ।
इत्येतत्कथितं देवि किमन्यच्छ्रोतुमिच्छसि ॥ ८ ॥

धरण्युवाच

नारदेनैवमुक्तस्तु तदा राजा प्रियव्रतः । कृतवान् किं ममाचक्ष्व प्रसादात्परमेश्वर ॥९॥

वराह उवाच

भवतो सप्तधा कृत्वा पुत्राणां च प्रदाय सः । प्रियव्रतस्तपस्तेपे नारदाच्छ्रुतविस्मयः॥
नारायणात्मकं ब्रह्म समाराध्य स्वयम्भुवः । ततः स तद्गतमनाः परं निर्वाणमाप्तवान् ॥
शृणु चान्यद्वरारोहे यद्वृत्तं परमेष्ठिनः । आराधनाय च यतः पुराकाले नृपस्य ह ॥१२॥
आसीदश्वशिरा नाम राजा परमधार्मिकः । सोऽश्वमेधेन यज्ञेन यष्ट्वा सुबहुदक्षिणः ॥
स्नातश्चावभृथे सोऽथ ब्राह्मणैः परिवारितः । यावदास्ते स राजर्षिस्तावद्योगिवरो मुनिः॥
आययौ कपिलः श्रीमाञ्जैगीषव्यश्च योगिराट् ॥ १४ ॥
ततस्त्वरितमुत्थाय स राजा स्वागतक्रियाम् । चकार परया युक्तः स मुदा राजसत्तमः ॥
तावर्चितावासनगौ दृष्ट्वा देवौ महाबलः। पप्रच्छ तौ तिग्मधियौ योगज्ञौ स्वेच्छयागतौ॥
भवन्तौ संशयं विप्रौ पृच्छामि पुरुषोत्तमौ । कथमाराधयेद्देवं हरिं नारायणं परम् ॥

विप्रावूचतुः

क एष प्रोच्यते राजंस्त्वया नारायणो गुरुः । आवां नारायणौ द्वौ तु त्वत्प्रत्यक्षगतौ नृप॥

अश्वशिरा उवाच

भवन्तौ ब्राह्मणौ सिद्धौ तपसा दग्धकिल्बिषौ। कथं नारायणावावामिति वाक्यमथेरितम्॥
शङ्खचक्रगदापाणिः पीतवासा जनार्दनः । गरुडस्थो महादेवः कस्तस्य सदृशो भुवि॥२०॥
तस्य राज्ञो वचः श्रुत्वा तौ विप्रौ शंसितव्रतौ । जहसतुः पश्य विष्णुं राजन्निति जजल्पतुः॥
एवमुक्त्वा स कपिलः स्वयं विष्णुर्बभूव सः । जैगीषव्यश्च गरुडस्तत्क्षणं समजायत ॥
ततो हाहाकृतं त्वासीत्तत्क्षणाद्राजमण्डलम् ॥ २३ ॥
दृष्ट्वा नारायणं देवं गरुडस्थं सनातनम् । कृताञ्जलिपुटो भूत्वा ततो राजा महायशाः॥

उवाच शाम्यतां विप्रौ नायं विष्णुरथेदृशः। यस्य ब्रह्मा समुत्पन्नो नाभिपङ्कजमध्यगः॥
तस्माच्च ब्रह्मणो रूढः स विष्णुः परमेश्वरः॥ २९॥
इति राजवचः श्रुत्वा तदा तौ मुनिपुंगवौ। चक्रतुः परमां मायां योगमायाविशारदौ[1]॥
कपिलः पद्मनाभस्तु जैगीषव्यः प्रजापतिः। कमलस्थो बभौ ब्रह्मा तस्माद्रुद्रः प्रभाकरः॥
ददर्श राजा रक्ताक्षं कालानलसमद्युतिम्। नेक्ष्यो भवति विश्वेशो मायैषा योगिनां सदा॥
सर्वव्यापी हरिः श्रीमानिति राजा जगाद ह। ततो वाक्यावसाने तु तस्य राज्ञो हि संसदि॥
मत्कुणा मशका यूका भ्रमराः पक्षिणोरगाः॥ ३०॥
अश्वा गावो द्विपाः सिंहा व्याघ्रा गोमायवो मृगाः।
अन्येऽपि पशवः कीटा ग्राम्यारण्याश्च सर्वशः। दृश्यन्ते राजभवने कोटिशो भूतधारिणि॥
तं दृष्ट्वा भूतसङ्घातं राजा विस्मितमानसः। यावच्चिन्तयते किं स्यादेतदित्यवगम्य च॥
जैगीषव्यस्य माहात्म्यं कपिलस्य च धीमतः। कृताञ्जलिपुटो भूत्वा स राजाऽश्वशिरास्तदा॥
पप्रच्छ तावृषी भक्त्या किमिदं द्विजसत्तमौ॥ ३३॥

द्विजावूचतुः

आवां पृष्टौ त्वया राजन् कथं विष्णुरिहेज्यते। प्राप्यते च महाराज तेनेदं दर्शितं तव॥
सर्वज्ञस्य गुणा ह्येते ये राजंस्तव दर्शिताः। स च नारायणो देवः सर्वज्ञः कामरूपवान्॥
सोऽन्यत्र संस्थितः क्वापि प्राप्यते मनुजैः किल। आराधनं न चैतस्य परमार्थं भविष्यति॥
किन्तु सर्वशरीरस्थः परमात्मा जगत्पतिः। स्वदेहे दृश्यते भक्त्या नैकस्थानगतस्तु सः॥
अतोऽर्थं दर्शितं रूपं देवस्य परमात्मनः। आवयोस्तव राजेन्द्र प्रतीतिः स्याद्यथा तव॥
एवं सर्वगतो विष्णुस्तव देहे जनेश्वर। मन्त्रिणां भृत्यसङ्घस्य सुराद्या ये प्रदर्शिताः॥
पशवः कीटसङ्घाश्च तेऽपि विष्णुमया नृप। भावनान्तु दृढां कुर्यायतः सर्वमयो हरिः॥
नान्यत्तत्सदृशं भूतमिति भावेन सेव्यताम्। एष ते ज्ञानसद्भावस्तव राजन् प्रकीर्त्तितः॥
परिपूर्णेन भावेन स्मर नारायणं गुरुम्।
पूजोपहारैर्धूपैश्च ब्राह्मणानाञ्च तर्पणैः। ध्यानेन सुस्थितेनाशु सुप्राप्यः परमेश्वरः॥४२॥
इति वराहपुराणे आदिकृतवृत्तान्ते चतुर्थोऽध्यायः।

---

## पञ्चमोऽध्यायः

अश्वशिरा उवाच

भवन्तौ मम सन्देहमेकं छेत्तुमिहार्हतः। येन च्छिन्नेन जायेत मम संसारनिर्वृतिः॥१॥
एवमुक्तो नृपतिना तदा योगिवरो मुनिः। कपिलः प्राह धर्मात्मा राजानं यजतां वरम्॥

कपिल उवाच

कस्ते मनसि सन्देहो राजन् परमधार्मिक। छेनद्मि येन तच्छ्रुत्वा ब्रूहि यत्तेऽभिवाञ्छितम्॥

---

१. योगमायां विशेषतः इति पाठान्तरम्।

अश्वशिरा उवाच

कर्मिणा प्राप्यते मोक्ष उताहो ज्ञानिना मुने। एतन्मे संशयं छिन्धि यदि मेऽनुग्रहः कृतः॥

कपिल उवाच

इमम्प्रश्नं महाराज पुरा पृष्टो बृहस्पतिः। रैभ्येण ब्रह्मपुत्रेण राज्ञा च वसुना तथा ॥५॥
वसुरासीन्नृपश्रेष्ठो विद्वान्दानपतिः पुरा। चाक्षुषस्य मनोः काले ब्रह्मणोऽन्वयवर्धनः॥६॥
वसुः स्म ब्रह्मणः सद्म गतवांस्तद्दिदृक्षया। पथि चैत्ररथं दृष्ट्वा विद्याधरवरं नृप॥
अपृच्छच्च वसुः प्रीत्या ब्रह्मणोऽवसरं प्रभो ॥ ७ ॥
सोऽब्रवीद्देवसमितिर्वर्तते ब्रह्मणो गृहे। एवं श्रुत्वा वसुस्तस्थौ द्वारि ब्रह्मौकसस्तदा ॥८॥
तावत्तत्रैव रैभ्यस्तु आजगाम महातपाः। स राजा प्रीतिमानासीद्वसुः सम्पूर्णमानसः॥
उवाच पूजयित्वाग्रे क्व प्रयातोऽसि वै मुने ॥ १० ॥

रैभ्य उवाच

अहं बृहस्पतेः पार्श्वादागतोऽस्मि महानृप। किञ्चित्कार्यान्तरं प्रष्टुमगाद्देवपुरोहितम्॥
एवं ब्रुवति रैभ्ये तु ब्रह्मणस्तन्महत्सदः। उत्तस्थौ स्वानि धिष्ण्यानि गता देवगणाः प्रभो॥
तावद्बृहस्पतिस्तत्र रैभ्येण सह संविदम्। कृत्वा स्वधिष्ण्यमगदद्वसुना चानुपूजितः ॥१३॥
रैभ्य आङ्गिरसो राजा वसुश्चोपविवेश ह। उपविष्टेषु राजेन्द्र तेषु नृष्वपि सोऽब्रवीत्॥
बृहस्पतिर्देवगुरू रैभ्यं वचनमन्तिके। किं करोमि महाभाग वेदवेदाङ्गपारग ॥१५॥

रैभ्य उवाच

बृहस्पते कर्मिणा किं प्राप्यते ज्ञानिनाऽथवा। मोक्ष एतन्ममाचक्ष्व पृच्छतः संशयं प्रभो॥

बृहस्पतिरुवाच

यत्किञ्चित्कुरुते कर्म पुरुषः साध्वसाधु वा।
सर्वं नारायणे न्यस्य कुर्वन्नपि न लिप्यते ॥ १७ ॥
श्रूयते च द्विजश्रेष्ठ संवादो विप्रलुब्धयोः। आत्रेयो ब्राह्मणः कश्चिद्वेदाभ्यासरतो मुनिः॥
तपस्यभिरतः प्रातःस्नायी त्रिषवणे रतः। नाम्ना संयमनः पूर्वमेकस्मिन्दिवसे नदीम्॥
धर्मारण्ये गतः स्नातुं धन्यां भागीरथीं शुभाम् ॥ १९ ॥
तत्रासीनं महायूथं हरिणानां विचक्षणः॥
लुब्धो निष्ठुरको नाम धनुष्पाणिः कृतान्तवत्।
आययौ तं जिघांसुः सन्सज्यं संयुज्य सायकम् ॥ २० ॥
ततः संयमनो विप्रो दृष्ट्वा तं मृगयारतम्। वारयामास मा भद्र जीवघातमिमङ्कुरु ॥२१॥
एतच्छ्रुत्वा वचो व्याधः स्मितपूर्वमिदं वचः।
उवाच नाहं हिंसामि पृथग्जीवान्द्विजोत्तम ॥ २२ ॥
परमात्मा त्वयं भूतैः क्रीडते एकवत् स्वयम्।
कृता मायावली मन्त्रैस्तद्वदेतन्न संशयः ॥ २३ ॥

अहंभावः सदा ब्रह्मन्न विधेयो मुमुक्षुभिः । प्राणयात्रारतं सर्वं जगदेतद्विचेष्टितम् ।

तत्राहमिति यः शब्दः स साधुत्वं न गच्छति ।
इत्याकर्ण्य स विप्रेन्द्रो द्विजः संयमनस्तदा ।
विस्मयेनाब्रवीद्वाक्यं लुब्धं निष्ठुरकं द्विजः ॥ २५ ॥
किमेतदुच्यते भद्र प्रत्यक्षं हेतुमद्वचः ॥ २६ ॥
एतच्छ्रुत्वा पुनर्विप्रं लुब्धकः प्राह धर्मवित् ।
कृत्वा लोहमयं जालं तस्याधो ज्वलनं ददौ ॥ २७ ॥

दत्तवह्निं द्विजं प्राह ज्वाल्यतां काष्ठसञ्चय । ततो विप्रो मुखेनाग्निं प्रज्वाल्य विरराम ह॥
ज्वलिते तु पुनर्वह्नौ तं जालं लोहसम्भवम् । गवाक्षैर्निर्गतज्वालं बभौ कादम्बिगोलवत् ॥
पृथक् पृथक् सहस्राणि निश्चेलुर्ज्वलनार्चिषः । एकस्थानगतस्यापि वह्ने रायसजालकैः ३०॥
ततो लुब्धोऽब्रवीद्विप्रमेकां ज्वालां महामुने । गृहाण येन शेषाणां करिष्यामोह नाशनम् ॥
एवमुक्त्वा हुताशे तु तोयपूर्णघटं द्रुतम् । चिक्षिपे सहसा वह्निः प्रशशामाथ पूर्ववत् ॥

ततोऽब्रवील्लुब्धकस्तु ब्राह्मणं तं तपोधनम् ।

भगवन् या त्वया ज्वाला गृहीतासीद्धुताशनात्। प्रयच्छ येन मार्गेण मांसान्यानाय्य भक्षये॥
एवमुक्तास्तदा विप्रो यावदायसजालकम् । पश्यत्येव न तत्राग्निर्मूलनाशे गतः क्षयम्॥
ततो विलक्ष्यभावेन ब्राह्मणः शंसितव्रतः । तूष्णीम्भूतः स्थितस्तावल्लुब्धको वाक्यमब्रवीत्॥
एतस्मिञ्ज्वलितो वह्निर्बहुशाखश्च सत्तम । मूलनाशे भवेन्नाशस्तद्वदेतदपि द्विज ॥३६॥
आत्मा स प्रकृतिस्थश्च भूतानां संश्रयो भवेत् । विकृताद्दुद्भवस्तस्य एषा वै जगतः स्थितिः॥
पिण्डग्रहणधर्मेण यदस्य विहितं व्रतम् । तत्तदात्मनि संयोज्य कुर्वाणो नावसीदति ॥३८॥
एवमुक्ते तु व्याधेन ब्राह्मणो राजसत्तम । पुष्पवृष्टिरथाकाशात्तस्योपरि पपात ह ॥३९॥

विमानानि च दिव्यानि कामगानि महान्ति च ।
बहुरत्नानि मुख्यानि ददृशे ब्राह्मणोत्तमः ॥ ४० ।

तेषु निष्ठुरकं लुब्धं सर्वेषु समवस्थितम् । ददृशे ब्राह्मणस्तत्र कामरूपिणमुत्तमम् ॥४१॥
अद्वैतवासनासिद्धं योगाद्बहुशरीरकम् । दृष्ट्वा विप्रो मुदा युक्तः प्रययौ निजमाश्रमम् ॥४२॥
एवं ज्ञानं भवेत्कर्म कुर्वतोऽपि स्वजातिकम् । भवेन्मुक्तिर्द्विजश्रेष्ठ रैभ्य राजन्वसो ध्रुवम्॥
एवं तौ संशयच्छेदं प्राप्तौ रैभ्यवसू नृप । बृहस्पतेस्ततोधिष्णयाज्जग्मतुर्निजमाश्रमम् ४४॥
तस्मात्त्वमपि राजेन्द्र देवं नारायणं प्रभुम् । अभेदेन स्वदेहे तु पश्य आराधयन् प्रभुम् ॥
कपिलस्य वचः श्रुत्वा स राजाश्वशिरा विभुः । ज्येष्ठं पुत्रं समाहूय धन्यं स्थूलशिराह्वयम्॥
अभिषिच्य निजे राज्ये स राजा प्रययौ वनम् । नैमिषाख्यं वरारोहे तत्र यज्ञतनुं हरिम्॥
तपसाराधयामास यज्ञमूर्तिस्तवेन च ॥ ४७ ।

धरण्युवाच

कथं यज्ञतनोः स्तोत्रं राज्ञा नारायणस्य ह । स्तुतिः कृता महाभाग पुनरेतच्च शंस मे ॥४८॥

वराह उवाच

नमामि नित्यं त्रिदशाधिपस्य भवस्य सूर्यस्य हुताशनस्य ।
सोमस्य राज्ञो मरुतामनेकरूपं हरिं यज्ञतनुं नमस्ये ॥ ४९ ॥
सुभीमदंष्ट्रं शशिसूर्यनेत्रं संवत्सरोद्वथापनयुग्मकुक्षिम् ।
दर्भाङ्गरोमाणमथोग्रशक्तिं सनातनं यज्ञनरं नमामि ॥ ५० ॥
द्यावापृथिव्योरिदन्तरं हि व्याप्तं शरीरेण दिशश्च सर्वाः ।
तमीड्यमीशं जगतां प्रसूतिं जनार्दनं तं प्रणतोऽस्मि नित्यम् ॥ ५१ ॥
सुरासुराणामजयो जयाय युगे युगे यस्त्वशरीरमाद्यम् ।
सृजत्यनादिः परमेश्वरो यस्तं यज्ञमूर्तिं प्रणतोऽस्मि नित्यम् ॥ ५२ ॥
दधार मायामयमुग्रतेजा जयाय चक्रं त्वमलं सुशुभ्रम् ।
सारङ्गशङ्खादिचतुर्भुजो यस्तं यज्ञमूर्तिं प्रणतोऽस्मि नित्यम् ॥ ५३ ॥
क्वचित्सहस्रं शिरसां दधानः क्वचिन्महापर्वततुल्यकायः ।
क्वचित्स एव त्रसरेणुतुल्यो[1] यस्तं सदा यज्ञनरं नमामि ॥ ५३ ॥
चतुर्मुखो यः सृजते जगच्च[2] रथाङ्गपाणिः प्रतिपालनाय ।
क्षयाय कालानलसन्निभो यस्तं यज्ञमूर्तिं प्रणतोऽस्मि नित्यम् ॥ ५५ ॥
संसारचक्रक्रमणक्रियायै य इज्यते सर्वगतः पुराणः ।
यो योगिनां ध्यानगतोऽप्रमेयस्तं यज्ञमूर्तिं प्रणतोऽस्मि नित्यम् ॥ ५६ ॥
सम्यङ्मनस्यर्पितवानहं ते यदा सुदृश्यं स्वतनौ तु तत्त्वम् ।
न चान्यदस्तीति मतिः स्थिरा मे यतस्ततो याति विशुद्धभावम् ॥ ५७ ॥
इतीरितस्तस्य हुताशनार्चिःप्रख्यन्तु तेजः पुरतो बभूव ।
तस्मिन्स राजा प्रविवेश-बुद्धिं कृत्वा लयं प्राप्तवान्यज्ञमूर्तौ ॥ ५८ ॥

इति वराहपुराणे आदिकृतवृत्तान्ते पञ्चमोऽध्यायः ।

# षष्ठोऽध्यायः

धरण्युवाच

सवसुः संशयच्छेदं प्राप्य रैभ्यश्च सत्तमः । उभौ किं चक्रतुर्देव श्रुत्वा चाङ्गिरसं वचः ॥

वराह उवाच

स वसुः सर्वधर्मज्ञः स्वराज्यं प्रत्यपालयत् । अयजद्बहुभिर्यज्ञैर्महद्भिर्भूरिदक्षिणैः ॥
कर्मकाण्डेन देवेशं हरिं नारायणं प्रभुम् । तोषयामास राजेन्द्रस्तमभेदेन चिन्तयन् ॥
ततः कालेन महता तस्य राज्ञो मतिः किल । निवृत्तराज्यभोगेच्छा द्वन्द्वस्यान्तमुपेयुषः ॥

---

१. क्वचिन्नवेद्यं त्रसरेणुतुल्यमिति । २. समग्रम् इति पाठान्तरम् ।

ततः पुत्रं विवस्वन्तं श्रेष्ठं भ्रातृशतस्य ह। अभिषिच्य स्वके राज्ये तपोवनमुपागतः ॥
पुष्करं नाम तीर्थानां प्रवरं यत्र केशवः। पुण्डरीकाक्षनामा तु पूज्यते तत्परायणैः।
तत्र गत्वा स राजर्षिः काश्मीराधिपतिर्वसुः। अतितीव्रेण तपसा स्वशरीरमशोषयत् ॥
पुण्डरीकाक्षपारन्तु स्तवं भक्त्या जपन् बुधः। आरिराधयिषुर्देवं नारायणमकल्मषम्।
स्तोत्रान्ते तल्लयं प्राप्तः स राजा राजसत्तमः ॥ ८ ॥

धरण्युवाच

पुण्डरीकाक्षपारन्तु स्तोत्रं देव कथं स्मृतम्। कीदृशं तन्ममाचक्ष्व परमेश्वर तत्त्वतः ॥

वाराह उवाच

नमस्ते पुण्डरीकाक्ष नमस्ते मधुसूदन। नमस्ते सर्वलोकेश नमस्ते तिग्मचक्रिणे ॥
विश्वमूर्तं महाबाहुं वरदं सर्वतेजसम्। नमामि पुण्डरीकाक्षं विद्याविद्यात्मकं विभुम्।
आदिदेवं महादेवं वेदवेदाङ्गपारगम्। गभीरं सर्वदेवानां नमस्ये वारिजेक्षणम् ॥
सहस्रशीर्षिणं देवं सहस्राक्षं महाभुजम्। जगत्संव्याप्य तिष्ठन्तन्नमस्ये परमेश्वरम् ॥
शरण्यं शरणं देवं विष्णुञ्जिष्णुं सनातनम्। नीलमेघप्रतीकाशं नमस्ये चक्रपाणिनम् ॥
शुद्धं सर्वगतं नित्यं व्योमरूपं सनातनम्। भावाभावविनिर्मुक्तं नमस्ये सर्वगं हरिम् ॥
नान्यत्किञ्चित्प्रपश्यामि व्यतिरिक्तं त्वयाऽच्युत।
त्वन्मयञ्च प्रपश्यामि सर्वमेतच्चराचरम् ॥ १६ ।

एवन्तु वदतस्तस्य मूर्तिमान् पुरुषः किल। निर्गत्य देहान्नीलाभो घनचण्डो भयङ्करः ॥
रक्ताक्षो ह्रस्वकायस्तु दग्धस्थूणासमप्रभः।उवाच प्राञ्जलिर्भूत्वा किं करोमि नराधिप ॥

राजोवाच

कोऽसि किं कार्यमिह ते कस्मादागतवानसि। एतन्मे कथय व्याध एतदिच्छामि वेदितुम्॥

व्याध उचाव

पूर्वं कलियुगे राजस्त्वं राजा दक्षिणापथे। सोमवंशोद्भवः[१] श्रीमान् जनस्थाने विचक्षणः॥
स कदाचिद्भवान्वीर श्वगणैः[२] अरण्यमागतो हन्तुं श्वापदानि विशेषतः ॥२१॥
तत्र त्वया अकामेन मृगवेषधरो मुनिः। काण्डयुग्मेन[३] दूरात्तु पातितो धरणीतले ॥२२॥
सद्यो मृतश्च विप्रेन्द्रस्त्वञ्च राजन्मुदा युतः। हरिणोऽयं हत इति यावत्पश्यसि पार्थिव॥
तावन्मृगवपुर्विप्रो मृतः प्रस्रवणे गिरौ ॥ २३ ॥

तं दृष्ट्वा त्वं महाराज क्षुभितेन्द्रियमानसः। गृहागतस्ततोऽन्यस्य कस्यचित्कथितं त्वया॥
ततः कतिपयाहस्य त्वया रात्रौ नरेश्वर। ब्रह्महत्याभयाद्भीतचित्तेनैतद्विचिन्तितम्॥

---

१. पूर्णधर्मोद्भवः इति कुत्रचिद्दृश्यते। २. तुरगैः इति क्वचिदुपलब्धः पाठः।
३. दण्डयुग्मेन इति पाठान्तरम्।

कृत्यं करोमि शान्त्यर्थं मुच्येयं येन पातकात् ॥ २५ ।
ततस्त्वया महाराज सकृन्नारायणं प्रभुम् । सञ्चिन्त्य द्वादशी शुद्धा त्वया राजन्नुपोषिता ॥
नारायणो मे सुप्रीत इति प्रोक्त्वा शुभेऽहनि । गौर्दत्ता विधिना सद्यो मृतोऽस्युदरशूलतः ॥
अमुक्तो द्वादशीधर्मो यत्तत्रापि च कारणम् । कथयामि भवत्पत्नी नाम्ना नारायणी शुभा ॥
सा कण्ठगेन प्राणेन व्याहृता ते ततो गतिः ॥ २९ ।
कल्पमेकं महाराज जातो विष्णुपुरे तव । अहञ्च तव देहस्थः सर्वं जानामि चाक्षयम् ॥
ब्रह्मग्रहो महाघोरः पीड़यामीति मे मतिः । तावद्विष्णोस्तु पुरुषैः किङ्करैर्मुषलैरहम् ॥
प्रहृतः सङ्क्षयं जातश्च्युतस्ते रोमकूपतः । स्वर्गस्थस्यापि राजेन्द्र स्थितोऽहं स्वेन तेजसा ॥
ततोऽहःकल्पे निवृत्ते रात्रिकल्पेन सत्तम । इदानीमादिसृष्टौ तु कृते नृपतिसत्तम ।
सम्भूतस्त्वं महाराज राज्ञः सुमनसो गृहे[1] ॥ ३४ ॥
न चाहन्तैरपहृतो विष्णुस्मरणवर्जितैः । इदानीं यत्त्वया स्तोत्रं पुण्डरीकाक्षपारगम् ॥
पठितं तत्प्रभावेण विहायाङ्गरुहाण्यहम् । एकीभूतः पुनर्जातो व्याधरूपी नृपोत्तम[2] ॥
अहं भगवतः स्तोत्रं श्रुत्वा प्राक् पापमूर्तिना ।
मुक्तोऽस्मि धर्मबुद्धिर्मे वर्तते साम्प्रतं विभो ॥ ३७ ॥
एतच्छ्रुत्वा वचो राजा परं विस्मयमागतः । वरेण छन्दयामास तं व्याधं राजसत्तमः ॥

राजोवाच

स्मारितोऽस्मि यथा व्याध त्वया जन्मान्तरं गतम् ।
तथा त्वं मत्प्रसादेन[3] धर्मव्याधो भविष्यति ॥३९॥
यश्चैतत्पुण्डरीकाक्षपारगं शृणुयात्परम् । तस्य पुष्करयात्रायां विधिस्नानफलं भवेत् ॥

वराह उवाच

एवमुक्त्वा ततो राजा विमानवरमास्थितः । परेण तेजसा योगमवापाशेषधारिणि ॥
इति वराहपुराणे आदिकृतवृत्तान्ते षष्ठोऽध्यायः । वसुचरितं समाप्तम् ।

---

# सप्तमोऽध्यायः

धरण्युवाच

रैभ्योऽसौ मुनिशार्दूलः श्रुत्वा सिद्धं वसुं तदा । स्वयं किमकरोद्देव संशयो मे महानभूत्[4] ॥

वराह उवाच

स रैभ्यो मुनिशार्दूलः श्रुत्वा सिद्धं वसुं तदा । आजगाम गयां पुण्यां पितृतीर्थं तपोधनः ॥
तत्र गत्वा पितॄन् भक्त्या पिण्डदानेन तर्पयन् । तताप सुमहत्तीव्रं तपः परमदुश्चरम् ॥
चरतस्तस्य तत्तीव्रं तपो रैभ्यस्य धीमतः । आजगाम महायोगी विमानस्थोऽतिदीप्तिमान् ॥

---

१ काश्मीरदेशाधिपतिस्तवाङ्गरुहतः सह । यज्ञैरिष्ट त्वयाऽनेकैर्दानैश्च विविधैस्तव ॥ इति कचिद्देवायं पाठभेदो दृश्यते परन्तु उभावेव पाठौ दुर्घटौ । २ व्याधरूपो द्विजोत्तम इति पठान्तरम्
३ मत्प्रभावेण इति पाठान्तरम् । ४ महानयमिति कचिदुपलभ्यते ।

त्रसरेणुसमे शुद्धे विमाने सूर्यसन्निभे । परमाणुप्रमाणेन पुरुषस्तत्र दीप्तिमान् ॥ ५ ॥
सोऽब्रवीद्रैभ्य किं कार्यं तपश्चरसि सुव्रत ।
एवमुक्त्वा दिवो भूमिं मापयामास वै पुमान् ॥ ६ ॥
तत्रापि रोदसीव्याप्तं विमानं सूर्यसन्निभम् । युगपद्विष्णुभवनं व्याप्नुवन्तं ददर्श सः ॥
ततः स विस्मयाविष्टो रैभ्यः प्रणतिपूर्वकम् ।
पप्रच्छ तं महायोगिन् को भवान् प्रब्रवीतु मे ॥ ८ ॥

पुरुष उवाच

अहं रुद्रादवरजो ब्रह्मणो मानसः सुतः । नाम्ना सनत्कुमारेति जनलोके वसाम्यहम् ॥
भवतः पार्श्वमायातः प्रणयेन तपोधन । धन्योऽसि सर्वथा वत्स ब्रह्मणःकु लवर्धनः ॥

रैभ्य उवाच

नमोऽस्तु ते योगिवर प्रसीद दयां मह्यं कुरुषे प्रमुख्य[1] ।
किमत्र कृत्यं वद योगिसिंह धन्योऽहमुक्तो हि कथं त्वयाद्य ॥ ११ ॥

सनत्कुमार उवाच

धन्यस्त्वमेव द्विजवर्यमुख्य यद्वेदवादाभिरतः पितॄंश्च ।
प्रीणासि मन्त्रव्रतजप्यहोमैर्गयां समासाद्य च सर्वपिण्डैः ॥ १२ ॥
शृणुष्व चान्यो नृपतिर्बभूव विशालनामा स पुरीं विशालाम्[2] ।
उवास धन्यो धृतिमान् सपुत्रः स्वयं विशालाधिपतिर्द्विजाग्रयान् ॥१३॥
पप्रच्छ पुत्रार्थममित्रहा सते ब्राह्मणाः प्रोचुरदीनसत्त्वाः ।
राजन् पितॄंस्तर्पय पुत्रहेतोर्गत्वा गयां पिण्डदानेन सम्यक् ॥ १४ ॥
ध्रुवं सुतस्ते भविता नृपेश सहस्रदाता सकलक्षितीशः[3] ॥ १५ ॥
इतीरिते ब्राह्मणैः स प्रहृष्टो राजा विशालाधिपतिः प्रयत्नात् ।
जगाम तीर्थप्रवरं द्विजोऽथ गयाऽभिधानं वचनान्तरेणा[4] ।
आगत्य तेन प्रवरेण तीर्थे मघासु भक्त्याथ कृतं पितॄणाम् ।
पिण्डप्रदानं विधिना प्रयत्नात्तावद्वियत्युत्तममूर्त्तयस्त्रीन् ॥ १६ ॥
पश्यन् स पुंसः सितपीतकृष्णानुवाच राजा किमिदं भवद्भिः ।
उपेक्ष्यते शंसत सर्वमेव कौतूहलं मे मनसि प्रवृत्तम् ॥ १७ ॥

सित उवाच ।

अहं सितस्ते जनकोऽस्मि तात नाम्ना च वृत्तेन कुलेन कर्मणा ।
अयञ्च मे जनको रक्तवर्णो नृशंसकृद्ब्रह्महा पापकारी ॥ १८ ॥
अधीश्वरो नाम परः पिताऽस्य कृष्णो नाम्ना कर्मणा धर्मतश्च ।

---

१. कुरु विश्वरूप इति पाठान्तरम् । २. पुरं विशालमिति वा पाठः ।
३. सुसम्प्रदाया इति पाठान्तरम्
४. केषुचित् पुस्तके त्विदं श्लोकार्धं नास्ति । ५. कृष्णो नात्य कर्मणा चापि कृष्णः इति पा०

एतेन कृष्णेन हताः पुरा वै जन्मन्यनेके ऋषयः पुराणाः ॥ १९ ॥
एतौ मृतौ द्वावपि पुत्र रौद्रमवीचिसंज्ञं नरकं प्रपन्नौ ।
अधीश्वरो मे जनकः परोऽस्य कृष्णः पिता द्वावपि दीर्घकालम् ॥ २० ॥
अहञ्च शुद्धेन निजेन कर्मणा शक्रासनं प्रापितो दुर्लभं तत् ।
त्वया पुनर्मन्त्रविदा गयायां पिण्डप्रदानेन बलादिमौ च ॥
मेलापितौ तीर्थपिण्डप्रदानप्रभावतो यौ नरकश्रितावपि ॥ २१ ॥

पितॄन् पितामहांस्तत्र तथैव प्रपितामहान् । प्रीणयामीति तत्तोयं त्वया दत्तमरिन्दम॥
तेनास्मद्युगपद्योगो जातो वाक्येन सत्तम । तीर्थप्रभावाद् गच्छामि पितृलोकं न संशयः॥
अत्र पिण्डप्रदानेन एतौ तव पितामहौ । दुर्गतावपि संसिद्धौ पापकृद्विकृतिङ्गतौ॥
तीर्थप्रभाव एषोऽस्मिन् ब्रह्मघ्नस्यापि तत्सुतः । पितुः पिण्डप्रदानेन कुर्यादुद्धरणं पुनः॥
एतस्मात्कारणात्पुत्र अहमेतौ विगृह्य वै । आगतोऽस्मि भवन्तं वै द्रष्टुं यास्यामि साम्प्रतम्॥
एतस्मत्कारणाद्रैभ्य भवान् धन्यो मयोच्यते । सकृद्गयाभिगमनं सकृत्पिण्डप्रदापनम्॥
दुर्लभं त्वं पुनर्नित्यमस्मिन्नेव व्यवस्थितः । किमनु प्रोच्यते रैभ्य तव पुण्यमिदं प्रभो॥
येन साक्षाद्गदापाणिर्दृष्टो नारायणः स्वयम् ।
ततो गदाधरः साक्षादस्मिन् क्षेत्रे व्यवस्थितः । अतोऽतिविख्याततमं तीर्थमेतद्द्विजोत्तम॥

वराह उवाच

एवमुक्त्वा महायोगी तत्रैवान्तरधीयत । रैभ्योऽपि च गदापाणेर्हरेः स्तोत्रमथाकरोत्॥

रैभ्य उवाच

गदाधरं विबुधजनैरभिष्टुतं धृतक्षमं क्षुधितजनार्त्तिनाशनम् ॥
शिवं विशालासुरसैन्यमर्दनं नमाम्यहं हृतसकलाशुभं स्मृतौ ॥ ३१ ॥
पुराणपूर्वं पुरुषं पुरुष्टुतं पुरातनं विमलमलं नृणां गतिम् ।
त्रिविक्रमं हृतधरणिं बलोर्जितं गदाधरं रहसि नमामि केशवम् ॥३२॥
विशुद्धभावं विभवैरुपावृतं श्रिया वृतं विगतमलं विचक्षणम् ।
क्षितीश्वरैरपगतकिल्बिषैः स्तुतं गदाधरं प्रणमति यः सुखं वसेत् ॥३३॥
सुरासुरैरर्चितपादपङ्कजं केयूरहाराङ्गदमौलिधारिणम् ।
अब्धौ शयानञ्च रथाङ्गपाणिनं गदाधरं प्रणमति यः सुखं वसेत् ॥३४॥
सितं कृते त्रेतयुगेऽरुणं विभुं तथा तृतीये नीलवर्णमच्युतम् ।
कलौ युगेऽलिप्रतिमं महेश्वरं गदाधरं प्रणमति यः सुखं वसेत् ॥ ३५ ॥
बीजोद्भवो यः सृजते चतुर्मुखं तथैव नारायणरूपतो जगत् ।
प्रपालयेद्रुद्रवपुस्तथान्तकृद्गदाधरो जयतु षडर्धमूर्तिमान् ॥ ३६ ॥
सत्त्वं रजश्चैव तमो गुणास्त्रयस्त्वेतेषु विश्वस्य समुद्भवः किल ।
स चैक एव त्रिविधो गदाधरो दधातु धैर्यं मम धर्ममोक्षयोः ॥३७॥
संसारतोयार्णवदुःखतन्तुभिर्वियोगनक्रक्रमणैः सुभीषणैः ।

मज्जन्तमुच्चैः सुतरां महाप्लवो गदाधरो मामुदधौ तु योऽतरत् ॥३८॥
स्वयं त्रिमूर्तिः खमिवात्मनात्मनि स्वशक्तितश्चाण्डमिदं ससर्ज ह ।
तस्मिञ्जलोत्थासनमाप तैजसं ससर्ज यस्तं प्रणतोऽस्मि भूधरम् ॥ ३९ ॥
मत्स्यादिनामानि जगत्सु प्रश्नुते सुरादिसंरक्षणतो वृषाकपिः ।
मखस्वरूपेण स सन्ततो विभुर्गदाधरो मे विदधातु सद्गतिम् ॥ ४० ॥

वराह उवाच

एवं स्तुतस्तदा विष्णुर्भक्त्या रैभ्येण धीमता । प्रादुर्बभूव सहसा पीतवासा जनार्दनः ॥
शङ्खचक्रगदापाणिर्गरुडस्थो वियद्गतः । उवाच मेघगम्भीरधीरवाक् पुरुषोत्तमः ॥
तुष्टोऽस्मि रैभ्य भक्त्या ते स्तुत्या च द्विजसत्तम[1] ।
तीर्थस्नानेन च विभो ब्रूहि यत्तेऽभिवाञ्छितम् ॥ ४३ ॥

रैभ्य उवाच

गतिं मे देहि देवेश यत्र ते सनकादयः । वसेयन्तत्र येनाहं त्वत्प्रसादाज्जनार्दन ॥

देव उवाच

एवमस्त्विति ते ब्रह्मन्नित्युक्त्वाऽन्तरधीयत । भगवानपि रैभ्यस्तु दिव्यज्ञानसमन्वितः॥
क्षणाद्बभूव देवेन परितुष्टेन चक्रिणा । जगाम यत्र ते सिद्धाः सनकाद्या महर्षयः ॥
एतच्च रैभ्यनिर्दिष्टं स्तोत्रं विष्णोर्गदाभृतः ।
यः पठेत्स गयां गत्वा पिण्डदानाद्विशिष्यते ॥ ४७ ॥

इति वराहपुराणे रैभ्यचरिते सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः

वराह उवाच ।

योऽसौ वसोः शरीरे तु व्याधो भूत्वा नृपस्य ह ।
स स्ववृत्त्या स्थितः कालञ्चतुर्वर्षसहस्रकम् ॥ १ ॥
एकैकं स्वकुटुम्बार्थे हत्वा वनचरं मृगम् । भृत्यातिथिहुताशानां प्रीणनं कुरुते सदा ॥
मिथिलायां वरारोहे सदा पर्वणि पर्वणि । पितॄणां कुरुते श्राद्धं स्वाचारेण विचक्षणः ॥
अग्निं परिचरन्नित्यं वदन् सत्यं सुभाषितम् ।
प्राणयात्रानुसक्तस्तु योऽसौ जीवं न पातयेत् ॥ ४ ॥
एवन्तु वसतस्तस्य धर्मबुद्धिर्महातपाः । पुत्रस्त्वर्जुनको नाम बभूव मुनिवद्वशी ॥
तस्य कालेन महता चारित्रेण च धीमतः । बभूवार्जुनका नाम कन्या च वरवर्णिनी ॥

---

१. स्तुत्या चापि द्विजोत्तम इति क्वचिदुपलभ्यते ।

तस्या यौवनकाले तु चिन्तयामास धर्मवित् ।
कस्येयन्दीयते कन्या को वा योग्यश्च वै पुमान् ॥ ७ ॥
इति चिन्तयतस्तस्य मतङ्गस्य सुतं प्रति । धर्मव्याधस्य सुव्यक्तं प्रसन्नाख्यं प्रतिब्रुवन् ॥
एवं संचिन्त्य मातङ्गं प्रसन्नम्प्रति सोद्यतः ।
उवाच तस्य पितरम्प्रसन्नायार्जुनीं भवान् । गृहाण तपतां श्रेष्ठ स्वयन्दत्तां महात्मने ॥
मतङ्ग उवाच
प्रसन्नोऽयं मम सुतः सर्वशास्त्रविशारदः । गृह्णाम्यर्जुनकां कन्यान्त्वत्सुतां व्याधसत्तम॥
एवमुक्ते तदा कन्यां धर्मव्याधो महातपाः । मतङ्गपुत्राय ददौ प्रसन्नाय च धीमते ॥११॥
धर्मव्याधस्तदा कन्यां दत्त्वा स्वगृहमीयिवान् । सापि श्वशुरयोर्भर्त्तुः शुश्रूषणपराऽभवत्॥
अथ कालेन महता सा कन्याऽर्जुनकाऽशुभा ।
उक्ता श्वश्र्वा सुता पुत्री जीवहन्तुस्त्वमीदृशी ।
न जानासि तपश्चर्त्तुं भर्तुराराधनं तथा ॥ १३ ॥
साऽपि स्वल्पापराधेन भर्त्सिता तनुमध्यमा । पितुर्वेश्मागता बाला रोदमाना मुहुर्मुहुः॥
पित्रा पृष्टा किमेतत्ते पुत्रि रोदनकारणम् । एवमुक्ता तदा सा तु कथयामास भामिनी॥
श्वश्र्वाऽहमुक्ता तीव्रेण कोपेन महता पितः । जीवहर्त्तुः सुतेत्युच्चैरसकृद्व्याधजेति च॥
एतच्छ्रुत्वा स धर्मात्मा धर्मव्याधो रुषाऽन्वितः ।
मतङ्गस्य गृहं सोऽथ गत्वा जनपदैर्वृतम् ॥ १७ ॥
तस्यागतस्य सम्बन्धी मतङ्गो जयतां वरः । आसनाद्यर्घपाद्येन पूजयित्वेदमब्रवीत् ॥१८॥
किमागमनकृत्यं ते किं करोम्यागतक्रियाम् ॥ १९ ॥
व्याध उवाच
भोजनं किञ्चिदिच्छामि भोक्तुं चैतन्यवर्जितम् । कौतूहलेन येनाऽहमागतो भवतो गृहे॥
मतङ्ग उवाच
गोधूमा व्रीहयश्चैव संस्कृता मम वेश्मनि । भुज्यतां धर्मविच्छ्रेष्ठ यथाकामं तपोधन॥
व्याध उवाच
पश्यामि कीदृशास्ते हि गोधूमा व्रीहयो यवाः ।
स्वरूपेण च सन्त्येते येन वो वेद्मि सत्तम ॥ २२ ॥
वराह उवाच
एवमुक्ते मतङ्गेन शूर्पं गोधूमपूरितम् । अपरं तत्र व्रीहीणां धर्मव्याधाय दर्शितम् ॥२३॥
दृष्ट्वा व्रीहीन्स गोधूमान्धर्मव्याधो वरासनात् । उत्थाय गन्तुमारेभे मतङ्गेन निवारितः॥
किमर्थं गन्तुमारब्धं त्वया वद महामने । अभुक्तेनैव संसिद्धं मद्गृहे चान्नमुत्तमम्॥
पाचयित्वा स्वयञ्चैव कस्मात्त्वं नाद्य भुञ्जसे ॥ २५ ॥
व्याध उवाच ।
सहस्रशः कोटिशश्च जीवान् हंसि दिने दिने ।
अथेदृशस्य पापस्य कोऽन्नं भुञ्जति सत्पुमान् ॥ २६ ॥

अचैतन्यं यदि गृहे विद्यतेऽन्नं सुसंस्कृतम्। तदानीमस्मि संभोक्ता मत्वा तु स्वजनं वत॥
अहमेकं कुटुम्बार्थे हन्म्यरण्ये पशुं दिने। तञ्चोत्पितृभ्यः सत्कृत्य दत्त्वा भुञ्जामि साऽनुगः॥
त्वन्तु जीवान् बहून् हत्वा स्वकुटुम्बेन सानुगः। भुञ्जसे तेन सततमभोज्यं तन्मतं मम॥
ब्रह्मणा तु पुरा सृष्टा ओषध्यः सर्ववीरुधः। यज्ञार्थं तत्तु भूतानां भक्ष्यमित्येव वै श्रुतिः॥
दिव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च। एते पञ्च महायज्ञा ब्रह्मणा निर्मिताः पुरा॥
ब्राह्मणानां हितार्थाय इतरेषाञ्च तन्मुखाः। इतरेषान्तु वर्णानां ब्राह्मणैः कारिताः शुभाः॥
एवं कृत्वा नरो भुक्त्वा तस्माद्वान्नं विशुध्यति। अन्यथा व्रीहयोऽप्येते एकैके मृगपक्षिणः॥
मन्तव्या दातृभोक्तॄणां महामांसन्तु तत्स्मृतम्॥ ३३॥
मया ते दुहिता दत्ता पुत्रार्थे वरवर्णिनी।
सा च त्वद्भार्यया प्रोक्ता दुहिता जन्तुघातिनः। अतोऽर्थमागतोऽहन्ते गृहं प्रतिसमीक्षितुम्॥
आचारं देवपूजाञ्च अतिथीनाञ्च तर्पणम्। एतेषामेकमप्यत्र कुर्वन्नपि न दृश्यसे॥३५॥
तदहं गन्तुमिच्छामि पितॄणां श्राद्धकाम्यया। स्वगृहे नैव भुञ्जामि पितॄणां कार्यमित्युत॥
अहं व्याधो जीवघाती न तु त्वं लोकहिंसकः॥ ३७॥
मत्सुता जीवघातस्य यदोढा त्वत्सुतेन च। तन्महत्त्वञ्च सम्प्राप्तं प्रायश्चित्तं तपोधन॥
एवमुक्त्वा स चोत्थाय शप्त्वा नारीं तदाम्बरे।
मा स्नुषाभिः समं श्वश्र्वा विश्वासो भवतु क्वचित्॥३९॥
मा च स्नुषा कदाचित्स्याद्वा श्वश्रूं जीवतीमिषेत्।
एवमुक्त्वा गतो व्याधः स्वगृहं प्रति भामिनि॥४०॥
ततो देवान् पितॄन् भक्त्या पूजयित्वा विचक्षणः।
पुत्रञ्चार्जुनकं स्थाप्य स्वसन्तानं महातपाः।
धर्मव्याधो जगामाशु तीर्थं त्रैलोक्यविश्रुतम्॥४१॥
पुरुषोत्तमाख्यञ्च पुरन्तत्र गत्वा समाहितः। तपश्चचार नियमात्पठन्स्तोत्रमिदं धरे॥
नमामि विष्णुं त्रिदशारिनाशनं विशालवक्षःस्थलसंश्रितश्रियम्।
सुशासनं नीतिमतां पराङ्गतिं त्रिविक्रमं मन्दरधारिणं सदा॥४३॥
दामोदरं निर्जितभूतलं धिया यशोंऽशुशुभ्रं भ्रमराङ्गसप्रभम्।
भवे भवं दैत्यरिपुं पुरुष्टुतं नमामि विष्णुं शरणं जनार्दनम्॥४४॥
त्रिधा स्थितं तिग्मरथाङ्गपाणिनं नयस्थितं युक्तमनुत्तमैर्गुणैः।
निःश्रेयसाख्यं क्षयितेतरं गुरुं नमामि विष्णुं पुरुषोत्तमं त्वहम्॥४५॥
महावराहो हविषां भुजो जनो जनार्दनो मे हितकृच्चतुर्मुखः।
क्षितीधरो मामुदधिप्लवे महान् स पातु विष्णुः शरणार्थिनं तु माम्॥४६॥
मायाततं येन जगत्त्रयं कृतं यथाग्निनैकेन ततं चराचरम्।
चराचरस्य स्वयमेव सर्वतः स मेऽस्तु विष्णुः शरणं जगत्पतिः॥४७॥
भवे भवे यश्च ससर्ज कं ततो जगत्प्रसूतं सचराचरं त्विदम्।
ततश्च रुद्रात्मवति प्रलीयते तथो हरिर्विष्णुहरस्तयोच्यते॥४८॥

स्वात्मेन्दुपृथ्वी[1] पवनादिभास्करा जलञ्च यस्य प्रभवन्ति मूर्त्तयः।
स सर्वदा मे भगवान् सनातनो ददातु शं विष्णुरचिन्त्यरूपधृक् ॥ ४९ ॥
इतीरिते तस्य सनातनः स्वयं पुरो बभूवाद्भुतरूपदर्शनः।
वरं वृणीष्वेति सनातनोऽब्रवीदनन्तपादोदरबाहुवक्त्रः ॥ ५० ॥
इतीरितो व्याधवरो जगाद प्रदीयतामेष वरः सुतेष्वपि।
क्रियाकलापेन तथात्मविद्यया कुलप्रसूतावपि तेऽनुगामिनः ॥ ५१ ॥
ज्ञानोदयस्त्वस्य कुलस्य सर्वदा लयस्तथा ब्रह्मणि मे सनातन।
इतीरिते तं भगवानुवाच ह प्रसन्नबुद्धिर्भवते मया त्वयम् ॥ ५२ ॥
वरो विसृष्टश्च कुलस्य ते मया लयस्तथा ब्रह्मणि शाश्वते तव।
इतीरिते देववरेण स क्षणात् स्वदेहतस्तेज उदीर्णमैक्षत ॥
विसर्जयामास कविं सनातनं लयञ्च तत्र प्रतिपेदिवानसौ ॥ ५३ ॥
इतीरितं स्तोत्रवरन्धरे नरः पठिष्यते यश्च शृणोति मानवः।
हरिं समभ्यर्च्य सदा ह्युपोषितो विशेषतो विष्णुदिने च मानवः।
स याति यत्र स्वयमेव केशवो वसेत मन्वन्तरसप्तति सुखम् ॥ ५४ ॥
इति वराहपुराणे आदिकृतवृत्तान्ते धर्मव्याधचरिते अष्टमोऽध्यायः।

---

# नवमोऽध्यायः

धरण्युवाच

आदौ कृतयुगे नाथ किं कृतं विश्वमूर्तिना। नारायणेन तत्सर्वं श्रोतुमिच्छामि तत्त्वतः ॥

वराह उवाच

पूर्वं नारायणस्त्वेको नासोत्किञ्चिद्धरे परम्। सैक एव रतिं लेभे नैव स्वच्छन्दकर्मकृत् ॥
तस्य द्वितीयमिच्छन्तश्चिन्ता बुद्ध्यात्मिका बभौ।
अभावेत्येव संज्ञा या क्षणम्भास्करसन्निभा ॥ ३ ॥
तस्या अपि द्विधा भूता चिन्ताभूद्ब्रह्मवादिनः। उमेति संज्ञया यत्तत्सदा मर्त्ये व्यवथिता ॥
उमेत्येकाक्षरीभूता ससर्जेमां महीन्तदा।
भूः ससर्ज भुवं सोऽपि ससर्ज च ततो महत् ॥ ५ ॥
ततश्च जन इत्येव ततश्चात्मा प्रलीयते। एतदोतन्तथा प्रोतं सूत्रे मणिगणा इव ॥६॥
जगत्प्राणवतो भूतं शून्यमेतत्स्थितन्तदा। येयं मूर्तिर्भगवतः शङ्करः स स्वयं हरिः ॥७॥
शून्याल्लोकानिमान्सृष्ट्वा सिसृक्षुर्मूर्तिमुत्तमाम्। क्षोभयित्वा मनोधाम तत्राकारः स्वमात्रतः ॥
स्थितस्तस्मिन्यदा क्षुब्धे ब्राह्माण्डमभवत्तदा ॥ ८ ॥
तस्मिंस्तु शकलीभूते भूर्लोकञ्च व्यवस्थितम्। अपरम्भुवनप्रायान्मध्ये भास्करसन्निभम् ॥

---

१. स्वीन्दुपृथ्वीति क्वचिद्दृश्यते।

पुरा नवृकसंस्थो यः पद्मकोशो व्यवस्थितः । स हि नारायणो देवः प्राजापत्येन तेजसा॥
अकाराद्यं स्वरन्ताभ्यां हलञ्च विससर्ज ह । अमूर्तस्रष्टौ शास्त्राणि उदगायत्तदाहि सः॥
सृष्ट्वा पुनरमेयात्मा चिन्तयामास धारणम् । तस्य चिन्तयतो नेत्रात्तेजः समभवन्महत्॥
दक्षिणं वह्निसङ्काशं वामन्तुहिनसन्निभम् । तद्दृष्ट्वा चन्द्रसूर्यौ तु कल्पितौ परमेष्ठिना॥
ततः प्राणः समुत्तस्थौ वायुश्च परमेष्ठिनः । स एव वायुर्भगवान्योऽद्यापि हृदिगो विभुः॥
तस्माद्वह्निः समुत्तस्थौ तस्मादग्नेर्जलं महत् । य एवाग्निः स वै तेजो ब्राह्मं परमकारणम्॥

बाहुभ्यामप्यसौ तेजः क्षात्रन्तेजः ससर्ज ह ।
ऊरुभ्यामपि वैश्यांश्च पद्भ्यां शूद्रांस्तथा विभुः ॥ १६ ॥

ततस्तु ससृजे यक्षान्राक्षसांश्च तथा विभुः । चतुर्विधैस्तु भूर्लोकं भुवो लोकं वियच्चरैः ॥
भूतैः स्वर्मार्गगैरन्यैः स्वर्लोकं समपूरयत् । महर्लोकं तथा तैस्तैर्भूतैश्च सनकादिभिः ॥
जनलोकन्ततश्चैव वैराजैः समपूरयत् । तपोलोकं ततो देवैस्तपोनिष्ठैरपूरयत् ॥ १९ ॥
अपुनर्मारकैर्देवैः सत्यलोकमपूरयत् । सृष्टिं सृष्ट्वा तथा देवो भगवान् भूतभावनः ।
कल्पसंज्ञान्तदामोघां जगन्ति परमेश्वरः ॥ २० ॥

तस्मिञ्जगति भूर्लोको भुवोलोकश्च जायत । स्वर्लोकश्च त्रयोऽप्येते जायन्ते नात्र संशयः॥
सुप्ते तु देवे कल्पान्ते तावती रात्रिरिष्यते । त्रैलोक्यमेतत्सुप्तं स्यात्तथोपप्लवताङ्गतम् ॥
ततो रात्र्यां व्यतीतायामुत्थितः कमलेक्षणः चिन्तयामास तान्वेदान्मातरञ्च चतुर्ष्वपि ॥
चिन्तयानः स देवेशस्तान्वेदान्नाध्यगच्छत । लोकमार्गस्थितिं कर्तुं निद्राज्ञानेन मोहितः॥
चिन्तयामास देवेशो नात्र देवो व्यवस्थितः ॥२४॥

ततः स्वमूर्तौ तोयाख्ये लीनान्दृष्ट्वा महेश्वरः ।
जिघृक्षुश्चिन्तयामास मत्स्यो भूत्वाऽविशज्जलम् ॥२५॥

एवं ध्यात्वा महामत्स्यस्तत्क्षणात्समजायत । विवेश च जलन्देवः समन्तात्क्षोभयन्निव॥

तस्मिन् प्रविष्टे सहसा जलन्तु महामहीध्रग्वपुषि प्रकाशम् ।
मात्स्यं गते देववरे महोदधिं हरिं स्तवैस्तुष्टुवुरुद्धृताक्षितिम् ॥ २७ ॥
नमोस्तु वेदान्तरगाप्रतर्क्य नमोस्तु नारायण मत्स्यरूप ।
नमोऽस्तु ते सुस्वर विश्वमूर्ते नमोऽस्तु विद्याद्वयरूपधारिन् ॥ २८ ॥
नमोस्तु चन्द्रार्कमनेकरूप जलान्तविश्वस्थितचारुनेत्र ।
नमोस्तु विष्णोः शरणं व्रजामः प्रपाहि नो मत्स्यतनुं विहाय ॥ २९ ॥
त्वया ततं विश्वमनन्तमूर्ते । पृथङ्नते किञ्चिदिहास्ति देव ।
भवान्न चास्य व्यतिरिक्तमूर्तिस्त्वत्तो वयन्ते शरणं प्रपन्नाः ॥ ३० ॥
खात्मेन्दुवह्निश्च मनश्च रूपं पुराणमूर्तेस्तव चाब्जनेत्र ।
क्षमस्व शम्भो यदि भक्तिहीनं त्वया जगद्भासति देवदेव ॥ ३१ ॥
विरुद्धमेतत्तव देवरूप सुभाषणं सुस्वनमाद्रितुल्यम् ।
पुराण देवेश जगन्निवास शमं प्रयाह्यच्युततीव्रभानो ॥ ३२ ॥

नमामः सर्वे शरणं प्रपन्ना भयाच्च ते रूपमिदं प्रपश्य ।
लोके समस्तम्भवता विनाऽद्य न विद्यते देहगतं पुराणम् ॥ ३३ ॥
एवं स्तुतस्तदा देवो जलस्थाञ्जगृहे च सः ।
वेदान् सोपनिषच्छास्त्राण्यतः स्वं रूपमास्थितः ॥ ३४ ॥
यावत्स्वमूर्तिर्भगवान्तावदेव जगत्त्विदम् । कूटस्थे तल्लयं याति विकृतस्थे विवर्धते ॥
इति वराहपुराणे आदिकृतवृत्तान्ते सृष्टिवर्णने नवमोऽध्यायः ।

---

# दशमोऽध्यायः

वराह उवाच

एवं सृष्ट्वा जगत्सर्वं भगवान् भूतभावनः । विरराम ततः सृष्टेर्व्यवर्त धरे तदा ॥
वृद्धायामथ सृष्टौ तु सर्वदेवाः पुरातनम् । नारायणाख्यं पुरुषं यजन्तो विविधैर्मखैः ॥
द्वीपेषु चैव सर्वेषु वर्षेषु च मखैर्हरिम् । देवाः सत्रैर्महद्भिस्ते यजन्तः श्रद्धयान्विताः ॥
तोषयामासुरत्यर्थं स्वम्पूज्यं कर्त्तुमीप्सवः ॥ २ । ३ ।
एवं तोषयतां तेषां बहुवर्षसहस्रिकः । कालो देवस्तदा तुष्टः प्रत्यक्षत्वं जगाम ह ॥
अनेकबाहूदरवक्त्रनेत्रो महागिरेः शृङ्गमिवोल्लिखस्तदा ।
उवाच किं कार्यमथो सुरेशो ब्रूत वरन्देववरा वरं वः ॥ ५ ॥

देवा ऊचुः

जयस्व गोविन्द महानुभाव त्वया वरं नाथवरेण देवाः ।
मनुष्यलोकेऽपि भवन्तमाद्यं विहाय नास्मान्भवते ह कश्चित् ॥ ६ ॥
चन्द्रादित्यौ वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
सर्वे भवन्तं शरणागताः स्म कुरुष्व पूज्यानिह विश्वमूर्त्ते ॥ ७ ॥
एवमुक्तस्तदा तैस्तु महायोगीश्वरो हरिः । करोमि सर्वान्वः पूज्यानित्युक्त्वाऽन्तरधीयत ॥
देवा अपि निजौकांसि गतवन्तः सनातनाः ।
स्तुवन्तः परमेशोऽपि त्रिविधम्भावमास्थितः ॥ ९ ॥
एवं त्रिधा जगद्धाता भूत्वा देवान्महेश्वरः ।
आराध्य सात्त्विकं राजस्तामसञ्च त्रिधा स्थितम् ॥ १० ॥
सात्त्विकेन पठेद्वेदान्यजन्यज्ञेन देवताः । आत्मनोऽवयवो भूत्वा राजसेनापि केशवः ॥
स कालरूपिणं रौद्रं प्रकृत्या शूलपाणिनम् ।
आत्मनो राजसीं मूर्त्तिं पूजयामास भक्तितः ॥ १२ ॥
तामसेनापि भावेन असुरेषु व्यवस्थितः ॥ १३ ॥
एवं त्रिधा जगद्धाता भूत्वा देवान्महेश्वरः ।
आराधयामास ततो लोकोऽपि विविधोऽभवत् ॥ १४ ॥

एवं विष्णुर्महेशानां नाम शङ्कन्व्यवस्थितः । स च नारायणो देवः कृते युगवरे प्रभुः ॥
त्रेतायां रुद्ररूपस्तु द्वापरे यज्ञमूर्त्तिमान् । कलौ नारायणो देवो बहुरूपो व्यजायत ॥
तस्यादिकर्तृतो विष्णोश्चरितं भूरितेजसः । शृणुष्व सर्वं सुश्रोणि गदतो मम भामिनि॥
आसीत्कृतयुगे राजा सुप्रतीको महाबलः । तस्य भार्याद्वयं चासीदविशिष्टं मनोरमम् ॥
विद्युत्प्रभा कान्तिमती तयोरेते तु नामनी । तयोः पुत्रं समं राजा न लेभे बलवानपि॥
यदा तदा मुनिश्रेष्ठमात्रेयं वीतकल्मषम् । तोषयामास विधिना चित्रकूटे नगोत्तमे ॥
स ऋषिस्तोषितस्तेन दीर्घकालं वरार्थिना । वरन्दित्सुतया यावदब्रवीदत्रिजो मुनिः ॥
तावदिन्द्रोऽपि करिणा गतः पार्श्वेन तस्य ह । देवसैन्यैः परिवृतस्तूष्णीमेव महाबलः ॥
तं दृष्ट्वा तद्गतप्रीतिरप्रीतिं प्रीतवान्मुनिः । चुकोप देवराजाय शापमुग्रं ससर्ज ह ॥
यस्मात्त्वया ममावज्ञा कृता मूढ दिवस्पते । ततस्त्वं चालितो राज्यादन्यलोके वसिष्यसि॥
एवमुक्त्वाऽपि कोपेन सुप्रतीकञ्च भूपतिम् । उवाच राजन्पुत्रस्ते भविता दृढविक्रमः ॥
इन्द्ररूपोपमः श्रीमानुद्यच्छस्त्रः प्रतापवान् । विद्याप्रभावतत्त्वज्ञः क्रूरकर्मा भविष्यति ॥

दुर्जयोऽतिबलो राजा एवमुक्त्वा गतो मुनिः ॥ २७ ॥

सोऽपि राजा सुप्रतीको भार्यायां गर्भमावहत् ।
विद्युत्प्रभायां धर्मज्ञः साऽपि काले त्वसूयत ॥ २८ ॥

तस्याः पुत्रः समभवद्दुर्जयाख्यो महाबलः । जातकर्मादिसंस्कारं तस्य चक्रे मुनिः स्वयम्॥
तस्य चेष्टैर्बलेनासौ मुनेः सौम्यो बभूव ह । वेदशास्त्रार्थविद्यायां पारगो धर्मवान् शुचिः॥

या द्वितीयाऽभवत्पत्नी तस्य राज्ञो महात्मनः ।

नाम्ना कीर्तिमती[1] धन्या तस्याः पुत्रो बभूव ह । नाम्ना सुद्युम्न इत्येवं वेदवेदाङ्गपारगः॥
अथ कालेन महता स राजा राजसत्तमः । सुप्रतीकः सुतन्दृष्ट्वा दुर्जयं योग्यमन्तिके ॥

आत्मनो वृद्धभावञ्च वाराणस्यधिपो बली ।
चिन्तयामास राज्यार्थं दुर्जयं प्रति भामिनि ॥ ३३ ॥

एवं सञ्चिन्त्य धर्मात्मा तस्य राज्यं ददौ नृपः । स्वयञ्च चित्रकूटाख्यं पर्वतं स जगाम ह ॥

दुर्जयोऽपि महद्राज्यं हस्त्यश्वरथवाजिभिः ।
संयोज्य चिन्तयामास राज्यवृद्धिं प्रति प्रभुः ॥ ३५ ॥
एवं सञ्चिन्त्य मेधावी हस्त्यश्वरथपत्तिभिः ।
समेतां वाहिनीं कृत्वा उत्तरां दिशमाश्रितः ॥ ३६ ॥

तस्य चोत्तरतो देशाः सर्वे सिद्धा महात्मनः । भारताख्यमिदं वर्षं साधयित्वा सुदुर्जयः॥
ततः किंपुरुषं नाम वर्षं तेनाऽपि साधितम् । ततः परतरञ्चान्यद्धरिवर्षं जिगाय सः ॥
रम्यं[2] रोमावतं वापि कुरुभद्राश्वमेव च । इलावृतं मेरुमध्यमेतत्सर्वं जिगाय सः ॥

जित्वा जम्बाख्यमेनद्धि द्वीपं यावदसौ नृपः ।
जगाम देवराजानं जेतुं सर्वं सुरान्विभुम् ॥ ४० ॥

---

१. कान्तीमती इति पाठान्तरम् । २. रम्यं हैमवतं चाऽपि इति क्वचित्पाठः ।

मेरुपर्वतमारुह्य देवगन्धर्वदानवान् । गुह्यकान् किन्नरान्दैत्यांस्ततो ब्रह्मसुतो मुनिः ।
नारदो दुर्जयजयं देवराजाय संशते ॥ ४१ ॥

तत इन्द्रस्त्वरायुक्तो लोकपालैः समन्वितः ।
जगाम दुर्जयं हन्तुं सोऽचिरेणास्त्रनिर्जितम् ॥ ४२ ॥
विहाय पर्वतं मेरुं मर्त्यलोकमिहागतः ॥ ४३ ॥
पूर्वदेशे च देवेन्द्रो लोकपालैः समं प्रभुः ।
स्थितवांस्तस्य सुमहच्चरितं सम्भविष्यति ॥ ४४ ॥

दुर्जयश्च सुराञ्जित्वा यावत्प्रतिनिवर्त्तते । गन्धमादनपृष्ठे तु स्कन्धावारनिवेशनं ।
कृत्वाऽवस्थितसम्भारमागतौ तापसौ तु तम् ॥ ४५ ॥
तावागतौ तथाऽब्रूतां राजन्दुर्जयलोकपाः ।
निवारितास्त्वया सर्वे लोकपालैर्विना जगत् । न प्रवर्त्तत्ततो देहि तत्पदं सुखमुत्तमम् ॥
एवमुक्ते ततस्तौ तु दुर्जयः प्राह धर्मवित् । कौ भवन्ताविति ततस्तावूचतुररिन्दमौ ॥
विद्युत्सुविद्यनामानावसुराविति नामतः ।
त्वया सम्प्रति चेच्छामी धर्मं सत्सु सुसंस्कृतम् ॥ ४८ ॥

लोकपानां सर्वमावाङ्कर्म कुर्वः सुदुर्जय । एवमुक्ते दुर्जयेन तौ स्वर्गे सन्निवेशितौ॥
लोकपालौ कृतौ सद्यस्ततोऽन्तर्धानमापतुः । तयोरपि महत्कर्म चरितञ्च धराधरे ॥
भविष्यति महाराजो दुर्जयो मन्दरोपरि । धनदस्य वनं दिव्यं दृष्ट्वा नन्दनसन्निभम् ॥
मुदा बभ्राम रम्योऽस्मिन्स यावद्राजसत्तमः । तावत्सुवर्णवृक्षाधः कन्याद्वयमपश्यत ॥
अतीवरूपसम्पन्नमतीवाद्भुतदर्शनम् । दृष्ट्वा तु विस्मयाविष्टः क इमे शुभलोचने ।

एवं सञ्चिन्त्य यावत्स क्षणमेकं व्यवस्थितः ।
तस्मिन्वने तावद्शुभौ तापसौ सोऽवलोकयत् ॥ ५३।५४ ॥
तौ दृष्ट्वा सहसा राजा ययौ प्रीत्या परां मुदम् ।
अवतीर्य द्विपात्तूर्णं नमश्चक्रे तयोः स्वयम् ॥ ५५ ॥
उपविष्टः स ताभ्यान्तु कौश्ये दत्ते वरासने ।
पृष्टः कस्त्वं कुतश्चासि कस्य वा किमिह स्थितः ॥ ५६ ॥

तौ प्रहस्याब्रवीद्राजा सुप्रतीकेति विश्रुतः । तस्य पुत्रः समुत्पन्नो दुर्जयो नाम नामतः ॥
पृथिव्यां सर्वराजानो जिगीषन्निह सत्तमौ ।
आगतोऽस्मि ध्रुवञ्चैव स्मर्त्तव्योऽहं तपोधनौ ।
भवन्तौ कौ समाख्यातं ममानुग्रहकाङ्क्षया ॥ ५८ ॥

तापसावूचतुः

आवां हेतृप्रहेत्राख्यौ मनोः स्वायम्भुवः सुतौ ।
आवां देवविनाशाय गतौ स्वो मेरुपर्वतम् ॥ ५९ ॥

तत्रावयोर्महासैन्यं गजाश्वरथसङ्कुलम् । जिगाय सर्वदेवानां शतशोऽथ सहस्रशः ॥
ते च देवा महत्सैन्यं दृष्ट्वा सैन्यं निपातितम् । असुरैरुज्झितप्राणं ततस्ते शरणं गताः ॥
क्षीराब्धौ यत्र देवेशो हरिः शेते स्वयं प्रभुः ।
तत्र विज्ञापयामासुः सर्वं[1] प्रणतिपूर्वकम् ॥ ६१।६२ ॥

देव देव हरे सर्वं सैन्यं त्वसुरसत्तमैः । पराजितं परित्राहि भीतं विह्वललोचनम् ॥
त्वया देवासुरे युद्धे पूर्वं त्राता स्म केशव । सहस्रबाहोः क्रूरस्य समरे कालनेमिनः ॥
इदानीमपि देवेश असुरौ देवकण्टकौ । हेतृप्रहेतृनामानौ बहुसैन्यपरिच्छदौ ॥
तौ हत्वा त्राहि नः सर्वान्देवदेव जगत्पते ॥ ६५ ॥

एवमुक्तस्ततो देवो विष्णुर्नारायणः प्रभुः । अहं यास्यामि तौ हन्तुमित्युवाच जगत्पतिः॥
एवमुक्तास्ततो देवा मेरुपर्वतसन्निधौ । प्रतस्थुस्तेऽथ मनसा चिन्तयन्तो जनार्दनम् ॥
तैः सञ्चिन्तितमात्रस्तु देवश्चक्रगदाधरः । आवयोः सैन्यमाविश्य एक एव महाबलः ॥
एकधा दशधात्मानं शतधा च सहस्रधा ।
लक्षधा कोटिधा कृत्वा स्वभूत्वा च जगत्पतिः ॥ ६८।६९ ॥
एवं स्थिते देववरे अस्मत्सैन्ये महाबलः । यः कश्चिदसुरो राजन्नावयोर्बलमाश्रितः ।
स हतः पतितो भूमौ दृश्यते गतचेतनः ॥ ७० ॥

एवं तत्सहसा सैन्यं मायया विश्वमूर्त्तिना । निहत्य मांसलकलम्पत्तिध्वजसमाकुलम् ।
चतुरङ्गं बलं सर्वं हत्वा देवो रथाङ्गधृक् । आवां शेषावथो दृष्ट्वा गतोऽन्तर्धानमीश्वरः॥
आवयोरीदृशं कर्म दृष्टं देवस्य शार्ङ्गिणः । ततस्तमेव शरणं गतावाराधनाय वै ॥
त्वञ्चास्मन्मित्रतनयः सुप्रतीकात्मजो नृपः । इमे च आवयोः कन्ये गृहाण मनुजेश्वर ।
हेतृकन्या सुकेशी तु मिश्रकेशी प्रहेतृणः ॥ ७४ ॥

दुर्जयस्त्वेवमुक्तस्तु हेतृणा ते उभे शुभे । कन्ये जग्राह धर्मेण भार्यार्थं मनुजेश्वरः ॥
ते लब्ध्वा सहसा राजा मुदा परमया युतः । आजगाम स्वकं राष्ट्रं निजसैन्यसमावृतः ॥
ततः कालेन महता तस्य पुत्रद्वयं बभौ । सुकेश्याः प्रभवः पुत्रो मिश्रकेश्याः सुदर्शनः ॥
स राजा दुर्जयः श्रीमाल्लँब्ध्वा पुत्रद्वयं शुभम् ।
स्वयं कालान्तरे श्रीमाञ्जगामारण्यमन्तिके ॥ ७८ ॥
तत्रस्थो वनजाञ्जन्तून्बन्धयन्वै भयङ्करान् । ददर्शारण्यमाश्रित्य मुनिं स्थितमकल्मषम् ॥
तपस्यन्तं महाभागं नाम्ना गौरमुखं शुभम् ।
ऋषिवृन्दस्य गोप्तारं त्रातारं पापिनां स्वयम् ॥ ७९।८० ॥
तस्याश्रमो विमलजलाविलोमरुत् सुगन्धिवृक्षप्रवरो द्विजन्मनः ।
रराज जीमूत इवाम्बरान्महीमुपागतः प्रवरविमानवद्गृहः ॥ ८१ ॥
ज्वलन्मुखाग्निप्रतिभासिताम्बरः सुशुद्धसंवासितवेशकुट्टकः ।

---

१. सर्वे इति वा पाठः ।

शिष्यैः समुच्चारितसामनादकः सुरूपयोषिद्दषिकन्यकायुतः ।
इतीदृशोऽस्यावसथो वराश्रमे सुपुष्पिताशेषतरुप्रसूनः ॥ ८२ ॥

इति श्रीवराहपुराणे दुर्जयचरिते दशमोऽध्यायः ।

---

# एकादशोऽध्यायः

वराह उवाच

ततस्तमीदृशं दृष्ट्वा तदा गौरमुखाश्रमम् । दुर्जयश्चिन्तयामास रम्यमाश्रममण्डलम् ॥
प्रविशाम्यत्र पश्यामि ऋषीन् परमधार्मिकान् ।
चिन्तयित्वा तदा राजा प्रविवेश तमाश्रमम् ॥ २ ॥
तस्य प्रविष्टस्य ततो राज्ञः परमहर्षितः । चकार पूजां धर्मात्मा तदा गौरमुखो मुनिः॥
स्वागतादिक्रियाः कृत्वा कथान्ते तं महामुनिः ।
स्वशक्त्याहं नृपश्रेष्ठ सानुगस्य तु भोजनम् ।
करिष्यामि प्रमुच्यन्तां साधुवाहा इति द्विजः ॥ ४ ॥
एवमुक्त्वा स्थितस्तूष्णीं स मुनिः शंसितव्रतः ।
राजापि तस्थौ तद्भक्त्या स्वसहायैः समन्वितः ॥ ५ ॥
अक्षौहिण्यो बलस्यास्य पञ्चमात्रं तदा स्थिताः ।
अयञ्च तापसः किं मे दास्यते भोजनं त्विह ॥ ६ ॥
निमन्त्र्य दुर्जयं विप्रस्तदा गौरमुखो नृपम् ।
चिन्तयामास किञ्चास्य मया देयं तु भोजनम् ॥ ७ ॥
एवं चिन्तयतस्तस्य महर्षेर्भावितात्मनः । स्थितो मनसि देवेशो हरिर्नारायणः प्रभुः ॥
ततः संस्मृत्य मनसा देवं नारायणं तदा । तोषयामास गङ्गायां प्रविश्य मुनिसत्तमाः ॥

धरण्युवाच ।

कथं गौरमुखो विष्णुं तोषयामास भूधर । एतन्मे कौतुकं श्रोतुं सम्यगिच्छा प्रवर्तते ॥

वराह उवाच ।

नमोऽस्तु विष्णवे नित्यं नमस्ते पीतवाससे । नमस्ते चाद्यरूपाय नमस्ते जलरूपिणे ॥
नमस्ते सर्वसंस्थाय नमस्ते जलशायिने । नमस्ते क्षितिरूपाय नमस्ते तैजसात्मने ॥
नमस्ते वायुरूपाय नमस्ते व्योमरूपिणे । त्वं देवः सर्वभूतानां प्रभुस्त्वमसि हृच्छयः ॥
त्वमोङ्कारो वषट्कारः सर्वत्रैव च संस्थितः ।
त्वमादिः सर्वदेवानां तव चादिर्न विद्यते ॥ १४ ॥
त्वं भूस्त्वञ्च भुवो देवस्त्वं जनस्त्वं महः स्मृतः ।
त्वं तपस्त्वञ्च सत्यञ्च त्वयि देव चराचरम् ॥ १५ ॥

त्वत्तो भूतमिदं सर्वं विश्वं त्वत्त ऋगादयः ।
त्वत्तः शास्त्राणि जातानि त्वत्तो यज्ञाः प्रतिष्ठिताः ॥ १६ ॥
त्वत्तो वृक्षा वीरुधश्च त्वत्तः सर्ववनौषधी । पशवः पक्षिणः सर्पास्त्वत्त एव जनार्दन ॥
ममापि देवदेवेश राजा दुर्जयसंज्ञितः । आगतोऽभ्यागतस्तस्य आतिथ्यं कर्तुमुत्सहे ॥
तस्य मे निर्धनस्याद्य देवदेव जगत्पते । भक्तिनम्रस्य देवेश कुरुष्वान्नाद्यसञ्चयम् ॥
यं यं स्पृशामि हस्तेन [1]यञ्च पश्यामि चक्षुषा ।
फलं[2] वा तृणकन्दं वा तत्तदन्नं चतुर्विधम् ॥ २० ॥
तथा त्वन्यतमं वापि यद्ध्यातं मनसा मया । तत्सर्वं सिद्ध्यतां मह्यं नमस्ते परमेश्वर ॥

वराह उवाच ।

इति स्तुत्या तु देवेशस्तुतोष जगतां पतिः । मुनेस्तस्य स्वकं रूपं दर्शयामास केशवः ॥
उवाच सुप्रसन्नात्मा ब्रूहि विप्र वरं परम् । एवं श्रुत्वाक्षिणी यावदुन्मीलयति वै मुनिः॥
तदा शङ्खगदापाणिः पीतवासा जनार्दनः । गरुडस्थोऽपि तेजस्वी द्वादशादित्यसुप्रभः ॥
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थितिः । यदि भा सदृशी सा स्याद्भासस्तस्य महात्मनः ॥
तत्रैकस्थञ्जगत्कृत्स्नं प्रविभक्तमनेकधा । ददर्श स मुनिर्देवे विस्मयोत्फुल्ललोचनः ॥
नमामि शिरसा देवं कृताञ्जलिरथाब्रवीत् । यदि मे वरदो देवो भूयाद्भक्तस्य केशवः॥
इदानीमेष नृपतिर्यथा सबलवाहनः । ममाश्रमे कृताहारः श्वः प्रयाता स्वकं गृहम् ॥
इत्युक्तस्तस्य देवेशो वदतः संबभूव ह । चित्तसिद्धिं ददौ तस्मै मणिञ्च सुमहाप्रभम्॥
तं दत्त्वान्तर्दधे देवः स च गौरमुखो मुनिः । जगाम चाश्रमं पुण्यं नानाऋषिनिषेवितम्॥
तत्र गत्वा स विप्रेन्द्रश्चिन्तयामास वै मुनिः ।
हिमवच्छिखराकारं महाभ्रमिव चोन्नतम् । शशाङ्करश्मिसङ्काशं गृहं वै शतभूमिकम्॥
तादृशानां सहस्राणि लक्षकोट्यश्च सर्वशः । गृहाणि निर्ममे विप्रो विष्णोर्लब्धवरस्तदा ॥
प्राकाराणि तत्तोपान्ते तल्लग्नोद्यानकानि च । कोकिलाकुलघुष्टानि नानाद्विजवराणि च॥
चम्पकाशोकपुन्नागनागकेसरवन्ति च । नानाजात्यास्तथा वृक्षा गृहोद्यानेषु सर्वशः ॥
हस्तिनां हस्तिशालाश्च तुरगाणाञ्च मन्दुराः ।
चकार सञ्चयान्विप्रो नानाभक्षाणि सर्वशः ॥ ३५ ॥
भक्ष्यं भोज्यन्तथा लेह्यं चोष्यं बहुविधं तथा । चकारान्नाद्यविषयं हेमपात्रञ्च[3]सर्वतः ॥
एवमुक्त्वा स विप्रस्तु राजानं भूरितेजसम् । उवाच सर्वसैन्यानि प्रविशन्तु गृहानिति ॥
एवमुक्तस्ततो राजा तद्गृहं पर्वतोपमम् । प्रविवेशान्तरेष्वन्ये भृत्या विविशुराशु वै ॥
ततस्तेषु प्रविष्टेषु तदा गौरमुखो मुनिः । प्रगृह्य तं मणिं दिव्यं राजानञ्चेदमब्रवीत् ॥२९॥
मज्जनाभ्यवहारार्थं पथि प्रक्रामते तथा । विलासिनीस्तथा दासान्प्रेषयिष्यामि ते नृप॥

---

१. यञ्च इति पाठान्तरम् । २. काष्ठमिति क्वचित्पठ्यते ।
३. हेमपात्राणि इति कुत्रचिद् दृश्यते ।

एवमुक्त्वा स विप्रेन्द्रस्तं मणिं वैष्णवं तदा । एकान्ते स्थापयामास राज्ञस्तस्य प्रपश्यतः ॥
तस्मिन्स्थापितमात्रे तु मणौ शुद्धसमप्रभे । निश्चेरुर्योषितस्तत्र दिव्यरूपाः सहस्रशः ॥

सुकुमाराङ्गरागाद्याः सुकुमारा वराङ्गनाः ।
सुकपोलाः सुचार्वङ्ग्यः सुकेशान्ताः सुलोचनाः ॥ ४३ ॥

काश्चित्सौवर्णपात्रीश्च गृहीत्वा सम्प्रतस्थिरे । एवं यौषिद्गणास्तत्र नराः कर्मकरास्तथा ॥
निर्जग्मुस्तस्य नृपतेः सर्वे भृत्या नृपस्य ह । केवलं भोजनं पूर्वं परिधानञ्च सर्वशः ॥

ताः स्त्रियः सर्वभृत्यानां राजमार्गेण मज्जनम् ।
ददृशुस्ते नरास्तासां हस्तिनां चारुगामिनाम् ॥ ४६ ॥

नानाविधानि तूर्याणि तत्र वाद्यन्त सर्वशः । मज्जतो नृपतेस्तस्य ननृतुश्चान्ययोषितः ॥
अपराश्च जगुस्तत्र शक्रस्येव प्रमज्जतः । एवं दिव्योपचारेण स्नात्वा राजा महामनाः ॥

चिन्तयामास राजेन्द्रो विस्मयाविष्टचेतनः ।
किमिदं मुनिसामर्थ्यात्तपसो वाथवा मणेः ॥ ४९ ॥

एवं स्नात्वोत्तमे वस्त्रे परिधाय नृपस्तथा । विविधान्नन्तु विधिना बुभुजे स नृपोत्तमः॥
यथा च नृपतेः पूजा कृता तेन महर्षिणा । तद्वद्भृत्यजनस्यापि चकार मुनिसत्तमः ॥
यावत्स राजा बुभुजे सभृत्यबलवाहनः । तावदस्तगिरिं भानुर्जगामारुणसप्रभः ॥५२॥

ततस्तु रात्रिः समपद्यताधुना शरच्छशाङ्कोज्ज्वलक्ष्ममण्डिता ।
करोति रागं स च रोहिणीधवः सुसङ्गतं सौम्यगुणैर्युतोपि च ॥५३॥
भृगूद्वहः कृष्णतरांशुभानुना सहोद्यतो दैत्यगुरुः सुराधिकः ।
अथाऽन्यथापक्षगतो न राजते स्वभावयोगेन मतिस्तु देहिनाम् ॥ ५४ ॥
सुरक्ततां भूमिसुतश्च मुञ्चते राहुः शितं चन्द्रमसोंऽशवः सिताः ।
युक्तः स्वभावो जगतः सुरासुरैर्ननु स्वभावो बलवीयकृन्नृपः ॥ ५५ ॥
शनैश्चराख्यापितरश्मिमण्डले सूर्याग्रसिद्धान्तकथेव निर्मले ।
करोति केतुर्न परो महत्तमस्तदा कुशीलेषु गतिश्च निर्मला ॥ ५६ ॥
बुधोच्चबुद्धिर्जगतो विभावयन्नराज राज्ञस्तनयः स्वकर्मभिः ।
भृतीच्छुकः कक्षविवाहिताश्चिराद्धवेदयं साधुषु सम्मितो ध्रुवम् ॥ ५७ ॥
करोति केतुः कपिलं वियच्चिरं राज्ञः सुराणां पथि संशितो भृशम् ।
न दुर्जनः सज्जनसंसदि क्वचित्करोति शुद्धं निजकर्मकौशलम् ॥ ५८ ॥
शशाङ्करश्मिप्रतिभासिता अपि प्रसादमीयुर्न रतीः पदे पदे ।
कुलंभुवाः सम्भवधर्मपत्नयो महांशुयोगान्महतां समुन्नतिः ॥ ५९ ॥
त्रिदोषसंक्रान्तिकृतोऽस्य सर्वशः सुतेन राज्ञो वरुणस्य सूर्यजाः ।
चिरं जिता कौशिकसन्निवेशिता न वेदकर्म क्वचिदन्यथा भवेत्॥ ६० ॥
द्वन्द्वः समेतामनयः शिशुः पुरा हरिं य आराधितवान्नृपासनम् ।
लक्ष्म्यापि बुद्धया सुचिरं प्रकाशितं ध्रुवेण विष्णुस्मरणेन दुर्लभम् ॥६१॥

इतोव सा रात्रिरभून्मुनेः शुभे वराश्रमे दुर्जयभूपतेः शुभा ।
सभृत्यवर्गः सगजाश्ववन्दिनां[1] सुभक्तवस्त्राभरणादिपूजया ॥ ६२ ॥
इतीदृशो ये वररत्नचित्रिताः सुपट्टसंवीतवरान्विताः सदा ।
गृहेषु पर्यङ्कवराः समास्थिताः सुरूपयोषित्स्थितभङ्गभासुराः ॥ ६३ ॥
स तत्र राजा विससर्ज भूभृतः स्वयं सुभृत्यानपि सर्वतो गृहम् ।
गतेषु सुष्वाप वरस्त्रिया वृतः सुरेशवत्स्वर्गगतः प्रतापवान् ॥ ६४ ॥
एवं सुमनसस्तस्य सभृत्यस्य महात्मनः । ऋषेस्तस्य प्रभावेण हृष्टाः प्रसुषुपुस्तदा ॥६५॥
ततो रात्र्यां व्यतीतायां स राजा ताः पुनः स्त्रियः ।
अन्तर्धानं गतास्तत्र दृष्ट्वा तानि गृहाणि वा ॥ ६६ ॥
अदृश्यानि महार्हाणि वरासनगतानि च । स राजा विस्मयाविष्टश्चिन्तयामास दुःखितः ॥
कथमेवं मणिर्मह्यं भवतीति पुनः पुनः । चिन्तयन्नधिगम्याथ स राजा दुर्जयस्तथा ॥
चिन्तामणिमिमञ्चास्य हरामीति विचिन्त्य च । प्रयाणं नोदयामास स राजाश्रमबाह्यतः॥
आश्रमस्य बहिर्गत्वा नातिदूरे सवाहनः । ततो विरोचनाख्यं वै प्रेषयामास मन्त्रिणम् ॥
ऋषेर्गौरमुखस्यापि मणेर्याचनकर्मणि । ऋषिन्तञ्च समागत्य मणिं याचितुमुद्यतः ॥७१॥
रत्नानां भाजनं राजा मणिं तस्मै प्रदीयताम् ।
अमात्येनैवमुक्तस्तु क्रुद्धो गौरमुखोऽब्रवीत् ॥ ७२ ॥
प्रतिग्राहीति विप्रस्तु राजा चैव ददाति च ।
त्वञ्च राजा पुनर्भूत्वा याचसे दीनवत्कथम् ॥ ७३ ॥
एवं ब्रूहि दुराचारं राजानं दुर्जयं स्वयम् ।
गच्छ द्रुतं दुराचारं मा त्वां लोकोऽत्यगादिति ॥ ७४ ॥
एवमुक्तस्तदा दूतो जगाम च नृपान्तिकम् । कथयामास तत्सर्वं यदुक्तं ब्राह्मणेन च ॥
ततः क्रोधपरीतात्मा श्रुत्वा ब्राह्मणभाषितम् ।
दुर्जयः प्राह नीलाख्यं सामन्तं गच्छ मा चिरम् ॥ ७६ ॥
ब्राह्मणस्य मणिं गृह्य तूर्णमेहि यदृच्छया ॥ ७७ ॥
एवमुक्तस्तदा नीलो बहुसेनापरिच्छदः । जगाम स च विप्रस्य वन्यमाश्रममण्डलम् ॥
तत्राग्निहोत्रशालायां दृष्ट्वा तं मणिमाहितम् ।
उत्तीर्य स्यन्दनान्नीलः सोऽवारोहत भूतले ॥ ७९ ॥
अवतीर्णे ततस्तस्मिन्नीले परमदारुणे । क्रूरबुद्ध्या मणेस्तस्मान्निर्जग्मुः शस्त्रपाणयः ।
सरथाः सध्वजाः साश्वाः सवर्णाः सासिचर्मिणः ।
सधनुष्काः सतूणीरा योधाः परमदुर्जयाः ॥ ८१ ॥
निश्चेरुस्तं मणिम्भित्त्वा असङ्ख्येया महाबलाः ।
तत्र सज्जा महाशूरा दश पञ्च च सङ्ख्यया ॥ ८२ ॥

---
१. सगजाश्वदन्तिनामिति वा पाठः ।

नामभिस्तान्महाभागे कथयामि शृणुष्व तत् ॥
सुप्रभो दीप्ततेजाश्च सुरश्मिः शुभदर्शनः ।
सुकान्तिः सुन्दरः सुन्दः प्रद्युम्नः सुमनाः शुभः ॥ ८३ ॥
सुशीलः सुखदः शम्भुः सुदान्तः सोम एव च ।
एते पञ्चदश प्रोक्ता नायका उत्थिता मणे ॥ ८४ ॥
ततो विरोचनं दृष्ट्वा बहुसैन्यपरिष्कृतम् । योधयामासुरव्यग्रा विविधायुधपाणयः ॥
धनूंषि तेषां कनकप्रभाणि शरान्सुजाम्बूनदपुंखनद्धान् ।
पतन्ति खड्गानि विभीषणानि भुशुण्डिशूलाः परमप्रधानाः ॥ ८६ ॥
रथो रथं सम्परिवार्य तस्थौ गजो गजस्यापि हयो हयस्य ।
पदातिरत्युग्रपराक्रमश्च पदातिमेव प्रससार चाग्रचमू ॥ ८७ ॥
द्वन्द्वान्यनेकानि तथैव युद्धे द्रवन्ति शूराः परिभर्त्सयन्तः ।
विभीषणं निर्गतसाधुमार्गं बभूव रक्तप्रभवं सुघोरम् ॥ ८८ ॥
तथा प्रवृत्ते तुमुले च युद्धे हतः स राज्ञः सचिवो विसंज्ञः ।
सहानुगः सर्वबलैरुपेतो जगाम वैवस्वतमन्दिराय ॥ ८९ ॥
तस्मिन् हते दुर्जयराजमन्त्रिणि उपाययौ स्वेन बलेन राजा ।
स दुर्जयः सारवरथोऽतितीव्रः प्रतापवांस्तैर्मणिजैर्युयोध ॥ ९० ॥
ततस्तस्मिंस्तदा राज्ञो महत्कदनमाबभौ ॥ ९१ ॥
ततो हेतृप्रहेतृभ्यां श्रुत्वा जामातरं रणे । युध्यमानं महाबाहुं ततश्चाययतुश्चमूम् ॥९२॥
तस्मिन्बले ये दैतेयास्ताञ्छृणुष्व धरेरितान् । प्रघसो विघसश्चैव सङ्कसोऽशनिसप्रभः॥
विद्युत्प्रभः सुघोषश्च उन्मत्ताक्षो भयङ्करः । अग्निदत्तोऽग्नितेजाश्च बाहुः शक्रः प्रतर्दनः॥
विराधो भीमकर्मा च विप्रचित्तिस्तथैव च । एते पञ्चदश श्रेष्ठा असुराः परमायुधाः॥
अक्षौहिणीपरीवार एकैकोऽत्र पृथक् पृथक् । महामायास्तु समरे दुर्जयस्य दुरात्मनः॥
युयुधुर्मणिजैः सार्धं महासैन्यपरिच्छदाः ॥ ९६ ॥
तं सतेजास्त्रिभिर्बाणैर्विघसं संप्रविध्यत ।
सङ्घं सन्दशभिर्बाणैः सुरश्मिः प्रत्यविध्यत ॥ ९७ ॥
अशनिप्रभं रणेऽविध्यत्पञ्चभिः शुभदर्शनः ।
विद्युत्प्रभं सुकान्तिस्तु सुघोषं सुन्दरस्तथा ॥ ९८ ॥
उन्मत्ताक्षं तथाविध्यत्सुन्दः पञ्चभिराशुगैः । चकर्त्त च धनुस्तस्य शितेन नतपर्वणा ॥
सुमना अग्निदत्तन्तु सुवेदश्चाग्नितेजसम् । सुनलो वायुशक्रौ तु सुवेदस्तु प्रतर्दनम् ॥
परस्परं सुयुद्धेन योधयित्वाबलाघवात् । यथासंख्येन ते दैत्याः पुनर्मणिभवैर्हताः ॥
यावत्स सङ्गरो घोरो महांस्तेषां व्यवर्धत ।
तावत्समित्कुशादीनि कृत्वा गौरमुखो मुनिः ।
आगतो महदाश्चर्यसंग्रामं भीमदर्शनम् ॥ १०२ ॥

बहुसैन्यपरीवारं स्थितं तत्रापि दुर्जयम् । तं दृष्ट्वा स मुनिर्द्वारि चिन्तापरम एव हि॥
उपविश्याधिगम्याथ मणेः कारणमेव ह । एवं कृत्वा मणिकृतं रौद्रं गाढञ्च संयुगम् ॥
चिन्तयामास देवेशं हरिङ्गौरमुखो मुनिः ॥ १०४ ॥
स देवः पुरतस्तस्य पीतवासाः खगासनः । किमत्र ते मया कार्यमिति वाणीमुदीरयत् ॥
स ऋषिः प्राञ्जलिर्भूत्वा प्रोवाच पुरुषोत्तमम् ।
जहीमं दुर्जयं पापं सैन्येन परिवारितम् ॥ १०६ ॥
एवं मुक्तन्तदा तेन चक्रं ज्वलनसन्निभम् । तेन चक्रेण तत्सैन्यमसुरैर्दुर्जयं क्षणात् ॥
निमेषान्तरमात्रेण समग्रं भस्मसात्कृतम् ॥ १०८ ॥
एवं कृत्वा ततो देवो मुनिं गौरमुखन्तदा । उवाच निमिषेणेदं निहतन्दानवङ्कुलम् ॥
अरण्येऽस्मिंस्ततस्त्वेव नैमिषारण्यसंज्ञितम् ।
भविष्यति यथार्थं वै ब्राह्मणानां निवेशनम् ॥ ११० ॥
अहञ्च यज्ञपुरुष एतस्मिन्वनगोचरे । नाम्ना याज्याः सदा चेमे दश पञ्च च नायकाः॥
कृते युगे भविष्यन्ति राजानो मणिजा इमे ॥ ११२ ॥
एवमुक्त्वा ततो देवो गतोऽन्तर्धानमीश्वरः । द्विजोऽपि स्वाश्रमं तस्थौ मुदा परमया युतः॥

इति वराहपुराणे प्रागितिहासे भगवच्छास्त्रे दुर्जयचरिते एकादशोऽध्यायः ।

---

## द्वादशोऽध्यायः

वराह उवाच

ततस्तत्र रथाङ्गाग्नौ दग्धाञ्छ्रुत्वा नरोत्तमान् ।
महच्छोकपरीतात्मा चिन्तयामास पार्थिवः ॥ १ ॥
तस्य चिन्तयतस्त्वेवन्तत्त्वबुद्धिरजायत । चित्रकूटे गिरौ विष्णुः राघवश्च प्रकीर्त्यते ॥
ततोऽहं नामसंज्ञाभिर्हरिं स्तौमि जगत्पतिम् ।
इति सञ्चिन्त्य नृपतिर्जगाम गिरिमुत्तमम् ॥ ३ ॥
चित्रकूटं महापुण्यं नृपः स्तोत्रमुदीरयत् ॥ ४ ॥

दुर्जय उवाच

नमामि रामं नरनाथमच्युतं कविं पुराणं त्रिदशारिनाशनम् ।
शिवस्वरूपं प्रभवं महेश्वरं सदाप्रपन्नार्त्तिहरं धृतश्रियम् ॥ ५ ॥
भवान् सदा देव समस्ततेजसां करोषि तेजांसि समस्तरूपधृक् ।
क्षितौ भवान् पञ्चगुणस्तथा जले चतुःप्रकारस्त्रिविधोऽथ तेजसि ॥ ६ ॥
द्विधाऽथ वायौ वियति प्रतिष्ठितो भवान् हरिः शब्दचरः[1] पुमानसि ।

१. शब्दवर इति पाठान्तरम् ।

भवाञ्छशी सूर्यहुताशनोऽसि त्वयि प्रलीनं जगदेतदुच्यते ॥ ७ ॥
भवत्प्रतिष्ठं रमते जगद्यतः ततोऽसि रामेति जगत्प्रतिष्ठितः ।
भवार्णवे दुःखतरोर्मिसङ्कुले तथाक्षमीनग्रहनक्रभीषणे ॥ ८ ॥
न मज्जति त्वत्स्मरणप्लवो नरः स्मृतोऽसि रामेति तथा तपोवने ।
वेदेषु नष्टेषु भवांस्तथा हरे करोषि मात्स्यं वपुरात्मनः सदा ॥ ९ ॥
युगक्षये रञ्जितसर्वदिङ्मुखे भवांस्तथाग्निर्बहुरूपधृग्विभो ।
कौर्मं तथा त्वं वपुरास्थितः सदा युगे युगे माधव सिन्धुमन्थने ॥ १० ॥
न चान्यदस्तीति भवत्समं क्वचिज्जनार्दनाद्यत्प्रबभूव चोत्तमम् ।
त्वया ततं विश्वमिदं महात्मन् लोकाखिला वेद दिशश्च सर्वाः ॥ ११ ॥
कथं त्वमाद्यं परमन्तु धाम विहाय चान्यं शरणं व्रजामि ।
भवानेकः पूर्वमासीत्ततश्च महानहं सलिलं वह्निरूपैः ॥
वायुस्तथा खञ्च मनोऽपि बुद्धिश्चेतोगुणास्त्वत्प्रभवञ्च[1] सर्वम् ॥ १२ ॥
त्वया ततं विश्वमिदं समस्तं सनातनस्त्वं पुरुषो मतो मे ।
समस्तविश्वेश्वर विश्वमूर्त्ते सहस्रबाहो जय देव देव नमोऽस्तु रामाय महानुभाव ॥
इति स्तुतो देववरः प्रसन्नः तदा तु राज्ञः सुप्रतीकस्य मूर्तिम् ।
मन्दर्शयामास ततोऽभ्युवाच वरं वृणीष्वेति च सुप्रतीक ॥ १४ ॥
एवं श्रुत्वा वचनं तस्य राजा ससम्भ्रमं देववरं प्रणम्य ।
उवाच देवेश्वर मे प्रयच्छ लयं यदास्ते परमं वपुस्ते ॥
इतीरिते राजवरः क्षणेन लयं तथाऽगादसुरघ्नमूर्तौ ध्यानेन युक्तः पुरुषं गृणन्तं॥
स्थितस्तस्मिन्नात्मभूतो विमुक्तः स भूमिपः कर्मकाण्डैरनेकैः ॥ १६ ॥

वराह उवाच

इतीरितन्ते तु मया पुराणं स्वयम्भुवे चादिकृतैकदेशम् ।
शक्यं न चास्यैर्बहुभिः सहस्रैरपीह केनापि सुखेन वक्तुम् ॥ १७ ॥
उद्देशतः संस्मृतमात्रमेतन्मयाऽपि भद्रे कथितं पुराणम् ।
समुद्रतोयात् परिमाणवर्षं क्वचित् क्वचिदुत्तमथोह्यन धर्मम् ॥ १८ ॥
स्वयम्भुवा कथितं ब्रह्मणापि नारायणेनापि कुतोभयेन ।
अशक्यमस्माभिरितीरितन्ते न मूर्तमस्य स्मरणीयमाद्यम् ॥ १९ ॥
समुद्रे वालुकासङ्ख्या विद्यते रजसः क्षितौ । न तु अस्य पुनः सङ्ख्या क्रीडतः परमेष्ठिनः ॥
एष नारायणस्यांशो मया प्रोक्तः शुचिस्मिते ।
कृते वृत्तान्त एषश्च किमन्यच्छ्रोतुमिच्छसि ॥ २१ ॥
इति वराहपुराणे नारायणैश्वर्यं द्वादशोऽध्यायः ।

---

१. त्वत्तो गुणास्तत्प्रभवश्च इति पाठान्तरम् ।

# त्रयोदशोऽध्यायः

धरण्युवाच

एतन्मे महदाश्चर्यं दृष्ट्वा गौरमुखो मुनिः ।
ते चापि मणिजाः प्राप्ताः किं फलन्तु वरं गुरो ॥ १ ॥
कोऽसौ गौरमुखः श्रीमान्मुनिः परमधार्मिकः ।
किं चकार मुनेः कर्म दृष्ट्वासौ मुनिपुङ्गवः ॥ २ ॥

वराह उवाच

निमिषेण कृतं कर्म दृष्ट्वा भगवता मुनिः । आरिराधयिषुर्देवन्तमेव प्रययौ वनम् ॥
प्रभासं नाम सोमस्य तीर्थं परमदुर्लभम् । तत्र दैत्यान्तकृद्देवः प्रोच्यते तीर्थचिन्तकैः ॥
आराधयामास हरिन्दैत्यसूदनसंज्ञितम् । तस्याराधयतो देवं हरिं नारायणं प्रभुम् ।
आजगाम महायोगी मार्कण्डेयो महामुनिः ॥ ५ ॥
तं दृष्ट्वाभ्यागतन्दूरादर्घ्यपाद्येन सो मुनिः ।
अर्चयामास तम्भक्त्या मुदा परमया युतः ॥ ६ ॥
कौश्यां वृष्यां तदासीनं पप्रच्छेदं मुनिस्तदा ।
शाधि मां मुनिशार्दूल किं करोमि महाव्रत ॥ ७ ॥
एवमुक्तः स विप्रेन्द्रो मार्कण्डेयो महातपाः ।
उवाच श्लक्ष्णया वाचा मुनिं गौरमुखन्तदा ॥ ८ ॥

मार्कण्डेय उवाच

सर्वेषामेव देवानामाद्यो नारायणो गुरुः ।
तत्पद्ब्रह्मा समुत्पन्नः सोऽपि सप्तासृजन्मुनीन् ॥ ९ ॥
मां यजस्वेति तेनोक्तास्तदा ते परमेष्ठिना । आत्मनात्मानमेवाग्रे अयजन्त इति श्रुतिः॥
तेषां वै ब्रह्मजातानां महावैकारिकर्मणाम् अशपद्व्यभिचारे हि महानेष कृतो यतः ।
प्रभ्रष्टज्ञानिनः सर्वे भविष्यन्ति न संशयः ॥ ११ ॥
एवं शप्तास्ततस्ते वै ब्रह्मणात्मसमुद्भवाः । सद्यो वंशकरान्पुत्रानुत्पाद्य त्रिदिवं ययुः ॥
ततस्तेषु प्रयातेषु त्रिदिवं ब्रह्मवादिषु । तत्पुत्राः श्राद्धदानेन तर्पयामासुरञ्जसा ॥
ते च वैमानिकाः सर्वे ब्रह्मणः सप्त मानसाः ।
तत्पिण्डदानं मन्त्रोक्तं प्रपश्यन्तो व्यवस्थिताः ॥ १४ ॥

गौरमुख उवाच

ये च ते पितरो ब्रह्मन् यं च कालं समासते ।
कियन्तो वै पितृगणास्तस्मिन् लोके व्यवस्थिता ॥ १५ ॥

मार्कण्डेय उवाच

प्रवर्तन्ते वराः केचिद्देवानां सोमवर्धनाः । ते मरीच्यादयः सप्त स्वर्गे ते पितरः स्मृताः॥

चत्वारो मूर्तिमन्तो वै त्रयस्त्वन्ये ह्यमूर्तयः।
तेषां लोकनिसर्गञ्च कीर्त्तयिष्यामि तच्छृणु ॥ १७ ॥
लोकाः सन्तानका नाम यत्र तिष्ठन्ति भास्वराः।
देवानां पितरस्ते हि तान्यजन्तीह देवताः ॥ १८ ॥
एते वै लोकविभ्रष्टा लोकान् प्राप्य सनातनान्। पुनर्युगशतान्तेषु जायन्ते ब्रह्मवादिनः ॥
ते प्राप्य तां स्मृतिम्भूयः साध्ययोगमनुत्तमम्।
चिन्त्य योगगतिं शुद्धां पुनरावृत्तिदुर्लभाम् ॥ २० ॥
एते स्म पितरः श्राद्धे योगिनां योगवर्धनाः आप्यायितास्तु ते सर्वे योगियोगबलेन च ॥
तस्माच्छ्राद्धानि देयानि योगिनां योगिसत्तम।
एष वै प्रथमः सर्गः सोमपानामनुत्तमः ॥ २२ ॥
एते त एकतनवो वर्तन्ते द्विजसत्तमाः। भूर्लोकवासिनां याज्याः स्वर्गलोकनिवासिनः ॥
ब्रह्मपुत्रा मरीच्याद्यास्तेषां याज्या मरुद्गणाः। कल्पवासिकसंज्ञानां तेषामपि जनैर्हताः॥
सनकाद्यास्ततस्तेषां वैराजा तपसि स्थिताः।
तेषां सप्त गणाः प्रोक्ता इत्येषा पितृसन्ततिः ॥ २५ ॥
तेऽपि याज्याः पृथग्वर्णैर्न शूद्रेभ्यः पृथक्कृताः।
वर्णत्रयाभ्यनुज्ञातः शूद्रः सर्वान्पितॄन्यजेत् ॥ २६ ॥
ते तु तस्य पृथक् सन्ति पितरः शूद्रजातयः। मुक्ताश्वेतनका ब्रह्मन्न दृश्यन्ते पितृष्वपि॥
विशेषशास्त्रदृष्ट्या तु पुराणानाञ्च दर्शनात्।
एवं ऋषिस्तुतैः शास्त्रैर्ज्ञात्वा याज्यान् स्वसम्भवान्।
स्वयं सृष्ट्यां स्मृतिर्लब्धा पुत्राणां ब्रह्मणा ततः।
परं निर्वाणमापन्नास्तेऽपि ज्ञानेन एव च ॥२९॥
वस्वादीनां कश्यपाद्या वर्णानां वसवादयः।
अविशेषेण विज्ञेया गन्धर्वाद्या अपि ध्रुवम् ॥३०॥
एष ते पैतृकः सर्ग उद्देशेन महामुने। कथितो नान्त एवास्य वर्षकोट्या हि दृश्यते ॥
श्राद्धस्य कालान्वक्ष्यामि तान्छृणुष्व द्विजोत्तम ॥ ३२ ॥
श्राद्धार्हमागतन्द्रव्यं विशिष्टमथवा द्विजम्।
श्राद्धं कुर्वीत विज्ञाय व्यतिपातेऽयने तथा ॥ ३३ ॥
विषुवे चैव संप्राप्ते ग्रहणे शशिसूर्ययोः। समस्तेष्वेव विप्रेन्द्र राशिष्वर्केऽतिगच्छति ॥
नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने। इच्छाश्राद्धानि कुर्वीत नवशस्यागमे तथा ॥
अमावस्या यदा आर्द्रा विशाखास्वातियोगिनी।
श्राद्धैः पितृगणस्तृप्तिं तदाप्नोत्यष्टवार्षिकीं ॥ ३६ ॥
अमावस्या यदा पुष्ये रौद्रेऽर्क्षे च पुनर्वसौ।
द्वादशाब्दं तथा तृप्तिं प्रयान्ति पितरोऽर्चिताः ॥ ३७ ॥

वासवाजैकपादर्क्षे पितॄणां तृप्तिमिच्छताम् । वारुणे चाप्यमावास्या देवानामपि दुर्लभा॥
नवस्वर्क्षेष्वमावास्या यदा तेषु द्विजोत्तम । तदा श्राद्धानि देयानि अक्षय्यफलमिच्छताम्॥
अपि कोटिसहस्रेण पुण्यस्यान्तो न विद्यते ॥ ३९ ॥
अथापरम्पितरः श्राद्धकालं रहस्यमस्मात्प्रवदन्ति पुण्यम् ।
वैशाखमासस्य तु या तृतीया नवम्यसौ कार्तिकशुक्लपक्षे ॥४०॥
नभस्यमासस्य तमिस्रपक्षे त्रयोदशी पञ्चदशी च माघे ।
उपप्लवे चन्द्रमसो रवेश्च चतसृष्वप्यष्टकास्वयनद्वये च ॥४१॥
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समासहस्रं रहस्यमेतत्पितरो वदन्ति ॥४२॥
माघसिते पञ्चदशी कदाचिदुपेति योगं यदि वारुणेन ।
ऋक्षेण कालः परमः पितॄणां न त्वल्पपुण्यैर्द्विज लभ्यतेऽसौ ॥४३॥
काले धनिष्ठा यदि नाम तस्मिन् लभ्येत विप्रेन्द्र यदा पितृभ्यः ।
दत्तं जलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः ॥४४॥
तत्रैव चेद्भाद्रपदा तु पूर्वा काले तदा यैः क्रियते पितृभ्यः ।
श्राद्धं परान्तृप्तिमुपैत्यनेन युगं समग्रं पितरः स्वपन्ति ॥४५॥
गङ्गां शतद्रुमथवा विपाशां सरस्वतीं नैमिषगोमतीं वा ।
ततो गवाद्यार्चनमादरेण कृत्वा पितॄणामहितानि हन्ति ॥ ४६ ॥
गायन्ति चैतत्पितरः कदा तु त्रयोदशीयुक्तमघासु भूयः ।
वर्षासितान्ते शुभतीर्थतोयैर्यास्याम तृप्तिं तनयादिदत्तैः ॥ ४७ ॥
चित्तञ्च वित्तञ्च नृणां विशुद्धं शस्तश्च कालः कथितो विधिश्च ।
पात्रं यथोक्तं परमा च भक्तिर्नृणां प्रयच्छन्त्यभिवाञ्छितानि ॥ ४८ ॥
पितृगीतांस्तथैवात्र श्लोकांस्ताञ्छृणु सत्तम ।
श्रुत्वा तथैव भविता भाव्यन्तत्र विधात्मना ॥ ४९ ॥
अपि धन्यः कुले जायादस्माकं मतिमान्नरः ।
अकुर्वन्वित्तशाठ्यं यः पिण्डान्नो निर्वपिष्यति ॥ ५० ॥
रत्नवस्त्रमहायानं सर्वन्तोयादिकं वसु । विभवे स तु[1] विप्रेभ्यः अस्मानुद्दिश्य दास्यति ॥
अन्नेन वा यथाशक्त्या कालेऽस्मिन् भक्तिनम्रधीः ।
भोजयिष्यति विप्राग्र्यांस्तन्मात्रविभवो नरः ॥ ५२ ॥
असमर्थोऽन्नदानस्य वन्यशाकं स्वशक्तितः ।
प्रदास्यति द्विजाग्र्येभ्यः स्वल्पां यो वापि दक्षिणाम् ॥ ५३ ॥
तत्राप्यसामर्थ्ययुतः करैर्गृह्य सितांस्तिलान् । प्रणम्य द्विजमुख्याय कस्मैचिदपि दास्यति॥
तिलैः सप्ताष्टभिर्वापि समवेतञ्जलाञ्जलिम् । भक्तिनम्रः समुद्दिश्य योऽस्माकं सम्प्रदास्यति॥

१. सति इति पाठान्तरम् ।

यतः कुतश्चित्सम्प्राप्य गोभ्यो वापि गवाह्निकम् ।
अभावे प्रीणयेत्तस्माद्भक्त्या युक्तः प्रदास्यति ॥ ५६ ॥
सर्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः । सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति ॥
न मेऽस्ति वित्तं न धनं न चान्यच्छ्राद्धस्य योग्यं स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो मयैतौ भुजौ ततौ वर्त्मनि मारुतस्य ॥ ५८ ॥
इत्येव पितृभिर्गीतं भावाभावप्रयोजनम् । कृतन्तेन भवेच्छ्राद्धं य एवं कुरुते द्विजः ॥

इति वराहपुराणे श्राद्धकल्पे त्रयोदशोऽध्यायः ।

# चतुर्दशोऽध्यायः

मार्कण्डेय उवाच

एतन्मे कथितं पूर्वं ब्रह्मपुत्रेण धीमता । सनकानुजेन विप्रर्षे ब्रह्मणा श्रृणु साम्प्रतम् ॥
त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णः षडङ्गवित् । ऋत्विजं भागिनेयञ्च दौहित्रं श्वशुरन्तथा ।
जामातरं मातुलञ्च तपोनिष्ठञ्च ब्राह्मणम् । पञ्चाग्न्यभिरतञ्चैव शिष्यं सम्बन्धिनन्तथा ।
मातृपितृरतश्चैव एताञ्छ्राद्धे नियोजयेत् । २।३ ॥
मित्रध्रुक्कुनखी चैव श्यावदन्तस्तथा द्विजः । कन्यादूषयिता चैव वह्निदः[1] सोमविक्रयी ।
अभिशस्तस्तथा स्तेनः पिशुनो ग्रामयाजकः । भृतकाध्यापकश्चैव भृतकाध्यापकश्च यः ।
परपूर्वापतिश्चैव मातापित्रोस्तथोज्झकः । वृषलीसूतिपोष्यश्च वृषलीपतिरेव च ।
तथा देवलकश्चैव श्राद्धे नार्हन्ति केतनम् ॥ ४—६ ।
प्रथमे हि बुधः कुर्याद्विप्राग्र्याणां निमन्त्रणम् ।
आनिमन्त्र्य द्विजान्पश्चादागतान्भोजयेद्यतीन् ॥ ७ ॥
पादशौचादिना गेहमागतान्भोजयेद्द्विजान् । पवित्रपाणिराचान्तानासनेषूपवेशयेत् ॥
पितॄणामयुजो युग्मान्देवानामपि योजयेत् । देवानामेकमपि वा[2] पितॄणाञ्च निवेदयेत् ॥
तथा मातामहश्राद्धं वैश्वदेवसमन्वितम् ।
कुर्वीत भक्तिसम्पन्नस्तन्त्रं वा वैश्वदेविकम् ॥ १० ॥
प्राङ्मुखं भोजयेद्विप्रं देवानामुभयात्मकम् ।
पितृपैतामहानाञ्च भोजयेच्चाप्युदङ्मुखान् ॥ ११ ॥
पृथक् तयोः केचिदाहुः श्राद्धस्य करणं द्विजः । एकत्रैकेन पात्रेण वदन्त्यन्ये महर्षयः ॥
विष्टरार्थं कुशान्दत्त्वा सम्पूज्यार्घविधानतः । कुर्यादावाहनं प्राज्ञो देवानां तदनुज्ञया ॥
यवाम्बुना च देवानां दद्यादर्घं विधानवित् ।
सुगन्धधूपदीपांश्च दत्त्वा तेभ्यो यथाविधि ॥ १४ ॥
पितॄणामपसव्येन सर्वमेवोपकल्पयेत् ।
अनुज्ञाञ्च ततः प्राप्य दत्त्वा दर्भान्द्विधाकृतान् ॥ १५ ॥

---

१ वह्निवेदोभूः इति पाठान्तरम् । २. देवनामेकमेकं वेति पाठान्तरम् ।

मन्त्रपूर्वं पितॄणान्तु कुर्यादावाहनम्बुधः। तिलाम्बुना चापसव्यं दद्यादर्घादिकं बुधः॥
काले तत्रातिथिं प्राप्तमन्नकामं द्विजाध्वगम् । ब्राह्मणैरभ्यनुज्ञातः कामं तमपि पूजयेत्॥
योगिनो विविधै रूपैर्नराणामुपकारिणः । भ्रमन्ति पृथिवीमेतामविज्ञातस्वरूपिणः ॥१८॥

तस्मादभ्यर्चयेत्प्राप्तं श्राद्धकालेऽतिथिं बुधः ।
श्राद्धक्रियाफलं हन्ति द्विजेन्द्रापूजितोऽतिथिः ॥ १९ ॥

जुहुयाद्व्यञ्जनक्षारैर्वर्जमन्नन्ततोऽनले । अनुज्ञातो द्विजैस्तैस्तु त्रिः कृत्वा पुरुषर्षभ ॥
अग्नये कव्यवाहनाय स्वाहेति प्रथमाहुतिः । सोमाय वै पितृमते दातव्या तदनन्तरम्॥
वैवस्वताय चैवान्या तृतीया दीयते हुतिः । हुतावशिष्टमल्पाल्पं विप्रपात्रेषु निर्वपेत् ॥

ततोऽन्नं मृष्टमत्यर्थमभीष्टमभिसंस्कृतम् ।
दत्त्वा जुषस्वमिच्छातो वाच्यमेतदनिष्ठुरम् ॥ २३ ॥
भोक्तव्यं तैश्च तद्विज्ञैर्मौनिभिः सुमुखैः स्थिरम् ।
अक्रुध्यताप्यन्नवता देयन्तेनापि भक्तितः ॥ २४ ॥

रक्षोघ्नमन्त्रपठनं भूमेरास्तरणन्तिलैः । कृत्वाध्ययाश्च पितरस्त एव द्विजसत्तमाः ॥
पिता पितामहश्चैव तथैव प्रपितामहाः । मम तृप्तिं प्रयान्त्वद्य होमाप्यायितमूर्तयः[1]॥
पिता पितामहश्चैव तथैव प्रपितामहाः । मम तृप्तिं प्रयान्त्वद्य विप्रदेहेषु संस्थिताः ॥
पिता पितामहश्चैव तथैव प्रपितामहाः । तृप्तिम्प्रयान्तु पिण्डेषु मया दत्तेषु भूतले ॥
पिता पितामहश्चैव तथैव प्रपितामहाः । तृप्तिम्प्रयान्तु मे भक्त्या यन्मयैतदुदाहृतम् ॥

मातामहस्तृप्तिमुपैतु तस्य तथा पिता तृप्तिमुपैतु योऽन्यः ।
विश्वेऽथ देवाः परमाम्प्रयान्तु तृप्तिम्प्रणश्यन्तु च यातुधानाः ॥ ३० ॥
यज्ञेश्वरो यज्ञसमस्तनेता भोक्ता व्ययात्मा हरिरीश्वरोऽत्र ।
तत्सन्निधानादपयान्तु सद्यो रक्षांस्यशेषाण्यसुराश्च सर्वे ॥ ३१ ॥

तृप्तेष्वेतेषु विप्रेषु किरेदन्नं महीतले । दद्यादाचमनार्थाय तेभ्यो वारि सकृत्सकृत् ॥
सुतृप्तैस्तैरनुज्ञातः सर्वेणान्नेन भूतले । सलिलेन ततः पिण्डान् सम्यग्गृह्य समासतः ॥
पितृतीर्थेन सलिलं तथैव सलिलाञ्जलिम् । मातामहेभ्यस्तेनैव पिण्डांस्तीर्थेषु निर्वपेत् ॥
दक्षिणाग्रेषु दर्भेषु पुष्पधूपादिपूजितम् । स्वपित्रे प्रथमं पिण्डं दद्यादुच्छिष्टसन्निधौ ॥
पितामहाय चैवान्यं तत्पित्रे च तथापरम् । दर्भमूले लेपभुजां लेपयेल्लेपघर्षणात् ॥
पिण्डैर्मातामहांस्तद्वद्गन्धमाल्यादिसंयुतैः । पूजयित्वा द्विजाग्राणां दद्यादाचमनं बुधः ॥

पित्र्येभ्यः प्रथमं भक्त्या तन्मनस्को द्विजेश्वरः ।
स्वस्त्यादि वाचयित्वा तु दद्याच्छक्त्या च दक्षिणाम्॥३८॥
दत्त्वा च दक्षिणां तेभ्यो वाचयेद्वैश्वदेविकम् ।
प्रीयन्तामिति ये विश्वेदेवास्ते स इतीरयेत् ॥ ३९ ॥

---

१ होमाप्यायितमूर्तय इति क्वाचित्कः पाठः ।

तथेति चोक्ते तैर्विप्रैः प्रार्थनीयास्तथाशिषः ।
तथा विसर्जयेद्देवान् पूर्वं पैत्र्यान्महामते ॥ ४० ॥
मातामहानामप्येवं सह देवैः क्रमात्स्थितैः। भोजने च स्वशक्त्या च दाने तद्वद्विसर्जने ।
आपादशौचनात्पूर्वं कुर्याद्देवं द्विजन्मसु ॥ ४१ ॥
ज्ञानिनं प्रथमं विप्रं त्रिषु मातामहादिषु ।
तथा विसर्जयेत्प्राज्ञः सम्मान्याभ्यर्थिनस्ततः ॥ ४२ ॥
निवर्तेताभ्यनुज्ञात आद्वारान्तमनुव्रजेत् ।
ततस्तु वैश्वदेवाख्यं कुर्यान्नित्यक्रियान्ततः ॥४३ ॥
भुञ्जीयाच्च समं पूज्यभृत्यबन्धुभिरात्मना ॥ ४४ ॥
एवं श्राद्धं बुधः कुर्यात्पित्र्यं मातामहन्तथा ।
श्राद्धैराप्यायिता दद्युः सर्व्वान् कामान्पितामहाः ॥ ४५ ॥
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपास्तिलाः ।
रजतस्य तथा दानं तथा सन्दर्शनादिकम् ॥ ४६ ॥
वर्ज्यन्तु कुर्मता श्राद्धं क्रोधोध्वंगमनन्त्वरा । भोक्तुं रज्यति विप्रेन्द्रे त्रयमेतन्न संशयः ।
विश्वेदेवाः सपितरस्तथा मातामहा द्विज । कुलञ्चाप्यायतं पुंसा सर्वं श्राद्धं प्रकुर्वता ॥
सोमाधारः पितृगणो योगाधारस्तु चन्द्रमाः ।
श्राद्धं योगनियुक्तन्तु तस्माद्विप्रेन्द्र शस्यते ॥ ४९ ॥
सहस्रस्यापि विप्राणां योगी चेत्पुरतः स्थितः ।
सर्वान् भोक्तॄंस्तारयति यजमानन्तथा द्विज ॥ ५० ॥
इयं सर्वपुराणेषु सामान्या पैतृकी क्रिया ।
एतत्क्रमात्कर्मकाण्डं ज्ञात्वा मुच्येत बन्धनात् ॥ ५१ ॥
एतदाश्रित्य निर्वाणमृषयः शंसितव्रताः । प्राप्ता गौरमुखादाशु त्वमप्येवंपरो भव ॥५२॥
इति ते कथितं भक्त्या पृच्छतो द्विजसत्तम ।
पितॄन्यष्ट्वा हरिं ध्यायेद्यस्तस्य किमतः परम् ॥ ५३ ॥
न तस्मात्[1] परतः पित्र्यं तन्त्रमस्तीति निश्चयः ॥ ५४ ॥
इति वराहपुराणे श्राद्धकल्पः समाप्तः ।

---

## पञ्चदशोऽध्यायः

एवं श्राद्धविधिं श्रुत्वा मार्कण्डेयान्महामुनिः । तदा गौरमुखो देवः किमूर्ध्वं कृतवानसौ ॥
वराह उवाच
एतच्छ्रुत्वा तदा धात्रि पितृतन्त्रं महामुनिः । तत्स्मारितो जन्मशतं मार्कण्डेयेन धीमता ॥

---

१. नैतस्मादिति पाठान्तरम्

धरण्युवाच

भवन् गौरमुखः कोऽसावन्यजन्मनि कः स्मृतः ।
कथञ्च स्मृतवान् स्मृत्वा किं चकार च सत्तमः ॥ ३ ॥

वराह उवाच

भृगुरासीत्स्वयं साक्षादन्यस्मिन् ब्रह्मजन्मनि । तदन्वयात्मजस्त्वेष मार्कण्डेयो महामुनिः ॥
पुत्रैस्तु बोधिता यूयं सुगतिम्प्राप्स्यथेति यत् । प्रागुक्तं ब्रह्मणा तेन मार्कण्डेयेन बोधितः ॥
सस्मार सर्वजन्मानि स्मृत्वा चैव तु यत्कृतम् ।
तच्छृणुष्व वरारोहे कथयामि समासतः ॥ ६ ॥
एवं श्राद्धविधानेन द्वादशाब्दं ततः पितॄन् । इष्ट्वा पश्चाद्धरेः स्तोत्रं स मुनिस्तूपचक्रमे ॥
प्रभासं नाम यत्तीर्थं त्रिषु लोकेषु विश्रुतम् । तत्र दैत्यान्तकन्देवं स्तोतुङ्गौरमुखः स्थितः ॥

गौरमुख उवाच

स्तोष्ये महेन्द्रं रिपुदर्पहं शिवं नारायणं ब्रह्मविदां वरिष्ठम् ।
आदित्यचन्द्राश्वियुगस्थमाद्यं पुरातनं दैत्यहरं सदा हरिम् ॥ ९ ॥
चकार मात्स्यं वपुरात्मनो यः पुरातनं वेदविनाशकाले ।
महामहीभृद्वपुरग्रपुच्छच्छटाहतार्चिः सुरशत्रुहाद्यः ॥ १० ॥
तथाब्धिमन्थानकृते गिरीन्द्रं दधार यः कौर्मवपुः पुराणम् ।
हितेच्छयाप्तः पुरुषः पुराणः प्रपातु मां दैत्यहरः सुरेशः ॥ ११ ॥
महावराहः सततं पृथिव्यास्तलात्तलम्प्राविशद्यो महात्मा ।
यज्ञाङ्गसंज्ञः सुरसिद्धसङ्घैः स पातु मां दैत्यहरः पुराणः ॥ १२ ॥
नृसिंहरूपी च बभूव योऽसौ युगे युगे योगिवरोग्रभीमः ।
करालवक्त्रः कनकाग्रवर्चावराशयोऽस्मानसुरान्तकोऽव्यात् ॥ १३ ॥
बलेर्मखध्वंसकृदप्रमेयो योगात्मको योगवपुः स्वरूपः ।
स दण्डकाष्ठाजिनलक्षणः पुनः क्षितिं य आक्रान्तवपुः पुनातु[1] ॥१४॥
त्रिःसप्तकृत्वो जगतीं जिगाय कृत्वा ददौ कश्यपाय प्रचण्डः ।
स जामदग्न्योऽभिजनस्य गोप्ता हिरण्यगर्भोऽसुरहा प्रपातु ॥ १५ ॥
चतुः प्रकारञ्च वपुर्य आद्यं हैरण्यगर्भप्रतिमानलक्ष्यम् ।
रामादिरूपैर्बहुरूपभेदञ्चकार सोऽस्मान्नसुरान्तकोऽव्यात् ॥ १६ ॥
चाणूरकंसासुरदर्पभीतेर्भीतामराणामभयाय देवः ।
युगे युगे वासुदेवो बभूव कल्पे भवत्यद्भुतरूपकारी ॥ १७ ॥
युगे युगे कल्किनाम्ना महात्मा वर्णस्थितिं कर्तुमनेकरूपः ।
सनातनो ब्रह्ममयः पुरातनो न यस्य रूपं सुरसिद्धदैत्याः ।
पश्यन्ति विज्ञानगतिं विहाय अतो यमेनापि समर्चयन्ति ।

---

१. योऽसौ क्रान्तवान्नः इति पाठान्तरम् ।

मत्स्यादिरूपाणि चराणि सोऽव्यात् ॥ १८ । १९ ॥
नमो नमस्ते पुरुषोत्तमाय पुनश्च भूयोऽपि नमो नमस्ते । नयस्व मां मुक्तिपदं नमस्ते ॥
एवं नमस्यतस्तस्य महर्षेर्भावितात्मनः । प्रत्यक्षतां गतो देवः स्वयञ्चक्रगदाधरः ॥२१॥
तन्दृष्ट्वा तस्य विज्ञानं निस्तरङ्गं स्वदेहतः ।
उत्तस्थौ सोऽपि तं लब्ध्वा तस्मिन् ब्रह्मणि शाश्वते ।
लयं जगाम देवात्मन्यपुनर्भवसंज्ञिते ॥ २२ ॥
इति वराहपुराणे आदिकृतवृत्तान्ते पञ्चदशोऽध्यायः ।

---

# षोडशोऽध्यायः

धरण्युवाच

तदा दुर्वाससा शप्तो देवराजः शतक्रतुः । वसिष्यसि त्वं मर्त्येषु सुप्रतीकसुतेन तु ॥
उत्सादितो दिवो मूढेत्येवमुक्तस्तु भूधरः । इन्द्रो मर्त्यमुपागम्य सर्वदेवसमन्वितः ॥
किञ्चकार च तस्मिंस्तु दुर्जये च निपातिते । परमेष्ठिना भगवता तेन योगविदुत्तमौ॥
स्वर्गे विद्युत्सुविद्युच्च तौ च किञ्चक्रतुस्तदा । एतन्मे संशयं देव कथयस्व प्रसादतः ॥

वाराह उवाच

दुर्जयेन जितो धात्रि देवराजः शतक्रतुः । भारते हि तदा वर्षे वाराणस्यान्तु पूर्वतः ।
आश्रित्य संस्थितो देवैः सह यक्षमहोरगैः ॥ ५ ॥
विद्युत्सुविद्युच्च तदा योगमास्थाय शोभने ।
दीर्घतापज्वरं वायुकर्मयोगेन संश्रितौ । लोकपालायतं कृत्स्नं चक्रतुर्योगमायया ॥६॥
तं दुर्जयं मृतं श्रुत्वा समुद्रान्तं स्थितं सदा आनीय । चतुरङ्गन्तुदेवान् प्रति विजग्मतुः॥
आगत्य तौ तदा दैत्यौ महत्सैन्येन पर्वतम् ।
हिमवन्तं समाश्रित्य संस्थितौ तु बभूवतुः ॥ ८ ॥
देवा अपि महत्सैन्यं संहत्य कृतदंशिताः । मन्त्रयाञ्चक्रुरव्यग्रा ऐन्द्रं पदमभीप्सवः ॥
अब्रवीत्तत्र देवानां गुरुराङ्गिरसो मुनिः । गोमेधेन यजध्वं वै प्रथमं तदनन्तरम् ॥
यष्टव्यं क्रतुभिः सर्वैरेषा स्थितिरथामराः । उपदेशो मया दत्तः क्रियतां शीघ्र एष वै ॥
एवमुक्तास्तदा देवा गाः पशूंश्चानुकल्प्य ते । मुमुचुश्चरणार्थाय रक्षार्थं सरमान्ददुः ॥
ताश्च गावो देवशुन्या रक्ष्यमाणा धराधरे । तत्र जग्मुस्तदा गावश्चरन्त्यो यत्र तेऽसुराः॥
ते च गावस्तु ता दृष्ट्वा शुक्रमूचुः पुरोहितम् ।
पश्य त्वन्देव गा ब्रह्मंश्चार्यन्ते रक्षमाणया ।
देवशुन्या सरमया वद किं क्रियतेऽधुना ॥ १४ ॥
एवमुक्तस्तदा शुक्रः प्रत्युवाचासुरांस्तदा । एता गा ह्रियतां शीघ्रमसुरा मा विलम्बथ ॥
एवमुक्तास्तदा दैत्या जह्रुस्ता गा यदृच्छया ॥ १६ ॥

हृतासु तासु सरमा मार्गान्वेषणतत्परा । अपश्यत्सा दितेः पुत्रैर्नीता गावो धराधरे ।
दैत्यैरपि शुनो दृष्टा दृष्टमार्गा विशेषतः ॥ १७ ॥
दृष्ट्वा ते ताञ्च साम्नैव सामपूर्वमिदं वचः ।
आसांगवान्तु दुग्धैवेक्षीरन्त्वं सरमे शुभे । पिवस्वैवमिति प्रोक्त्वा तस्यै तद्दुरञ्जसा॥
दत्त्वा तु क्षीरपानन्तु तस्यै ते दैत्यनायकाः । मा भद्रे देवराजाय गास्त्विमा विनिवेदय॥
एवमुक्त्वा ततो दैत्या मुमुचुस्तां शुनीं वने । तैर्मुक्ता सा सुरांस्तूर्णं जगाम खलु वेपती॥
नमश्चक्रे च देवेन्द्रं सरमा सुरसत्तम् ॥ २१ ॥
तस्याश्च मरुतो देवा देवेन्द्रेण निरूपिताः ।
गूढं गच्छत रक्षार्थं देवशुन्या महाबलाः । इत्युक्तास्तेन सूक्ष्मेण वपुषा जग्मुरञ्जसा ॥
तेऽप्यागम्य सुरेन्द्राय नमश्चक्रुर्धराधरे । तान्देवराजः पप्रच्छ गावः किं सरमेऽभवन् ॥
एवमुक्ता तु सरमा न जानामीति चाब्रवीत् ॥ २४ ॥
तत इन्द्रो रुषा युक्तो यज्ञार्थमुपकल्पिताः ।
गावः क्व चेति मरुतः प्रोवाचेदं शुनी कथम् ॥ २५ ॥
एवमुक्तास्तु मरुतो देवेन्द्रेण धराधरे । कथयामासुरव्यग्राः कर्म तत्सरमाकृतम् ॥
तत इन्द्रः समुत्थाय पदा सन्ताडयच्छुनीम् । क्रोधेन महताविष्टो देवेन्द्रः पाकशासनः॥
क्षीरं पीतन्त्वया मूढे गावस्ताश्चसुरैर्हृताः। एवमुक्त्वा पदा तेन ताडिता सरमा धरे ॥
तस्येन्द्रपादघातेन क्षीरं वक्त्वात्प्रसुस्रुवे । स्रवता तेन पयसा सा शुनी यत्रगाभवत् ।
जगाम तत्र देवेन्द्रः सहसैन्यस्तदा धरे ॥ २९ ॥
अपश्यत्तत्र देवेन्द्रस्ता गा दैत्यैरुपाहृताः । चक्रुर्ये पालनं दैत्यास्ते दैत्याबलिनो भृशम् ॥
तैः सैन्यैर्निहताः सद्यस्तत्युगुर्गाः स्वमूर्तिभिः । सामन्तैश्च सुरेन्द्रोऽथ वृतः परमहर्षितैः॥
ताश्च लब्ध्वा महेन्द्रस्तु मुदा परमया युतः । चकार यज्ञान्विविधान्सहस्रानपि स प्रभुः॥
क्रियमाणैस्ततो यज्ञैर्ववृधेन्द्रस्य तद्बलम् । वर्धतेन बलेनेन्द्रो देवसैन्यमुवाच ह ॥ ३३ ॥
सन्नह्यतां सुराः शीघ्रं दैत्यानां वधकर्मणि ।
एवमुक्तास्तदा देवाः सन्नद्धास्तत्क्षणेऽभवन् ॥ ३४ ॥
असुराणामभावाय जग्मुर्देवाः सवासवाः ।
गत्वा तु युयुधुस्तूर्णं विजिग्युस्त्वासुरीञ्चमूम् ॥ ३५ ॥
जिताश्च देवैरसुरा हतशेषा धराधरे । ममज्जुः सागरजले भयत्रस्ता विचेतसः ॥ ३६ ॥
देवराजोऽपि त्रिदिवं लोकपालैः समन्धरे। आरुह्य बुभुजे प्राग्वत् सदेवो देवराड्विभुः॥
यएनच्¹ श्रृणुयान्नित्यं परमाख्यानमुत्तमम् । स गोमेधस्य यज्ञस्य फलम्प्राप्नोति मानवः॥
भ्रष्टराज्यश्च यो राजा श्रृणोतीदं समाहितः । स देवेन्द्र इव स्वर्गं राज्यं स्वं लभते नरः॥
इति वाराहपुराणे सरमोपाख्याने षोडशोऽध्यायः

---

१. एवमिति पाठान्तरम् ।

# सप्तदशोऽध्यायः

धरण्युवाच

ये ते मणौ तदा देव उत्पन्ना नरपुङ्गवाः। तेषां वरो भगवता दत्तस्त्रेतायुगे किल ॥१॥
राजानो भवितारो वै कथन्तेषां समुद्भवः।
किञ्च चक्रुर्हि ते कर्म पृथङ्नामानि शंस मे ॥ २।

वराह उवाच

सुप्रभो मणिजो यस्तु राजा नाम महामनाः।
तस्योत्पत्तिं वरारोहे श्रृणु त्वम्भूतधारिणि ॥ ३।

असीद्राजा महाबाहूरादौ कृतयुगे पुरा। श्रुतकीर्तिरिति ख्यातस्त्रैलोक्ये बलवत्तरः ॥४॥
तस्य पुत्रत्वमापेदे सुप्रभो मणिजो धरे। प्रजापालेति वै नाम्ना श्रुतकीर्तिर्महाबलः ॥
स एकस्मिन्दिने प्रायाद् गहनं श्वापदाकुलम्। तत्रापश्यद्दृषेर्धन्यं महदाश्रममण्डलम् ॥
तस्मिन्महातपा नाम ऋषिः परमधार्मिकः। तपस्तेपे निराहारो जपन् ब्रह्म सनातनम् ॥
तत्रासौ पार्थिवः श्रीमान् प्रवेशाय मतिन्तदा। चकार चाविशद्राजा प्रजापालो महातपाः॥

तस्मिन्वराश्रमपदे वनवृक्षजात्याधराप्रशस्तोर्जितमार्गजुष्टा[1]।
लतागृहा इन्दुरिव प्रकाशिनो नायासज्ञा यत्र याता हि भृङ्गाः ॥ ९ ॥
सुरक्तपद्मोदरकोमलाग्र नखाङ्गुलीभिः प्रसृतैः सुराणाम्।
वराङ्गनाभिः पदपंक्तिमुच्चैर्विहाय भूमिन्त्वपि वृत्रशत्रोः ॥ १० ॥
क्वचित्समीपे तमतेव हृष्टैर्नानाद्विजैः षट्चरणैश्च मत्तैः।
वासद्भियुक्तैर्विविधप्रमाणाः शाखाः सुपुष्पाः समयोगयुक्ताः ॥ ११ ॥
कदम्बनीपार्जुनशीलशाल भृता गृहस्थैर्मधुरस्वरेण।
जुष्टा विहङ्गैः सुजनप्रयोगा निराकुला कार्यधतिर्यथास्थैः ॥ १२ ॥
मखाग्निधूमैरुदिताग्निहोमैस्ततः समन्ताद् गृहमेधिभिर्द्विजैः।
सिंहैरिवाधर्मकरी विदारितः सतीक्ष्णदंष्ट्रैर्वरमत्तकेसरैः ॥ १३ ॥
एवं स राजा विविधानुपायान्वराश्रमे प्रेक्षमाणो विशेष।
तस्मिन् प्रविष्टे तु स तीव्रतेजा महातपाः पुण्यकृताम्प्रधानः।
दृष्टो यथा भानुरनन्तभानुः कौश्यासने ब्रह्मविदाम्प्रधानः ॥ १४ ॥
दृष्ट्वा स राजा विजगे मृगाणां मतिं विसस्मार मुनेः प्रसङ्गात्।
चकार धर्मम्प्रति मानसं सः अनुत्तमञ्चाप्रतिमं मुनिः सः ॥ १५ ॥

स मुनिस्तन्नृपं दृष्ट्वा प्रजापालमकल्मषम्। अभ्यागतक्रियाञ्चक्रे आसनस्वागतादिभिः॥
ततः कृतासनो राजा प्रणम्य ऋषिपुङ्गवम्। पप्रच्छ वसुधे प्रश्नमिमम्परमदुर्लभम् ॥
भगवन्दुःखसंसारमग्नैः पुम्भिर्जिगीषुभिः। यत्कार्यन्तन्ममाचक्ष्व प्रणते शंसितव्रत

---

१. प्रसृतोर्जितमार्गजुष्टा इति पाठः कुत्रचिदुपलभ्यते।

महातपा उवाच

संसारार्णवमज्जमानमनुजैः पोतः स्थिरोऽतिध्रुवः

कार्यः पूजनहोमदानविविधैर्यज्ञैः समभ्यायनैः ।

कीलैः कीलितमोक्षभिः सुरक्षटैरूर्ध्वं महारज्जुभिः

प्राणाद्येरधुना कुरुष्व नृपते पोतन्त्रिलोकेश्वरम् ॥ १९ ॥

नारायणं नरकहरं सुरेशं भक्त्या नमस्कुर्वति यो नृपेश ।

स वीतशोकः परमं विशोकं प्राप्नोति विष्णोः पदमव्ययं तत् ॥२०॥

नृप उवाच

भगवन् सर्वधर्मज्ञ कथं विष्णुः सनातनः । पूज्यते मोक्षमिच्छद्भिः पुरुषैर्वद तत्त्वतः ॥

महातपा उवाच

श्रृणु राजन् महाप्राज्ञ यथा विष्णुः प्रसीदति । पुरुषाणां तथा स्त्रीणां सर्वयोगीश्वरो हरिः॥

सर्वे देवाः सपितरो ब्रह्माद्याश्चाण्डमध्यगाः ।

विष्णोः सकाशादुत्पन्ना इतीयं वैदिकी श्रुतिः ॥ २३ ॥

अग्निस्तथाश्विनौ गौरी गजवक्त्रभुजङ्गमाः । कार्त्तिकेयस्तथादित्या मातरो दुर्गया सह ॥

दिशो धनपतिर्विष्णुर्यमो रुद्रः शशी तथा । पितरश्चेति सम्भूताः प्राधान्येन जगत्पतेः ॥

हिरण्यगर्भस्य तनौ सर्व एव समुद्भवाः । पृथक् पृथक्तो गर्वं वहमानाः समन्ततः ॥

अहं योग्यस्त्वहं याज्य इति तेषां स्वनो महान् । श्रूयते देवसमितौ क्षुब्धसागरसन्निभः॥

तेषां विवदमानानां वह्निरुत्थाय पार्थिवः ।

उवाच मां यजस्वेति ध्यायध्वं मामिति ब्रुवन् ॥ २८ ॥

प्राजापत्यमिदं नूनं शरीरं मद्विना कृतम् । विनाशमुपपद्येत यतो नायं महानहम् ॥

एवमुक्त्वा शरीरन्तु त्यक्त्वा वह्निर्विनिर्ययौ । निर्गतेऽपि ततस्तस्मिंस्तच्छरीरं न शीर्यते॥

ततोऽश्विनौ मूर्तिमन्तौ प्राणापानशरीरगौ । आवां प्रधानावित्येवमूचतुर्याज्यमुत्तरौ ॥

एवमुक्त्वा शरीरन्तु विहाय क्वचिदास्थितौ । तयोरपि क्षयं कृत्वा क्षीणन्तत्पुरमास्थितम्॥

ततो वागब्रवीद्गौरी प्राधान्यं मयि संस्थितम् ।

साप्येवमुक्त्वा क्षेत्रात्तु निश्चक्राम बहिः शुभा ॥

तया विनापि तत्क्षेत्रं वागूनं व्यवतिष्ठत । ततो गणपतिर्वाक्यमाकाशाख्योऽब्रवीत्तदा ॥

न मया रहितङ्किञ्चिच्छरीरं स्थायि दूरतः ।

कालान्तरेत्येव मुक्त्वा सोऽपि निष्क्रम्य देहतः पृथग्भूतस्तथाप्येतच्छरीरं नाप्यनीनशत् ॥

वनाशाख्यञ्च तत्तेन तथापि न विशीर्यते ॥ ३६ ॥

सुषिरैस्तु विहीनस्तु दृष्ट्वा क्षेत्रं व्यवस्थितम् । शरीरधातवः सर्वे ते ब्रूयुर्वाक्यमेव हि ॥

अस्माभिर्व्यतिरिक्तस्य न शरीरस्य धारणम् । भवतीत्येवमुक्त्वा ते जहुः सर्वे शरीरिणः॥

तैर्व्यपेतमपि क्षेत्रम्पुरुषेण प्रपाल्यते । तं दृष्ट्वा त्वब्रवीत्स्कन्दः सोऽहङ्कारः प्रकीर्तितः ॥

---

१. यदिति वा पाठः

मया विना शरीरस्य सम्भूतिरपि नेष्यते ।
एवमुक्त्वा शरीरात्तु स व्यपेतः पृथक् स्थितः ॥ ४० ॥
तेनाक्षतेन तत्क्षेत्रं विना मुक्तवदास्थितम् ।
तं दृष्ट्वा कुपितो भानुः स आदित्यः प्रकीर्तितः ॥ ४१ ॥
मया विना कथं क्षेत्रमिमं क्षणमपीष्यते । एवमुक्त्वाथ यातः स तच्छरीरं न शीर्यते ॥
ततः कामादिरुत्थाय गणो मातृविसंज्ञितः । न मया व्यतिरिक्तस्य शरीरस्य व्यवस्थितिः।
एवमुक्त्वा स यातस्तु शरीरं तन्न शीर्यते ॥ ४३ ॥
ततो मायाब्रवीत्कोपात्सा च दुर्गा प्रकीर्तिता ।
न मयास्य विना भूतिरित्युक्त्वान्तर्दधे पुनः ॥ ४४ ॥
ततो दिशः समन्तस्थुरूचुश्चेदं वचो महत् । नास्माभी रहितं कार्यम्भवतीति न संशयः।
चतस्र आगताः काष्ठास्ताः प्रयाताः क्षणात्तदा । ततो धनपतिर्वायुर्मध्यतस्त्यक्तसम्भवः।
शरीरस्येति सोऽप्येवमुक्त्वा मूर्धानगोऽभवत् ॥ ४६ ॥
ततो विष्णोर्मनो ब्रूयान्नायन्देहो मया विना ।
क्षणमप्युत्सहे स्थातुमित्युक्त्वान्तर्दधे पुनः ॥ ४७ ॥
ततो धर्मोऽब्रवीत्सर्वमिदम्पालितवानहम् । इदानीम्मय्युपगते कथमेतद्भविष्यति ॥
एवमुक्त्वा गतो धर्मस्तच्छरीरं न शीर्यते ॥ ४९ ॥
ततोऽब्रवीन्महादेवः अव्यक्तो भूतभावनः । महत्संज्ञो मया हीनं शरीरन्नो भवेद्यथा ॥
एवमुक्त्वा गतः शम्भुस्तच्छरीरं न शीर्यते ॥ ५१ ॥
तद्दृष्ट्वा पितरश्चोचुस्तन्मात्रं यावदस्मभिः । प्राणान्तरेभी रेतश्च शरीरं शीर्यते ध्रुवम्॥
एवमुक्त्वा तु तद्देहन्त्यक्त्वान्तर्द्धानमागताः ।
अग्निः प्राणः अपानौ च आकाशञ्चैव धातवः ॥ ५३ ॥
क्षेत्रन्तद्वदहङ्कारो भानुः कामादयो मया ।
काष्ठा वायुर्विष्णुधर्मौ शम्भुश्चैवेन्द्रियार्थकाः ॥ ५४ ॥
एतैर्मुक्तन्तु तत्क्षेत्रम्मुक्ताविव तु संस्थितम् । सोमेन पाल्यमानन्तु पुरुषेणेन्दुरूपिणा ॥
एवं व्यवस्थिते सोमे षोडशात्मन्यथाक्षरे । प्राग्वत्तत्र गुणोपेतं क्षेत्रमुत्थाय बभ्रम ॥
प्रागवस्थं शरीरन्तु दृष्ट्वा सर्वज्ञपालितम् ।
ताः क्षेत्रदेवताः सर्वा वैलक्ष्म्भावमास्थिताः ।
तमेवन्तु ष्टुवुः सर्वास्तं देवम्परमेश्वरम् ॥ ५७ ॥
स्वस्थानमाशिषुः सर्वास्तदा नृपतिसत्तम ।
त्वमग्निस्त्वन्तथा प्राणस्त्वमपानः सरस्वती ॥ ५८ ॥
त्वमाकाशन्धनाध्यक्षस्त्वं शरीरस्य धातवः । अहङ्कारो भवान्देव त्वमादित्योऽष्टको गणः॥
त्वं माया पृथिवी दुर्गा त्वं दिशस्त्वम्मरुत्पतिः ।
त्वं विष्णुस्त्वन्तथा धर्मस्त्वञ्जिष्णुस्त्वम्पराजितः ॥ ६० ॥

अक्षरार्थस्वरूपेण परमेश्वरसंज्ञितः । अस्माभिरपयातैस्तु कथमेतद्भविष्यति ॥ ६१ ॥
एवमत्र शरीरन्तु त्यक्तमस्माभिरेव च । न परम्भवतो देव तदत्र त्वञ्च पाल्यते ॥
स्थानभङ्गो न नः कार्यः स्वयं सृष्ट्वा प्रजापते ।
एवं स्तुतस्ततो देवस्तेषां तोषं परं ययौ ॥ ६३ ॥
उवाच चैतान् क्रीडार्थं भवन्तोत्पादिता मया ।
कृतकृत्यस्य चैकन्तु भवद्भिर्मे प्रयोजनम् ॥ ६४ ॥
तथा चेदप्रियं रूपे द्वे द्वे प्रत्येकशोऽधुना । भूतकार्येष्वमूर्तेन देवलोके तु मूर्तिना ।
तिष्ठध्वमपि कालान्ते लयं त्वाविशत द्रुतम् ॥ ६५ ॥
शरीराणि पुनर्नैव कर्तव्योऽहमिति कचित् ।
मूर्तीनाञ्च तथा तुभ्यमग्निनामानि वोऽधुना ॥ ६६ ॥
अग्नेर्वैश्वानरो नाम प्राणापानौ तथाश्विनौ । भविष्यति तथा गौरी हिमशैलसुता तथा॥
पृथिव्यादिगुणस्त्वेष गजवक्त्रो भविष्यति । शरीरधातवश्चेमे नानाभूतानि एव तु ॥
अहङ्कारस्तथा स्कन्दः कार्त्तिकेयो भविष्यति । शरीरमाया दुर्गैषा कारणान्ते भविष्यति॥
दश कन्या भविष्यन्ति काष्ठास्त्वेतास्तु वारुणाः ।
अयं वायुर्धनेशस्तु कारणान्ते भविष्यति ॥ ७० ।
अयं मनो विष्णुनाम्ना भविष्यति न संशयः ।
धर्मोऽपि यमनाम्ना च भविष्यति न संशयः ॥ ७१ ।
महत्तत्त्वञ्च भगवान्महादेवो भविष्यति । इन्द्रियार्थाश्च पितरो भविष्यन्ति न संशयः॥
अयं सोमः पुरा भूत्वा यामित्रं सर्वदामराः ।
एवं वेदान्तपुरुषः प्रोक्तो नारायणात्मकः ।
स्वस्थाने देवताः सर्वा देवस्तु विरराम ह ॥ ७२ ।
एवंप्रभावो देवोऽसौ वेदवेद्यो जनार्दनः । कथितो नृपते तुभ्यं किमन्यच्छ्रोतुमिच्छसि॥

इति वराहपुराणे महातपउपाख्याने सप्तदशोऽध्यायः ।

---

# अष्टादशोऽध्यायः

प्रजापाल उवाच

कथमग्नेः समुत्पत्तिरश्विनोर्वा महामुने । गौर्या गणपतेर्वाऽपि नागानां वा गुहस्य च ॥
आदित्यचन्द्रमातॄणां दुर्गाया वा दिशास्तथा ॥
धनदस्य च विष्णोर्वा धर्मस्य परमेष्ठिनः ॥ २ ।
शम्भोर्वापि पितॄणाञ्च तथा चन्द्रमसो मुने ।
शरीरदेवताः सर्वाः कथं मूर्तित्वमागताः ॥ ३ ।

किञ्च तासां मुने भोज्यं का वा संज्ञा तिथिश्च का ।
यस्यां दृष्ट्वा त्वमी पुंसां फलं यच्छन्त्यनामयम् ।
एतन्मे सरहस्यन्तु मुने त्वं वक्तुमर्हसि ॥ ४ ।

महातपा उवाच

योगसाध्यस्वरूपेण आत्मा नारायणात्मकः ।
सर्वज्ञः क्रीडतस्तस्य भोगेच्छा चात्मनात्मनि ॥ ५ ।

क्षोभिते ऽस्मिन्महाभूते एतत्सद्वैतदद्भुतम् । तमद्य प्रीतिमत्तोऽयं विकारं समरोचयत् ॥
विकुर्वतस्तस्य तदा महानग्निः समुत्थितः । कोटिज्वालापरीवारः शब्दवान्दहनात्मक ॥
असावप्यतितेजस्वी विकारं समरोचयत् । विकुर्वतो बभौ वह्नेर्वायुः परमदारुणः ॥
तस्मादपि विकारस्थ'दाकाशं समपद्यत । तच्छब्दलक्षणं व्योम स च वायुः प्रतापवान् ॥

तच्च तेजोऽम्भसा युक्तं श्लिष्टमन्योन्यतस्तथा ।
तेजसा शोषितं तोयं वायुना उम्रगामिणा ॥ १० ।
बोधितेन तथा व्योममार्गे दत्ते तु तत्क्षणात् ।
पिण्डीभूतं तथा सर्वं काठिन्यं समपद्यत ॥ ११ ।

सेयं पृथ्वी महाभाग तेषां वृक्षेतराभवत् । चतुर्णां योगकाठिन्यादेकैकं गुणवृद्धितः ॥

पृथ्वी पञ्चगुणा ज्ञेया तेऽप्येतस्यां व्यवस्थिताः ।
स च काठिन्यकं कुर्वन् ब्रह्माण्डं समपद्यत ॥ १३ ।

तस्मिन्नारायणो देवश्चतुर्मूर्तिश्चतुर्भुजः । प्राजापत्येन रूपेण सिसृक्षुर्विविधाः प्रजाः ॥
चिन्तयन्नाधिगच्छेत सृष्टिं लोकपितामहः । ततोऽस्य सुमहान् कोपो जज्ञे परमदारुणः ॥
तस्मात्कोपात्सहस्रार्चिरुत्तस्थौ दहनात्मकः । स तं दिधक्षुर्ब्रह्माणं ब्रह्मणोक्तस्तदा नृप ॥

हव्यं कव्यं वहस्वेति ततोऽसौ हव्यवाहनः ।
ब्रह्माणं क्षुधितं प्रायात्किङ्करोमि प्रशाधि माम् ।
स ब्रह्मा प्रत्युवाचैनं त्रिधा तृप्तिमवाप्स्यसि ॥ १७ ॥
दत्तासु दक्षिणास्वादौ तृप्तिर्भूत्वा यतोऽमरान् ।
नयसे दक्षिणाभागन्दक्षिणाग्निस्ततोऽभवत् ॥ १८ ॥

आसमन्ताद्धुतं किञ्चिद्यत्त्रिलोके विभावसो । तद्वहस्व सुरार्थाय ततस्त्वं हव्यवाहनः ।

गृहं शरीरमित्युक्तं तत्पतिस्त्वं यतोऽधुना ।
अतो वै गार्हपत्यस्त्वं भव सर्वगतो विभो ॥ २० ॥
विश्वान्नरान् हुतो येन नयसे सद्गतिं प्रभो ।
अतो वैश्वानरो नाम तव वाक्यं भविष्यति ॥ २१ ॥

द्रविणं बलमित्युक्तं धनञ्च द्रविणं ततः । ददाति तद्भवानेव द्रविणोदास्ततोऽभवत् ॥

पापस्तिरोभवेन्नित्यं निःशब्दो निश्चयात्मकः ।
अतस्त्वं सर्वगत्वाच्च तेजोऽग्निस्ते भविष्यति ॥ २३ ॥

ध्माप्रपूरणशब्दो य इध्मानामपि कीर्त्यते । पूरितश्च गतिर्येन तेनेध्मस्त्वं भविष्यसि ॥
आज्यान्येतानि नामानि तव पुत्र महामखे ।
यजन्तस्त्वां नराः कामैस्तर्पयिष्यन्त्यसंशयः ॥ २५ ॥
इति वराहपुराणे महातपउपाख्याने अग्न्युत्पत्तिर्नाम अष्टादशोऽध्यायः ।

---

# एकोविंशोऽध्यायः

महातपा उवाच

विष्णोर्विभूतिमाहात्म्यं कथितं ते प्रसङ्गतः ।
तिथीनां शृणु माहात्म्यं कथ्यमानं मया नृप ॥ १ ॥
इत्थम्भूतो महानग्निर्ब्रह्मक्रोधसमुद्भवः । उवाच देवं ब्रह्माणं तिथिर्मे दीयतां विभो ।
यस्यामहं समस्तस्य जगतः ख्यातिमाप्नुयाम् ॥ २ ॥

ब्रह्मोवाच

देवानामथ यक्षाणां गन्धर्वाणाञ्च सत्तम ।
आदौ प्रतिपदा येन त्वमुत्पन्नोऽसि पावक ॥ ३ ॥
त्वत्पदात्प्रातिपदिकं सम्भविष्यन्ति देवताः । अतस्ते प्रतिपन्नाम तिथिरेषा भविष्यति ॥
तस्यान्तिथौ हविष्येण प्राजापत्येन मूर्तिना ।
होष्यन्ति तेषां प्रीताः स्युः पितरः सर्वदेवताः ॥ ५ ॥
चतुर्विधानि भूतानि मनुष्याः पशवोऽसुराः ।
देवाः सर्वे सगन्धर्वाः प्रीताः स्युस्तर्पितास्त्वयि ॥ ६ ॥
यश्चोपवासं कुर्वीत त्वद्भक्तः प्रतिपद्दिने । क्षीराशनो वा वर्तेत शृणु तस्य फलं महत् ।
चतुर्युगानि षड्विंशं स्वर्गलोके महीयते ॥ ७ ॥
तेजस्वी रूपसम्पन्नो द्रव्यवाञ्जायते नरः । इह जन्मन्यसौ राजा प्रेत्य स्वर्गे महीयते ॥
तूष्णीम्बभूव सोऽप्यग्निर्ब्रह्मदत्ताश्रमं ययौ ॥ ९ ॥
य इदं शृणुयान्नित्यं प्रातरुत्थाय मानवः । अग्नेर्जन्म स पापेभ्यो मुच्यते नात्र संशयः ॥
इति वराहपुराणे अग्न्युत्पत्तिर्नाम एकोनविंशोऽध्यायः ।

---

# विंशोऽध्यायः

प्रजापाल उवाच

एवमग्नेः समुत्पत्तिर्ज्ञाता ब्रह्मन्महात्मनः । प्राणापानौ कथं देवावश्विनौ सम्बभूवतुः ।

महातपा उवाच

मरीचिर्ब्रह्मणः पुत्रः स्वयं ब्रह्मा द्विसप्तभिः । रूपैर्व्यवस्थितस्तेषां मरीचिः श्रेष्ठतामगात् ।
तस्य पुत्रो महातेजाः कश्यपो नाम वै मुनिः । स्वयं प्रजापतिः श्रीमान्देवतानां पिताभवत् ॥

तस्य पुत्रा बभूवुर्हि आदित्या द्वादश प्रभो । नारायणात्मकं तेजो द्वादश सुप्रकीर्त्तितम् ॥
ये[1] ते मासास्त आदित्याः स्वयं संवत्सरो हरिः ।
एवं ते द्वादशादित्या मार्त्तण्डश्च प्रतापवान् ॥ ५ ॥
तस्य त्वष्टा ददौ कन्यां संज्ञां नाम महाप्रभाम् । तस्यापत्यद्वयञ्जज्ञे यमश्च यमुना तथा ॥
तस्य तेजोऽप्यसहती बभूवाश्वी मनोजवा ।
स्वां छायां तत्र संस्थाप्य सा जगामोत्तरान् कुरून् ॥ ७ ॥
तद्रूपां तां सवर्णान्तु भेजे मार्त्तण्डभास्करः । तस्मादपि द्वयं जज्ञे शनिं तपतिमेव च ॥
यदा त्वसदृशं भेजे पुत्रान् प्रति नरोत्तम । संज्ञां प्रोवाच भगवान् क्रोधसंरक्तलोचनः ।
असमत्वं न कर्त्तव्यं स्वेष्वपत्येषु भामिनि ॥ ९ ॥
एवमुक्ता यदा सा तु असमत्वं व्यरोचत । तदा यमः स्वपितरं प्रोवाच भृशदुःखितः ॥
नेयं माता भवेत्तात अस्माकं शत्रुवत्सदा । सपत्नीव वृथाचारा स्वेष्वपत्येषु वत्सला ॥
एवं यमवचः श्रुत्वा सा च्छाया क्रोधमूर्च्छिता । शशाप प्रेतराजस्त्वं भविष्यस्यचिरादिव॥
एवं श्रुत्वाथ मार्त्तण्डस्तदा पुत्रहितेच्छया । उवाच मध्यवर्त्ती त्वं भविता धर्मपापयोः ।
लोकपालश्च भविता त्वं पुत्र दिवि शोभसे ॥ १३ ॥
शनिं शशाप मार्त्तण्डश्छायाकोपप्रधर्षितः । त्वं क्रूरदृष्टिर्भविता मातृदोषेण पुत्रक ॥
एवमुक्त्वा समुत्थाय ययौ भानुर्दिदृक्षया । तामपश्यत्त्वसौ सोऽश्वामुत्तरेषु कुरुष्वथ ॥
ततोऽश्वरूपं कृत्वा स गत्वा तत्रोत्तरान् कुरून् ।
प्राजापत्येन मार्गेण युयोजात्मानमात्मना ॥ १६ ॥
तस्यां त्वाष्ट्र्यामश्वरूप्यां मार्त्तण्डस्तीव्रतेजसा ।
बीजं निर्वापयामास तज्ज्वलन्तं द्विधापतत् ॥ १७ ॥
तत्र प्राणस्त्वपानश्च योनौ चात्मजितौ पुरा । वरदानेन च पुनर्मूर्त्तिमन्तौ बभूवतुः ॥
तौ त्वाष्ट्र्यामश्वरूपायां जातौ येन नरोत्तमौ ।
ततस्तावश्विनौ देवौ कीर्त्त्येते रविनन्दनौ ॥ १९ ॥
प्राजापत्यं स्वयं भानुस्त्वाष्ट्री शक्तिः परापरा ।
तस्याः प्राग्वच्छरीरस्थावमूर्त्तौ मूर्त्तिमाश्रितौ ॥ २० ॥
ततस्तावश्विनौ देवौ मार्त्तण्डमुपतस्थतुः । ऊचतुः स्वरुचिन्तावत्किङ्कर्त्तव्यमथावयोः ॥

मार्त्तण्ड उवाच

पुत्रौ प्रजापतिं देवं भक्त्याराधयतां वरम् । नारायणं स वो दाता वरं नूनं भविष्यति॥
एवं तावश्विनौ प्रोक्तौ मार्त्तण्डेन महात्मना । तेपतुस्तीव्रतपसौ तपः परमदुश्चरम् ।
ब्रह्मपारमयं स्तोत्रं जपन्तौ तु समाहितौ ॥ २३ ॥
तयोः कालेन महता ब्रह्मा नारायणात्मकः । तुतोष परमप्रीत्या वरञ्चैनन्ददौ तयोः ॥

प्रजापाल उवाच

अश्विभ्यामीरितं स्तोत्रं ब्रह्मणोऽव्यक्तजन्मनः। श्रोतुमिच्छाम्यहं ब्रह्मंस्त्वत्प्रसादान्महामुने॥

---

१. ते इति क्वचिदुपलभ्यते ।

महातपा उवाच

श्रृणु राजन्यथा स्तोत्रमश्विभ्यां ब्रह्मणः कृतम् ।
ईदृशश्च फलं प्राप्तं तयोः स्तोत्रस्य चानघ ॥ २६ ॥

ॐ नमस्ते निष्क्रिय निष्प्रपञ्च निराश्रय निरपेक्ष निरालम्ब ।
निर्गुण निरालोक निराधार निर्मम निरालम्ब ॥ २७ ॥
ब्रह्म महाब्रह्म ब्राह्मणप्रिय पुरुष महापुरुष पुरुषोत्तम ।
देव महादेव देवोत्तम स्थाणो स्थितिस्थापक ॥ २८ ॥
भूत महाभूत भूताधिपते यक्ष महायक्ष यक्षाधिपते ।
गुह्य महागुह्य गुह्याधिपते सौम्य महासौम्य सौम्याधिपते ॥ २९ ॥
पक्षि महापक्षिपते दैत्य महादैत्याधिपते । रुद्र महारुद्राधिपते विष्णो महाविष्णुपते ॥
परमेश्वर नारायण प्रजापतये नमः ॥ ३० ॥

एवं स्तुतस्तदा ताभ्यामश्विभ्यां स प्रजापतिः । तुतोष परमप्रीत्या वाक्यञ्चेदमुवाच ह ॥
वरं वरयतां शीघ्रं देवैः परमदुर्लभम् । येन वो वरदानेन चरतस्त्रिदिवं सुखम् ॥

अश्विनावूचतुः

आवयोर्देवभागन्तु देहि देव प्रजापते । सोमपत्वञ्च देवानां सामान्यत्वञ्च शाश्वतम् ॥

ब्रह्मोवाच

रूपं कान्तिरनौपम्यं भिषक्त्वं सर्ववस्तुषु । सोमपत्वञ्च लोकेषु सर्वमेतद्भविष्यति ॥

महातपा उवाच

एतत्सर्वं द्वितीयायामश्विभ्यां ब्रह्मणा पुरा ।
दत्तं यस्मादतस्तेषां तिथीनामुत्तमा तिथिः ॥ ३५ ॥
एतस्यां रूपकामस्तु पुष्पाहारो भवेन्नरः । संवत्सरं शुचिर्नित्यं सुस्वरूपी भवेन्नरः ॥
अश्विभ्यां ये गुणाः प्रोक्तास्ते तस्यापि भवन्ति च ।
य इदं श्रृणुयान्नित्यमश्विनोर्जन्म चोत्तमम् । सर्वपापविनिर्मुक्तः पुत्रवाञ्जायते नरः ॥

इति वराहपुराणे अश्व्युत्पत्तिर्नाम विंशोऽध्यायः ।

---

# एकविंशोऽध्यायः

प्रजापाल उवाच

कथं गौरी महाप्राज्ञ संस्तुता वरदानतः । मूर्त्तिं लब्धवती पुंसः परस्य परमात्मनः ॥

महातपा उवाच

पूर्वं प्रजापतिर्देवः सिसृक्षुर्विविधाः प्रजाः ।
चिन्तयामास धर्मात्मा यदान्ताञ्चाध्यगच्छत ॥ २ ॥

तदास्य कोपात्सञ्जज्ञे स च रुद्रः प्रतापवान्। रोदनात्तस्य रुद्रत्वं सञ्जातं परमेष्ठिनः ॥
तस्य ब्रह्मा शुभां कन्यां भार्यार्थे मूर्त्तिसम्भवाम्।
गौरीनाम्नीं स्वयं देवीं भारतीं तां ददौ पिता। रुद्रायामितदेहाय स्वयं ब्रह्मा प्रजापतिः ॥
स तां लब्ध्वा वरारोहां मुदा परमया युतः। सर्गकालेषु तं ब्रह्मा तपसा प्रत्युवाच ह ॥
रुद्र प्रजाः सृजस्वेति पौनःपुन्येन नोदितः। असमर्थ इति जले निमज्जत महाबलः ॥
तपोऽर्थित्वं तपोहीनः स्रष्टुं शक्नोति न प्रजाः।
एवं चिन्त्य जले मग्नस्ततो रुद्रः प्रतापवान् ॥ ७ ॥
तस्मिन्निमग्ने देवेशे तां ब्रह्मा कन्यकां पुनः। अन्तःशरीरगां कृत्वा गौरीम्परमशोभनाम्॥
पुनः सिसृक्षुर्भगवानसृजत्सप्त मानसान्। दक्षञ्च तेषामारभ्य प्रजाः सम्यग्विवर्धिताः॥
तत्र दाक्षायणीपुत्राः सर्वे देवाः सवासवाः। वसवोऽष्टौ च रुद्राश्च आदित्या मरुतस्तथा॥
सापि दक्षाय सुश्रोणी गौरी दत्ताथ ब्रह्मणा। दुहितृत्वे पुरा या हि रुद्रेणोढा महात्मना ॥
सा च दाक्षायणी देवी पुनर्भूत्वा नृपोत्तम ॥ १२ ॥
ततो दक्षः प्रहृष्टात्मा दौहित्रांस्तान्समृद्धिकृत्। दृष्ट्वा यज्ञमथारेभे प्रीणनाय प्रजापतेः ॥
तत्र ब्रह्मसुताः सर्वे मरीच्यादय एव च। चक्रुरार्त्विजकं कर्म स्वे स्वे मार्गे व्यवस्थिताः॥
ब्रह्मा स्वयं मरीच्यस्तु बभूवाऽन्ये तथापरे। अत्रिस्तु यज्ञकर्मस्थ आग्नीध्रस्त्वङ्गिराभवत्॥
होता पुलस्त्यस्त्वभवदुद्गाता पुलहोऽभवत्। क्रतौ क्रतुस्तु प्रस्तोता तदा यज्ञे महातपाः॥
प्रतिहर्त्ता प्रचेतास्तु तस्मिन् क्रतुवरे बभौ। सुब्रह्मण्यो वशिष्ठस्तु सनकाद्याः सभासदः ॥
तत्र याज्यः स्वयं ब्रह्मा स च इज्यस्तु विश्वकृत्।
पूज्या दक्षस्य दौहित्रा रुद्रादित्योऽङ्गिरादयः ॥ १८ ॥
प्रत्यक्षं पितरस्ते हि तैः प्रीतैः प्रीयते जगत्।
तत्र भागार्थिनो देवा आदित्या वसवस्तथा ॥ १९ ॥
विश्वेदेवाः सपितरो गन्धर्वाद्या मरुद्गणाः। जगृहुर्यज्ञभागांस्तान्यावन्तो हविषार्पिताः ॥
तावत्कालं जलात्सद्य उत्तस्थौ ब्रह्मणः पुनः। रुद्रः कोपोद्भवो यस्तु पूर्वमग्नो महाजले ॥
स सहस्रार्कसङ्काशो निश्चक्राम जलात्ततः। सर्वज्ञानमयो देवः सर्वदेवमयोऽमलः ॥
प्रत्यक्षदर्शी सर्वस्य जगतस्तपसा बभौ। तस्मिंस्तु काले पञ्चानाञ्जातः सर्गो नरोत्तम॥
दिव्यानां पृथिवीस्थानां चतुर्णां मरजातिनाम्।
रौद्रसर्गस्य सम्भूतिस्तदा सद्योऽपि जायते। इदानीं रुद्रसर्गन्त्वं शृणु पार्थिवसत्तम ॥
दशवर्षसहस्राणि तपस्तप्त्वा महज्जले। प्रतिरुद्रो यदा रुद्रस्तदा चोर्वीं सकाननाम् ॥
दृष्ट्वा शस्यवतीं रम्यां मनुष्यपशुसङ्कुलाम्। शुश्राव च तदा शब्दानृत्विजां दक्षसद्मनि॥
आश्रमे यज्ञियानोच्चैर्योगस्थैरिति कीर्त्तितान् ॥ २६ ॥
ततः श्रुत्वा महातेजाः सर्वज्ञः परमेश्वरः। चुकोप सुभृशन्देवो वाक्यञ्चेदमुवाच ह ॥
अहं पूर्वन्तु कविना सृष्टः सर्वात्मना विभुः।
प्रजाः सृजस्वेति तदा वाक्यमेतत्तथोक्तवान् ॥ २८ ॥

इदानीं केन तत्कर्म कृतं सृष्ट्यादिवर्णनम् । एवमुक्तो भृशं कोपान्ननाद परमेश्वरः ॥
तस्यैव नदतो ज्वालाः श्रोत्रेभ्यो निर्ययुस्तदा ।
तत्र भूतानि वैताला उच्छुष्मा प्रेतपूतनाः । उत्तस्थुः कोटिशस्तत्र नानाप्रहरणावृताः ॥
तं दृष्ट्वा भूतसङ्घाता विविधायुधपाणयः । ससर्ज वेदविद्याङ्गरथं परमशोभनम् ॥
तस्मिन्मृगद्वयं [1]शश्वत् त्रितत्त्वञ्च त्रिवेणुकम् ।
त्रिपूजकं त्रिषवणं धर्माक्षं मारुतध्वनिम् ॥ ३२ ॥
अहोरात्रे पताके द्वे धर्माधर्मे तु दण्डकम् । शकटं सर्वविद्याश्च स्वयं ब्रह्मा हि सारथिः॥
गायत्री च धनुस्तस्य ओङ्कारो गुण एव च ।
स्वराः सप्त शरास्तस्य देवदेवस्य सुव्रत ॥ ३४ ॥
एवं कृत्वा स सामग्रीं देवदेवः प्रतापवान् । जगाम दक्षयज्ञाय कोपाद्रुद्रः प्रतापवान् ॥
गच्छतस्तस्य देवस्य अम्बराङ्गिरसन्नयत् । ऋत्विजां मन्त्रनिचयो नष्टो रुद्रागमे तदा ॥
विपरीतमिदं दृष्ट्वा तदा सर्वेऽत्र ऋत्विजः ।
ऊचुः सन्नह्यतां देवा महद्वो भयमागतम् ॥ ३७ ॥
कश्चिदायाति बलवानसुरो ब्रह्मनिर्मितः । यज्ञभागार्थमेतस्मिन् क्रतौ परमदुर्लभम् ॥
एवमुक्तास्ततो देवा ऊचुर्मातामहं तदा । दक्ष तात किमत्रास्मत्कार्यं ब्रूहि विवक्षितम् ॥
दक्ष उवाच
ऊह्यन्तां द्रुतमस्त्राणि सङ्ग्रामोऽत्र विधीयताम् ॥ ४० ॥
एवमुक्ते तदा देवैर्विविधायुधधारिभिः । रुद्रस्यानुचरैः सार्द्धं महद्युद्धं प्रवर्त्तितम् ॥
तत्र वैतालभूतानि कूष्माण्डा ग्रहपूतनाः । युयुधुर्लोकपालैश्च नानायुधधराणि च ॥
दिवो रौद्राणि भूतानि निर्गच्छन्तो यमालयम् ।
चिक्षिपुः सायकान् घोरानसीष्वासपरश्वधान् ॥ ४३ ॥
भूतान्यपि मृधे घोराण्युल्मुकैरस्थिभिः शरैः । जघ्नुर्देवान्मृधे रोषाद्रुद्रस्य पुरतो बलात् ॥
ततस्तस्मिन्महारौद्रे संग्रामे भीमरूपिणी । रुद्रो भगस्य नेत्रे तु बिभेदैकेषुणा मृधे ॥
रुद्रस्य शरपातेन नष्टनेत्रं भगं तदा । दृष्ट्वास्य क्रोधात्तेजस्वी पूषा रुद्रमयोधयत् ॥
सृजन्तमिषुजालानि पूषणन्तु महामृधे । दृष्ट्वा रुद्रोऽस्य दन्तांस्तु चकर्ष परवीरहा ॥
तस्य दन्तांस्तदा दृष्ट्वा पूष्णो रुद्रेण पातितान् ।
दुद्रुवुः सर्वतो दिक्षु रुद्रास्त्वेकादश द्रुतम् ॥ ४८ ॥
तां भग्नां सहसा दिक्षु दृष्ट्वा विष्णुः प्रतापवान् ।
आदित्यावरजो वाक्यमुवाच स्वबलं तदा ॥ ४९ ॥
क्व यात पौरुषन्त्यक्त्वा दर्पं माहात्म्यमेव च । व्यवसायं कुलं भूतिं कथं न स्मर्यते द्रुतम्॥
परमेष्ठिगुणैर्युक्ता लब्धमायुर्यतः पुरा । तं नमस्कुरुतामोघं पृथिव्यां पद्मजं स्वयम् ॥
एवमुक्त्वा गरुत्मन्तमारुरोह हरिस्तदा । शङ्खचक्रगदापाणिः पीतवासा जनार्दनः ॥

१. स्वश्वाविति क्वचित्पठ्यते ।

ततो हरिहरं युद्धमभवल्लोमहर्षणम्। रुद्रः पाशुपतास्त्रेण विव्याध हरिमोजसा ॥
हरिर्नारायणास्त्रेण रुद्रं विव्याध कोपवान्। नारायणं पाशुपतमुभेऽस्त्रे व्योम्नि रोपिते ॥
युयुधाते भृशं दिव्यं परस्परजिघांसया। दिव्यं वर्षसहस्रन्तु तयोर्युद्धमभूत्तदा ॥
तत्रैकं मुकुटोद्बद्धमन्यञ्च जटजालकम्। एकं प्रध्मापयच्छङ्खमन्यं डमरुकं शुभम् ॥
एकं खड्गकरं तत्र तथान्यन्दण्डधारिणम्। एकङ्कौस्तुभदीप्ताङ्गमन्यं भस्मविभूषितम् ॥

एकं गदां भ्रमयन्ति[1] द्वितीयं दण्डमेव च।
एकं शोभति कण्ठस्थैर्मणिभिः स्वस्थिभिः परम् ॥ ५८ ॥

एकं पीताम्बरं तत्र द्वितीयं सर्पमेखलम्। एवं तौ स्पर्द्धिनावस्त्रौ रौद्रनारायणात्मकौ ॥
अन्योऽन्यालिङ्गयोपेतौ तदालोक्य पितामहः। उवाच शाम्यतामस्त्रे स्वस्वभावेन सुव्रते॥
एवं ते ब्रह्मणा प्रोक्ते शान्तभावं प्रजग्मतुः। अथ विष्णुहरौ ब्रह्मा वाक्यमेतदुवाच ह ॥

उभौ हरिहरौ देवौ लोके ख्यातिं गमिष्यथः।
अयञ्च यज्ञो विध्वस्तः सम्पूर्णत्वं गमिष्यति ॥ ६२ ॥
दक्षस्य ख्यातिमाँल्लोके सन्तत्यायं भविष्यति ॥ ६३ ॥

एवमुक्त्वा हरिहरौ तदा लोकपितामहः। ब्रह्मा लोकानुवाचेदं रुद्रभागोऽस्य दीयताम् ॥
रुद्रभागो ज्येष्ठभाग इतीयं वैदिकी श्रुतिः। स्तुतिञ्च देवाः कुरुत रुद्रस्य परमेष्ठिनः ॥
भगनेत्रहरं देवं पूष्णो दन्तविनाशनम्। स्तुतिं कुरुत वः शीघ्रं गीतैरेतैस्तु नामभिः।

येनायं वः प्रसन्नात्मा वरदत्वं भजेत ह ॥ ६६ ॥

एवमुक्तास्तु ते देवा स्तोत्रं शम्भोर्महात्मनः। चक्रुः परमया भक्त्या नमस्कृत्य स्वयम्भुवे॥

देवा ऊचुः

नमो विषमनेत्राय नमस्ते त्र्यम्बकाय च। नमः सहस्रनेत्राय नमस्ते शूलपाणिने।

नमः खट्वाङ्गहस्ताय नमस्ते दण्डधारिणे ॥ ६८ ॥

त्वं देव हुतभुग्ज्वालाकोटिभानुसमप्रभः। अदर्शने वयं देव मूढविज्ञानतोऽधुना ॥

नमस्त्रिनेत्रार्त्तिहराय शम्भो त्रिशूलपाणे विकृतास्यरूप।
समस्तदेवेश्वर शुद्धभाव प्रसीद रुद्राच्युत सर्वभाव ॥ ७० ॥
पूष्णोऽस्य दन्तान्तक भीमरूप प्रलम्बभोगीन्द्रलुलन्तकण्ठ।
विशालदेहाच्युत नीलकण्ठ प्रसीद विश्वेश्वर विश्वमूर्त्ते ॥ ७१ ॥
भगाक्षिसंस्फोटनदक्षकर्मा गृहाण भागं मखतः प्रधानम्।
प्रसीद देवेश्वर नीलकण्ठ प्रपाहि नः सर्वगुणोपपन्न ॥ ७२ ॥
सिताङ्गरागाप्रतिपन्नमूर्त्ते कपालधारिंस्त्रिपुरघ्न देव।
प्रपाहि नः सर्वभयेषु चैवं उमापते पुष्करनालजन्म ॥ ७३ ॥
पश्यामि ते देहगतान्सुरेश सर्गादयो वेदवरानन्त।
साङ्गान् सविद्यान् सपदक्रमांश्च सर्वान्निलीनांस्त्वयि देवदेव ॥ ७४ ॥

---

१. भ्रमयन्तमिति पाठान्तरम्।

भव सर्व महादेव पिनाकिन्रुद्र ते हर । नताः स्म सर्वे विश्वेश त्राहि नः परमेश्वर ॥
इत्थं स्तुतस्तदा देवैर्देवदेवो महेश्वरः । तुतोष सर्वदेवानां वाक्यञ्चेदमुवाच ह ॥

रुद्र उवाच

भगस्य नेत्रं भवतु पूष्णो दन्तास्तथा मुखे । दक्षस्याच्छिद्रतां यातु यज्ञश्चाप्यदितेः सुताः॥
पशुभावं तथा चापि अपनेष्यामि वः सुराः । मद्दर्शनेन यो जातः पशुभावो दिवौकसाम् ।
स मयापहृतः सद्यः पतित्वं वो भविष्यति ॥ ७८ ॥
अहञ्च सर्वविद्यानां पतिराद्यः सनातनः । अहं वै पतिभावेन पशुमध्ये व्यवस्थितः ।
अतः पशुपतिर्नाम मम लोके भविष्यति ॥ ७९ ॥
ये मां यजन्ति तेषां स्याद्दीक्षा पाशुपती भवेत् ॥ ८० ॥
एवमुक्ते तु रुद्रेण ब्रह्मा लोकपितामहः । उवाच रुद्रं सस्नेहं स्मितपूर्वमिदं वचः ॥८१॥
ध्रुवं पशुपतिर्देव त्वं लोके ख्यातिमेष्यसि ।
अयञ्च देवस्तन्नाम्ना लोके ख्यातिं गमिष्यति ॥ ८२ ॥
आराध्यश्च समस्तानां लोकादीनां गमिष्यति ॥ ८३ ॥
एवमुक्त्वा तदा ब्रह्मा दक्षं प्रोवाच बुद्धिमान् । गौरीं प्रयच्छ रुद्राय पूर्वमेवोपपादिताम् ॥
एवमुक्त्वा तदा देवस्तां कन्यां दक्षसन्निधौ । ददौ रुद्राय महते गौरीं परमशोभनाम् ॥
दक्षस्य च प्रियं कुर्वन् बहुमानपुरःसरम् । गृहीतायान्तु कन्यायां दाक्षायण्यां पितामहः ।
ददौ रुद्राय निलयं कैलासं सुरसन्निधौ ॥ ८६ ॥
रुद्रोऽपि प्रययौ भूतैः समं कैलासपर्वतम् ।
देवाश्चापि यथास्थानं स्वं स्वं जग्मुर्मुदान्विताः ॥ ८७ ॥
ब्रह्मापि दक्षसहितः प्राजापत्यं पुरं ययौ ॥ ८८ ॥

इति वराहपुराणे गौर्युत्पत्तिर्नाम एकविंशोऽध्यायः ।

---

# द्वाविंशोऽध्यायः

महातपा उवाच

तस्मिन्निवसतस्तस्य रुद्रस्य परमेष्ठिनः । चुकोप गौरी देवस्य पितुर्वैरमनुस्मरन् ॥ १ ॥
चिन्तयामास देवस्य अनेनापहृतं पुरम् ।
यज्ञो विध्वंसितो यस्मात्तस्माद्देहं त्यजाम्यहम् ॥ २ ॥
आराध्य तपसा तस्य गृहे भूत्वा व्रजाम्यहम् । कथं गच्छामि पितरं दक्षं क्षपितबान्धवम्॥
भवपत्नी च दुहिता एवं सञ्चिन्त्य सुन्दरी । जगाम तपसे देवी हिमवन्तं महागिरिम् ॥
तत्र कालेन महता क्षपयन्ती कलेवरम् । स्वशरीराग्निना दग्धा ततः शैलसुताभवत् ।
उमा नामेति महती कृष्णा चेत्यभिधानतः ॥ ५ ॥

लब्ध्वा तु शोभनां मूर्तिं हिमवन्तगृहे शुभाम् । पुनस्तपश्चकारोग्रं देवं स्मृत्वा त्रिलोचनम्॥
असावेव पतिर्मह्यमित्युक्त्वा तपसि स्थिता ॥ ७ ॥
कुर्वन्त्या तत्तपश्चोग्रं हिमवन्ते महागिरौ । कालेन महता देवस्तपसाराधितस्तया ।
आजगामाश्रमन्तस्या विप्रो भूत्वा महेश्वरः ॥ ८ ॥
वृद्धः शिथिलसर्वाङ्गः स्खलंश्चैव पदे पदे । कृच्छ्रात्तस्याः समीपन्तु आगत्य द्विजसत्तमः।
बुभुक्षितोऽस्मि मे देहि भद्रे भोज्यं द्विजस्य तु ॥ ९ ॥
एवमुक्ता तदा कन्या उमा शैलसुता शुभा । उवाच ब्राह्मणं भोज्यं ददामि विप्र फलादिकम् ॥
कुरु स्नानं द्रुत विप्र भुङ्क्ष्वान्नं यदृच्छया ॥ १० ॥
एवमुक्तस्तदा विप्रस्तस्याः पार्श्वे महानदीम् । गङ्गां जगाम स्नानार्थं स्नानं कर्तुमवातरत्॥
स्नानन्तु कुर्वता तेन रुद्रेण द्विजरूपिणा । भूत्वा मायामयं भीमं मकरं भयदर्शनम् ।
ग्राहितस्तु तदा विप्रस्तेन दुष्टेन मद्गुना ॥ १२ ॥
दृष्ट्वा धृतमथात्मानं मकरेण बलीयसा । वृद्धमात्मानमन्यन्तां दर्शयन्वाक्यमब्रवीत् ॥
अब्रह्मण्यङ्कृतं कन्ये त्रायस्व मामतो झषात् ।
यावन्न याति विकृतिं तावन्मान्त्रातुमर्हसि ॥ १४ ॥
एवमुक्ता तदा कन्या चिन्तयामास पार्वती । पितृभावेन शैलेन्द्रं भर्तृभावेन शङ्करम् ।
स्पृशामि तपसा पूता कथं विप्रं स्पृशाम्यहम् ॥ १५ ॥
यद्येनन्नापकर्षामि करेण च जले धृतम् । तदानीं ब्रह्मवध्या मे भविष्यति न संशयः ॥
अन्यं व्यतिक्रमे धर्ममपनेतुञ्च शक्यते । ब्रह्मवध्या पुनर्नैवमेवमुक्त्वा गतात्वरत् ॥
सा गत्वा त्वरितं भीरुर्गृहीत्वा पाणिना द्विजम् । चकर्षान्तर्जलात्तावत्स्वयम्भूतपतिर्हरः॥
यमाराध्य तपश्चर्त्तुमारब्धं शैलपुत्रया । स एव भगवान्रुद्रस्तस्याः पाण्यवलम्बितः ॥
तं दृष्ट्वा लज्जिता देवी पूर्वत्यागमनुस्मरन् । न किञ्चिदुत्तरं सुभ्रूर्वदति स्म सुलज्जया ॥
तूष्णीभूतान्तु तां दृष्ट्वा गौरीं रुद्रो हसन्निव ।
पाणौ गृहीत्वा मां भद्रे कथन्त्यक्तुमिहार्हसि ॥ २१ ॥
मत्पाणिग्रहणं भद्रे वृथा यदि करिष्यसि । तदानीं ब्राह्मणः पुत्र्यामाहारार्थं ब्रवीम्यहम् ॥
न भवेत्परिहासोऽयमुक्तं देवी परम्परा । लज्जमाना तदा वाक्यं वदति स्मितपूर्वकम् ॥
देवदेव त्रिलोकेश त्वदर्थोऽयं समुद्यमः । प्राग्जन्माराधितो भर्त्ता भवान्देवो महेश्वरः॥
इदानीं म भवान्देवः पतिर्नान्यो भविष्यति ।
किन्तु स्वामी पिता मह्यं शैलेन्द्रः मे व्रजामि तम् ॥ २५ ॥
अनुज्ञाप्य विधानेन ततः पाणिङ्ग्रहीष्यसि ॥ २६ ॥
एवमुक्ता तदा देवी पितरं प्रति भामिनी । कृताञ्जलिपुटा भूत्वा हिमवन्तमुवाच ह ॥
इतोऽन्यजन्मभर्त्ता मे रुद्रो दक्षमखान्तकः । इदानीं तपसा सैव ज्ञातोऽभूद्रतिभावनः ॥
स च विश्वपतिर्भूत्वा ब्राह्मणो मे तपोवनम् ।
आगत्य भोजनार्थं मां याचयामास शङ्करः ॥ २९ ॥

मया स्नातुं व्रजस्वेति चोदितो जाह्नवीं गतः। तत्रासौ वृद्धभावेन द्विजरूपेण शङ्करः।
मकरेण धृतः पूर्वमब्रह्मण्यमुवाच ह ॥ ३० ॥
ब्रह्महत्याभयात्तात मया पाणौ धृतस्ततः। धृतमात्रः स्वकन्देहं दर्शयामास शङ्करः॥
ततो मामब्रवीद्देवः पाणिग्रहणमागतम्। भविता देवि मा किञ्चिद्विचारय तपोधने॥
एवमुक्ता त्वहं तेन शङ्करेण महात्मना। तदनुज्ञाप्य देवेशं भवन्तं प्रष्टुमागता ॥ ३३ ॥
इदानीं यत्क्षमं कार्यं तच्छीघ्रं संविधीयताम् ॥ ३४ ॥
एवं श्रुत्वा तदा वाक्यं शैलराजो मुदा युतः। ऊचे दुहितरं कन्यां तस्मिन्काले वराननः॥
पुत्रि धन्योऽस्म्यहं लोके यस्य रुद्रः स्वयं हरः।
जामाता भविता देवस्त्वयाऽपत्यवदस्म्यम् ॥ ३६ ॥
स्थापितो मूर्ध्नि देवानामपि पुत्रि त्वया ह्यहम्। स्थीयतां क्षणमेकन्तु यावदागमनं मम॥
एवमुक्त्वा गतो राजा शैलानां ब्रह्मणोऽन्तिकम्। तत्र दृष्ट्वा महात्मानं सर्वदेवपितामहम्॥
उवाच प्रणतो भूत्वा ब्रह्माणं शैलराट् ततः। देवोमा दुहिता मह्यं तां रुद्राय ददाम्यहम्॥
प्रयच्छेवाच देवानां तदा लोकपितामहः ॥ ४० ॥
एवमुक्तः शैलराजः स्ववेश्मागम्य सत्वरम्। तुम्बुरुन्नारदञ्चैव हाहां हूहून्तथैव च।
स गत्वा किन्नरांश्चैव असुरान्राक्षसानपि ॥ ४१ ॥
पर्वताः सरितः शैला वृक्षा ओषधयस्तथा। आगता मूर्त्तिमन्तो वै पर्वताः सङ्गमोपलाः।
हिमवद्दुहितान्द्रष्टुं विवाहं शङ्करेण ह ॥ ४२ ॥
तत्र वेदी क्षितिश्चासीत्कलशाः सप्त सागराः। सूर्यो दीपस्तथा सोमः सरितो ववहुर्जलम्॥
एवं विवाहसामग्रीं कृत्वा शैलनराधिपः। प्रेषयामास रुद्राय समीपं मन्दरं गिरिम्॥
स तदा शङ्करोक्तस्तु मन्दरो द्रुतमाययौ। विधिना सोमया पाणिं जग्राह परमेश्वरः॥
तत्रोत्सवे पर्वतनारदौ द्वौ जगुश्च सिद्धा ननृतुर्वनस्पताः।
पुष्पाण्यनेकानि विचिक्षिपुः शुभा ननृतुरुच्चैः सुरयोषितो भृशम् ॥ ४६ ॥
तस्मिन्विवाहे सलिलप्रवाहे चतुर्मुखो लोकपरस्वसंस्थः।
उवाच कन्यां तव पुत्रि लोके नारी प्रभर्त्ता तव चान्यपुंसाम् ॥ ४७ ॥
इत्येवमुक्त्वा स उमां सरुद्रां पितामहः स्वं पुरमाजगाम। ४८ ॥
स बभूव यथा प्रोक्तं प्रजापालाय पृच्छते। ऋषिणा महता पूर्वं तपसा भावितात्मना॥
गौर्या उत्पत्तिरेषा वै कथिता परमर्षिणा। विवाहश्च यथा वृत्तस्तत्सर्वं कथितन्तव॥
एतत्सर्वन्तु गौर्या वै सम्पन्नन्तु तृतीयया। तस्यान्तिथौ तृतीयायां लवणं वर्जयेत्सदा॥
यश्चोपोष्यति नारी वा सा सौभाग्यन्तु विन्दति ॥ ५२ ॥
दुर्भगा या तु नारी स्यात्पुरुषश्चातिदुर्भगः। एतच्छ्रुत्वा तृतीयायां लवणन्तु विवर्जयेत्॥
सर्वकामानवाप्नोति सौभाग्यं द्रव्यसम्पदः।
आरोग्यञ्च सदा लोके कान्तिं पुष्टिञ्च विन्दति ॥ ५४ ॥
इति वराहपुराणे गौर्युद्वाहो नाम द्वाविंशोऽध्यायः।

# त्रयोविंशोऽध्यायः

प्रजापाल उवाच

कथं गणपतेर्जन्म मूर्तिमन्तञ्च सत्तम । एतन्मे संशयञ्छिन्धि हृदि कष्टं व्यवस्थितम् ॥

महातपा उवाच ।

पूर्वं देवगणाः सर्वे ऋषयश्च तपोधनाः ।
कार्यारम्भं तथा चक्रुः सिद्धयते च न संशयः ॥ २ ॥

सन्मार्गवर्त्तिषु तथा सिद्धयन्ते विघ्नतः क्रियाः । असत्कारिषु सर्वेषु तद्वदेवमविघ्नतः ॥
ततो देवाः सपितरश्चिन्तयामासुरोजसः । असत्कार्येषु विघ्नार्थं सर्वं एवाभ्यमन्त्रयन्॥
ततस्तेषां तदा मन्त्रं कुर्वतां त्रिदिवौकसाम् । बभूव बुद्धिर्गमने रुद्रं प्रति महामतिम् ॥
ते तत्र रुद्रमामन्त्र्य कैलासनिलयं गुरुम् । ऊचुः सविनयं सर्वे प्रणिपातपुरःसरम् ॥

देवा ऊचुः

देव देव महादेव शूलपाणे त्रिलोचन । विघ्नार्थमविशिष्टानामुत्पादयितुमर्हसि ॥ ७ ॥
एवमुक्तस्तदा देवैर्भवः परमया मुदा । उमां निरीक्षयामास चक्षुषा निमिषेण ह ॥ ८ ॥

देवानां सन्निधौ तस्य पश्यतोमां महात्मनः ।
चिन्ताभूद्व्योम्नि मूर्त्तिर्नो दृश्यते केन हेतुना ॥ ९ ॥

पृथिव्यां विद्यते मूर्त्तिरपां मूर्त्तिस्तथैव च । तेजसः श्वसनस्यापि मूर्त्तिरेषा तु दृश्यते ॥

आकाशञ्च कथं नैति मत्वा देवो जहास च ।
ज्ञानशक्तिः पुमान् दृष्ट्वा यद्दृष्टं व्योम्नि शम्भुना ॥ ११ ॥

यथोक्तं ब्रह्मणा पूर्वं शरीरन्तु शरीरिणाम् । यच्चापि हसितन्तेन देवेन परमेष्ठिना ॥
एतत्कार्यञ्चतुष्केण पृथिव्यादिचतुर्ष्वपि । मूर्त्तिमानतितेजस्वो हसतः परमेष्ठिनः ॥
प्रदीप्तास्यो महादीप्तः कुमारो भासयन्दिशः । परमेष्ठिगुणैर्युक्तः साक्षाद्रुद्र इवापरः ॥

उत्पन्नमात्रो देवानां व्युषितः संप्रमोहयन् ।
कान्त्या दीप्त्या तथा मूर्त्या रूपेण च महात्मवान् ॥ १५ ॥

तं दृष्ट्वा परमं रूपं कुमारस्य महात्मनः । उमाऽनिमेषनेत्राभ्यां तमपश्यत भामिनो ॥
तं दृष्ट्वा कुपितो देवः स्त्रीभावञ्चञ्चलं तथा । मत्वा कुमाररूपन्तु शोभनं मोहनं दृशाम् ॥
ततः शशाप तन्देवो गणेशम्परमेश्वरः । कुमार गजवक्त्रस्त्वं प्रलम्बजठरस्तथा ।

भविष्यसि तथा सर्पैरुपवीतगतिर्ध्रुवम् ॥ १८ ॥

एवं शशाप तन्देवस्तीव्रकोपसमन्वितः । धुन्वन् शरीरमुत्थाय ततो देवो रुषान्वितः ।

यथा यथासौ स्वशरीरमाधन्धुनोति देवस्त्रिशिखास्त्रपाणिः ।
तथा तथा चाङ्गरुहाच्चकासे जलं क्षितौ संन्यपतत्तथान्ये ॥ २० ॥
विनायकानेकविधा गजास्यास्तमालनीलाञ्जनसन्निकाशाः ।
उत्तस्थुरुच्चैर्विविधास्त्रहस्तास्ततस्तु देवो मनसाकुलेन ॥ २१ ॥

किमेतदित्यद्भुतकर्मकारी लोकः करोत्यप्रतिमं महच्च ।
कार्यं सुराणां कृतमेतदिष्टं भवेदथैनं परितः कुतस्तत् ॥ २२ ॥
दिवौकसाश्चिन्तयतां तथा तु विनायकैः क्ष्मा क्षुभिता बभूव ।
चतुर्मुखश्चाप्रतिमं विमानमारुह्य खे वाक्यमिदं जगाद ॥ २३ ॥
धन्याः स्थ देवाः सुरनायकेन त्रिलोचनेनाद्भुतरूपिणा च ।
अनुगृहीताः परमेश्वरेण सुरद्विषां विघ्नकृतां नतौ च ॥ २४ ॥
इत्येवमुक्त्वा प्रपितामहस्तानुवाच देवस्त्रिशिखास्त्रपाणिम् ।
यस्ते विभो वक्त्रसमुद्भव प्रभुर्विनायकानां भव सन्त्विमेऽनुगाः ॥२५॥
भवन्तथास्यात्मवरेण चाम्बरे त्वया चतुर्ष्वस्तु शरीरचारी ।
आकाशमेतद्बहुधा व्यवस्थितं त्वया चैको वदतान्तेऽपयाताः ॥ २६ ॥
प्रभुर्भव त्वं प्रतिमास्त्रपाणिना इमानि चास्त्रेषु वरांश्च देहि ।
इत्येवमुक्त्वा विगते पितामहे त्रिलोचनश्चात्मभवं जगाद ॥ २७ ॥
विनायको विघ्नकरो गजास्यो गणेशनामा च भवस्य पुत्रः ।
एते च सर्वे त्वपयान्तु भृत्या विनायकाः क्रूरदृशः प्रचण्डाः ॥ २८ ॥
उच्छुष्मदानादिविवृद्धदेहाः कार्येषु सिद्धिं प्रतिपादयन्तः ।
भवांश्च देवेषु तथा मखेषु कार्येषु चान्येषु महानुभावान् ॥ २९ ॥
अग्रेषु पूजां लभनेऽन्यथा च विनाशयिष्यस्यथ कार्यसिद्धिम् ।
इत्येवमुक्त्वा परमेश्वरेण सुरैः समं काञ्चनकुम्भसंस्थैः ॥ ३० ॥
जलैस्तथासावभिषिक्तगात्रो रराज राजेन्द्र विनायकानाम् ॥ ३१ ॥
दृष्ट्वाभिषिच्यमानन्तु देवास्तङ्गणनायकम् । तुष्टुवुः प्रयताः सर्वे त्रिशूलास्त्रस्य सन्निधौ ॥

## देवा ऊचुः

नमस्ते गजवक्त्राय नमस्ते गणनायक । विनायक नमस्तेऽस्तु नमस्ते चण्डविक्रम ॥
नमोऽस्तु ते विघ्नकर्त्रे नमस्ते सर्पमेखल । नमस्ते रुद्रवक्त्रोत्थप्रलम्बजठराश्रित ।
सर्वदेवनमस्कारादविघ्नं कुरु सर्वदा ॥ ३४ ॥

एवं स्तुतस्तदा देवैर्महात्मा गणनायकः । अभिषिक्तस्तु रुद्रेण सोमायाऽपत्यताङ्गतः ॥
एतच्चतुर्थ्यां सम्पन्नं गणाध्यक्षस्य पार्थिवः । यतस्ततोऽयं महती तिथीनां परमा तिथिः ॥
एतस्यां यस्तिलान् भुक्त्वा भक्त्या गणपतिन्नृप । आराधयति तस्याशु तुष्यते नात्र संशयः॥
यश्चैतत्पठते स्तोत्रं यश्चैतच्छृणुयात्सदा । न तस्य विघ्ना जायन्ते न पापं सर्वथा नृप ॥

इति वराहपुराणे विनायकोत्पत्तिर्नाम त्रयोविंशोऽध्यायः ।

# चतुर्विंशोऽध्यायः

धरण्युवाच

कथन्ते गात्रसंस्पर्शान्मूर्त्तिमन्तो महाबलाः । नागा बभूवुर्देवस्य कारणन्ते महीधर ॥

वराह उवाच

श्रुत्वा गणपतेर्जन्म प्रजापालो नराधिपः । उवाच श्लक्ष्णया वाचा तं मुनिं शंसितव्रतम्॥

प्रजापाल उवाच

भगवंस्ताक्ष्यविषयाः कथं मूर्त्तिमुपागताः । नागा बभूवुः कुटिला एतदाख्यातुमर्हसि ॥

महातपा उवाच

सृजता ब्रह्मणा सृष्टिं मरीचिसूतिकारणम् । प्रथमं मनसा ध्यातस्तस्य पुत्रस्तु कश्यपः ॥
तस्य दाक्षायणी भार्या कद्रुर्नाम शुचिस्मिता ।
मारीचो जनयामास तस्यां पुत्रान्महाबलान् ॥ ५ ॥
अनन्तं वासुकिञ्चैव कम्बलञ्च महाबलम् । कर्कोटकञ्च राजेन्द्र पद्मञ्चान्यं सरीसृपम् ॥
महापद्मन्तथा शङ्खं कुलिकं चापराजितम् । एते कश्यपदायादाः प्रधानाः परिकीर्त्तिताः॥
एतेषान्तु प्रसूत्या तु इदमापूरितं जगत् ॥ ८ ॥
कुटिला हीनकर्माणस्तीक्ष्णास्योत्थविषोल्वणाः ।
दृष्ट्वा सन्दश्य मनुजान् भस्म कुर्युः क्षणाद् ध्रुवम् ॥ ९ ॥
शब्दगामी यथा स्पर्शो मनुष्याणां नराधिप । अहन्यहनि जायेत क्षयः परमदारुणः ॥
आत्मनस्तु क्षयं दृष्ट्वा प्रजाः सर्वाः समन्ततः । जग्मुः शरण्यं शरणं परन्तु परमेश्वरम् ॥
इममेवार्थमुद्दिश्य प्रजाः सर्वा महीपते । ऊचुः कमलजन्देवं पुराणं ब्रह्मसंज्ञितम् ॥
त्राहि नस्तीक्ष्णदंष्ट्रेभ्यो भुजङ्गेभ्यो महाबल । अहन्यहनि ये देव पश्येयुरुरगा दृशा ।
मनुष्यं मृगयूथं वा तत्सर्वं भस्मसाद्भवेत् ॥ १३ ॥
त्वया सृष्टिः कृता देव लीयते सा भुजङ्गमैः । एतज्ज्ञात्वा तु दुर्वृत्तं तत्कुरुष्व महामते॥

ब्रह्मोवाच

अहं रक्षां विधास्यामि भवतीनां न संशयः ।
व्रजध्वं स्वानि धिष्ण्यानि प्रजापालाः ससाध्वसाः ॥ १५ ॥
एवमुक्तात्रजंस्तेन ब्रह्मणाव्यक्तमूर्त्तिना । आगतासु प्रजास्वाद्यस्तानाहूय भुजङ्गमान् ।
शशाप परमक्रुद्धो वासुकिप्रमुखांस्तथा ॥ १६ ॥

ब्रह्मोवाच

यतो मत्प्रभवान्नित्यं क्षयं नयत मानुषान् । भवान्तरे अथान्यस्मिन्मातुः शापात्सुदारुणात्॥
भवितातिक्षयो घोरो नूनं स्वायम्भुवेऽन्तरे ॥ १७ ॥
एवमुक्तास्तु वेपन्तो ब्रह्मणो भुजगोत्तमाः । निपत्य पादयोस्तस्य इदमूचुर्वचस्तदा ॥

नागा ऊचुः

भगवन्कुटिला जातिरस्माकं भवता कृता। विषोल्वणत्वं क्रूरत्वं दृक्शस्त्रत्वञ्च नो त्वया।
सम्पादितं त्वया देव इदानीं शमयाच्युत ॥ १९ ॥

ब्रह्मोवाच

यदि नाम मया सृष्टा भवन्तः कुटिलाशयाः। ततः किं मनुजान्नित्यं भक्षयध्वं गतव्यथाः॥

नागा ऊचुः

मर्यादां कुरु देवेश स्थानञ्चैव पृथक् पृथक् ॥ २१ ॥

नागानां वचनं श्रुत्वा देवो वचनमब्रवीत्। अयं करोमि वो नागाः समयं मनुजैः सह॥
तदेकमनसः सर्वे शृणुध्वं मम शासनम् ॥ २३ ॥

पातालं वितलञ्चैव सुतलाख्यं तृतीयकम्। दत्तं वै वस्तुकामानां गृहं तत्र गमिष्यथ ॥
तत्र भोगान्बहुविधान्भुञ्जाना मम शासनात्। तिष्ठध्वं सप्तमं यावद्रात्र्यन्तं ते पुनः पुनः॥
ततो वैवस्वतस्यादौ काश्यपेया भविष्यथ। दायादाः सर्वदेवानां सुपर्णस्य च धीमतः ॥
तदा प्रसूतिर्वः सर्वा भोक्ष्यते चित्रभानुना। भवतान्नैव दोषोऽयं भविष्यति न संशयः॥
ये वै क्रूरा भोगिनो दुर्विनीतास्तेषामन्तो भविता नान्यथैतत्।
कालप्राप्तं भक्षयध्वं दयध्वं तथाऽपकारे च कृते मनुष्यान् ॥ २८ ॥
मन्त्रौषधैर्गारुडमण्डलैश्च बद्धैर्दष्टैर्मानवा ये चरन्ति।
तेषां भीतैर्वर्त्तितव्यं न चान्यच्चिन्त्यं कार्यञ्चान्यथा वो विनाशः ॥ २९ ॥
इतीरिते ब्रह्मणि ते भुजङ्गा जग्मुः स्थानं क्ष्मातलाख्यं हि सर्वे ॥ ३० ॥

एवं शापन्ते तु लब्ध्वा प्रसादञ्च चतुर्मुखात्। तस्थुः पातालनिलयं मुदितेनान्तरात्मना।
एतत्सर्वञ्च पञ्चम्यां तेषाञ्जातं महात्मनाम्। अतः प्रियं तिथिर्धन्या सर्वपापहरा शुभा ॥
एतस्यां संयतो यस्तु अम्लन्तु परिवर्जयेत्।
क्षीरेण स्नापयेन्नागांस्तस्य यास्यन्ति मित्रताम् ॥ ३३ ॥

इति वराहपुराणे नागोत्पत्तिर्नाम चतुर्विंशोऽध्यायः।

---

# पञ्चविंशोऽध्यायः

प्रजापाल उवाच

अहङ्कारात्कथं जज्ञे कार्त्तिकेयो द्विजोत्तम। एतन्मे संशयञ्छिन्धि पृच्छतो वै महामुने ॥

महातपा उवाच

सर्वेषामेव तत्त्वानां यः परः पुरुषः स्मृतः। तस्मादव्यक्तमुत्पन्नं तत्त्वादि त्रिविधन्तु तत्॥
पुरुषाव्यक्तयोर्मध्ये महत्त्वं समपद्यत। स चाहङ्कार इत्युक्तो यो महान्समुदाहृतः ॥
पुरुषो विष्णुरित्युक्तः शिवो वा नामतः स्मृतः।
अव्यक्तन्तु उमा देवी श्रीर्वा पद्मनिभेक्षणा ॥ ४ ॥

तत्संयोगादहङ्कारः स च सेनापतिर्गुहः । तस्योत्पत्तिम्प्रवक्ष्यामि शृणु राजन्महामते ॥
आद्यो नारायणो देवस्तस्माद्ब्रह्मा ततोऽभवत् ।
अतः स्वयम्भुवश्चान्ये मरीच्याद्यार्कसम्भवाः ॥ ६ ॥
तेभ्वारभ्य सुरा दैत्या गन्धर्वा मानुषाः खगाः । पशवः सर्वभूतानि सृष्टिरेषा प्रकीर्त्तिता॥
सृष्ट्यां विस्तारितायान्तु देवदैत्या महाबलाः । सात्वतं भावमास्थाय युयुधुर्विजिगीषवः॥
दैत्यानाम्बलिनः सन्ति नायका युद्धदुर्मदाः । हिरण्यकशिपुः पूर्वं हिरण्याक्षो महासुरः ॥
विप्रचित्तिर्विचित्रस्तु भीमाक्षः क्रौञ्च एव च । एतेऽतिबलिनः शूरा देवसैन्यं महामृधे ।
अमरांश्चाशितैर्बाणैर्जयन्तेऽनुदिनं मृधे ॥ १० ॥
तेषां पराजयं दृष्ट्वा देवानाञ्च बृहस्पतिः । उवाच हीनं वै सैन्यं नायकेन विना सुराः ॥
एकेनेन्द्रेण दिव्यन्तु सैन्यम्पातुं न शक्यते । अतः सेनापतिं कञ्चिदन्वेषयत मा चिरम्॥
एवमुक्तास्ततो देवा जग्मुर्लोकपितामहम् । सेनापतिञ्च नो देहि वाक्यमूचुः ससम्भ्रमम्॥
ततो दध्यौ चतुर्वक्त्रः किमेषां क्रियते मया ।
ब्रह्मणश्चिन्त्यमानस्य रुद्रम्प्रति मनो गतम् ॥
ततो देवाः सगन्धर्वा ऋषयः सिद्धचारणाः । ब्रह्माणं पुरतः कृत्वा जग्मुः कैलासपर्वतम् ॥
तत्र दृष्ट्वा महादेवं शिवं पशुपतिं विभुम् । तुष्टुवुर्विविधैः स्तोत्रैः शक्राद्याश्चिदिवौकसः॥

देवा ऊचुः

नमाम सर्वे शरणार्थिनो वयं महेश्वरन्त्र्यम्बकभूतभावनम् ।
उमापते विश्वपते मरुत्पते जगत्पते शङ्कर पाहि नः स्वयम् ॥ १७ ॥
जटाकलापाग्रशशाङ्कदीधिति प्रकाशिताशेषजगत्त्रयामल ।
त्रिशूलपाणे पुरुषोत्तमाच्युत प्रपाहि नो दैत्यभयादुपस्थितात् ॥ १८ ॥
त्वमादिदेवः पुरुषोत्तमो हरिर्भवो महेशस्त्रिपुरान्तको विभुः ।
भगाक्षहा दैत्यरिपुः पुरातनो वृषध्वजः पाहि सुरोत्तमोत्तम ॥ १९ ॥
गिरीशजानाथ गिरिप्रियाप्रिय प्रभुः समस्तामरलोकपूजितः ।
गणेश भूतेश शिवाक्षयाय प्रपाहि नो दैत्यवरान्तकाच्युत ॥ २० ॥
पृथ्व्यादितत्त्वेषु भवान्प्रतिष्ठितो ध्वनिस्वरूपो गगने विशेषतः ।
लीनो द्विधा तेजसि स त्रिधा जले चतुः क्षितौ पञ्च गुणप्रधानः ॥ २१ ॥
अग्निस्वरूपोऽसि तरौ तथोपले सत्यस्वरूपोऽसि तथानिलेष्वपि ।
तैलस्वरूपो भगवान्महेश्वरः प्रपाहि नो दैत्यगणार्दितान्हर ॥ २२ ॥
नासीद्यदा काण्डमिदन्त्रिलोचन प्रभाकरेन्द्रेन्दुविनापि वा कुतः ।
तदा भवानेव विरुद्धलोचन प्रमाणबाधादिविवर्जितः स्थितः ॥ २३ ॥
कपालमालिन् शशिखण्डशेखर श्मशानवासिन्सितभस्मगुण्ठितः ।
फणीन्द्रसंवीततनोऽन्तकाय प्रपाहि नो दक्षधिया सुरेश्वर ॥ २४ ॥
भवान्पुमान् शक्तिरियं गिरेः सुता सर्वाङ्गरूपा भगवंस्तथा त्वयि ।

त्रिशूलरूपेण जगद्भयङ्करे स्थितं त्रिनेत्रेषु मखाग्नयस्त्रयः ॥ २५ ॥
जटास्वरूपेण समस्तसागराः कुलाचलाः सिन्धुवहाश्च सर्वशः ।
शरीरजं ज्ञानमिदन्त्ववस्थितन्तदेव पश्यन्ति कुदृष्टयो जनाः ॥ २६ ॥
नारायणस्त्वं जगतां समुद्भवस्तथा भवानेव चतुर्मुखो महान् ।
सत्त्वाग्निभेदेन तथाग्निभेदतो युगादिभेदेन च संस्थितस्त्रिधा ॥ २७ ॥
भवन्तमेते सुरनायकाः प्रभो भवार्थिनोऽन्यस्य वदन्ति तोषयन् ।
यतस्ततो नो भवभूतिभूषण प्रपाहि विश्वेश्वर रुद्र ते नमः ॥ २८ ॥

महातपा उवाच ।

एवं स्तुतस्तदा देवो रुद्रः पशुपतिः सुरैः ।
उवाच देवानव्यग्रः किं कार्यं ब्रूत मा चिरम् ॥ २९ ॥

देवा ऊचुः

सेनापतिञ्च देवेश देहि दैत्यवधाय वै । देवानां ब्रह्ममुख्यानामेतदेव हितम्भवेत् ॥

रुद्र उवाच

ददामि सेनानाथं वो देवा भवत विज्वराः ।
भविष्यमस्ति पौराणां योगादीनामचिन्तयत् ॥ ३१ ॥

एवमुक्त्वा हरो देवान्विसर्ज्य स्वाङ्गसंस्थिताम् । शक्तिं सङ्क्षोभयामास पुत्रहेतोः परन्तप॥

तस्य क्षोभयतः शक्तिं ज्वलनार्कसमप्रभः ।
कुमारः सहजां शक्तिं बिभ्रज्ज्ञानैकशालिनीम् ॥ ३३ ॥

उत्पत्तिस्तस्य राजेन्द्र बहुरूपा व्यवस्थिता । मन्वन्तरेष्वनेकेषु देवसेनापतिः किल ॥
योऽसौ शरीरगो देवः अहङ्कारेति कीर्त्तितः । प्रयोजनवशाद्देवः सैव सेनापतिर्बभौ ॥
तस्मिन्जाते स्वयं ब्रह्मा सर्वदेवैः समन्वितः । पूजयामास देवेशं शिवं पशुपतिन्तदा ॥

सर्वैश्च देवैर्ऋषिभिश्च सिद्धैः सेनापतिर्दानवरेण तेन ।
आप्यायितः सोऽपि सुरानुवाच महायौ मे क्रीडनकञ्च दध्द्वम् ॥ ३७ ॥
श्रुत्वा वचस्तस्य महानुभावो वाक्यं महादेव इदं जगाद ।
ददामि ते क्रीडनकन्तु कुक्कुटं तथानुगौ शाखविशाखसंज्ञौ ।
कुमार भूतग्रहनायको भवान् भवस्व देवेश्वर सेनायः पतिः ॥ ३८ ॥

एवमुक्त्वा ततो देवः सर्वदेवाश्च पार्थिव । तुष्टुवुर्वाग्भिरिष्टाभिः स्कन्दं सेनापतिन्तदा॥

देवा ऊचुः

भवस्व देवसेनानीर्महेश्वरसुत प्रभो । षण्मुख स्कन्द विश्वेश कुक्कुटध्वज पावके ॥
कम्पितारे कुमारेश स्कन्द बालग्रहानुग । जितारे क्रौञ्चविध्वंस कृत्तिकाज शिवात्मज॥
भूतग्रहपतिश्रेष्ठ पावकप्रियदर्शन । महाभूतपतेः पुत्र त्रिलोचन नमोऽस्तु ते ॥ ४२ ॥
एवं स्तुतस्तदा देवैर्विवर्द्धन् भवनन्दनः । द्वादशादित्यसङ्काशो बभूवातुलविक्रमः ॥
त्रैलोक्यन्तेजसा स्वेन तपयामास पार्थिव ॥ ४४ ॥

प्रजापाल उवाच

कथं त्वं कृत्तिकापुत्रमुक्तवान् शंस मे गुरो । कथं वा पावकिरसौ कथं षण्मातृनन्दनः॥

महातपा उवाच

आदिमन्वन्तरे देवस्योत्पत्तिर्या मयोदिता । परोक्षदर्शिभिर्देवैरेवमेव स्तुतः प्रभो ॥
कृत्तिका पावकस्तस्य मानसो गिरिजा तथा । द्वितीयजन्मनि गुहस्यैते उत्पत्तिहेतवः ॥
एवमेतत्तवाख्यातं पृच्छतो पार्थिवोत्तम । आत्मविद्यामृतं गुह्यमहङ्कारस्य सम्भवः ॥
स्वयं स्कन्दो महादेवः सर्वपापप्रणाशनः । तस्य षष्ठीं तिथिं प्रादादभिषेके पितामहः ॥
अस्यां फलाशनो यस्तु पूजे त्रियतमानसः । अपुत्रो लभते पुत्रमधनोऽपि धनं लभेत्॥
यं यमिच्छेत मनसा तन्तं लभति मानवः ॥ ५१ ॥
यश्चैतत्पठति स्तोत्रं कार्त्तिकेयस्य मानवः । तस्य गेहे कुमाराणां क्षेमारोग्यं भविष्यति॥

इति वराहपुराणे स्कन्दोत्पत्तिर्नाम पञ्चविंशोऽध्यायः ।

---

# षड्विंशोऽध्यायः

प्रजापाल उवाच

शरीरस्य कथं मूर्त्तिग्रहणं ज्योतिषो द्विज । एतन्मे संशयं छिन्धि प्रणतस्य द्विजोत्तम ॥

महातपा उवाच

योऽसावात्मा ज्ञानशक्तिरेक एव सनातनः ।
स द्वितीयं यदा चैच्छत्तदा तेजः समुत्थितम् ॥ २ ॥
तत्सूर्य इति भास्वांस्तु अन्योन्येन महात्मनः ।
लीनीभूतानि तेजांसि भासयन्ति जगत्त्रयम् ॥ ३ ॥
तस्मिन् सर्वे सुराः सिद्धा गणाः सर्वैर्महर्षिभिः ।
स्वयम्भूत इति विभो तस्मात्सूर्यस्तु सोऽभवत् ॥ ४ ॥
लीनीभूतस्य तस्याशु तेजसोऽभूच्छरीरकम् ।
पृथक्त्वेन रविः सोऽथ कीर्त्यते वेदवादिभिः ॥ ५ ॥
भासयेत्सर्वलोकांस्तु यतोऽसावुत्थितो दिवि ।
अतोऽसौ भास्करः प्रोक्तः प्रकर्षाच्च प्रभाकरः ॥ ६ ॥
दिवा दिवस इत्युक्तस्तत्कारित्वाद्दिवाकरः ।
सर्वस्य जगतस्त्वादिरादित्यस्तेन उच्यते ॥ ७ ॥
एतस्य तेजसा जाता आदित्या द्वादश पृथक् ।
प्रधान एक एवायं जगत्सु परिवर्त्तते ॥ ८ ॥

तं दृष्ट्वा जगतो व्याप्तिं कुर्वाणं परमेश्वरम् ।
तस्यैवान्तः स्थिता देवा विनिष्क्रम्य स्तुतिं जगुः ॥ ९ ॥

देवा ऊचुः

भवान् प्रसूतिर्जगतः पुराणः प्रयासि विश्वं प्रलये च हंसि ।
समुत्थितस्त्वं सततं प्रपासि विश्वं सदा त्वां प्रणताः स्म नित्यम् ॥ १० ॥
त्वया ततं सर्वत एव तेजः प्रतापितं सूर्य यज्ञप्रवृत्तौ ।
सप्ताश्वयुक्ते च रथे स्थितस्त्वं कालाक्षमन्वन्तरवेगयुक्ते ॥ ११ ॥
प्रभाकरस्त्वं रविरादिदेव आत्मा समस्तस्य चराचरस्य ।
पितामहस्त्वं वरुणो यमश्च भूतम्भविष्यच्च वदन्ति सिद्धाः ॥ १२ ॥
तेजोऽरिविध्वंसन वेदमूर्त्ते प्रपाहि चास्मान् शरणागतान् सदा ।
वेदान्तवेद्योऽसि मखेषु देव त्वं हूयसे विष्णुरिति प्रसन्नः ॥ १३ ॥
इति स्तुतस्तैः सुरनाथ भक्त्या प्रपाहि शम्भो न इति प्रसह्य ॥ १४ ॥

एवमुक्तस्तदा देवैः सौम्या मूर्त्तिमथाकरोत् । प्रकाशत्वं जगामाशु देवतानां महाप्रभः ॥
एतत्सर्वसुराणान्तु दहनं शामितन्त्वया । सप्तम्यां खलु सूर्येण मूर्त्तित्वं कृतवान् भुवि ॥
एतां यः पुरुषो भक्त्या उपास्ते सूर्यमर्चयेत् । भास्करश्चैव तस्यासौ फलमिष्टं प्रयच्छति ॥
एतत् ते कथितं राजन् सूर्याख्यानं पुरातनम् । आदिमन्वन्तरे वृत्तं मातरः शृणु साम्प्रतम्॥

इति वराहपुराणे आदित्योत्पत्तिर्नाम षड्विंशोऽध्यायः ।

---

# सप्तविंशोऽध्यायः

महात्मा उवाच

पूर्वमासीन्महादैत्यो बलवानन्धको भुवि । स देवान्वशमानिन्ये ब्रह्मणो वरदर्पितः ॥
तेनात्मसात्सुराः कृत्वा त्याजिता मेरुपर्वतम् । ब्रह्माणं शरणं जग्मुरन्धकस्य भयार्दिताः॥
तानागतान्तदा ब्रह्मा उवाच सुरसत्तमान् । किमागमनकृत्यं वो देवा ब्रूत किमास्यते ॥

देवा ऊचुः

अन्धकेनार्दिताः सर्वे वयं देवा जगत्पते । त्राहि सर्वांश्चतुर्वक्त्र पितामह नमोऽस्तु ते ॥

ब्रह्मोवाच

अन्धकान्नैव शक्तोऽहन्त्रातुं वै सुरसत्तमाः । भवं सर्वं महादेवं व्रजामः शरणार्थिनः ॥
किन्तु पूर्वं मया दत्तो वरस्तस्य सुरोत्तमाः। अवध्यस्त्वं हि भविता न शरीरं स्पृशेन्महीम्॥
तस्यैवं बलिहस्त्वेको हन्ता रुद्रः परन्तप । तत्र गच्छामहे सर्वे कैलासनिलयं प्रभुम् ॥
एवमुक्त्वा ययौ ब्रह्मा सदेवो भवसन्निधौ । तस्य सन्दर्शनाद्रुद्रः प्रत्युत्थानादिकाः क्रियाः ।
कृत्वाभ्युवाच देवेशो ब्रह्माणं भुवनेश्वरम् ॥ ८ ॥

शम्भुरुवाच

किं कार्यन्देवताः सर्वा आगता मम सन्निधौ ।
येनाहं तत्करोम्याशु आज्ञा कार्या हि सत्वरम् ॥ ९ ॥
रक्षस्व देव बलिनस्त्वन्धकाद् दुष्टचेतसः ॥ १० ॥

यावदेव सुराः सर्वे शंसन्ति परमेष्ठिनः । तावत्सैन्येन महता तत्र चान्धक आययौ ॥
बलेन चतुरङ्गेण हन्तुकामो भवं मृधे । तस्य भार्यां गिरिसुतां हन्तुमिच्छत्ससाधनः ॥
तं दृष्ट्वा सहसायातं देवो दैत्यं प्रहारिणम् । सन्नह्य सहसा देवा रुद्रस्यानुचराभवन् ॥
रुद्रोऽपि वासुकिन्ध्यात्वा तक्षकञ्च धनञ्जयम् । वलयं कटिसूत्रञ्च चकार परमेश्वरः ॥
नीलनामा तु दैत्येन्द्रो हस्ती भूत्वा भवान्तिकम् । आगतस्त्वरितः शत्रुर्हस्तीवाद्भुतरूपवान्॥
संज्ञातो नन्दिना दैत्यो वीरभद्राय दर्शितः । वीरभद्रोऽपि सिंहेन रूपेणाहत्य च द्रुतम् ॥
तस्य कृत्तिं विदार्याशु करिणस्त्वञ्जनप्रभाम् । रुद्रायार्पितवान्सोऽपि तमेवाम्बरमाकरोत् ॥
ततः प्रभृति रुद्रोऽपि गजचर्मपटोऽभवत् ॥ १८ ॥

गजचर्मपटो भूत्वा भुजङ्गाभरणोज्ज्वलः । आदाय त्रिशिखं शूलं सगणोऽन्धकमन्वयात् ॥
ततः प्रववृते युद्धं देवदानवयोर्महत् ॥ २० ॥

इन्द्राद्या लोकपालास्तु स्कन्दः सेनापतिस्तथा । सर्वे देवगणाश्चान्ये युयुधुः समरे तदा॥
तद्दृष्ट्वा नारदस्तूर्णं ययौ नारायणं प्रति । शशंस च महद्युद्धं कैलासे दानवैः सह ॥
तच्छ्रुत्वा चक्रमादाय गरुडस्थो जनार्दनः । तमेव देशमागत्य युयुधे दानवैः सह ॥
आगत्य च ततो देवा हरिणाप्यायिता रणे । विषण्णवदनाः सर्वे पलायनपराभवन् ॥
तत्र भग्नेषु देवेषु स्वयं रुद्रोऽन्धकं ययौ । तत्र तेन महद्युद्धमभवल्लोमहर्षणम् । २५ ॥
तत्र देवोऽप्यसौ दैत्यं त्रिशूलेनाहनद्भृशम् । तस्याहतस्य यद्रक्तमपतद्भूतले किल ।
तत्रान्धका असंख्याता बभूवुरपरे भृशम् ॥ २६ ॥

तद्दृष्ट्वा महदाश्चर्यं रुद्रो मूलान्धकं मृधे । गृहीत्वा त्रिशिखाग्रेण ननर्त्त परमेश्वरः ॥
इतरेऽप्यन्धकाः सर्वे चक्रेण परमेष्ठिना । नारायणेन निहतास्तत्र येऽन्ये समुत्थिताः ॥
असृग्धारातुषारैस्तु शूलप्रोतस्य चासकृत् । अनारतं समुत्तस्थौ ततो रुद्रो रुषान्वितः ॥

तस्य क्रोधेन महता मुखाज्ज्वाला विनिर्ययौ ।
तद्रूपधारिणी देवी या तां योगेश्वरीं विदुः ॥ ३० ॥
स्वरूपधारिणी चान्या विष्णुनापि विनिर्मिता ।
ब्रह्मणा कार्त्तिकेयेन इन्द्रेण च यमेन च ॥ ३१ ॥

वराहेण च देवेन विष्णुना परमेष्ठिना । पातालोद्धारणं रूपं तस्या देव्या विनिर्ममे ।
माहेश्वरी च राजेन्द्रो इत्येता अष्ट मातरः ॥ ३२ ॥
कारणं यस्य यत्प्रोक्तं क्षेत्रज्ञेनावधारितम् । शरीरन्देवतानान्तु तदिदं कीर्त्तितं मया ॥
कामः क्रोधस्तथा लोभो मदो मोहोऽथ पञ्चमः ।

मात्सर्यं षष्ठमित्याहुः पैशुन्यं सप्तमन्तथा । अनसूयाष्टमी[1] ज्ञेया इत्येता अष्ट मातरः ॥

कामं योगीश्वरीं विद्धि क्रोधो माहेश्वरी तथा ।
लोभस्तु वैष्णवी प्रोक्ता ब्रह्माणी मद एव च ॥ ३५ ॥
मोहः स्वयम्भः कौमारी मात्सर्यञ्चेन्द्रजां विदुः ।
यमदण्डधरा देवी पैशुन्यं स्वयमेव च ॥ ३६ ॥
अनसूया वराहाख्या इत्येताः परिकीर्त्तिताः ।
कामादिगण एषोऽयं शरीरम्परिकीर्त्तितम् ॥ ३७ ॥
जग्राह मूर्त्तिन्तु तथा यथा ते कीर्त्तितं मया ॥ ३८ ॥
एताभिर्देवताभिश्च तस्य रक्तेऽतिशोषिते ।
क्षयं गतासुरी माया स च सिद्धोऽन्धकोऽभवत् ॥ ३९ ॥
एतत्ते सर्वमाख्यातमात्मविद्यामृतं मया ॥ ४० ॥

य एतच्छृणुयान्नित्यं मातॄणामुद्भवं शिवम् । तस्य ताः सर्वतो रक्षां कुर्वन्त्यनुदिनं नृप ॥
यश्चैतत्पठते जन्म मातॄणां पुरुषोत्तम । स धन्यः सर्वथा लोके शिवलोकञ्च गच्छति ॥

तासाञ्च ब्रह्मणा दत्ता अष्टमी तिथिरुत्तमा ।
एताः सम्पूजयेद्भक्त्या बिल्वाहारो नरः सदा ।
तस्य ताः परितुष्टाः स्युः क्षेमारोग्यं ददन्ति च ॥ ४३ ॥

इति वराहपुराणे कामादिमातृगणोत्पत्तिर्नाम सप्तविंशोऽध्यायः ।

---

## अष्टाविंशोऽध्यायः

प्रजापाल उवाच

कथं माया समुत्पन्ना दुर्गा कात्यायनी शुभा ।
आदिक्षेत्रे स्थिता सूक्ष्मा पृथङ्मूर्त्त्या व्यजायत ॥ १ ॥

महातपा उवाच

आसीद्राजा पुरा राजन् सिन्धुद्वीपः प्रतापवान् ।
वरुणांशो महाराज सोऽरण्ये तपसि स्थितः ॥ २ ॥
पुत्रो मे शक्रनाशाय भवेदिति नराधिपः । एवं कृतमतिः सोऽथ महता तपसा स्वकम् ॥
कलेवरं स्थिरो भत्वा शोषयामास सुव्रत ॥ ३ ॥

प्रजापाल उवाच

कथं तस्य द्विजश्रेष्ठ शक्रेणापकृतम्भवेत् । येनासौ तद्विनाशाय पुत्रमैच्छन् व्रते स्थितः ॥

---

१. माहेन्द्रीति क्वाचित्कः पाठः ।

महातपा उवाच

सोऽन्यजन्मनि पुत्रोऽभूत्त्वष्टुर्ब्रह्मभृतां वरः । अवध्यः सर्वशस्त्रौघैरपां फेनेन नाशितः॥
जलफेनेन निहतस्तस्मिंल्लयमवाप्तवान् । पुनर्ब्रह्मान्वये जातः सिन्धुद्वीपः प्रतापवान् ॥
स तेपे परमं तीव्रं शक्रवैरमनुस्मरन् ॥ ७ ॥
ततः कालेन महता नदी वेत्रवती शुभा ।
मानुषं रूपमास्थाय सालङ्कारं मनोरमम् । आजगाम यतो राजा तेपे परमकन्तपः ॥
तां दृष्ट्वा रूपसम्पन्नां स राजा क्षुब्धमानसः ।
उवाच कासि सुश्रोणि सत्यं कथय भामिनि ॥ ९ ॥

नद्युवाच

अहं जलपतेः पत्नी वरुणस्य महात्मनः । नाम्ना वेत्रवती एषा त्वामिच्छन्तीहमागता॥
साभिलाषां परस्त्रीञ्च भजमानां विसर्जयेत् ।
स पापः पुरुषो ज्ञेयो ब्रह्महत्याञ्च विन्दति ॥ ११ ॥
एवं ज्ञात्वा महाराज भजमानां भजस्व माम् ।
एवमुक्तस्तया राजा साभिलाषोपभुक्तवान् ॥ १२ ॥
तस्य सद्योऽभवत्पुत्रो द्वादशार्कसमप्रभः । वेत्रवत्युदरे जातो नाम्ना वेत्रासुरोऽभवत् ।
बलवानतितेजस्वी प्राग्ज्योतिषपतिर्भवत् ॥ १३ ॥
स कालेन युवा जातो बलवान्दृढविक्रमः । महायोगेन संयुक्तो जिगायेमां वसुन्धराम् ॥
सप्तद्वीपवतीं पश्चान्मेरुपर्वतमारुहत् । तत्रेन्द्रं प्रथमं जिग्ये पश्चादग्निं यमं ततः ॥१५॥
इन्द्रो भग्नो गतः सोऽग्निमग्निर्भग्नो यमं ययौ ।
यमो निर्ऋतिमागच्छन्निर्ऋतिर्वरुणं ययौ[1] ॥ १६ ॥
इन्द्रादिभिरुपेतस्तु वरुणो वायुमन्वगात् । वायुर्धनपतिं त्वागात्सर्वैरिन्द्रादिभिः सह ॥
धनदोऽपि स्वकं मित्रमीशं देवं समन्वितः । इयाय गदया सोऽपि दानवो बलगर्वितः ।
गदामादाय दुद्राव शिवलोकं प्रति प्रभो ॥ १८ ॥
शिवोऽप्यवध्यन्तं मत्वा देवान्गृह्य ययौ पुरीम् ।
ब्रह्मणः सुरसिद्धाद्यैर्वन्दितां पुण्यकारिभिः ॥ १९ ॥
तत्र ब्रह्मा जगत्स्रष्टा विष्णुपादोद्भवे जले । नियमेन च संयुक्तोऽजपतान्तर्जले शुभे ॥
क्षेत्रज्ञमायां गायत्रीं ततो देवा विचुक्रुशुः । त्राहि प्रजापते सर्वान्देवानृषिवरानपि ।
असुराद्भयमापन्नान्त्राहि त्राहीत्यचोदयत् ॥ २०।२१ ॥
एवमुक्तस्तदा ब्रह्मा दृष्ट्वा देवांस्तदागतान् । चिन्तयामास देवस्य मायेयं विगतज्ञगत् ।
नासुरा न च रक्षोऽत्र मायेयं कीदृशी मता ॥ २२ ॥
एवं चिन्तयतस्तस्य प्रादुरासीदयोनिजा । शुक्लाम्बरधरा कन्या स्रक्किरीटोज्ज्वलानना॥

---

१. यमो भग्नो गतः सोऽपि धर्मोनिर्ऋतिमारुहत् । तत्रेन्द्रश्च प्रगच्छन्तं निर्ऋतिर्वरुणं ययौ ॥
केषुचित्तु पुस्तकेष्वयं पाठोऽधिको विद्यते ।

अष्टभिर्बाहुभिर्युक्ता दिव्यप्रहरणोद्यता[1] । चक्रं शङ्खं गदां पाशं खड्गं घण्टां तथा धनुः॥
धारयन्ती तथा चान्यान्बद्धतूणा जलाद्बहिः । निश्चक्राम महायोगी सिंहवाहनवेगिता ॥
युयुधे चासुरान्सर्वानेकैव बहुधा स्थिता । दिव्यं वर्षसहस्रन्तु दिव्यैरस्त्रैर्महाबला ॥
युद्धा कालात्यये देव्या हतो वेत्रासुरो रणे ।
ततः किलकिलाशब्दो देवसैन्येऽभवन्महान् ॥ २७ ॥
हते वेत्रासुरे भीमे तदा सर्वे दिवौकसः । प्रणेमुर्जय युद्धेति स्वयमीशः स्तुतिं जगौ ॥

महेश्वर उवाच

जयस्व देवि गायत्रि महामाये महाप्रभे । महादेवि महाभागे महासत्त्वे महोत्सवे ॥
दिव्यगन्धानुलिप्ताङ्गि दिव्यस्रग्दामभूषिते । वेदमातर्नमस्तुभ्यमक्षरस्थे महेश्वरि ॥
त्रिलोकस्थे त्रितत्त्वस्थे त्रिवह्निस्थे त्रिशूलिनि । त्रिनेत्रे भीमवक्त्रे च भीमनेत्रे भयानके॥
कमलासनजे देवि सरस्वति नमोऽस्तु ते । नमः पङ्कजपत्राक्षि महामायेऽमृतस्रवे ।
सर्वगे सर्वभूतेशि स्वाहाकारे स्वधेऽम्बिके ।' ३२ ॥
सम्पूर्णे पूर्णचन्द्राभे भास्वराङ्गे भवोद्भवे । महाविद्ये महावेद्ये महादैत्यविनाशिनि ॥
महाबुद्ध्युद्भवे देवि वीतशोके किरातिनि ।
त्वं नीतिस्त्वं महाभागे त्वं गीस्त्वं गौस्त्वमक्षरम् ॥ ३४ ॥
त्वं धीस्त्वं श्रीस्त्वमोङ्कारस्तत्त्वे चापि परिस्थिता ।
सर्वसत्त्वहिते देवि नमस्ते परमेश्वरि ॥ ३५ ॥
इत्येवं संस्तुता देवी भवेन परमेष्ठिना । देवैरपि जयेत्युच्चैरित्युक्ता परमेश्वरी ॥
यावदास्ते चतुर्वक्त्रस्तावदन्तर्जलाद्बहिः । निश्चक्राम ततो देवीं कृतकृत्यां ददर्श सः ॥
तां दृष्ट्वा देवकार्यञ्च सिद्धं मत्वा पितामहः । भविष्यं कार्यमुद्दिश्य ततो वचनमब्रवीत्॥

ब्रह्मोवाच

इयं देवी वरारोहा यातु शैलं हिमालयम् । तत्र यूयं सुराः सर्वे गत्वा नन्दत मा चिरम्॥
नवम्याञ्च सदा पूज्या इयं देवी समाधिना । वरदा सर्वलोकानां भविष्यति न संशयः॥
नवम्यां यस्तु पिष्टाशी भविष्यति हि मानवः ।
नारी वा तस्य सम्पन्नं भविष्यति मनोगतम् ॥ ४१ ॥
यश्च स्वयं सदा प्रातरिदं स्तोत्रं पठिष्यति । त्वयेरितं महादेव तस्य देव्या समं भवान् ।
वरदो देव सर्वासु आपत्स्वप्युद्धरेत्स्वयम् ॥ ४२ ॥
एवमुक्त्वा भवं ब्रह्मा पुनर्देवीं स चाब्रवीत् ।
त्वया देवि महाकार्यं कर्त्तव्यञ्चान्यदस्ति नः ।
भविष्यं महिषाख्यस्य असुरस्य विनाशनम् ॥ ४३ ॥
एवमुक्त्वा ततो ब्रह्मा सर्वे देवाश्च पार्थिव । यथागतं ततो जग्मुर्देवीं स्थाप्य हिमे गिरौ॥

---

१. प्रहरणोद्धतेति पाठान्तरम् ।

संस्थाप्य नन्दिता यस्मात्तस्मान्नन्दाऽभवत्तु सा।
यश्चेदं शृणुयाज्जन्म देव्या यश्च स्वयं पठेत्। सर्वपापविनिर्मुक्तः परं निर्वाणमृच्छति॥

इति वाराहपुराणे देव्युत्पत्तिर्नाम अष्टाविंशोऽध्यायः।

---

# ऊनत्रिंशोऽध्यायः

महातपा उवाच

शृणु राजन्नवहितः प्रजापाल कथामिमाम्। यदा दिशः समुत्पन्नाः श्रोत्रेभ्यः पृथिवीपते॥

ब्रह्मणः सृजतः सृष्टिमादिसर्गे समुत्थिते।
चिन्ताभून्महतो को मे प्रजाः सृष्टा धरिष्यति॥ २॥

एवं चिन्तयतस्तस्य अवकाशं व्रजन्त्विह। प्रादुर्बभूवुः श्रोत्रेभ्यो दश कन्या महाप्रभाः॥

पूर्वा च दक्षिणा चैव प्रतीची चोत्तरा तथा।
ऊर्ध्वाधरा च षट् मुख्याः कन्या ह्यासंस्तदा नृप॥ ४॥

तासां मध्ये चतस्रस्तु कन्याः परमशोभनाः।
रूपवन्त्यो महाभागा गाम्भीर्येण समन्विताः॥ ५॥

ता ऊचुः प्रणयाद्देवं प्रजापतिमकल्मषम्। अवकाशन्तु नो देहि देवदेव प्रजापते॥६॥
यत्र तिष्ठामहे सर्वा भर्तृभिः सहिताः सुखम्। पतयश्च महाभागा देहि नोऽव्यक्तसम्भव॥

ब्रह्मोवाच

ब्रह्माण्डमेतत्सुश्रोण्यः शतकोटिप्रविस्तरम्।
तस्यान्ते स्वेच्छया तुष्टा उष्यतां मा विलम्बथ॥ ८॥
भर्तॄंश्च वः प्रयच्छामि सृष्ट्वा रूपस्विनोऽनघाः।
यथेष्टं गम्यतां देशो यस्या यो रोचतेऽधुना॥ ९॥

एवमुक्ताश्च ताः सर्वा यथेष्टं प्रययुस्तदा। ब्रह्मा ससर्ज तूर्णं तांल्लोकपालान्महाबलान्॥

सृष्ट्वा तु लोकपालांस्तांस्ताः कन्याः पुनराह्वयत्।
विवाहं कारयामास ब्रह्मा लोकपितामहः॥ ११॥

एकामिन्द्राय स प्रादादग्नयेऽन्यां यमाय च। निर्ऋताय च देवाय वरुणाय महात्मने॥
वायवे धनदेशाय ईशानाय च सुव्रत। ऊर्ध्वां स्वयमधिष्ठाय शेषायाधोव्यवस्थिताम्॥

एवं दत्त्वा पुनर्ब्रह्मा तिथिं प्रादाद्दिशान्तथा।
दशमी च तिथिस्तासामतीव दयिताभवत्॥ १४॥

तस्यां दध्याशनो यस्तु सुव्रत भवते नरः। तस्य पापक्षयन्तास्तु कुर्वन्त्यहरहर्नृप॥ १५॥
यश्चैतच्छृणुयाज्जन्म दिशान्नियतमानसः। स प्रतिष्ठामवाप्नोति ब्रह्मलोके न संशयः॥

इति वाराहपुराणे दिगुत्पत्तिर्नाम ऊनत्रिंशोऽध्यायः।

---

# त्रिंशोऽध्यायः

महातपा उवाच

श्रृणु चान्यां वसुपतेरुत्पत्तिं पापनाशिनीम् । यथा वायुशरीरस्थो धनदः सम्बभूव ह ॥
आद्यं शरीरं यत्तस्मिन्वायुरन्तःस्थितोऽभवत् । प्रयोजनान्मूर्त्तिमत्त्वमागात्तत्क्षेत्रदेवता॥
तत्रमूर्त्तस्य वायोस्तु उत्पत्तिः कीर्त्तिता मया । तां श्रृणुष्व महाभाग कथ्यमानां मयानघ॥
ब्रह्मणः सृष्टिकामस्य मुखाद्वायुर्विनिर्ययौ । प्रचण्डशर्करावर्षी तं ब्रह्मा प्रत्यषेधयत् ॥
मूर्त्तो भवस्व शान्तश्च तेनोक्तो मूर्त्तिमानभवत् । सर्वेषामेव[1] देवानां यद्वित्तं फलमेव च।
तत्सर्वं पाहि येनोक्तं तस्माद्धनपतिर्भवान् ॥ ५ ॥
तस्य ब्रह्मा ददौ तुष्टस्तिथिमेकादशीं प्रभुः । तस्यामनग्निपकाशी यो भवेन्नियतं शुचिः॥
तस्यापि धनदो देवस्तुष्टः सर्वं प्रयच्छति ॥ ६ ॥
एषा धनपतेर्मूर्त्तिः सर्वकिल्बिषनाशनी । य एतां श्रृणुयाद्भक्त्या पुरुषः पठतेऽपि वा ।
सर्वकामानवाप्नोति स्वर्गलोकञ्च गच्छति ॥ ७ ॥

इति वाराहपुराणे धनदोत्पत्तिर्नाम त्रिंशोऽध्यायः ।

---

# एकत्रिंशोऽध्यायः

महातपा उवाच

मनोर्नाम मनुत्वञ्च यदेतत्पठ्यते किल । प्रयोजनवशाद्विष्णुरसावेव तु मूर्त्तिमान् ॥१॥
योऽसौ नारायणो देवः परात्परतरो नृप । तस्य चिन्ता समुत्पन्ना सृष्टिं प्रति नरोत्तम ॥
सृष्टा चेयं मया सृष्टिः पालनीया मयैव ह । कर्मकाण्डन्त्वमूर्त्तेन कर्तुं न वेह शक्यते।
तस्मान्मूर्त्तिं सृजाम्येकां यथा पाल्यमिदं जगत् ॥ ३ ॥
एवं चिन्तयतस्तस्य सत्याभिध्यायिनो नृप ।
प्राक्सृष्टिजातं राजन्वै मूर्त्तिमत्तत्पुरो बभौ ॥ ४ ॥
पुरोभूतस्ततस्तस्मिन्देवो नारायणः स्वयम् । प्रविशन्तं ददर्शाथ त्रैलोक्यन्तस्य देहतः ॥
ततः सस्मार भगवान्वरदानं पुरातनम् । वागादीनां ततस्तुष्टः प्रादात्तस्य पुनर्वरम् ।
सर्वज्ञः सर्वकर्त्ता त्वं सर्वलोकनमस्कृतः ॥ ६ ॥
त्रैलोक्यप्रतिपालाच्च भव विष्णुः सनातनः ॥ ७ ॥
देवानां सर्वदा कार्यं कर्त्तव्यं ब्रह्मणः सदा । सर्वज्ञत्वञ्च भवतु तव देव न संशयः ॥
एवमुक्त्वा ततो देवः प्रकृतिस्थो बभूव ह । विष्णुरप्यधुना पूर्वां बुद्धिं सस्मार स प्रभुः॥
तदा सञ्चिन्त्य भगवान्योगनिद्रां महातपाः ।
तस्यां संस्थाप्य भगवानिन्द्रियार्थोद्भवाः प्रजाः ॥ १० ॥

---

१. सर्वेषाञ्चैवेति पाठः कुत्रचिदुपलभ्यते ।

ध्यात्वा परेण रूपेण ततः सुष्वाप वै प्रभुः । तस्य सुप्तस्य जठरान्महत्पद्मं विनिःसृतम्॥
सप्तद्वीपवती पृथ्वी ससमुद्रा सकानना । तस्य रूपस्य विस्तारं पातालातलसंस्थितम् ।
कर्णिकायां तथा मेरुस्तन्मध्ये ब्रह्मणो भवः ॥ १२ ॥
एवं दृष्ट्वा परन्तस्य शरीरस्य तु सम्भवम् । मुमुदे तच्छरीरस्थो वायुर्वायुं समसृजत् ॥
अविद्या विजयक्षेमं शङ्खरूपेण धारय । अज्ञानच्छेदनार्थाय खड्गं तेऽस्तु सदा करे ॥
कालचक्रमयं घोरं चक्रं तद्धारयाच्युत । अधर्मराजघातार्थं गदां धारय केशव ॥१५॥
मालेयं भूतमाता ते कण्ठे तिष्ठतु सर्वदा । श्रीवत्सकौस्तुभौ चेमौ चन्द्रादित्यच्छलेन ह॥
मारुतस्ते गतिर्वीर गरुत्मान् स च कीर्त्तितः ।
त्रैलोक्यगामिनी देवी लक्ष्मीस्तेऽस्तु सदाश्रये ॥ १७ ॥
द्वादशी च तिथिस्तेऽस्तु कामरूपी च जायते । घृताशनो भवेद्यस्तु द्वादश्यान्त्वत्परायणः।
स स्वर्गवासी भवतु पुमान् स्त्री वाविशेषतः ॥ १८ ॥
स च विष्णुस्तवाख्यातो मूर्त्तयो देवदानवाः ॥ १९ ॥
हन्ति पाति शरीराणि सृजत्यन्यानि चात्मनः । युगे युगे सर्वगोऽयं वेदान्तपुरुषो ह्यसौ॥
न हीनबुद्ध्या वक्तव्यो मनुष्योऽयं कदाचन । य एव शृणुयात्सर्गं वैष्णवं पापनाशनम् ।
स कीर्त्तिमिह सम्प्राप्य स्वर्गलोके महीयते ॥ २१ ॥

इति वाराहपुराणे परापरनिर्णयो नाम एकत्रिंशोऽध्यायः ।

---

# द्वात्रिंशोऽध्यायः

महातपा उवाच

अथोत्पत्तिं प्रवक्ष्यामि धर्मस्य महतो नृप । माहात्म्यञ्च तिथिञ्चैव तन्निबोध नराधिप॥
पूर्वं ब्रह्माव्ययः शुद्धः परादपरसंज्ञितः । स सिसृक्षुः प्रजास्त्वादौ पालनञ्च विचिन्तयन्॥
तस्य चिन्तयतस्त्वङ्गाद्दक्षिणाच्छ्वेतकुण्डलः । प्रादुर्बभूव पुरुषः श्वेतमाल्यानुलेपनः॥३॥
तं दृष्ट्वोवाच भगवांश्चतुष्पादं वृषाकृतिम् ।
पालयेमाः प्रजाः साधो त्वं ज्येष्ठो जगतो भव ॥ ४ ॥
इत्युक्तः समवस्थोऽसौ चतुष्पात्स्यात्कृते युगे ।
त्रेतायां त्रिपदश्चासौ द्विपादो द्वापरेऽभवत् ॥ ५ ॥
कलावेकेन पादेन प्रजाः पालयते प्रभुः । षड्भेदो ब्राह्मणानां स त्रिधा क्षत्रे व्यवस्थितः।
द्विधा वैश्येकधा शूद्रे स्थितः सर्वगतः प्रभुः ॥ ६ ॥
रसातलेषु सर्वेषु द्वीपवर्षेष्वयम्प्रभुः । गुणद्रव्यक्रियाजातिचतुष्पादः प्रकीर्त्तितः ॥ ७ ॥
त्रिशृङ्गोऽसौ स्मृतो वेदे ससंहितपदक्रमः । तथा आद्यन्त ओङ्कारद्विशिराः सप्तहस्तवान्॥
उदात्तादित्रिभिर्बद्ध एवं धर्मो व्यवस्थितः । स धर्मः पीडितः पूर्वं सोमेनाद्भुतकर्मणा ॥
ताराञ्जिघृक्षुणा पत्नीं भ्रातुराङ्गिरसस्य च । सोऽपायाद् भ्रंशितस्तेन बलिना क्रूरकर्मणा ।

अरण्यं गहनं घोरमाविवेश तदा प्रभुः ॥ १० ॥
तस्मिन् गते सुराः सर्वे असुराणान्तु पत्तयः । जिघृक्षन्तस्तदोकांसि बभ्रमुर्द्धर्मवञ्चिताः॥
असुरा अपि तद्वच्च सुरवेश्मनि बभ्रमुः ॥ ११ ॥
निर्मर्यादे तथा जाते धर्मनाशे च पार्थिव । देवासुरा युयुधिरे सोमदोषेण कोपिताः ॥
स्त्रीहेतोश्च महाभाग विविधायुधपाणयः ।
तान्दृष्ट्वा युध्यतो देवानसुरैः सह कोपितान् ।
नारदः प्राह सङ्गम्य पितरं प्रति हर्षितः ॥ १३ ॥
स हंसयानमारुह्य सर्वलोकपितामहः । निवारयामास तदा कस्यार्थे युद्धमब्रवीत् ॥
सर्वे शंशसुः सोमन्तु स तु बुद्ध्या स्वकं सुतम् । पीडनादपयातन्तु गहनं वनमाश्रितम् ॥
ततो ब्रह्मा ययौ तत्र देवासुरयुतस्त्वरन् । ददर्श च सुरैः सार्द्धं चतुष्पादं वृषाकृतिम् ।
चरन्तं शशिसङ्काशं दृष्ट्वा देवानुवाच ह ॥ १६ ॥

ब्रह्मोवाच

अयं मे प्रथमः पुत्रः पीडितः शशिना भृशम् ।
पत्नीं जिघृक्षुणा भ्रातुर्द्धर्मसंज्ञो महामुनिः ॥ १७ ॥
इदानीं तोषयध्वं वै सर्व एनं [1]सुरासुराः । येन स्थितिर्वै भवति समं देवासुरा इति ॥
ततः सर्वे स्तुतिञ्चक्रुस्तस्य देवस्य हर्षिताः ।
विदित्वा ब्रह्मणो वाक्यात्सम्पूर्णशशिसन्निभम्[2] ॥ १९ ॥

देवा ऊचुः

नमोऽस्तु शशिसङ्काश नमस्ते जगतः पते । नमोऽस्तु देवरूपाय स्वर्गमार्गप्रदर्शक ॥
कर्ममार्गस्वरूपाय सर्वगाय नमो नमः । त्वयैव पाल्यते पृथ्वी त्रैलोक्यञ्च त्वयैव हि ॥
जनस्तपस्तथा सत्यं त्वया सर्वन्तु पाल्यते । न त्वया रहितं किञ्चिज्जगत्स्थावरजङ्गमम्॥
विद्यते त्वद्विहीनन्तु सद्यो नश्यति वै जगत् ।
त्वमात्मा सर्वभूतानां सतां सत्त्वस्वरूपवान् ॥ २२।२३ ॥
राजसीनां रजस्त्वञ्च तामसीनां तमोमयः । चतुष्पादो भवान्वेदश्चतुःशृङ्गस्त्रिलोचनः॥
सप्तहस्तस्त्रिबन्धश्च वृषरूप नमोऽस्तु ते । त्वया हीना वयं देव सर्वे उन्मार्गवर्त्तिनः ।
तन्मार्गं यच्छ मूढानां त्वं हि नः परमा गतिः ॥ २५ ॥
एवं स्तुतस्तदा देवैर्वृषरूपी प्रजापतिः । तुष्टः प्रसन्नमनसा शान्तचक्षुरभाषत ॥२६॥
दृष्टमात्रास्तु ते देवाः स्वयं धर्मेण चक्षुषा । क्षणेन गतसम्मोहाः सम्यक्सद्धर्मसंहिताः ॥
असुरा अपि तद्वच्च ततो ब्रह्मा उवाच तम् । अद्य प्रभृति ते धर्म तिथिरस्तु त्रयोदशी ।
यस्तामुपोष्य पुरुषो भवन्तं समुपार्जयेत् । कृत्वा पापसमाचारं तस्मान्मुच्यति मानवः॥
यच्चारण्यमिदं धर्म्म त्वया व्याप्तं चिरम्प्रभो ।
नाम्ना भविष्यति ह्येतद्धर्मारण्यमिति प्रभो ॥ २९ ॥

---

१. सर्वं एव इति वा पाठः । २. सम्पूर्णशशिसन्निभमिति पाठः क्वचिद्दृश्यते ।

चतुस्त्रिपादद्वयेयकपाच्च प्रभो त्वां कृतादिभिर्लक्ष्यसे येन लोकैः ।
तथा तथा कर्मभूमौ नभश्च प्रायो युक्तः स्वगृहं पाहि विश्वम् ॥ ३० ॥
इत्युक्तमात्रः प्रपितामहोऽधुना सुरासुराणामथ पश्यतां नृप ।
अदृश्यतामगमत्स्वालयांश्च जग्मुः सुराः सवृषा वीतशोकाः ॥ ३१ ॥
धर्मोत्पत्तिं य इमां श्रावयीत तदा श्राद्धेन तर्पयीत पितॄंश्च ।
त्रयोदश्यां पायसेन स्वशक्त्या स स्वर्गगामी तु सुरानुपेयात् ॥ ३२ ॥

इति वाराहपुराणे धर्मोत्पत्तिर्नाम द्वाविंशोऽध्यायः ।

---

# त्रयस्त्रिंशोऽध्यायः

महातपा उवाच

अथापरां रुद्रसम्भूतिमाद्यां शृणुष्वेमां यत्नतः सोऽभ्युवाच ।
महातपाः पातिताधर्मवृक्षः क्षमास्त्रधारी ऋषिरुग्रतेजाः ॥ १ ॥
जातः प्रजानाम्पतिरुग्रतेजा ज्ञानम्परन्तस्वभावं विदित्वा ।
सृष्टिं सिसृक्षुः क्षुभितोऽतिरोषादवृद्धिकाले जगतः प्रकामम् ॥ २ ॥
तपस्यतोऽन्तः स्थिरकीर्त्तिपुण्यो रजस्तमोध्वस्तगतिर्बभूव ।
वरो वरेण्यो वरदः प्रतापी कृष्णारुणः पुरुषः पिङ्गनेत्रः ॥ ३ ॥
रुदन्नुक्तो ब्रह्मणा मा रुद त्वं रुद्रस्ततोऽसावभवत्पुराणः ।
नयस्व सृष्टिं विततस्वरूपां भवान् समर्थोऽसि महानुभाव ॥ ४ ॥
इत्युक्तमात्रः सलिले ममज्ज मग्ने ससर्जात्मभवाय दक्षः ।
कस्थे तदा देववरेऽपि ते तु सृष्टिञ्चक्रुर्मानसा ब्रह्मजाताः ॥ ५ ॥
तस्यान्ततायान्तु सुराधिपे तु पैतामहं यज्ञवरम्प्रकामम् ।
मग्नः पुरा यत्सलिले स रुद्र उत्सृज्य विश्वन्तु सुरान् सिसृक्षुः ॥ ६ ॥
सुस्राव यज्ञं सुरसिद्धयक्षानुपागतान् क्रोधवशं जगाम ।
कन्यां च दीप्तां परिभाव्य केन सृष्टं जगन्मां व्यतिरिच्य मोहात्॥ ७॥
हा हेति चोक्ते ज्वलनार्चिषस्तु निश्चेरुरास्यात्परिपिङ्गलस्य ।
तत्राभवन् क्षुद्रपिशाचसङ्घा वेतालभूतानि च योगिसङ्घाः ॥ ८ ॥
घनं यदा तैर्विततं वियच्च भूमिश्च सर्वाश्च दिशश्च लोकाः ।
तदा स सर्वज्ञतया चकार धनुश्चतुर्विंशतिहस्तमात्रम् ॥ ९ ॥
गुणन्त्रिवृत्तञ्च चकार रोषादादत्त दिव्ये इषुधी शरांश्च ।
ततश्च पूष्णो दशनानपातयद्भगस्य नेत्रे वृषणौ क्रतोश्च ॥ १० ॥
स विद्धबीजो व्यपयात्क्रतुश्च मार्गं वायुर्द्धारयन्यज्ञवाटात् ।
देवाश्च सर्वे पशुतामुपेयुर्जग्मुश्च सर्वे प्रणतिम्भवस्य ॥ ११ ॥

आगम्य तत्रैव पितामहस्तु भवप्रतीतः सम्परिष्वज्य देवान् ।
भक्त्योपेतानीक्षयन्देवदेवान्विज्ञाय रुद्रेण कृतापकारान् ॥ १२ ॥
रुद्रं दृष्ट्वा देवदेवो जगाद मा तात कोपेन गतो हि यज्ञः ।
इति ब्रह्मवचः श्रुत्वा रुद्रः प्रोवाच कोपवान् ॥ १३ ॥

रुद्र उवाच

सृष्टः पूर्वं भवताहं तवेमे कस्मान्न भागम्परिकल्पयन्ति ।
यज्ञोद्भवन्तेन रूपं मयेमे वीतज्ञाना विकृता देवदेव ॥ १४ ॥

ब्रह्मोवाच

देवाः शम्भुं स्तुतिभिर्ज्ञानहेतोर्यजध्वमुच्चैरसुराश्च सर्वे ।
येन रुद्रो भगवांस्तोषमेति सर्वज्ञता तोषमात्रस्य च स्यात् ।
इत्युक्तास्तेन ते देवाः स्तुतिञ्चक्रुर्महात्मनः ॥ १५ ॥

देवा ऊचुः

नमो देवातिदेवाय त्रिनेत्राय महात्मने । रक्तपिङ्गलनेत्राय जटामुकुटधारिणे ॥ १६ ॥
भूतवेतालजुष्टाय महाभोगोपवीतिने । भीमाट्टहासवक्त्राय कपर्दिस्थाणवे नमः ॥१७॥
पूष्णो दन्तविनाशाय भगनेत्रहने नमः । भविष्यवृषचिह्नाय महाभूतपते नमः ॥१८॥
भविष्यत्त्रिपुरान्ताय तथान्धकविनाशिने । कैलासवरवासाय करिकृत्तिनिवासिने॥१९॥
विकरालोर्ध्वकेशाय भैरवाय नमो नमः । अग्निज्वालाकरालाय शशिमौलिकृते नमः ॥
भविष्यकृतकापालिव्रताय परमेष्ठिने । तथा दारुवनध्वंसकारिणे तिग्मशूलिने ॥
कृतकङ्कणभोगीन्द्रनीलकण्ठत्रिशूलिने । प्रचण्डदण्डहस्ताय वडवाग्निमुखाय च ॥२२॥
वेदान्तवेद्याय नमो यज्ञमूर्त्ते नमो नमः । दक्षयज्ञविनाशाय जगद्भयकराय च ॥ २३ ॥
विश्वेश्वराय देवाय शिव शम्भो भवाय च । कपर्दिने करालाय महादेवाय ते नमः॥
एवं देवैः स्तुतः शम्भुरुग्रधन्वा सनातनः । उवाच देवदेवोऽहं यत्करोमि तदुच्यते ॥

देवा ऊचुः

वेदशास्त्राणि विज्ञानं देहि नो भव मा चिरम् ।
यज्ञश्च सरहस्यो भो यदि तुष्टोऽसि नः प्रभो ॥ २६ ॥

महादेव उवाच

भवन्तः पशवः सर्वे भवन्तु सहिता इति ।
अहं पतिश्च भवतां ततो मोक्षमवाप्स्यथ ॥ २७ ॥
तथेति देवास्तं प्राहुस्ततः पशुपतिर्भवत् । ब्रह्मा पशुपतिम्प्राह प्रसन्नेनान्तरात्मना ॥
चतुर्दशी ते देवेश तिथिरस्तु न संशयः ॥
तस्यान्तिथौ भवन्तं ये यजन्ति श्रद्धयान्विताः ।
उपोष्य भोजनीयास्तु गोधूमान्नेन वै द्विजाः ।
तेषान्त्वं तुष्टिमापन्नो नय स्थानमनुत्तमम् ॥ २९।३० ॥

एवमुक्तस्तथा रुद्रो ब्रह्मणाऽव्यक्तजन्मना । दन्तान्नेत्रे फलम्प्रादाद्भगपूष्णोः क्रतोरपि ॥
परिज्ञानञ्च सकलं स प्रादादमरेष्वपि ॥ ३२ ॥
एवं रुद्रस्य सम्भूतिः सम्भूता ब्रह्मणः पुरा । अनेनैव प्रयोगेण देवानां पतिरुच्यते ॥
यश्चैतच्छृणुयान्नित्यं प्रातरुत्थाय मानवः । सर्वपापविनिर्मुक्तो रुद्रलोकमवाप्नुयात् ॥
इति वाराहपुराणे रुद्रोत्पत्तिर्नाम त्रयस्त्रिंशोऽध्यायः ।

---

# चतुस्त्रिंशोध्यायः

महातपा उवाच

पितॄणां सम्भवं राजन् कथ्यमानं निबोध मे ॥ १ ॥
पूर्वं प्रजापतिर्ब्रह्मा सिसृक्षुर्विविधाः प्रजाः । एकाग्रमनसः सर्वास्तन्मात्रा मनसा बहिः ।
कृत्वा परमकं ब्रह्मा ध्यायन्सर्वेषु रूपकैः ॥ २ ॥
तस्यात्मनि तदा योगं गतस्य परमेष्ठिनः । तन्मात्रा निर्ययुर्देहाद्धूमवर्णकृतत्विषः ॥ ३ ॥
पिबाम इति भाषन्तः सुरान्सोममिति स्म ह ।
ऊर्ध्वं जिगमिषन्तो वै वियत्संस्थास्तपस्विनः ॥ ४ ॥
तान्दृष्ट्वा सहसा ब्रह्मा तिर्यक्संस्थास्ततोन्मुखान् ।
भवन्तः पितरः सन्तु सर्वेषां गृहमेधिनाम् ॥ ५ ॥
ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः ।
इत्युक्त्वा तु तदा ब्रह्मा तेषां पन्थानमाकरोत् ॥ ६ ॥
दक्षिणायनसंज्ञन्तु पितॄणाञ्च पितामहः । तूष्णीं ससर्ज भूतानि तामूचुः पितरस्ततः ।
वृत्तिं नो देहि भगवन् यया विन्दामहे सुखम् ॥ ७ ॥

ब्रह्मोवाच

अमावास्यादिनं वोऽस्तु तस्यां कुशतिलोदकैः ।
तर्पिता मानुषैस्तृप्तिं पराङ्गच्छत नान्यथा ॥ ८ ॥
तिला देया तथैतस्यामुपोष्य पितृभक्तितः ।
परमं तस्य सन्तुष्टा वरं यच्छत मा चिरम् ॥ ९ ॥
इति वाराहपुराणे पितृसर्गस्थितिवर्णनं नाम चतुस्त्रिंशोऽध्यायः ।

---

# पञ्चत्रिंशोऽध्यायः

महातपा उवाच

ब्रह्मणो मानसः पुत्रः अत्रिर्नाम महायशाः । तस्य पुत्रोऽभवत्सोमो दक्षजामातृताङ्गतः ॥
याः सप्तविंशतिः कन्या दाक्षायण्यः प्रकीर्त्तिताः ।
सोमपत्न्योऽतिमान्यास्तास्तासां श्रेष्ठा तु रोहिणी ॥ २ ॥

तामेव रमते सोमो नेतरास्विति शुश्रुम । इतराः प्रोचुरागत्य चन्द्रस्यासमतां पितुः ।
दक्षोऽप्यसकृदागत्य तमुवाच स नाकरोत् ॥ ३ ॥
समतां सोऽपि तं दक्षः शशापान्तर्हितो भव ।
एवमुक्तः क्षयं सोम अगमद्दक्षशापतः ॥ ४ ॥
देवा मनुष्याः पशवो नष्टे सोमे सवीरुधः ।
क्षीणाभवंस्तदा सर्वा औषध्यश्च विशेषतः ॥ ५ ॥
क्षयं गच्छद्भिरत्यर्थमोषधीभिः सुरर्षभाः । मूलेषु वीरुधां सोमः स्थित इत्यूचुरातुराः ॥
तेषाञ्चिन्ताभवत्तीव्रा विष्णुञ्च शरणं ययुः ।
भगवानाह तान् सर्वान् ब्रूत किं क्रियते मया ॥ ७ ॥
ते चोचुर्देव दक्षेण शप्तः सोमो विनाशितः । तानुवाच तदा देवो मथ्यताङ्कलशोदधिः ।
औषध्यः सर्वतो देवाः प्रक्षिप्याशु सुसंयतैः ॥ ८ ॥
एवमुक्त्वा ततो देवान्दध्यौ रुद्रं हरिः स्वयम् ।
ब्रह्माणञ्च तथा दध्यौ वासुकिन्नेत्रकारणम् ॥ ९ ॥
ते सर्वे तत्र सहिता ममन्थुर्वरुणालयम् । तस्मिन् सुमथिते जातः पुनः सोमो महीपते ॥
योऽसौ क्षेत्रज्ञसंज्ञो वै देहेऽस्मिन् पुरुषः परः ।
स एव सोमो मन्तव्यो देहिनां जीवसंज्ञितः[1] ॥ ११ ॥
परोक्षया स मूर्त्तिन्तु पृथक् सौम्यां प्रपेदिवान् । तमेव देवमनुजाः षोडशेमाश्च देवताः ॥
उपजीवन्ति वृक्षाश्च तथैवौषधयः प्रभुम् ।
रुद्रस्तमेव सकलं दधार शिरसा तदा ॥ १२।१३ ॥
तदात्मिका भवन्त्यापो विश्वमूर्त्तिरसौ स्मृतः ।
तस्य ब्रह्मा ददौ प्रीतः पौर्णमासीन्तिथिं प्रभुः ॥ १४ ॥
तस्यामुपोषयेद्राजंस्तमर्थम्प्रतिपादयेत् । स चान्नाहारश्च भवेत्तस्य ज्ञानम्प्रयच्छति ।
कान्तिम्पुष्टिञ्च राजेन्द्र धनं धान्यञ्च केवलम् ॥ १५ ॥
इति वाराहपुराणे सोमोत्पत्तिस्थितिरहस्यं नाम पञ्चत्रिंशोऽध्यायः ।

---

## षट्त्रिंशोऽध्यायः

महातपा उवाच

आदित्रेतासु राजानो मणिजा ये प्रकीर्त्तिताः ।
कथयिष्यामि तान् राजन्यत्र जातोऽसि पार्थिव ॥
योऽसौ सुप्रभनामासीत्स त्वं राजन्कृते युगे ।
जातोऽसि नाम्ना विख्यातः प्रजापालेति शोभनः ॥ २ ॥

---

१. जीवसंज्ञक इति क्वचित्पाठान्तरम् ।

शेषास्त्रेतायुगे राजन् भविष्यन्ति महाबलाः ।
यो दीप्ततेजा मणिजः स शान्त इति कीर्त्तितः ॥ ३ ॥
सुरश्मिर्भविता राजा शशकर्णो महाबलः । शुभदर्शनः पाञ्चालो भविष्यति न संशयः ॥
सुशान्तिरङ्गवंशे वै सुन्दरोऽप्यङ्ग इत्युत । सुन्दश्च मुचुकुन्दोऽभूत्सुध्युस्तुरूरेव च ॥५॥
सुमनाः सोमदत्तस्तु शुभः संवरणोऽभवत् । सुशीलो वसुदानस्तु सुखदोऽसुपतिर्भवत्॥
शम्भुः सेनापतिरभूत्कान्तो दशरथः स्मृतः ।
सोमोऽभूज्जनको राजा एते त्रेतायुगे नृपाः ॥ ७ ॥
सर्वे भूमिमिमां राजन् भुक्त्वा ते वसुधाधिपाः ।
इष्ट्वा च विविधैर्यज्ञैर्दिवं प्राप्स्यन्त्यसंशयम् ॥ ८ ॥

वराह उवाच

एवं श्रुत्वा स राजर्षिर्ब्रह्मविद्यामृतं शुभम्[1] । आख्यानं परमप्रीतस्तपश्चर्तुं मगाद्वनम् ॥
ऋषिरध्यात्मयोगेन विहायेदं कलेवरम् । ब्रह्मभूतोऽभवद्धात्रि हरौ लयमवाप च ॥
वृन्दावनञ्च राजासौ तपोऽर्थं[2] गतवान् प्रभुः । तत्र गोविन्दनामानं हरिं स्तोतुमथारभत्॥

राजोवाच

नमामि देवं जगताञ्च मूर्त्तिं गोपेन्द्रमिन्द्रानुजमप्रमेयम् ।
संसारचक्रक्रमणैकदक्षं पृथ्वीधरन्देववरं नमामि ॥ १२ ॥
भवोदधौ दुःखशतोर्मिभीमे जरावर्त्ते कृष्ण पातालमूले ।
तदन्त एको ददते सुखं मे नमोऽस्तु ते गोपतिरप्रमेय ॥ १३ ॥
व्याध्यादियुक्तैः पुरुषैर्ग्रहैश्च सङ्कष्टमानं पुनरेव देव ।
नमोऽस्तु ते युद्धरते महात्मन् जनार्दनोपेन्द्र समस्तबन्धो ॥ १४ ॥
त्वमुत्तमः सर्वविदां सुरेश त्वया ततं विश्वमिदं समस्तम् ।
गोपेन्द्र मां पाहि महानुभाव भवाद्भीतं तिग्मरथाङ्गपाणे ॥ १५ ॥
परोऽसि देवः प्रवरः सुराणां पुराणरूपोऽसि शशिप्रकाशः ।
हुताशवक्त्राच्युत तीव्रभाव गोपेन्द्र मां पाहि भवे पतन्तम् ॥ १६ ॥
संसारचक्रक्रमणान्यनेका न्याविर्भवन्त्यच्युत देहिनां[3]यत् ।
त्वन्मायया मोहितानां सुरेश कस्ते मायान्तरते द्वन्द्वधामा ॥ १७ ॥
अगोत्रमस्पर्शमरूपगन्धमनाममनिर्देशमजं वरेण्यम् ।
गोपेन्द्र ये त्वामुपासन्ति धीरास्ते मुक्तिभाजो भवधर्ममुक्ताः ॥ १८ ॥
शब्दालिगं व्योमरूपं विमूर्त्तिं विकर्मिणं शुभभावं वरेण्यम् ।
चक्राब्जपाणिन्तु तथोपचारादुक्तं पुराणे सततन्नमामि ॥ १९ ॥
त्रिविक्रमं क्रीतजगत्त्रयञ्च चतुर्मूर्त्तिं विश्वजगत्क्षितीशम् ।

---

१. प्रभुरिति क्वचित्पठ्यते । २. तपोऽर्थे इत्यपि पाठःक्वचिद्दृश्यते ।
३. कुत्रचित्पुस्तके "परात्पर देवगुरो नमस्ते" इति एकः श्लोकपादोऽधिकोऽवलोक्यते ।

शम्भुं विभुं भूतपतिं सुरेशं नमाम्यहं विष्णुमनन्तमूर्त्तिम् ॥ २० ॥
त्वं देव सर्वाणि चराचराणि सृजस्यथो संहरसे त्वमेव ।
मां मुक्तिकामन्नय देव शीघ्रं यस्मिन् गता योगिनो नोपयान्ति ॥ २१ ॥
जयस्व गोविन्द महानुभाव जयस्व विष्णो जय पद्मनाभ ।
जयस्व सर्वज्ञ जयाप्रमेय जयस्व विश्वेश्वर विश्वमूर्त्ते ॥ २२ ॥

वराह उवाच

एवं स्तुत्वा तदा राजा निधाय स्वङ्कलेवरम् ।
परमात्मनि गोविन्दे मोक्षमागाच्च शाश्वतम् ॥ २३ ॥
इति वाराहपुराणे प्रागितिहासे षट्त्रिंशोऽध्यायः ।

## सप्तत्रिंशोऽध्यायः

धरण्युवाच

कथमाराध्यसे देव भक्तिमद्भिर्नरैर्विभो । स्त्रीभिर्वा सर्वमेतन्मे शंस त्वं भूतभावन ॥

वराह उवाच

भावसाध्योऽस्म्यहन्देवि न वित्तैर्न जपैरहम् ।
साध्यस्तथापि भक्तानां कायक्लेशं वदामि ते ॥ २ ॥
कर्मणा मनसा वाचा मच्चित्तो यो नरो भवेत् ।
तस्य व्रतानि वक्ष्येऽहं विविधानि निबोध मे ॥ ३ ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यम्प्रकीर्त्तितम् । एतानि मानसान्याहुर्व्रतानि तु धराधरे ॥
एकभक्तं तथा नक्तमुपवासादिकञ्च यत् । तत्सर्वं कायिकम्पुंसां व्रतम्भवति नान्यथा ॥
वेदस्याध्ययनं विष्णोः कीर्त्तनं सत्यभाषणम् । अपैशुन्यं हितं धर्मवाचिकं व्रतमुत्तमम् ॥
अत्रापि श्रूयते चान्यदृषिरुग्रतपाः पुरा । ब्रह्मपुत्रः पुराकल्पे आरुणिर्नाम नामतः ॥
सोऽरण्यमगमत्किञ्चित्तपोऽर्थी द्विजसत्तमः । तपस्तेपे ततस्तस्मिन्नुपवासपरायणः ॥
देविकायास्तटे रम्ये सोऽवसद्ब्राह्मणः किल । कदाचिदभिषेकाय स जगाम महानदीम् ॥
तत्र स्नात्वा जपन्विप्रो ददर्शायान्तमग्रतः । व्याधं महाधनुष्पाणिमुग्रनेत्रं विभीषणम् ॥

तं द्विजं हन्तुमायात्स वल्कलानां जिघृक्षया ।
तं दृष्ट्वा क्षुभितो विप्रो ब्रह्मघ्नस्य भयादिति ॥ ११ ॥
ध्यायन्नारायणं देवं तस्थौ तत्रैव स द्विजः ॥ १२ ॥

तं दृष्ट्वान्तर्गतहरिं व्याधो भीत इवाग्रतः । विहाय सशरञ्चापं ततो वचनमब्रवीत् ॥

व्याध उवाच

हन्तुमिच्छन्नहं ब्रह्मन् भवन्तम्प्रागिहागतः ।
इदानीं दर्शनात्तुभ्यं सा मतिः क्वापि मे गता ॥ १४ ॥

ब्राह्मणानां सहस्राणि सस्त्रीणामयुतानि च । निहतानि मया ब्रह्मन्सतत पापकारिणा ॥

काङ्गतिं प्रतिपत्स्यामि ब्रह्मघ्नोऽहं द्विजोत्तम ।

इदानीं तप्तुमिच्छामि तपोऽहन्त्वत्समीपतः। उपदेशप्रदानेन प्रसादङ्कर्त्तुमर्हसि॥ १६ ॥
एवमुक्तोऽप्यसौ विप्रो नोत्तरं प्रत्यपद्यत। ब्रह्महा पापकर्मेति मत्वा ब्राह्मणपुङ्गवः ॥१७॥
अनुक्तोऽपि स धर्मेप्सुर्व्याधस्तत्रैव तस्थिवान्।
स्नात्वा नद्या द्विजः सोऽपि वृक्षमूलमुपाश्रितः ॥ १८ ॥
कस्यचित्त्वथ कालस्य तां नदीमगमत्किल।
व्याघ्रो बुभुक्षितः शान्तं तं विप्रं हन्तुमुद्यतः ॥ १९ ॥
अन्तर्जलगतं विप्रं यावद्व्याघ्रो जिघृक्षति।
तावद्व्यथयाधेन व्याघ्रोऽसौ सद्यः प्राणैर्वियोजितः ॥ २० ॥
तस्माद्व्याघ्रशरीरात्तु उत्थाय पुरुषः किल। विप्रश्चान्तर्जले मग्नः श्रुत्वा तं शब्दमाकुलम्।
नमो नारायणायेति वाक्यमेतदुवाच ह ॥ २१ ॥
व्याघ्रेणापि श्रुतो मन्त्रः प्राणैः कण्ठस्थितैस्ततः।
श्रुतमात्रे जहौ प्राणान् पुरुषश्चाभवच्छुभः ॥ २२ ॥
सोऽब्रवीद्यामि तन्देशं यत्र विष्णुः सनातनः।
त्वत्प्रसादाद्द्विजश्रेष्ठ मुक्तपाप्मा निरामयः ॥ २३ ॥
इत्युक्तो ब्राह्मणः प्राह कोऽसि त्वं पुरुषोत्तम। सोऽब्रवीत्तस्य राजेन्द्र यद्वृत्तं पूर्वजन्मनि ॥
दीर्घबाहुरिति ख्यातः सर्वधर्मविशारदः।
अहं जानामि वेदांश्च अहं वेद्मि शुभाशुभम्।
ब्राह्मणैर्नैव मे कार्यं किं वस्तु ब्राह्मणा इति ॥ २५ ॥
तस्यैवंवादिनो विप्राः सर्वे क्रोधसमन्विताः।
ऊचुः शापं दुराधर्षं क्रूरो व्याघ्रो भविष्यसि ॥ २६ ॥
अवमानात्त विप्राणां नात्यर्थं स्मरणन्तव। मृत्युकाले तु संमूढ केशवेति श्रुणुष्यसि ॥
इत्युक्तोऽहं पुरा तैस्तु ब्राह्मणैर्वेदपारगैः। तदेव सर्वं सम्प्राप्तो ब्रह्मशापं सुपुष्कलम् ॥
ततस्ते ब्राह्मणाः सर्वे प्रणिपत्य मया मुने। उक्तानुग्रहहेतोर्वै त ऊचुर्मामिदं पुरा ॥
षष्ठान्नकालिकस्याग्रे यस्ते स्थास्यति कश्चन।
स भक्ष्यस्ते तु भविता कश्चित्कालन्नराधिप ॥ ३० ॥
यदेषुघातं लब्ध्वा तु प्राणैः कण्ठगतैर्भवान्। श्रोष्यसे द्विजवक्त्रात्तु नमो नारायणेति च।
तदा स्वर्गगतिस्तुभ्य भविता नात्र संशयः ॥ ३१ ॥
परवक्त्रगतश्चापि विष्णोर्नाम श्रुतं मया। कृतद्वेषस्य विप्राणां प्रत्यक्षोऽभवदच्युतः॥३२॥
यः पुनर्ब्राह्मणान् पूज्य स्ववक्त्रेण नमो हरिम्।
वदन् प्राणैर्वियुज्येत मुक्तोऽसौ वीतकिल्बिषः ॥ ३३ ॥
सत्यं सत्यं पुनः सत्यमुत्क्षिप्य भुजमुच्यते।
जङ्गमा ब्राह्मणा देवाः कूटस्थः पुरुषोत्तमः ॥ ३४ ॥
एवमुक्त्वा गतः स्वर्गं स राजा वीतकल्मषः।
ब्राह्मणोऽपि सदा मुक्तस्तं व्याधम्प्रत्यभाषत ॥ ३५ ॥

ऋषिरुवाच

जिघृक्षोर्मृगराजस्य यत्त्वया रक्षितो ह्यहम् । तत्पुत्र तुष्टस्ते दृष्टि वरं वरय सुव्रत ॥

व्याध उवाच

एष एव वरो मह्यं यत्त्वं मां भाषसे द्विज । अतः परं वरेणाहं किङ्करोमि प्रशाधि माम ॥

ऋषिरुवाच

अहं त्वया पुरा व्याधप्रार्थितोऽस्मि तपोऽर्थिना । बहुपातकयुक्तेन घोररूपेण चानघ ॥
इदानीं तव पापानि देविकाभिषवेण च । मद्दर्शनेन च चिरं विष्णुनामश्रुतेन च ।
नष्टानि शुद्धदेहोऽसि साम्प्रतन्नात्र संशयः ॥ ३९ ॥
इदानीं वरमेकन्त्वं गृहाण मम सन्निधौ । तपः कुरुष्व साधो त्वं चिरकालं यदिच्छसि ॥

व्याध उवाच

य एष भवता प्रोक्तो विष्णुर्नारायणः प्रभुः । स कथं प्राप्यते मर्त्यैरेष एव वरो मम ॥

ऋषिरुवाच

तमुद्दिश्य व्रतं कुर्याद्यत्किञ्चित्पुरुषोऽच्युतम् ।
स परन्तमवाप्नोति भक्त्या युक्तः पुमानिति ॥ ४२ ॥
एवं ज्ञात्वा भवान् पुत्र व्रतमेतत्समाचर । न भक्षयेद्व्रणान्नन्तु न वदेदनृतं क्वचित् ॥
एतत्ते व्रतमादिष्टं मया व्याध वरं ध्रुवम् । अत्रैव तपसा युक्तस्तिष्ठ त्वं यावदिच्छसि ॥

वराह उवाच

एवञ्चिन्तान्वितं मत्वा वरदो ब्राह्मणोऽभवत् ।
मोक्षार्थिनमथो बुद्ध्वा वञ्चयित्वा गतो मुनिः ॥ ४५ ॥
इति वराहपुराणे प्रागितिहासे सप्तत्रिंशोऽध्यायः ।

---

## अष्टात्रिंशोऽध्यायः

वराह उवाच

स शुभं शोभनं मार्गमास्थाय व्याधसत्तमः । तपस्तेपे निराहारस्तं गुरुं मनसा स्मरन् ॥
भिक्षाकाले तु सम्प्राप्ते शीर्णपर्णान्यभक्षयत् ॥ २ ॥
स कदाचित्क्षुधाविष्टो वृक्षमूलं समाश्रितः । बुभुक्षितस्तरोः पर्णान्यैच्छद्भक्षितुमन्तिकात् ॥
इत्येवं कुर्वतो व्योम्नि वागुवाचाशरीरिणी । मा भक्षयस्व सकटमुच्चैरेवं प्रभाषिते ॥
ततोऽसौ तद्विहायान्यद्वार्क्षं पतितमग्रहीत् । तदप्येवं निषिद्धं स्यादन्यदेव तथैव च ॥
एवं स सकटं मत्वा व्याधः किञ्चिन्न भक्षयत् ।
निराहारस्तपस्तेपे स्मरन् गुरुमतन्द्रितः ॥ ६ ॥
एवन्तपस्यतस्तस्य काले ऋषिवरोऽभ्ययात् । दुर्वासाः शंसितात्मा वै प्राणयुक्तमपश्यत ।
व्याधन्तपोत्थतेजोभिर्ज्वलमानं हविर्यथा ॥ ७ ॥
सोऽपि व्याधस्तु तं नत्वा शिरसाऽथ महामुनिम् ।

उवाच तं कृतार्थोऽस्मि भगवन्दर्शनात्तव ।
इदानीं श्राद्धकाले त्वं प्राप्तोऽसि मम दैवतम् ।
शीर्णपर्णादिभिः कृत्वा प्रीणयामि द्विजोत्तमम् ॥ ८।९ ॥

दुर्वासा अपि तं शुद्धभावपूतं जितेन्द्रियम् । जिज्ञासुस्तत्तपो वाक्यमिदमुच्चैरुवाच ह ॥
यवगोधूमशालीनामन्नञ्चैव सुसंस्कृतम् । दीयतां मे क्षुधार्त्ताय त्वामुद्दिश्यागताय च ॥

इत्युक्ते नन्वसौ व्याधश्चिन्तां परमिकाङ्गतः ।
क्व संभविष्यते मह्यमिति चिन्तापरोऽभवत् ॥ १२ ॥

तस्य चिन्तयतः पात्रमाकाशात्पतितं शुभम् । सौवर्णं सिद्धिसंयुक्तं तज्जग्राह करेण सः॥

तद् गृहीत्वा मुनिं प्राह दुर्वासाख्यं ससाध्वसः ।
अत्रैव स्थीयतां ब्रह्मन्यावद्भिक्षाटनं त्वहम् ।
करोमि मत्प्रसादोऽयं क्रियतां ब्रह्मवित्तम ॥ १४ ॥

एवमुक्त्वा ततो भिक्षां याचितुं व्याधसत्तमः । नातिदूरेण नगरं वनघोषसमन्वितम् ॥
तस्य तत्र प्रयातस्य अग्रतः सर्वशोभनाः । वृक्षेभ्यो निर्ययुश्चान्या हेमपात्राग्रपाणयः ॥

विविधान्नानि तस्याशु दत्त्वा पात्रम्प्रपूरितम् ।
स च भूतार्थमात्मानं मत्वा पुनरथाश्रमम् ।
आजगाम ततोऽपश्यत्तमृषिं जपतां वरम् ॥ १७ ॥
तं दृष्ट्वा स्थाप्य तां भिक्षां शुचौ देशे प्रसन्नधीः ।
प्रणम्य तमृषिं वाक्यमुवाच व्याधसत्तमः ॥ १८ ॥

ब्रह्मन् क्षालय पादौ त्वमुपविश्यासने शुभे । यदि मेऽनुग्रहो देव तदेवं कर्तुमर्हसि ॥

एवमुक्तः स जिज्ञासुस्तपोवीर्यं शुभं मुनिः ।
नदीङ्गन्तुं न शक्नोमि जलपात्रं न चास्ति मे ।
कथं प्रक्षालनं व्याध पादयोर्मे भविष्यति ॥ २० ॥
इत्येवं मुनिना प्रोक्तो व्याधश्चिन्तापरोऽभवत् ।
किङ्करोमि कथञ्चास्य भोजनं वै भविष्यति ॥ २१ ॥
एवं सञ्चिन्त्य मनसा गुरुं स्मृत्वा विचक्षणः ।
जगाम शरणन्तान्तु सरितन्देविकां सुधीः ॥ २२ ॥

व्याध उवाच

व्याधोऽस्मि पापकर्मास्मि ब्रह्महास्मि सरिद्वरे ।
तथापि संस्मृता देवि पाहि मां शरणागतम् ॥ २३ ॥
देवतां नैव जानामि न मन्त्रं न तथार्चनम् ।
गुरुपादौ परन्ध्यात्वा पश्यामि सततं शुभम् ॥ २४ ॥

एवंविधस्य मे देवि दयां कुरु सरिद्वरे । ऋषेरासन्नतां याहि पादशौचार्थमापगे ॥
एवमुक्त्वा तु व्याधेन देविका पापनाशिनी । आजगाम यतस्तस्थौ दुर्वासाः शंसितव्रतः॥
तद्‌दृष्ट्वा महदाश्चर्यं दुर्वासा विस्मयं ययौ । प्रक्षाल्य हस्तपादौ च तदन्नं श्रद्धयान्वितम् ।
बुभुजे परमप्रीतस्तथाचम्य विचक्षणः ॥ २७ ॥
तमस्थिशेषं व्याधन्तु क्षुधा दुर्बलताङ्गतम् । उवाच वेदाः साङ्गास्ते सरहस्याः पदक्रमाः ।
ब्रह्मविद्या पुराणानि प्रत्यक्षाणि भवन्तु ते ॥ २८ ॥
एवम्प्रादाद्वरन्तस्य दुर्वासा नाम चाकरोत् । भवान्सत्यतपा नाम ऋषिराद्यो भविष्यति॥
एवं दत्तवरो व्याधस्तमाह मुनिसत्तमम् । व्याधो भूत्वा कथं ब्रह्मन्वेदानध्यापयाम्यहम्॥

ऋषिरुवाच

प्राक्शरीरङ्गतन्तेऽद्य निराहारस्य सत्तम । तपोमयं शरीरन्ते पृथग्भूतं न संशयः ॥३१॥
प्राग्विज्ञानं गतन्नाशमिदानीं शुद्धमक्षरम् । उत्पन्नं शुद्धकायोऽसि सत्यमेतद्‌ब्रवीमि ते ।
तेन वेदाश्च शास्त्राणि प्रतिभास्यन्ति वै मुने ॥ ३२ ॥

इति वाराहपुराणे सत्यतपउपाख्याने अष्टात्रिंशोऽध्यायः ।

---

## ऊनचत्वारिंशोऽध्यायः

सत्यतपा उवाच

भगवन्द्वे शरीरे तु इति यत्परिकीर्त्तितम् । तन्मे कथय भेदं वै केन ब्रह्मविदां वर ॥१॥

दुर्वासा उवाच

न द्वे त्रीणि शरीराणि वाच्यं तद्विपरीतकम् । विभोगायतनञ्चैव शरीराणीति देहिनाम्॥
प्रागवस्थमधर्माख्यं परिज्ञानविवर्जितम् । अपरं सन्नतं तद्धि ज्ञेयमत्यन्तधार्मिकम् ॥
धर्माधर्मोपभोगाय यत्तृतीयमतीन्द्रियम् । तत्त्रिभेदं विनिर्दिष्टं ब्रह्मविद्भिर्विचक्षणैः ॥
यावता धर्मभोगश्च मुक्तिश्चेति त्रिभेदकम् ॥ ५ ॥
यस्तु भावः पुरा ह्यासीत्प्राणिनो निघ्नतस्तव । तत्पापाख्यं शरीरन्ते पापसंज्ञमतोऽभवत्॥
इदानीं शुभवृत्तिन्तु कुर्वतस्तप आर्जवम् । अपरन्धर्मरूपन्तु शरीरन्ते व्यवस्थितम् ॥
तेन वेदपुराणानि ज्ञातुमर्हस्यसंशयम् ॥ ७ ॥
यदाष्टके सम्परिवर्त्तते पुमांस्तदान्यवृत्तो भवतीह निश्चितम् ।
गताष्टवर्षस्तु पुमान्यदा भवेत्तदान्यचेष्टो भवतीह मानवः ॥ ८ ॥
एकं शरीरं हि पृथक् निर्दिष्टं ब्रह्मवादिभिः । अवस्थाभेदतश्चैवं तदेतत्कथितन्त्रिधा ।
अन्तरन्नास्ति चैतस्य यथा मृद्‌घटयोरिव ॥ ९ ॥
कर्मकाण्डञ्चतुर्भेदं ब्राह्मणादिषु कीर्त्तितम् । तत्र वेदोक्तकर्माणि त्रयः कुर्वन्ति नित्यशः ॥
त्रिशुश्रूषामथैकस्तु एता वेदोदिताः क्रियाः । एतान्धर्मांस्तु विज्ञाय ब्राह्मणो यस्तपस्यति ।
तस्य मुक्तिर्भवेन्नूनं वेदवादरतस्य च ॥ ११ ॥

सत्यतपा उवाच

यत्तदेतत्परं ब्रह्म त्वया प्रोक्तं महामुने । तस्य रूपं न जानन्ति योगिनोऽपि महात्मनः ॥
अनामगोत्ररहितममूर्तं मूर्तिवर्जितम् । कथं तज्ज्ञायते ब्रह्म संज्ञानामविवर्जितम् ॥
तत्तस्य संज्ञां कथय येन जानाम्यहं गुरो ॥ १४ ॥

दुर्वासा उवाच

यदेतत्परमं ब्रह्म वेदे शास्त्रेषु पठ्यते । स वेदः पुण्डरीकाक्षः स्वयं नारायणो हरिः ॥
स यज्ञैर्विविधैरिष्टैर्दानैर्दत्तैश्च सत्तम । प्राप्यते परमो देवः स्वयं नारायणो हरिः ॥१६॥

सत्यतपा उवाच

भगवन् बहुवित्तेन ऋत्विग्भिर्वेदपारगैः । प्राप्यते पुण्यकृद्भिर्हि देवो नारायणो भृशम् ॥
अधनेन कथन्देवः प्राप्यते तद्वदस्व मे । वित्तेन च विना दानं दातुं विप्र न शक्यते ॥
विद्यमानेऽपि न मतिः कुटुम्बासक्तचेतसः । तस्य नारायणो दूरे सर्वथा प्रतिभाति मे ॥
अत्यायासेन लभ्येत येन देवः सनातनः । तन्मे विशेषतो ब्रूहि सर्ववर्णैः कृतम्भवेत् ॥

दुर्वासा उवाच

कथयामि परं गुह्यं रहस्यन्देवनिर्मितम् । धरण्यां यत्कृतं पूर्वं मज्जन्त्या नु रसातले ॥
पृथिव्याः पार्थिवो भावः सलिलेनातिरेचितः ।
तस्मिन् सलिलमग्ने तु पृथ्वी प्रायाद्रसातलम् ॥ २२ ॥

सा भूतधारिणी देवी रसातलगता शुभा । आराधयामास विभुं देवन्नारायणं विभुम् ॥
उपवासव्रतैर्देवो नियमैश्च पृथग्विधैः । कालेन महता तस्याः प्रसन्नो गरुडध्वजः ।
उज्जहार स्थितौ स्थित्यां स्थापयामास सोऽव्ययः ॥ २४ ॥

सत्यतपा उवाच

कोऽसौ धरण्या सञ्चीर्ण उपवासो महामुने । कानि व्रतानि च तथा एतन्मे वक्तुमर्हसि॥

दुर्वासा उवाच

यदा मार्गशिरे मासि दशम्यान्नियतात्मवान् ।
कृत्वा देवार्चनन्धीमानग्निकार्यं यथाविधि ॥
शुचिवासाः प्रसन्नात्मा हव्यमन्नं सुसंस्कृतम् । भुक्त्वा पञ्चपदङ्गत्वा पुनः शौचन्तु पादयोः॥
कृत्वाष्टाङ्गुलमात्रन्तु क्षीरवृक्षसमुद्भवम् । भक्षयेद्दन्तकाष्ठन्तु तत आचम्य यत्नतः ॥
स्पृष्ट्वा द्वाराणि सर्वाणि चिरन्ध्यात्वा जनार्दनम् ।
शङ्खचक्रगदापाणिं पीताम्बरधरं विभुम् ॥
प्रसन्नवदनं देवं सर्वलक्षणपूजितम् । ध्यात्वा पुनर्जलं हस्ते गृह्य भावैर्जनार्दनम् ॥
दद्यादर्घञ्च देवाय करतोयेन मानवः । एवमुच्चारयन्वाचं तस्मिन् काले महामुने ॥
एकादश्यान्निराहारः स्थित्वा चैवापरेऽहनि ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ॥ ३२ ॥

एवमुक्त्वा ततो रात्रौ देवदेवस्य सन्निधौ । जपन्नारायणायेति स्वपेत्तत्र विधानतः ॥

ततः प्रभाते विमले नदीं गत्वा समुद्रगाम् । इतरां वा तडागं वा गृहे वा नियतात्मवान्॥
आनीय मृत्तिकां शुद्धां मन्त्रेणानेन मानवः । धारणं पोषणन्त्वत्तो भूतानां देवि सर्वदा॥
तेन सत्येन मे पापं यावन्मोचय सुव्रते । ब्रह्माण्डोदरतीर्थानि त्वया पृष्टानि देवते ॥
तेनेमां मृत्तिकान्त्वत्तो गृह्य स्थास्येऽद्य मेदिनि ।
त्वयि सर्वे रसा नित्याः स्थिता वरुण सर्वदा ॥
तैरिमां मृत्तिकां प्लाव्य पूतां कुरु हि मा चिरम् ।
एवं मृदं तथा तोयं प्रगृह्यात्मानमालभेत् ।
त्रिः कृत्वा शेषमृत्स्नात्वा सर्वाङ्गं लेपयेद् बुधः ॥ ३४-३७ ॥
वारुणैरेव मन्त्रैस्तु स्नानं कुर्याद्यथाविधि । स्नात्वा चावश्यकं कृत्वा पुनर्देवगृहं व्रजेत्॥
तत्राराध्य मया युक्तं देवं नारायणं प्रभुम् । केशवाय नमः पादौ कटिं दामोदराय च ॥
ऊरुयुग्मं नृसिंहाय उरः श्रीवत्सधारिणे । कोष्ठं कौस्तुभवासाय वक्षः श्रीपतये तथा ॥
त्रैलोक्ये विजयायेति बाहू सर्वात्मने शिरः । रथाङ्गधारिणे चक्रं शङ्करायेति वारिजम्॥
गम्भीरायेति च गदाम्भोजं शान्तिमूर्तये । एवमभ्यर्च्य देवेशं देवं नारायणं प्रभुम् ।
पुनस्तस्याग्रतः कुम्भान् चतुरः स्थापयेद् बुधः ।
जलपूर्णान्समाल्यांश्च तिलपूर्णैः सकाञ्चनैः ॥ ४२।४३ ॥
चत्वारस्ते समुद्रास्तु कलशाः परिकीर्तिताः । तेषां मध्ये शुभं पीठं स्थापयेद्वस्त्रगर्भितम् ॥
सौवर्णं राजतं पात्रं ताम्रं वा दारवं तथा । अलाभे सर्वपात्राणां पालाशं पत्रमिष्यते ॥
तोयपूर्णन्तु तत्कृत्वा तस्मिन्पात्रे ततो न्यसेत् । सौवर्णं मत्स्यरूपेण कृत्वा देवं जनार्दनम्॥
सर्वावयवसंयुक्तं सर्वाभरणभूषितम् । तत्रानेकविधैर्भक्ष्यैः फलैः पुष्पैश्च शोभितम् ।
गन्धधूपैश्च वस्त्रैश्च अर्चयित्वा यथाविधि ॥ ४६।४७ ॥
रसातलगता वेदा यथा देव त्वया हृताः । मत्स्यरूपेण तद्वन्मां भवानुद्धर केशव ॥
एवमुच्चार्य तस्याग्रे जागरं तत्र कारयेत् ॥ ४९ ॥
यथा विभवसारेण प्रभाते विमले तथा । चतुर्णां ब्राह्मणानाञ्च चतुरो दापयेद्घटान् ॥
पूर्वन्तु बह्वृचे दद्याच्छन्दोगे दक्षिणं तथा । यजुःशाखान्विते दद्यात्पश्चिमं घटमुत्तमम् ॥
उत्तरङ्कामतो दद्यादेष एव विधिः स्मृतः । ऋग्वेदः प्रीयतां पूर्वे सामवेदस्तु दक्षिणे ॥
यजुर्वेदः पश्चिमतो अथर्वश्चोत्तरेण तु । अनेन क्रमयोगेन प्रीयतामिति वाचयेत् ॥
सौवर्णं मत्स्यरूपन्तु आचार्याय निवेदयेत् । गन्धधूपादिवस्त्रैश्च सम्पूज्य विविधक्रमात्॥
यस्त्विमं सरहस्यञ्च मन्त्रञ्चैवोपपादयेत् । विधानं तस्य वै दत्त्वा फलं कोटिगुणोत्तरम्॥
प्रतिपद्य गुरुं यस्तु मोहाद्विप्रतिपद्यते । स कोटिजन्म नरके पच्यते पुरुषाधमः ॥
विधानस्य प्रदाता यो गुरुरित्युच्यते बुधैः । एवं दत्त्वा विधानेन द्वादश्यां विष्णुमर्च्य च॥
विप्राणां भोजनं दद्याद्यथाशक्त्या सदक्षिणम् ॥ ५७ ॥
सतिलं ताम्रपात्रञ्च स्थापितं कलशोपरि । तत्सर्वं जलपात्रस्थं ब्राह्मणाय कुटुम्बिने ।
देवं दद्यान्महाभागस्ततो विप्रांश्च भोजयेत् ॥ ५८ ॥

भूरिणा परमान्नेन ततः पश्चात्स्वयन्नरः । भुञ्जीत सहितो बालैर्वाग्यतः संयतेन्द्रियः ॥
अनेन विधिना यस्तु धरणीव्रतकृन्नरः । तस्य पुण्यफलञ्चाग्र्यं शृणु बुद्धिमतां वर ॥
यदि वक्त्रसहस्राणि भवन्ति मम सुव्रत । आयुश्च ब्रह्मणस्तुल्यं भवेद्यदि महाव्रत ॥
तदानीमस्य धर्मस्य फलं कथयितुम्भवेत् ॥ ६१ ॥
तथाप्युद्देशतो ब्रह्मन्कथयिष्यामि तच्छृणु । दशसप्तदशाब्दे च अष्टौ चत्वार एव च ॥
लक्षायुतानि चत्वारि एतत्स्याच्चतुर्युगम् । तैरेकसप्ततियुगं भवेन्मन्वन्तरं मुने ॥
चतुर्दशाहोरात्रस्तु तावती रात्रिरिष्यते । एवं त्रिंशद्दिनो मासस्ते द्वादश समाः स्मृताः ॥
तेषां शतं ब्रह्मणस्तु आयुर्नास्त्यत्र संशयः ॥ ६५ ॥
यः सकृद्द्वादशीमेतामनेन विधिना क्षिपेत् । स ब्रह्मलोकमाप्नोति तावत्कालञ्च तिष्ठति॥
ततो ब्रह्मोपसंहारं संहारे तल्लयेच्चिरम् । पुनः सृष्टो भवेद्देवो राजा नाम महातपाः ॥
ब्रह्महत्यादिपापानि इहलोककृतान्यपि ।
अकामः कामतो वापि तानि नश्यन्ति तत्क्षणात् ॥ ६८ ॥
इह लोके दरिद्रो यो भ्रष्टराज्योऽथवा नृपः ।
उपोष्यते विधानेन स राजा जायते ध्रुवम् ॥ ६९ ॥
वन्ध्या नारी भवेद्या तु अनेन विधिना शुभा । उपोष्यति भवेत्तस्याः पुत्रः परमधार्मिकः ॥
अगम्यागमनं येन कृतं जानादि मानदः । स इमं विधिमासाद्य तस्मात्पापाद्विमुच्यते॥
ब्रह्मक्रियाया लोपेन बहुवर्षकृतेन च । उपोष्येमां सकृद्भक्त्या वेदसंस्कारमाप्नुयात् ॥
किमत्र बहुनोक्तेन न तदस्ति महामुने । अप्राप्यं प्रापयति या अतः कार्या सदा नरैः ॥
अनेन विधिना ब्रह्मन् स्वयमेव ह्युपोषिता । धरण्या मग्नया तात नात्र कार्या विचारणा॥
अदीक्षिताय नो देयं विधानं नास्तिकाय च । दैवत्रद्विषे वापि न श्राव्यन्तु कदाचन ॥
गुरुभक्ताय दातव्यं सद्यः पापप्रणाशनम् । इह जन्मनि सौभाग्यं धनं धान्यं वरस्त्रियः ।
भवन्ति विविधास्तस्य य उपोष्यति मानवः ॥ ७६ ॥
य इमं श्रावयेद्भक्त्या द्वादशीकल्पमुत्तमम् । शृणोति वा स पापैस्तु सर्वैरेव प्रमुच्यते ॥
इति वाराहपुराणे धरणीव्रते मत्स्यद्वादशीव्रतं नाम ऊनचत्वारिंशोऽध्यायः ।

# चत्वारिंशोऽध्यायः

दुर्वासा उवाच

तथैव पौषमासे तु अमृतं मथितं सुरैः । तत्र कूर्मो भवेद्देवः स्वयमेव जनार्दनः ॥१॥
तस्येयन्तिथिरुद्दिष्टा महती कूर्मरूपिणः । पौषमासस्य या शुक्ला दशमीति निगद्यते ॥
तस्यां प्रागेव सङ्कल्प्य प्राग्वत्स्नानादिकाः क्रियाः ।
निर्वर्त्याराधयेद्भक्त्या एकादश्यां जनार्दनम् ।
पृथङ्मन्त्रैर्मुनिश्रेष्ठ देवदेवं जनार्दनम् ॥ ३ ॥

कूर्माय पादौ प्रथमं प्रपूज्य नारायणायेति हरेः कटिञ्च ।
सङ्कर्षणायेत्युदरं विशोकेत्युरो भवायेति तथैव कण्ठम् ॥ ४ ॥
सुबाहवे चैव भुजौ शिरश्च नमो विशालाय नमोऽस्तु देवः ।
स्वनाममन्त्रेण सुगन्धपुष्पैर्धूपादिनैवेद्यफलैर्विचित्रैः ॥ ५ ॥
अभ्यर्च्य देवं कलशं तदग्रे संस्थाप्य माल्यासितवस्त्रयुक्तम् ।
तं रत्नगर्भन्तु पुरेव कृत्वा स्वशक्तितो हेममयञ्च देवम् ॥ ६ ॥
समन्दरं कूर्मरूपेण कृत्वा संस्थाप्य ताम्रे घृतपूर्णपात्रे ।
पूर्णे घटस्योपरि सन्निवेश्य तद्ब्राह्मणं पूज्य तथैव दद्यात् ॥ ७ ॥
श्वो ब्राह्मणान्पूज्य च दक्षिणादिभिर्यथाशक्त्या प्रीणयेद् देवदेवम् ।
नारायणं कूर्मरूपेण युक्तं पश्चात्तु भुञ्जीत सभृत्यवर्गः ॥ ८ ॥
एवं कृते विप्र समस्तपापं विनश्यते नात्र कुर्याद्विचारः ।
संसारचक्रं स विहाय शुद्धं प्राप्नोति लोकञ्च हरेः पुराणम् ॥ ९ ॥
प्रयान्ति पापानि विनाशमाशु श्रीमांस्तथा जायते सत्यधर्मः ।
अनेकजन्मान्तरसञ्चितानि नश्यन्ति पापानि नरस्य भक्त्या ॥ १० ॥
प्रागुक्तरूपन्तु फलं लभेत नारायणस्तुष्टिमायाति सद्यः ॥ ११ ॥

इति वाराहपुराणे कूर्मद्वादशीव्रतं नाम चत्वारिंशोऽध्यायः ।

---

## एकचत्वारिंशोऽध्यायः

### दुर्वासा उवाच

एवं माघे सिते पक्षे द्वादशी धरणीभृतः । वराहस्य शृणुष्वाद्यां मुने परमधार्मिक ॥१॥
प्रागुक्तेन विधानेन सङ्कल्पस्थानमेव च । कृत्वा देवं समभ्यर्च्य एकादश्यां विचक्षणः॥
धूपनैवेद्यगन्धैश्च अर्चयित्वाच्युतन्नरः । पश्चात्तस्याग्रतः कुम्भं जलपूर्णन्तु विन्यसेत् ॥
वराहायेति पादौ तु माधवायेति वै कटिम् । क्षेत्रज्ञायेति जठरं विश्वरूपायेत्युरो हरेः॥
सर्वज्ञायेति कण्ठन्तु प्रजानां पतये शिरः । प्रद्युम्नायेति च भुजौ दिव्यास्त्राय सुदर्शनम्॥

अमृतोद्भवाय शङ्खन्तु एष देवार्चने विधिः ।
एवमभ्यर्च्य मेधावी तस्मिन्कुम्भे तु विन्यसेत् ॥ ६ ॥

सौवर्णे रौप्यताम्रे वा पात्रे विभवशक्तितः । सर्ववित्तैस्तु सम्पूर्णे स्थापयित्वा विचक्षणः॥
तत्र शक्त्या तु सौवर्णं वराहङ्कारयेद् बुधः । दंष्ट्राग्रेणोद्धृतां भूमिं सपर्वतवनद्रुमाम् ।

माधवं मधुहन्तारं वराहरूपमास्थितम् ॥ ८ ॥

सर्वबीजभृतं पात्रं रत्नगर्भं घटोपरि । स्थापयेत्परमं देवं जातरूपमयं हरिम् ॥ ९ ॥
सितवस्त्रयुगाच्छन्नं ताम्रपात्रे तु वै मुने । स्थाप्यार्चयेद्गन्धपुष्पैर्नैवेद्यैर्विविधैः शुभैः ॥

पुष्पमण्डलिकां कृत्वा जागरं तत्र कारयेत् । प्रादुर्भावाद्धरेस्तत्र वाचयेद्भावयेद् बुधः॥
एवम्पूजां विधायाथ प्रभाते उदिते रवौ । शुचिः स्नात्वा हरिं पूज्य ब्राह्मणाय निवेदयेत्॥
वेदावेदाङ्गविदुषे साधुवृत्ताय धीमते । विष्णुभक्ताय शान्ताय श्रोत्रियाय कुटुम्बिने ॥
एवं सकुम्भन्तं दत्त्वा हरिं वराहरूपिणम् । दत्त्वा चाथ लभेद्यत्त फलं तन्मे निशामय॥

इह जन्मनि सौभाग्यं श्रीः कान्तिस्तुष्टिरेव च ।
दरिद्रो वित्तवान्सद्यः अपुत्रो लभते सुतम् ॥ १५ ॥
अलक्ष्मीर्नश्यते सद्यो लक्ष्मीः संविशते बलात् ।
इह जन्मनि सौभाग्यं परलोके निशामय ॥ १६ ॥

अस्मिन्नर्थे पुरा वृत्तमितिहासं पुरातनम् । प्रतिष्ठानेऽभवद्राजा वीरधन्वेति विश्रुतः ॥
स कदाचिद्वनम्प्रायान्मृगहेतोः परन्तपः । व्यापादयन्मृगगणान्तत्रर्षिवनमध्यगः ॥१८॥
जघान मृगरूपान्सोऽज्ञानतो ब्राह्मणान्नृपः । भ्रातरस्तत्र पञ्चाशन्मृगरूपेण संस्थिताः ।
संवर्त्तस्य सुता ब्रह्मन्वेदाध्ययनतत्पराः ॥ १९ ॥

सत्यतपा उवाच

कारणं किं समाश्रित्य ते चक्रुर्मृगरूपताम् । एतन्मे कौतुकं ब्रह्मन्प्रणतस्य प्रसीद मे ॥

दुर्वासा उवाच

ते कदाचिद्वनं याता दृष्ट्वा हरिणपोतकान् । जातमात्रान् स्वमात्रा तु विहीनान्नृपसत्तम॥
एकैकं जगृहुस्ते हि ते मृताः कन्दरास्थिताः ।
ततस्ते दुःखिताः सर्वे ययुः पितरमन्तिकम् ॥ २२ ॥
ऊचुश्च वचनञ्चेदं मृगहिंसामृते मुने ॥ २३ ॥

ऋषिपुत्रा ऊचुः

जातमात्रा मृगाः पञ्च अस्माभिर्निहता मुने ।
अकामतस्ततोऽस्माकं प्रायश्चित्तं विधीयताम् ॥ २४ ॥

संवर्त्त उवाच

मत्पिता हिंसकश्चासीदहन्तस्माद्विशेषतः । भवन्तः पापकर्माणः सञ्जाता मम पुत्रकाः ॥
इदानीं मृगचर्माणि परिधाय यतव्रताः । चरध्वं पञ्च वर्षाणि ततः शुद्धा भविष्यथ ॥
एवमुक्तास्तु ते पुत्रा मृगचर्मोपवीतिनः । वनं विविशुरव्यग्रा जपन्तो ब्रह्म शाश्वतम् ॥
तथा वर्षे व्यतिक्रान्ते वीरधन्वा महीपतिः । तत्राजगाम यस्मिंस्ते चरन्ति मृगरूपिणः॥
ते चाप्येकतरोर्मूले मृगचर्मोपवीतिनः । जपन्तः संस्थितास्ते हि राज्ञा दृष्टा मृगा इति ॥
मत्वा विद्धास्तु युगपन्मृतास्ते ब्रह्मवादिनः ॥ ३० ॥
तान्दृष्ट्वा तु मृतान् राजा ब्राह्मणान्शंसितव्रतान् । भयेन वेपमानस्तु देवराताश्रमं ययौ॥
तमापृच्छद्ब्रह्महत्या मम जाता महामुने । आमूलात्तद्वधं वृत्तं कथयित्वा नराधिपः ॥
भृशं शोकपरीतात्मा रुरोदातीव दुःखितः । स ऋषिर्देवरातस्तु रुदन्तं नृपसत्तमम् ॥

उवाच मा भैर्नृपते अपनेष्यामि पातकम् ।
पाताले सुतलाख्ये च यथा धात्री निमज्जती ।
उद्धृता देवदेवेन विष्णुना क्रोडमूर्त्तिना ॥
तस्माद्भवन्तं राजेन्द्र ब्रह्मवध्यापरिप्लुतम् । उद्धरिष्यति देवोऽसौ स्वयमेव जनार्दनः ॥
एवमुक्तस्ततो राजा हर्षितो वाक्यमब्रवीत् । कतरेण प्रकारेण स मे देवः प्रसीदति ।
प्रसन्ने चाशुभं सर्वं येन नश्यति सत्तम ॥ ३५ ॥

दुर्वासा उवाच

एवमुक्तो मुनिस्तेन देवरात इदं व्रतम् ।
आचख्यौ सोऽपि तत्कृत्वा भुक्त्वा भोगान्सुपुष्कलान् ॥
मृत्युकाले मुनिश्रेष्ठ सौवर्णेन विराजता । विमानेनागमत्स्वर्गमिन्द्रलोकं स पार्थिवः ॥
तस्येन्द्रस्त्वर्घमादाय प्रत्युत्थानेन निर्ययौ । आयान्तमिन्द्रं दृष्ट्वा तु तमूचुर्विष्णुकिङ्कराः॥
न द्रष्टव्यो देवराजस्त्वं हीनस्तपसा इति ॥ ३९ ॥
एवं सर्वे लोकपाला निर्ययुस्तस्य तेजसा । प्रत्याख्यातास्च तैर्विष्णुकिङ्करैर्हीनकर्मणः ॥
एवं स सत्यलोकान्तं गतो राजा महामुने । अपुनर्मारके लोके दाहप्रलयवर्जिते ॥
अद्यापि तिष्ठते देवैः स्तूयमानो महानृपः । प्रसन्ने यज्ञपुरुषे किञ्चित्रं येन तद्भवेत् ॥
इह जन्मनि सौभाग्यमायुरारोग्यसम्पदः । एकैका विधिनोपास्ता ददात्यमृतमुत्तमम् ॥
किं पुनर्वर्षसम्पूर्णे[1] स ददाति स्वकम्पदम् । नारायणश्चतुर्मूर्तिः परार्द्धयश्च न संशयः ॥
यथैवोद्धृतवान्वेदान्मत्स्यरूपेण केशवः । क्षीराम्बुधौ मथ्यमाने मन्दरं धृतवान्प्रभुः ॥
तद्वच्च कूर्मरूपी स्याद् द्वितीया पश्य वैष्णवी । यथा रसातलात्क्ष्माञ्च धृतवान् पुरुषोत्तमः॥
वराहरूपी तद्वच्च तृतीया पश्य वैष्णवी ॥ ४६ ॥
इति वाराहपुराणे धरणीव्रते वराहद्वादशीव्रतं नाम एकचत्वारिंशोऽध्यायः ।

---

## द्वाचत्वारिंशोऽध्यायः

दुर्वासा उवाच

तद्वत्फाल्गुनमासे तु या शुक्लैकादशी भवेत् । तामुपोष्य विधानेन हरिमाराधयेद्बुधः॥
नरसिंहाय पादौ तु गोविन्दायेत्यूरू तथा । कटिं विश्वभुजे पूज्य अनिरुद्धेत्युरस्तथा ॥
कण्ठन्तु शितिकण्ठाय पिङ्गकेशाय वै शिरः । असुरध्वंसनायेति चक्रन्तोयात्मने तथा॥
शङ्खमित्येव सम्पूज्य गन्धपुष्पफलैस्तथा । तदग्रे घटमादाय सितवस्त्रयुगान्वितम् ॥४॥
तस्योपरि नृसिंहन्तु सौवर्णं ताम्रभाजने । यथाविभवतः कृत्वा दारुवंशमयेऽपि वा ॥
रत्नगर्भे घटे स्थाप्य तं सम्पूज्य च मानवः । द्वादश्यां वेदविदुषे ब्राह्मणाय निवेदयेत् ॥
एवङ्कृते फलं प्राप्तं यत्पुरा पार्थिवेन तु । तस्याहं सम्प्रवक्ष्यामि वत्सनामा महामुने ॥

१. सर्वसंपूर्ण इति क्वचित्कः पाठः ।

आसीत्किम्पुरुषे वर्षे राजा परमधार्मिकः ।
भारतेति च विख्यातस्तस्य वत्सः सुतोऽभवत् ॥ ८ ॥
सः शत्रुभिर्जितः संख्ये हृतकोशो द्विपादवान् ।
वनं प्रायात्सपत्नीको वशिष्ठस्याश्रमेऽवसत् ॥ ९ ॥
कालेन गच्छता[1] सोऽथ वशिष्ठेन महात्मना ।
किङ्कार्यमिति स प्रोक्तो वसस्यस्मिन्महाश्रमे ॥ १० ॥

राजोवाच

भगवन्हृतकोशोऽहं हृतराज्योऽसहायवान् । शत्रुभिर्हृतसर्वस्वो भवन्तं शरणं गतः ॥
उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ॥ १२ ॥

दुर्वासा उवाच

एवमुक्तो वशिष्ठस्तु तस्येमां द्वादशीं मुने । आदिदेश विधानेन सोऽपि सर्वमथाकरोत् ॥
व्रतान्ते तस्य भगवान् नरसिंहस्तुतोष ह । चक्रम्प्रादाच्च शत्रूणां विध्वंसनकरं परम्[2]॥
तेनास्त्रेण स्वकं राज्यं जितवान् स नृपोत्तमः ।
राज्ये स्थित्वाऽश्वमेधानां सहस्रमकरोत्प्रभुः ।
अन्ते च विष्णुलोकाख्यं पदमागाच्च सत्तमः ॥ १५ ॥
एषा धन्या पापहरा द्वादशी भवता मुने । कथितेमां प्रसन्नेन श्रुत्वा कुरु यथेप्सितम् ॥
इति वाराहपुराणे नरसिंहद्वादशीव्रतं नाम द्विचत्वारिंशोऽध्यायः ।

---

## त्रयश्चत्वारिंशोऽध्यायः

दुर्वासा उवाच

एवमेव मुने मासि चैत्रे सङ्कल्प्य द्वादशीम् । उपोष्याराधयेद्भक्त्या देवदेवं जनार्दनम्[3]॥
वामनायेति पादौ तु विष्णवे कटिमर्चयेत् । वासुदेवाय जठरमुरः सङ्कर्षणाय च ॥
कण्ठं विश्वभृते पूज्य शिरो वै व्योमरूपिणे ।
बाहू विश्वजिते पूज्यौ स्वनाम्ना शङ्खचक्रकौ ॥ ३ ॥
अनेन विधिनाभ्यर्च्य देवदेवं सनातनम् । प्राग्वद्रत्नोदकं कुम्भं सम्पूतं पुरतो न्यसेत्[4]॥
प्रागुक्तपात्रे संस्थाप्य काञ्चनं वामनं बुधः । यथाशक्त्या कृतं सर्वं सितयज्ञोपवीतिनम् ॥
कुण्डिकां स्थापयेत्पार्श्वे छत्रिका पादुका तथा ।
अक्षमालाञ्च संस्थाप्य वृषिकाञ्च विशेषतः ॥ ६ ॥

---

१. महता इति कुत्रचित्पुस्तके दृश्यते । २. मृधे इति कुत्रचित्पठ्यते ।
३. एवं मुने मासि चैत्रे या शुक्लैकादशी भवेत् ।
तामुपोष्य यजेत्पश्चाद्भक्त्या देवन्तु वामनम् ॥ इति क्वाचित्कः पाठः ।
४. प्राग्वदेवोत्तमं कुम्भं सवस्त्रं पुरतो न्यसेदित्यपि पाठः ।

एतैरुपस्करैर्युक्तं प्रभाते सद्द्विजातये[1]। दापयेत्प्रीयतां विष्णुर्हंसस्वरूपीत्युदीरयेत् ॥ ७ ॥
मासनाम्ना तु संयुक्तं प्रादुर्भावाभिधानकम्। प्रीयतामिति सर्वत्र विधिरेष प्रकीर्तितः॥
श्रूयते च पुरा राजा हर्यश्वः पृथिवीपतिः। अपुत्रः स तपस्तेपे पुत्रमिच्छंस्तपोधन ॥
तस्यैवं कुर्वतस्त्विष्टिं पुत्रार्थे मुनिसत्तम। आजगाम हरिर्देवो द्विजरूपं समाश्रितः ॥

उवाच तपसा राजन् किन्ते व्यवसितं प्रभो[2]।
पुत्रार्थमिति सोवाच तं विप्रः प्रत्युवाच ह ॥ ११ ॥

इदमेव विधानन्तु कुरु राजन्प्रयत्नतः। एवमुक्त्वा तु राजानं क्षणादन्तर्हितः प्रभुः ॥
राजाऽपि तं चकाराशु मन्त्रवित्तं द्विजातये। दरिद्राय तथा प्रादाज्ज्योतिर्गर्भाय धीमते॥
यथादितेरपुत्रायाः स्वयं पुत्रत्वमागतः। भगवांस्तेन सत्येन ममाप्यस्तु सुतो वरः ॥१४॥
अनेन विधिनोक्तेन तस्य पुत्रोऽभवन्मुने[3]। उग्राश्व इति विख्यात[4]श्चक्रवर्त्ती महाबलः॥
अपुत्रो लभते पुत्रं धनार्थी लभते धनम्। भ्रष्टराज्यो लभेद्राज्यं मृतो विष्णुपुरं व्रजेत् ॥

तत्र स्थित्वा बहून् भोगान् भुक्त्वा मर्त्यमुपागतः[5]।
चक्रवर्ती भवेद्धीमान् ययातिरिव नाहुषः ॥ १७ ॥

इति वाराहपुराणे वामनद्वादशीव्रतं नाम त्रयश्चत्वारिंशोऽध्यायः।

---

## चतुश्चत्वारिंशोऽध्यायः

दुर्वासा उवाच

वैशाखेऽप्येवमेवन्तु सङ्कल्प्य विधिना नरः।
तद्वत्स्नानं मृदा कृत्वा ततो देवालयं व्रजेत् ॥ १ ॥

तत्राराध्य हरिं भक्त्या एभिर्मन्त्रैर्विचक्षणः। जामदग्न्याय पादौ तु उदरं सर्वधारिणे ॥
मधुसूदनायेति कटिमूरू श्रीवत्सधारिणे। क्षरान्तकायेति भुजौ शितिकण्ठाय कूर्चकम्॥

स्वनाम्ना शङ्खचक्रौ तु शिरो ब्रह्माण्डधारिणे ॥ ३ ॥

एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम्। विन्यसेत्स्थापितं तद्वद्वस्त्र युग्मं विशेषतः॥
वैणवेन तु पात्रेण तस्मिस्तु स्थापयेद्धरिम्। जामदग्न्येन रूपेण कृत्वा सौवर्णमग्रतः[6] ॥
दक्षिणे परशुं हस्ते तस्य देवस्य कारयेत्। अर्घगन्धैस्तु सम्पूज्य पुष्पैर्नानाविधैस्तथा ॥

---

१. ब्राह्मणाय च इति वा पाठः।

२. स उवाच नृपं राजन् किन्ते व्यवसितन्त्विति पाठान्तरम्।

३. भवेन्मुने इति पाठान्तरम्।　　४. कुवलयाश्वेति विख्यात इति वा पाठः।

५. क्रीडित्वा सुचिरं तत्र इह मर्त्यमुपागत इति वा पठ्यते क्वचित्।

६. कुत्रचित् पुस्तकयोः श्लोक एष एवं पठितः—

कृत्वा तु वैणवे पात्रे तस्मिन् संस्थापयेद्धरिम्।
जामदग्न्येति विख्यातं नाम्ना क्लेशविनाशनम् ॥

ततस्तस्याग्रतः कृत्वा जागरं भक्तिभावितः । प्रभाते विमले सूर्ये ब्राह्मणाय निवेदयेत् ॥
एवं नियमयुक्तस्य तत्फलन्तन्निबोध[1] मे ॥ ८ ॥
आसीद्राजा महाभागो वीरसेनो महाबलः । अपुत्रः स पुरा तीव्रन्तपस्तेपे महामनाः॥
चरतस्तु तपो घोरं याज्ञवल्क्यो महामुनिः । आजगाम महायोगी तन्द्रष्टुं नातिदूरतः॥
तमायान्तमथो दृष्ट्वा ऋषिम्परमवर्चसम् । कृताञ्जलिपुटो भूत्वा राजाभ्युत्थानमाकरोत् ॥
स पूजितो मुनिः प्राह किमर्थं तप्यते[2] तपः । राजन्कथय धर्मज्ञ किङ्कार्यं ते विवक्षितम्॥

राजोवाच

अपुत्रोऽहं महाभाग नास्ति मे पुत्रसन्ततिः । तेनेदन्तप आस्थाय क्षयिष्ये स्वतनूं द्विज॥

याज्ञवल्क्य उवाच

अलं ते तपसानेन महाक्लेशेन पार्थिव । अल्पायासेन ते पुत्रो भविष्यति न संशयः ॥

राजोवाच

कथं मे भविता पुत्रः स्वल्पायासेन वै द्विज ।
एतन्मे कथय प्रीत्या भगवन् प्रणतस्य वै ॥ १५ ॥

दुर्वासा उवाच

एवमुक्तो मुनिस्तेन पार्थिवेन यशस्विना ।
आचख्यौ द्वादशीञ्चेमां वैशाखे सितपक्षजाम् ॥ १६ ॥
स हि राजा विधानेन पुत्रकामो विशेषतः । उपोष्य लब्धवान् पुत्रं नलं परमधार्मिकम्॥
योऽद्यापि कीर्त्यते लोके पुण्यश्लोको नरोत्तमः ।
प्रासङ्गिकं फलं ह्येतद् व्रतस्यास्य महामुने ॥ १८ ॥
सुपुत्रो जायते तस्य विद्या श्रीः कान्तिरुत्तमा ।
इह जन्मनि किञ्चित्रं परलोके शृणुष्व मे ॥ १९ ॥
कल्पमेकं ब्रह्मलोक उषित्वाप्सरसाङ्गणैः । क्रीडन्ति ते पुनः सृष्टौ जायन्ते चक्रवर्तिनः॥
त्रिंशत्कल्पसहस्राणि जीवन्ते नात्र संशयः ॥ २१ ॥
इति वराहपुराणे द्वादशीमाहात्म्ये जामदग्न्यद्वादशीव्रतं नाम चतुश्चत्वारिंशोऽध्यायः ।

---

# पञ्चचत्वारिंशोऽध्यायः

दुर्वासा उवाच

ज्येष्ठमासेऽप्येवमेवं सङ्कल्प्य विधिना नरः । अर्चयेत्परमं देवं पुष्पैर्नानाविधैः शुभैः॥
नमो रामाभिरामाय पादौ पूर्वं समर्चयेत् । त्रिविक्रमायेति कटिं धृतविश्वाय चोदरम् ॥
उरः संवत्सरायेति कण्ठं संवर्त्तवाय च । सर्वास्त्रधारिणे बाहू स्वनाम्नाब्जरथाङ्गकैः ॥
सहस्रशिरसेऽभ्यर्च्य शिरस्तस्य महात्मनः । एवमभ्यर्च्य विधिवत्प्राग्वत्कुम्भन्तु विन्यसेत्॥

---

१. तु निबोधेति कुत्रचिद्दृश्यते । २. क्रियते इति वा पठ्यते ।

प्राग्वद्वस्त्रेण संच्छन्नं सौवर्णौ रामलक्ष्मणौ । अर्चयित्वा विधानेन प्रभाते ब्राह्मणाय तौ ।
दातव्यौ मनसा काममीहता पुरुषेण तु ॥ ५ ॥
अपुत्रेण पुरा पृष्टो राज्ञा दशरथेन च । पुत्रकामपरः पश्चाद्वशिष्ठः परमार्चितः ।
इदमेव विधानन्तु कथयामास स द्विजः ॥ ६ ॥
आग्रहस्यं विदित्वा तु स राजा कृतवानिदम् । तस्य पुत्रः स्वयं जज्ञे रामनामा महाबली॥
चतुर्द्धा सोऽव्ययो विष्णुः परितुष्टो महामुने । एतदैहिकमाख्यानं पारत्रिकमथो शृणु ॥
तावद्भोगान् भुङ्क्ते स्वर्गलोके यावदिन्द्रो देवसङ्घाश्च सर्वे ।
अतीतकाले पुनरेत्य मर्त्यं भवेत्स राजा शतयज्ञयाजी ॥ ९ ॥
निष्काम एवं व्रतमस्य चीर्त्वा नश्यन्ति पापानि च तस्य पुंसः ।
...प्राप्नोति निर्वाणमलञ्च शाश्वतम् ॥ १० ॥
इति वाराहपुराणे रामद्वादशीव्रतं नाम पञ्चचत्वारिंशोऽध्यायः ।

## षट्चत्वारिंशोऽध्यायः

दुर्वासा उवाच

आषाढेऽप्येवमेव स्यात्सङ्कल्प्य विधिना नरः । चक्रपाणयेति भुजौ कण्ठं भूपतये तथा ॥
स्वनाम्ना शङ्खचक्रौ तु पुरुषायेति वै शिरः । एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम्॥
विन्यस्य वस्त्रसंयुक्तं तस्योपरि ततो न्यसेत् । काञ्चनं वासुदेवन्तु चतुर्व्यूहं सनातनम् ॥
तमभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् । प्राग्वत्तं ब्राह्मणे दद्याद्वेदवादरते तथा ॥
एवं नियमयुक्तस्य यत्पुण्यं तच्छृणुष्व मे । वसुदेवोऽभवच्छ्रेष्ठो यदुवंशविवर्द्धनः ॥५॥
देवकी तस्य भार्या तु समानव्रतधारिणी । सा त्वपुत्राभवत्साध्वी पतिधर्मपरायणा ॥
तस्य कालेन महता नारदोऽभ्यगमद्गृहम् । पूजितो वसुदेवेन भक्त्यासौ वाक्यमब्रवीत्॥
वसुदेव शृणुष्वेदं देवकार्यंममानघ । श्रुत्वैताञ्च कथां शीघ्रमागतोऽस्मि तवान्तिकम् ॥
पृथिवी देवसमितिं मया दृष्टा यदूत्तम । गत्वा च जल्पती भारं न शक्ता ऊहितुं सुराः ॥
पीडयन्ति समेता मां तान्हनध्वं सुरोत्तमाः ॥ ९ ॥
एवमुक्ताः पृथिव्या ते देवा नारायणं गताः । मनसा ध्यातमात्रः स देवः प्रत्यक्षतां ययौ ॥
उवाच च सुरश्रेष्ठः स्वयं कार्यमिदं सुराः । साधयामि न सन्देहो मर्त्यङ्गत्वा मनुष्यवत् ॥
किन्त्वाषाढे शुक्लपक्षे या नारी सह भर्तृणा । उपोष्यति मनुष्येषु तस्या गर्भे भवाम्यहम्॥
एवमुक्ता गता देवाः स्वयञ्चाहमिहागतः । उपदिश्यन्तु भवतः अपुत्रस्य विशेषतः ॥१३॥
एताञ्च द्वादशीङ्कृत्वा वसुदेवो महायशाः । पुत्रं लेभे स कृष्णाख्यं महतीञ्च श्रियं तथा॥
भुक्त्वा प्राज्यश्रियं सोऽथ गतिम्परमिकां ययौ ।
एष ते विधिरुद्दिष्ट आषाढे मासि वै मुने ॥ १५ ॥
इति वाराहपुराणे कृष्णद्वादशीव्रतं षट्चत्वारिंशोऽध्यायः ।

# सप्तचत्वारिंशोऽध्यायः

दुर्वासा उवाच

श्रावणे मासि शुक्लायामेकादश्याञ्चरेद् व्रतम् ।
अर्चयेत्पूर्वविधिना गन्धपुष्पैर्जनार्दनम् ॥ १ ॥

दामोदराय पादौ तु हृषीकेशाय वै कटिम् । सनातनेति जठरमुरः श्रीवत्सधारिणे ॥
चक्रपाणयेति भुजौ कण्ठञ्च हरये तथा । मुञ्जकेशायेति शिरो भद्राय च शिखां तथा ॥
एवं सम्पूज्य संस्थाप्य कुम्भं पूर्ववदेव तु । संवेष्ट्य वस्त्रयुग्मेन तस्योपरि ततो न्यसेत्[1]॥
काञ्चनं वासुदेवन्तु[2] दामोदरसनामकम् । तमभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात्॥
प्राग्वत्तं ब्राह्मणे दद्याद्वेदवेदाङ्गपारगे । एवं नियमयुक्तस्य प्रभावं तच्छृणुष्व मे ॥६॥
एष वै विधिरुद्दिष्टः श्रावणे मासि वै मुने । एतस्याश्च प्रभावं यच्छृणु पापप्रणाशनम् ॥
पुरा कृतयुगे राजा नृगो नाम महाबलः । बभ्राम स वनं घोरं मृगयासक्तमानसः ॥
स कदाचित्तुरङ्गेण गतो दूरं महद्वनम् । व्याघ्रसिंहगजाकीर्णं दस्युसर्पनिषेवितम् ॥
एकाकी तत्र राजा तु अश्वं मुच्य तरोरधः । स्वयं कुशमथास्तीर्य सुप्तो दुःखसमन्वितः॥
तावत्तत्रैव लुब्धानां सहस्राणि चतुर्दश । आगतानि मृगान्हन्तुं रात्रौ राज्ञः समन्ततः ॥
तत्रापश्यन्ततः सुप्तं हेमरत्नविभूषितम् । नृगं राजानमत्युग्रं श्रिया परमया युतम् ॥
ते गत्वा त्वरितं व्याधाः स्वभर्त्रे सन्न्यवेदयन् । सोऽपि रत्नसुवर्णार्थं राजानं हन्तुमुद्यतः॥
तुरगस्य च हेतोस्तु निस्त्रिंशाःवनचारिणः । राजानं सुप्तमासाद्य निगृहीतुं प्रचक्रमुः ॥
तावद्राज्ञः शरीरात्तु श्वेताभरणभूषिता । नारी काचित्समुत्तस्थौ स्रक्चन्दनविभूषिता ॥
उत्थाय चक्रमादाय ते म्लेच्छा विनिपातिताः ॥ १६ ॥
दस्यून्निहत्य सा देवी तस्य राज्ञस्तनुं पुनः । प्रविशन्त्याशु राजापि प्रतिबुद्धः प्रदिष्टवान्॥

म्लेच्छांस्तु निहतान्दृष्ट्वा तां स्वमूर्तौ लयङ्गताम् ।
अश्वमारुह्य स पुनर्वामदेवाश्रमं ययौ ॥ १८ ॥
तत्रापृच्छदृषिं भक्त्या का स्त्री के ते निपातिताः ।
एतत्कार्यं ऋषे मह्यं प्रसीद कथयस्व मे ॥ १९ ॥

वामदेव उवाच

त्वमासीच्छूद्रजातीयः अन्यजन्मनि पार्थिवः ।
तत्र त्वया ब्राह्मणेभ्यः श्रुता चेयं कृता पुरा ॥ २० ॥
श्रावणस्य तु मासस्य शुक्लपक्षेषु द्वादशी ।
सा विधानात्त्वया राजन् भक्त्या च समुपोषिता ॥ २१ ॥

---

१. क्वचित्पुस्तक एष श्लोक इत्थं पठितः—
एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् । विन्यस्य वस्त्रसंयुक्तं तस्योपरि ततोन्यसेत् ॥
२. देवदेवन्तु इति क्वचित्पठ्यते ।

उपोषितायां तस्यान्तु राज्यं लब्धं त्वयाऽनघ ।
सर्वापत्सु च सा देवी भवन्तं परिरक्षति ॥ २२ ॥
यया विनिहताः क्रूरा म्लेच्छाः पापसमन्विताः ।
भवांश्च रक्षितो राजन् श्रावणद्वादशीति सा ॥ २ ॥
एकैव पाति चापत्सु राज्यमेकैव यच्छति । किं पुनर्द्वादशैतास्तु याम्य ऐन्द्रञ्च गच्छति ॥
इति वाराहपुराणे बुद्धद्वादशीव्रतं नाम सप्तचत्वारिंशोऽध्यायः ।

## अष्टचत्वारिंशोऽध्यायः

दुर्वासा उवाच

तद्वद्भाद्रपदस्यापि या शुक्लैकादशी भवेत् ।
तस्यां सङ्कल्प्य विधिना देवदेवं समर्चयेत् ॥ १ ॥
नमोऽस्तु कल्किने पादौ हृषीकेशाय वै कटिम् ।
म्लेच्छविध्वंसनायेति जगन्मूर्ते तथोदरम् ॥ २ ॥
शितिकण्ठाय कण्ठन्तु खड्गपाणेति वै भुजौ ।
चतुर्भुजायेति हस्तौ विश्वमूर्ते तथा शिरः ॥ ३ ॥
एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् । विन्यसेत्कल्किनं देवं सौवर्णं तत्र कारयेत्॥
सितवस्त्रेण संयुक्तं गन्धपुष्पोपशोभितम् । कृत्वा प्रभाते विप्राय प्रदेयं शास्त्रवित्तमे ॥
एवं कृते भवेद्यत्तु तन्निबोध महामुने । पूर्वं राजा विशालोऽभूत्काशिपुर्यां महाबलः ।
गोत्रजैर्हृतराज्योऽसौ गन्धमादनमाविशत् ॥ ६ ॥
तस्य द्रोण्यां महाराज बदरीं प्राप शोभनाम् । हतराज्यो विशेषेण गतश्रीको नरोत्तमः ॥
कदाचिदागतौ तत्र पुराणावृषिसत्तमौ । नरनारायणौ देवौ सर्वदेवनमस्कृतौ ॥८॥
तौ दृष्ट्वा तत्र राजानं पूर्वागतमरिन्दमौ । ध्यायन्तं परमं ब्रह्म विष्णवाख्यं परमं पदम्॥
तौ प्रीतावूचतुश्चैवं राजानं क्षीणकल्मषम् । वरं वृणीष्व राजेन्द्र वरदौ स्वस्तवागतौ ॥

राजोवाच

भवन्तौ कौ न जानामि कस्य गृह्णाम्यहं वरम् ।
आराधयामि यं तस्माद्वरमिच्छामि शोभनम् ॥ ११ ॥
एवमुक्तौ तु तौ प्रोचुः कमाराधयसे प्रभो । कं वा वरं वृणोषि त्वं कथयस्व कुतूहलात् ॥
एवमुक्तस्ततो राजा विष्णुमाराधयाम्यहम् । कथयित्वा स्थितस्तूष्णीं ततस्तावूचतुः पुनः ॥
राजंस्तस्यैव देवस्य प्रसादादावयोर्वरः । दातव्यस्ते वरं ब्रूहि कस्ते मनसि वर्तते ॥

राजोवाच

यथा यज्ञेश्वरं देवं यज्ञैर्विविधदक्षिणैः । यष्टुं समर्थता मे स्यात्तथा मे ददतां वरम् ॥१५॥
स्वयं नारायणो देवो लोकमार्गप्रदर्शकः । मया सह तपः कुर्वन्बदर्यां लोकभावनः ॥१६॥
अयं मत्स्योऽभवत्पूर्वं पुनः कूर्मः सुरूपवान् । वराहश्चाभवद्देवो नरसिंहस्ततोऽभवत् ॥

वामनस्तु ततो जातो जामदग्न्यो महाबलः । पुनर्दाशरथी भूत्वा मोचयामास पार्थिवः ॥
सकलान् दस्यवो म्लेच्छान् घातयित्वा महीमिमाम् ।
प्रकृतिस्थां चकारायं स एष भगवान्हरिः ॥ १९ ॥

नारसिंहेन रूपेण तद्वत्पापभयान्नरैः । वामनं मोहनाशाय वित्तार्थे जमदग्निजम् ॥२०॥
क्रूरशत्रुविनाशाय यजेद्दाशरथिं बुधः । बलकृष्णौ यजेद्धीमान् पुत्रकामो न संशयः॥२१॥
रूपकामो यजेद्बुद्धं शत्रुघाताय कल्किनम् । एवमुक्त्वा नरस्तस्य इमामेवात्रवोन्मुनिः ॥
द्वादशीं कृतवान्सोऽपि चक्रवर्त्ती बभूव ह । तस्यैव नाम्ना बदरी विशालाख्याभवन्मुने॥
इहजन्मनि राजासौ राज्यं कृत्वा इयाद्वनम् ।
यज्ञैश्च विविधैरिष्ट्वा परं निर्वाणमाप्तवान् ॥ २४ ॥
इति वाराहपुराणे कल्किद्वादशीव्रतं नाम अष्टचत्वारिंशोऽध्यायः ।

---

# ऊनपञ्चाशोऽध्यायः

## दुर्वासा उवाच

तद्वदश्वयुजे मासि द्वादशी शुक्लपक्षजा । तस्यामभ्यर्चयेद्देवं पद्मनाभं सनातनम् ॥
पद्मनाभाय पादौ तु कटिं वै पद्मयोनये । उदरं सर्वदेवाय पुष्कराक्षाय वै उरः ।
अव्ययाय तथा पाणिं प्राग्वदस्त्राणि पूजयेत् ॥ २ ॥
प्रभवाय शिरः पूज्य प्राग्वदग्रे घटं न्यसेत् ॥ ३ ॥
तस्मिन् सौवर्णकं देवं पद्मनाभन्तु विन्यसेत् ।
तमेव देवं सम्पूज्य गन्धपुष्पादिभिः क्रमात् ॥ ४ ॥
प्रभातायान्तु शर्वर्यां ब्राह्मणाय निवेदयेत् ।
एवं कृते तु यत्पुण्यं तन्निबोध महामते ॥ ५ ॥
आसीत्कृतयुगे राजा भद्राश्वो नाम वीर्यवान् ।
यस्य नाम्नाभवद्वर्षं भद्राश्वं नाम नामतः ॥ ६ ॥
तस्यागस्त्यः कदाचित्तु गृहमागत्य सत्तम । उवाच सप्तरात्रन्तु वसामि भवतो गृहे ।
तं राजा शिरसा नत्वा स्थीयतामित्यभाषत ॥ ७ ॥
तस्य कान्तिमती नाम भार्या परमशोभना । तस्यास्तेजः समभवद्द्वादशादित्यसन्निभम्॥
शतानि पञ्च तस्यासन्सपत्नीनां यतव्रताः । ता दास्य इव कर्माणि कुर्वन्त्यहरहः शुभाः॥
कान्तिमती महाभागा भार्या तस्य विशेषतः ।
तामगस्त्यस्तथा दृष्ट्वा रूपतेजोऽन्वितां शुभाम् ॥ १० ॥
सपत्न्यश्च भयात्तस्याः कुर्वन्त्यः कर्म शोभनाः ।
राजा तु तस्या मुदितं मुखमेवान्वलोकयत् ॥ ११ ॥

एवम्भूतामथो दृष्ट्वा राज्ञीं परमशोभनाम् । साधु साधु जगन्नाथेत्याहागस्त्यः प्रहर्षितः ॥
द्वितीये दिवसेऽप्येवं राज्ञीं दृष्ट्वा महाप्रभाम् । अहो मुष्टमहो मुष्टं जगदेतच्चराचरम् ॥
इत्यगस्त्यो द्वितीयेऽह्नि राज्ञीं दृष्ट्वाभ्युवाच ह । तृतीयेऽहनि तां दृष्ट्वा पुनरेवमुवाच ह ॥
अहो मूढा न जानन्ति गोविन्दं परमेश्वरम् । य एकेन दिनेनैव राज्यस्तुष्टः प्रदत्तवान् ॥
चतुर्थे दिवसे हस्तावुत्क्षिप्य पुनरब्रवीत् । साधु साधु जगन्नाथ स्त्रीशूद्राः साधु साध्विति॥

द्विजाः साधु नृपाः साधु वैश्याः साधु पुनः पुनः ।
साधु भद्राश्च साधु त्वं साधु भोऽगस्त्य साधु ते ॥ १७ ॥

साधु प्रह्लाद साधुस्ते ध्रुव साधो महाव्रत । एवमुक्त्वा ननर्तोच्चैरगस्त्यो राजसन्निधौ ॥
एवम्भूतञ्च तं दृष्ट्वा सपत्नीको नृपोत्तमः । किं हर्षकारणं ब्रह्मन्येनेत्थन्नृत्यते भवान् ॥

अगस्त्य उवाच

अहो मूर्खः कुराजा त्वं अहो मूर्खोऽनुगास्त्वमी ।
अहो पुरोहिता मूर्खा ये न जानन्ति मे मतिम्[1] ॥ २० ॥

एवमुक्ते ततो राजा कृताञ्जलिरभाषत । न जानीमो वयं ब्रह्मन् प्रश्नमेतत्त्वयेरितम् ।
कथयस्व महाभाग यद्यनुग्रहकृद्भवान् ॥ २१ ॥

अगस्त्य उवाच

इयं राज्ञी पुरा चाभूद्दासी वैश्यस्य वै गृहे । नगरे हरिदत्तस्य त्वमस्याः पतिरेव च ।
तस्यैव कर्मकारोऽभूः शूद्रः सेवनतत्परः ॥ २२ ॥
स वैश्योऽश्वयुजे मासि द्वादश्यां नियतः स्थितः ।
स्वयं विष्णवालयं गत्वा पुष्पधूपादिभिर्हरिम् ॥ २३ ॥
अभ्यर्च्य स्वगृहं प्रायाद्भवन्तौ रक्षपालकौ ।
स्थाप्य द्वावपि दीपानां ज्वलनार्थं महामते ॥ २४ ॥
गते वैश्ये भवन्तौ तौ दीपान् प्रज्वाल्य संस्थितौ ।
यावत्प्रभाता रजनी निशामेकां नरोत्तम ॥ २५ ॥
ततः काले मृतौ तौ तु उभौ द्वावपि दम्पती ॥ २६ ॥

तेन पुण्येन ते जन्म प्रियव्रतगृहेऽभवत् । इयं पत्नी तु ते जाता पुरा वैश्यस्य दासिका ॥
पारक्यस्यापि दीपस्य ज्वालितस्य हरेर्गृहे । यः पुनः स्वेन वित्तेन विष्णोरग्रे प्रदीपकम् ।
ज्वालयेत्तस्य यत्पुण्यं तत्संख्यातुं न शक्यते । तेन साधो हरेः साधु इत्युक्तं वचनं मया ॥
पूर्णे संवत्सरे भक्तिं हरेः कृत्वा विचक्षणः । संवत्सरार्द्धे त्रेतायां सममेतन्न संशयः ॥

त्रिमासे द्वापरे भक्त्या पूजयँल्लभते फलम् ।
नमो नारायणेत्युक्त्वा कलौ तु लभते फलम् ॥ ३१ ॥

तेन मुष्टं जगत्सर्वं भक्तिमात्रं मयेरितम् । पारक्यदीपस्योत्कर्षाद्दे वाग्रे फलमीदृशम् ॥
भो राजन्यत्त्वया प्राप्तं फलमेतन्मयेरितम् । अहो मूढा न जानन्ति हरेर्दीपक्रियाफलम्॥

---

१. मतमिति क्वाचित्कः पाठः ।

एवंविधा द्विजाग्रे च राजानो ये च भक्तितः ।
यजन्ते विविधैर्यज्ञैस्तेन ते साधवः स्मृताः ॥ ३४ ॥
अहन्तमेव मुक्त्वान्यं न पश्यामि महीतले ।
तेन साधो अगस्त्येति मया चात्मा प्रशंसितः ॥ ३५ ॥
सा स्त्री धन्या स शूद्रस्तु तथा धन्यतरो मतः ।
भर्तुः शुश्रूषणं कृत्वा तत्परोक्षे हरेरिति ॥ ३६ ॥
सा स्त्री धन्या तथा शूद्रो द्विजशुश्रूषणे रतः ।
तदाज्ञया हरेर्भक्तिः स्त्रीशूद्रौ तेन साध्विति ॥ ३७ ॥
आसुरं भावमाश्रित्य प्रह्लादः पुरुषोत्तमम् ।
मुक्त्वा चान्यं न जानाति तेनासौ साधुरुच्यते ॥ ३८ ॥
प्रजापतिकुले भूत्वा बाल एव वनं गतः । आराध्य विष्णुं प्राप्तश्च स्थानं परमशोभनम् ॥
तेन साधो ध्रुवेत्येवं मयोक्तं राजसत्तम ॥ ४० ॥
इति राजा वचः श्रुत्वा अगस्त्यस्य महात्मनः । अल्पोपदेशं राजासौ पप्रच्छ मुनिपुङ्गवम् ।
अगस्त्यश्च महाभागः कार्त्तिक्यां पुष्करं व्रजत् ॥ ४१ ॥
गतेऽगस्त्ये प्रगच्छन्वै भद्राश्वस्य निवेशनम् । पृष्टश्च राज्ञा तामेव द्वादशीं मुनिसत्तमः ॥

दुर्वासा उवाच

इदमेव मया तुभ्यं कथितं ते तपोधन । कथयित्वा पुनर्वाक्यमगस्त्यो नृपसत्तमम् ॥
उवाच पुष्करं यामि सपुत्रश्चास्तु ते गृहम् । एवमुक्त्वा जगामाशु सद्योऽदर्शनतां मुनिः ॥
द्वादशीं पद्मनाभस्य राजा स विधिना ततः । उपोष्य परमङ्कामिह जन्मनि चाप्तवान् ॥
पुत्रपौत्रैः परिवृतो भुक्त्वा भोगानथोत्तमान् । पद्मनाभप्रसादेन वैष्णवं स्थानमाप सः ॥

इति वाराहपुराणे पद्मनाभद्वादशीव्रतं नाम ऊनपञ्चाशोऽध्यायः ।

---

## पञ्चाशोऽध्यायः

दुर्वासा उवाच

गत्वा तु पुष्करन्तीर्थमगस्त्यो मुनिपुङ्गवः । कार्त्तिक्यामाजगामाशु पुनर्भद्राश्वमन्दिरम् ॥
तमागतं मुनिं प्रेक्ष्य राजा परमधार्मिकः । अर्घपाद्यादिभिः पूज्य कृतासनपरिग्रहम् ।
उवाच हर्षितो[1] राजा तमृषिं शंसितव्रतम् ॥ २ ॥

राजोवाच

भगवन् कथितं पूर्वं त्वया ऋषिवरोत्तम । आश्विने मासि द्वादश्यां विधानन्तत्कृतं मया ॥
इदानीं कार्त्तिके मासि यत्स्यात्पुण्यं वदस्व मे ॥ ३ ॥

---

१. हृषित इति पाठान्तरम् ।

अगस्त्य उवाच

कार्त्तिकी द्वादशी राजन्मुक्ता परमपावनी ।
उपोष्य विधिना येन यच्चास्याः प्राप्यते फलम् ।
तदहं संप्रवक्ष्यामि शृणोत्ववहितो भवान् ॥ ४ ॥
पूर्वोक्तविधिना सम्यक् सङ्कल्प्य स्नानमाचरेत् ॥ ५ ॥

तमेव पूजयेद्देवं नारायणमकल्मषम् । नमः सहस्रशिरसे शिरः सम्पूजयेद्धरेः ॥ ६ ॥
पुरुषायेति च भुजौ कण्ठं वै विश्वरूपिणे । ज्ञानास्त्रायेति चास्त्राणि श्रीवत्साय तथा उरः॥
जगद्ग्रसिष्णवे तुभ्यं उदरं दिव्यमूर्तये । कटिं सहस्रपादाय पादौ देवस्य पूजयेत् ॥८॥
अनुलोमेन देवेशं पूजयित्वा विचक्षणः । नमो दामोदरायेति सर्वाङ्गं पूजयेद्धरेः ॥

एवं सम्पूज्य विधिना तस्याग्रे चतुरो घटान् ।
स्थापयेद्रत्नगर्भांस्तु सितचन्दनचर्च्चितान् ॥ १० ॥
स्रग्दामबद्धग्रीवांस्तु सितवस्त्रावगुण्ठितान् ।
स्थापितांस्ताम्रपात्रैस्तु तिलपूर्णैः सकाञ्चनैः ॥ ११ ॥

चत्वारः सागराश्चैव कल्पयेद्राजसत्तम । तन्मध्ये प्राग्विधानेन सौवर्णं स्थापयेद्धरिम् ॥
योगेश्वरं योगिगम्यं पीताम्बरधरं विभुम् । एवं सम्पूज्य विधिवज्जागरन्तत्र कारयेत् ॥
कुर्याच्च वैष्णवं यज्ञं यजेद्योगेश्वरं हरिम् । षोडशारे तथा चक्रे योगिभिर्बहुभिः कृते ॥
एवं कृत्वा प्रभातेषु ब्राह्मणाय निवेदयेत् । चत्वारः सागरा देयाश्चतुर्णां पञ्चमस्य च ॥
योगीश्वरन्तु देवेशन्दद्यात्प्रयतमानसः । वेदार्थं तु समन्दत्तं द्विगुणं तद्विदे तथा ॥१६॥

आचार्ये पञ्चरात्राणां सहस्रगुणितं भवेत् ।
यस्त्विमं सरहस्यन्तु समन्त्रञ्चोपपादयेत् ॥ १७ ॥

विधानं तस्य वै दत्तं कोटिकोटिगुणोत्तरम् । गुरौ सति तु यश्चान्यमाश्रयेत्पूजयेत्कुधीः॥
स दुर्गतिमवाप्नोति दत्तमस्य च निष्फलम् । प्रयत्नेन गुरौ पूर्वं पश्चादन्यस्य दापयेत् ॥
अविद्यो वा सविद्यो वा गुरुरेव जनार्दनः । मार्गस्थो वाप्यमार्गस्थो गुरुरेव परा गतिः॥
प्रतिपद्य गुरुं यस्तु मोहाद्विप्रतिपद्यते । युगकोटिं स नरके पच्यते पुरुषाधमः ॥

एवं दत्त्वा विधानेन द्वादश्यां विष्णुमर्च्य च ।
विप्राणां भोजनं दद्याद्यथाशक्त्या सदक्षिणम् ॥ २२ ॥

धरणीव्रतमेतद्धि पुरा कृत्वा प्रजापतिः । प्राजापत्यं तथा लेभे मुक्तिं ब्रह्म च शाश्वतम्॥
तथा च हैहयो राजा कृतवीर्यो नराधिपः । कार्त्तवीर्यं सुतं लेभे परं ब्रह्म च शाश्वतम्॥
शकुन्तलाप्येवमेव व्रतं कृत्वा महामते । लेभे च भरतं पुत्रं दौष्यन्तं चक्रवर्त्तिनम् ॥
तथातीताश्च राजानो वेदोक्ताश्चक्रवर्त्तिनः । अनेन विधिना प्राप्ताश्चक्रवर्त्तित्वमुत्तमम ॥
धरण्या अपि पाताले मग्नया च पुरा कृतम् । व्रतमेतत्ततो नाम्ना धरणीव्रतमुत्तमम् ॥

समाप्तेऽस्मिन्धरा देवी हरिणा क्रोडमूर्तिना ।
उद्धृता चापि तुष्टेन स्थापिता नौरिवाम्भसि ॥ २८ ॥

धरणीव्रतमेतद्धि कीर्त्तितं ते मया मुने।
य इदं शृणुयाद्भक्त्या यश्च कुर्यान्नरोत्तमः।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात्॥ २९॥

इति वाराहपुराणे धरणीव्रतं नाम पञ्चाशोऽध्यायः।

---

## एकपञ्चाशोऽध्यायः

वराह उवाच

श्रुत्वा दुर्वाससो वाक्यं धरणीव्रतमुत्तमम्। ययौ सत्यतपाः सद्यो हिमवत्पार्श्वमुत्तमम्॥
पुष्पभद्रा नदी यत्र शिला चित्रशिला तथा।
वटो भद्रवटो यत्र तत्र तस्याश्रमो बभौ।
तत्रोपरि महत्तस्य चरितं सम्भविष्यति॥ २॥

धरण्युवाच

बहुकल्पसहस्राणि व्रतस्यास्य सनातन। मया कृतस्य तपसस्तन्मया विस्मृतं प्रभो॥
इदानीन्त्वत्प्रसादेन प्राक्तनं स्मरती मम। जातं जातिस्मरत्वञ्च विशोका परमेश्वर॥
यदि नाम परन्देव कौतुकं हृदि वर्तते।
अगस्त्यः पुनरागत्य भद्राश्वस्य निवेशनम्।
यच्चकार स राजा तु तन्ममाचक्ष्व भूधर॥ ५॥

वराह उवाच

प्रत्यागतमृषिं दृष्ट्वा भद्राश्वः श्वेतवाहनः।
वीरासनगतं दृष्ट्वा कृत्वा पूजां विशेषतः।
अपृच्छन्मोक्षधर्माख्यं प्रश्नं सकलधारिणि॥ ६॥

भद्राश्व उवाच

भगवन् कर्मणा केन छिद्यते भवसंसृतिः किं वा कृत्वा न शोचन्ति मूर्त्ता मूर्त्तोपपत्तिषु॥

अगस्त्य उवाच

शृणु राजन्कथान्दिव्यां दूरासन्नव्यवस्थिताम्।
दृश्यादृश्यविभागोत्थां समाहितमना नृप॥ ८॥
नाहो न रात्रिर्न दृशो दिशश्च न द्यौर्न देवा न दिनं न सूर्यः।
तस्मिन्काले पशुपालेति राजा स पालयामास पशूननेकान्॥ ९॥
तान् पालयन् स कदाचिद्दिदृक्षुः पूर्वं समुद्रञ्च जगाम तूर्णम्।
अनन्तपारस्य महोदधेस्तु तीरे वनं तत्र वसन्ति सर्पाः॥ १०॥

अष्टौ द्रुमाः कामवहा नदी च तिर्यक् चोर्ध्वं बभ्रमुस्तत्र चान्ये ।
पञ्च प्रधानाः पुरुषास्तथैकः स्त्रियं बिभ्रते तेजसा दीप्यमानाम् ॥ ११ ॥
सापि स्त्री स्वे वक्षसि धारयन्ती सहस्रसूर्यप्रतिमं विशालम् ।
तस्याधरस्त्रिर्विकारस्त्रिवर्णस्तं राजानं पश्य परिभ्रमन्तम् ॥ १२ ॥
तूष्णीम्भूता मृतकल्पा इवासन् नृपोऽप्यसौ तद्वनं संविवेश ।
तस्मिन् प्रविष्टे सर्व एते विविशुर्भयादैक्यं गतवन्तः क्षणेन ॥ १३ ॥
तैः सर्पैः स नृपो दुर्विनीतैः संवेष्टितो दस्युभिश्चिन्तयानः ।
कथं चैते न भविष्यन्ति येन कथं चैते संमृताः सम्भवेयुः ॥ १४ ॥
एवं राज्ञश्चिन्तयतस्त्रिवर्णः पुरुषोऽपरः । श्वेतं रक्तं तथा पीतं त्रिवर्णं धारयन्नरः ॥१५॥
स संज्ञां कृतवान्मह्यमपरोऽथ क्व यास्यसि । एवं तस्य ब्रुवाणस्य महन्नाम व्यजायत ॥
तेनापि राजा संवीतः स बुध्यस्वेति चाब्रवीत् ।
एवमुक्ते ततः स्त्री तु तं राजानं रुरोध ह ॥ १७ ॥
मायाततं मा भैष्ट तं[1] ततोऽन्यः पुरुषो नृपम् । संवेष्ट्यास्थितवान्वीरस्ततः सर्वेश्वरेश्वरः ॥
ततोऽन्ये पञ्च पुरुषा आगत्य नृपसत्तमम् । संवेष्ट्य संस्थिताः सर्वे ततो राजनिरोधने ॥
रुध्य राजन्निताः सर्वे एकीभूतास्तु दस्यवः ।
मथितुं शस्त्रमादाय लीनान्योऽन्यं ततो भयात् ॥ २० ॥
तैर्लीनैर्नृपतेर्वेश्म बभौ परमशोभनम् । अन्येषामपि पापानां कोटिः साग्राभवन्नृप ॥
गृहे भूः सलिलं वह्निः सुखशीतश्च मारुतः ।
सावकाशानि शुभ्राणि पञ्चैक्येन गुणानि च ॥ २२ ॥
एकैव तेषां सुचिरं संवेष्ट्यासज्य संस्थितम् । एवं स पशुपालोऽसौ कृतवान्संज्ञां नृप ॥
तस्य तल्लाघवं दृष्ट्वा रूपञ्च नृपतेर्मृधे । त्रिवर्णः पुरुषो राजन्नब्रवीद्राजसत्तमम् ॥२४॥
त्वत्पुत्रोऽस्मि महाराज ब्रूहि किङ्करवाणि ते ।
अस्माभिर्बन्धुमिच्छद्भिर्भवन्तं निश्चयः कृतः ॥ २५ ॥
यदि नाम कृताः सर्वे वयन्देव पराजिताः । एवमेव शरीरेषु लीनास्तिष्ठामः पार्थिव ॥
मय्येके तव पुत्रत्वङ्गते सर्वेषु सम्भवः । एवमुक्तस्ततो राजा तन्नरं पुनरब्रवीत् ॥२७॥
पुत्रो भवति मे कर्त्ता अन्येषामपि सत्तम । पुष्यन्सुखैर्नैरैर्भावैर्नाहं लिप्ये कदाचन ॥
एवमुक्त्वा स नृपतिस्तमात्मजमथाकरोत् । तैर्विमुक्तः स्वयन्तेषां मध्ये स विरराम ह ॥

इति वाराहपुराणे अगस्तिगीतासु एकपञ्चाशोऽध्यायः ।

---

१. तं माभैष्टेति पाठान्तरम् ।

## द्वापञ्चाशोऽध्यायः

अगस्त्य उवाच

स त्रिवर्गो नृपः सृष्टः स्वतन्त्रत्वाच्च पार्थिवः। अहंनामानमसृजत्पुत्रं पुत्रस्त्रिवर्णकः॥
तस्यापि चाभवत्कन्या अवबोधस्वरूपिणी। सा तु विज्ञानदं पुत्रं मनोज्ञं विससर्ज ह॥
तस्यापि सर्वरूपाः स्युस्तनयाः पञ्च भोगिनः।
यथासङ्ख्येन पुत्रास्तु तेषामक्षाभिधानकाः॥ ३॥
एते पूर्वं दस्यवस्तु ततो राज्ञा वशीकृताः। अमूर्त्ता इव ते सर्वे चक्रुरायतनं शुभम्॥
नवद्वारं पुरं तस्य एकस्तम्भं चतुष्पथम्। नद्या सहस्रसङ्कीर्णं जलकृत्यसमाश्रितम्॥
तत्पुरं ते प्रविविशुरेकीभूतास्ततो नव। पुरुषो मूर्त्तिमान्राजा पशुपालोऽभवत् क्षणात्॥
ततस्तत्पुरसंस्थस्तु पशुपालो महानृपः। संसूच्य वाचकान् शब्दान्वेदान्सस्मार तत्पुरे॥
आत्मस्वरूपिणो नित्यांस्तदुक्तानि व्रतानि च।
नियमान् क्रतवश्चैव सर्वान्राजा चकार ह॥ ८॥
स कदाचिन्नृपः खिन्नः कर्मकाण्डमरोचयत्।
सर्वज्ञो योगनिद्रायां स्थित्वा पुत्रं ससर्ज ह।
चतुर्वक्त्रं चतुर्बाहुं चतुर्वेदं चतुष्पथम्॥ ९॥
तस्मात्प्रारभ्य नरतेर्विषयः स्वपदास्थितः। तस्मिन् समुद्रे स नृपो वने तस्मिंस्तथैव च॥
तृणादिषु नृपश्चैव हस्त्यादिषु तथैव च। समोऽभवत्कर्मकाण्डादनुजानन्महामते॥११॥

इति वाराहपुराणे अगस्तिगीतासु द्वापञ्चाशोऽध्यायः।

---

## त्रिपञ्चाशोऽध्यायः

भद्राश्व उवाच

मत्प्रश्नविषये ब्रह्मन् कथेयं कथिता त्वया। तस्याविर्भूतिरभवत्कस्य केन कृतेन ह॥

अगस्त्य उवाच

आगतेयं कथा चित्रा सर्वस्य विषये स्थिता। त्वद्देहे मम देहे च सर्वजन्तुषु सा समा॥
तस्याः सम्भूतिमिच्छन्यस्तस्योपायं स्वयम्परम्।
पशुपालात्समुत्पन्नो यश्चतुष्पाच्चतुर्मुखः॥ ३॥
स गुरुः स कथायास्तु तस्याश्चैव प्रवर्त्तकः। तस्य पुत्रः स्वरो नाम सत्यमूर्त्तिरसौ स्मृतः॥
तेन प्रोक्तन्तु यत्किञ्चिच्चतुर्णां स धनन्नृप।
क्रियार्थानां[1] चतुर्भिस्ते तद्वक्तयाराध्यतां ययुः॥ ५॥

---

१. क्रमर्थानामिति क्वचित्पाठ्यते।

चतुर्णां प्रथमो यस्तु चतुःशृङ्गः समास्थितः ।
वृषद्वितीयस्तत्प्रोक्तमार्गेणैव तृतीयकः ।
चतुर्थस्तत्प्रणीतस्तां पूज्य भक्त्याशु तं व्रजेत् ॥ ६ ॥

सप्तमूर्तेस्तु चरितं शुश्रुवुः प्रथमन्नृप । ब्रह्मचर्येण वर्त्तेत द्वितीयोऽस्य सनातनः ॥ ७ ॥
ततो भृत्यादिभरणं वृषभारोहणं नृषु । वनवासश्च निर्दिष्ट आत्मस्थे वृषभे सति ॥ ८ ॥
अहमस्मिन्वदत्यन्यश्चतुर्द्धा एकधा द्विधा । भेदभिन्नसहोत्पन्नास्तस्यापत्यानि जज्ञिरे ॥
नित्यानित्यस्वरूपाणि दृष्ट्वा पूर्वञ्चतुर्मुखः । चिन्तयामास जनकं कथं पश्याम्यहं नृप॥
मदीयस्य पितुर्ये हि गुणा ह्यासन्महात्मनः । न ते सम्प्रति दृश्यन्ते स्वरापत्येषु केषुचित्॥
पितुः पुत्रस्य यः पुत्रः स पितामहनाम यत् । एवं श्रुतिः स्थिता चेयं स्वरापत्येषु नान्यथा॥

क्वापि सम्पत्स्यते भावो द्रष्टव्यश्चापि ते पिता ।
एवं नीतेऽपि किङ्कार्यमिति चिन्तापरोऽभवत् ॥ १३ ॥

तस्य चिन्तयतः शस्त्रं पितृकम्पुरतो बभौ । तेन पुत्रेण तं रोषान्ममन्थ स्वरमन्तिके ॥
तस्मिन्मथितमात्रे तु शिरस्तस्यातिदुर्ग्रहम् । नारिकेलफलाकारं चतुर्वक्त्रोऽन्वपश्यत ॥
तच्चावृतं प्रधानेन दशधा संवृतो बभौ । चतुष्पादेन शस्त्रेण चिच्छेद तिलकाण्डवत् ॥
प्रकामन्तिलशश्छिन्ने तदमूलो न मे बभौ । अहं त्वहं वदन् भूतन्तमप्येवमथाच्छिनत्॥
तस्मिन् भागे दृशंकृत्वा ह्रस्वमन्यमवेक्षत । अहं भूतादि वः पञ्च वदन्तं भूतिमन्तिकात्॥
तमप्येवमथो छित्त्वा पञ्चासून्यानमीक्षत । कृत्वावकाशन्ते सर्वे ज्वलन्त इदमन्तिकात् ॥
तमप्यसङ्गशस्त्रेण चिच्छेद तिलकाण्डवत् । तस्मिंश्छिन्ने दशांशेन ह्रस्वमन्यमपश्यत ॥
पुरुषं रूपशस्त्रेण तच्छित्त्वान्यमपश्यत । तद्वद्ध्रस्वं सितं सौम्यं तमप्येवं तदाकरोत् ॥
एवङ्कृते शरीरन्तु ददर्श स पुनः प्रभुः । स्वकीयमेव तस्यान्तः पितरं नृपसत्तम ॥२२॥
त्रसरेणुसमं मूर्त्या अव्यक्तं सर्वजन्तुषु । स मे दृष्ट्वा परं हर्षमुभौ हि स स्वरोऽभवत् ॥

एवंविधोऽसौ पुरुषः स्वरनामा महातपाः ।
मूर्त्तिस्तस्य प्रवृत्ताख्यं निवृत्ताख्यं शिरो महत् ॥ २४ ॥

एतस्माद्देव तस्याशु कथया राजसत्तम । सम्भूतिरभवद्राजा विवृतस्त्वेष एव तु ॥
एषेतिहासः प्रथमः सर्वस्य जगतो भृशम् । य इमं वेत्ति तत्त्वेन साक्षात्कर्मपरो भवेत् ॥

इति वाराहपुराणे अगस्तिगीतासु पशुपालोपाख्यानं नाम त्रिपञ्चाशोऽध्यायः ।

---

## चतुःपञ्चाशोऽध्यायः

भद्राश्व उवाच

विज्ञानोत्पत्तिकामस्य क आराध्यो भवेद्द्विज ।
कथञ्चाराध्यते सो हि एतदाख्याहि भो द्विज ॥ १ ॥

अगस्त्य उवाच

विष्णुरेव सदाराध्यः सर्वदेवैरपि प्रभुः । तस्योपायं प्रवक्ष्यामि येनासौ वरदो भवेत्॥
रहस्यं सर्ववेदानां मुनीनां मनुजां तथा । नारायणः परो देवस्तं प्रणम्य न सीदति ॥
श्रूयते च पुरा राजन्नारदेन महात्मना । कथितन्तुष्टिदं विष्णोर्व्रतमप्सरसान्तथा ॥४॥

अप्सरस ऊचुः

भगवन् ब्रह्मतनय भर्तृकामा वयं द्विज । नारायणश्च भर्ता नो यथा स्यात्तत्प्रचक्ष्व नः ॥

नारद उवाच

प्रणामपूर्वकः प्रश्नः सर्वत्र विहितः शुभाः ।
स च मे न कृतो गर्वाद्युष्माभिर्यौवनस्मयात् ॥ ६ ॥
तथापि देवदेवस्य विष्णोर्यन्नाम कीर्तितम् ।
भवतीभिस्तथा भर्त्ता भवत्विति वरः कृतः ।
तन्नामोच्चारणादेव कृतं सर्वं न संशयः ॥ ७ ॥

इदानीं कथयाम्याशु व्रतं येन हरिः स्वयम् । वरदत्वमवाप्नोति भर्तृत्वञ्च नियच्छति ॥

नारद उवाच

वसन्ते शुक्लपक्षस्य द्वादशी या भवेच्छुभा ।
तस्यामुपोष्य विधिवन्निशायां हरिमर्चयेत् ॥ ९ ॥

तस्योपरि रक्तपुष्पैर्मण्डलङ्कारयेद्बुधः । नृत्यवादित्रगीतैश्च जागरन्तत्र कारयेत् ॥१०॥

नमो भवायेति शिरः अनङ्गायेति वै कटिम् ।
कामाय बाहुमूले तु सुशास्त्रायेति चादरम् ॥ ११ ॥

मन्मथायेति पादौ तु हरयेति च सर्वतः । चक्षुर्दिक्षु भृशं तस्य प्रणतस्य ततो नृप ॥
एवङ्कृत्वा प्रभाते तु दापयेद्ब्राह्मणाय च । वेदवेदाङ्गयुक्ताय सम्पूर्णाङ्गाय धीमते ॥१३॥
ब्राह्मणांश्च तथा पूज्य व्रतमेतत्समापयेत् । एवङ्कृते तथा विष्णुर्भर्त्ता वो भविता ध्रुवम् ॥

पश्चात्तु रसमादाय इक्षुकाण्डात्सुशोभनात् ।
पुष्पैः सम्पूज्य देवेशं मल्लिकाजातिभिस्तथा ॥ १५ ॥

अकृत्वा मत्प्रणामन्तु पृष्टो गर्वेण शोभनाः । अवमानस्य तस्यायं विपाको वो भविष्यति॥
एतस्मिन्नेव सरसि अष्टावक्रो महामुनिः । तस्योपहासङ्कृत्वा तु शापं लप्स्यथ शोभनाः॥

व्रतेनानेन देवेशं पतिं लब्ध्वाभिमानतः ।
अवमानेन हरणं गोपालैर्वो भविष्यति ।
पुरा हर्त्ता च कन्यानां देवो भर्त्ता भविष्यति ॥ १८ ॥

अगस्त्य उवाच

एवमुक्त्वा स देवर्षिः प्रययौ नारदः क्षणात् । ता अप्येतद्व्रतञ्चक्रुस्तुष्टश्चासां स्वयं हरिः॥

इति वाराहपुराणे उत्तमभर्तृप्राप्तिव्रतं नाम चतुःपञ्चाशोऽध्यायः ।

---

## पञ्चपञ्चाशोऽध्यायः

अगस्त्य उवाच

शृणु राजन्महाभाग व्रतानामुत्तमं व्रतम् । येन सम्प्राप्यते विष्णुः शुभेनैव न संशयः ॥
मार्गशीर्षस्य मासे तु प्रथमेऽह्नि समारभेत् ।
सिते पक्षे दशम्यान्तु एकभक्तं समाचरेत् ॥ २ ॥
ततो दशम्यां स्नात्वा तु मध्याह्ने विष्णुमर्चयेत् ।
भुक्त्वा सङ्कल्पयेत्प्राग्वद्द्वादशीमक्षतां नृप ॥ ३ ॥
विप्रेभ्यश्च यवान्दद्यात्तामुपोष्य विधानतः । सर्वदा च हरिर्वाच्यो दाने होमे तथार्चने ॥
चातुर्मास्यमथैवन्तु क्षपित्वा राजसत्तम । चैत्रादिषु पुनस्तद्वदुपोष्य प्रयतः सुधीः ॥५॥
सक्तुपात्राणि दद्यात्तु विप्रेभ्यः प्रीतिपूर्वकम् । श्रावणादिषु मासेषु शालीर्दद्यात्प्रयत्नतः ॥
त्रिषु मासेषु यावच्च कार्त्तिकस्यादिरागतः । तमप्येवं क्षपित्वा तु दशम्यां प्रयतः शुचिः॥
अर्चयित्वा हरिं भक्त्या मासनाम्ना विचक्षणः ।
सङ्कल्प्य पूर्ववद्भक्त्या द्वादश्यां संयतेन्द्रियः ॥ ८ ॥
एकादश्यां यथाशक्त्या कारयेत्पृथिवीं नृप । काञ्चनाङ्गाञ्च पाताल कुलपर्वतसंयुताम् ॥
भूमिन्यासविधानेन स्थापयेत्तां हरेः पुरः । सितवस्त्रयुगच्छन्नां सर्वबीजसमन्विताम् ॥
सम्पूज्य प्रियदत्तेति पञ्चरत्नैर्विचक्षणः । जागरं तत्र कुर्वीत प्रभाते तु पुनर्द्विजान् ॥
आमन्त्र्य संख्यया राजंश्चतुर्विंशति यत्नतः । एकैकाय च गान्दद्यादनड्वाहं सदक्षिणम्॥
एकैकं वस्त्रयुग्मञ्च अङ्गुलीयकमेव च । कटकानि च सौवर्णकर्णाभरणकानि च ॥१३॥
एकैकङ्ग्राममेतेषां राजा राजन् प्रदापयेत् । स्वशक्त्या भरणञ्चैव दरिद्रस्य स्वशक्तितः ॥
यथाशक्त्या महीं कृत्वा काञ्चनीङ्गोयुगं तथा । वस्त्रयुग्मञ्च दातव्यं यथाविभवशक्तितः॥
सर्वाभरणसंयुक्ताङ्गाञ्च दद्याद्विशेषतः । एवङ्कृते सकृद्राजन्तुष्टिमायाति वै विभुः ॥१६॥
रौप्यां वा पृथिवीङ्कृत्वा यथाविभवशक्तितः ।
दद्यात्तां ब्राह्मणेभ्यश्च यथाशक्त्या हरिं स्मरन् ॥ १७ ॥
तथा भोजनमेतेषामुपानच्छत्रिकां तथा । पादुके च तथा दद्यात्कृष्णो दामोदरो मम ॥
प्रीयतां सर्वदा देवो विश्वरूपो हरिर्मम । दानं सुभोजनं दत्त्वा सकृद्यत्फलमाप्यते ॥
वर्षाणाञ्च सहस्रेण कीर्त्तितुन्नैव शक्यते । तथाप्युद्देशतः किञ्चित्फलं वक्ष्यामि तेऽनघ॥
व्रतेनानेन यद्वृत्तं शुभं यस्य शृणुष्व तत् । आसीदादियुगे राजा ब्रह्मवादी दृढव्रतः ॥
स पुत्रकामः पप्रच्छ ब्रह्माणं परमेश्वरम् । तस्येदं व्रतमाचख्यौ ब्रह्मा स कृतवान् पुरा ॥
तस्य व्रतान्ते विश्वात्मा स्वयं प्रत्यक्षतां गतः ।
दृष्ट्वा चोवाच भो राजन्वरो मे व्रियतां वरः ॥ २३ ॥

राजोवाच ।

पुत्रं मे देहि देवेश वेदमन्त्रविशारदम् । याजकं यजनासक्तं कीर्त्या युक्तं चिरायुषम् ॥

असंख्यातगुणश्चैव ब्रह्मभूतमकल्मषम् । एवमुक्त्वा ततो राजा पुनर्वचनमब्रवीत्॥२५॥
समाप्येतच्छुभं स्थानं प्रयच्छ परमेश्वर । यत्तन्मुनिपदं नाम यत्र गत्वा न शोचति ॥

एवमस्त्विति तं देवः प्रोक्त्वा चादर्शनं गतः ।
तस्यापि राज्ञः पुत्रोऽभूद्वत्सश्रीर्नाम नामतः ॥ २७ ॥

वेदवेदाङ्गसम्पन्नो यज्ञयाजी बहुश्रुतः । तस्य कीर्त्तिर्महाराज ।वस्तृता धरणीतले ॥२८॥
राजापि तं सुतं लब्ध्वा विष्णुदत्तं प्रतापिनम् । जगाम तपसे युक्तः सर्वद्वन्द्वसहः प्रभुः॥
आराधयामास हरिं निराहारो जितेन्द्रियः । हिमवत्पर्वते रम्ये स्तुतिञ्चापि सदापठत्॥

भद्राश्व उवाच

कीदृशी सा स्तुतिर्ब्रह्मन् यां चकार स पार्थिव ।
किञ्च तस्याभवद्देवं स्तुन्वतः पुरुषोत्तमम् ॥ ३१ ॥

दुर्वासा उवाच

हिमवन्तं समाश्रित्य राजा तद्गतमानसः । स्तुतिञ्चकार देवस्य विष्णोरद्भुतकर्मणः ॥

राजोवाच

क्षराक्षरं क्षीरसमुद्रशायिनं पृथ्वीधरं मूर्त्तिमतां परम्पदम् ।
अतीन्द्रियं विश्वभुजां पुरष्कृतं नीराकृतिं स्तौमि जनार्दनं प्रभुम् ॥३३॥
त्वमादितस्त्वं परमार्थरूपी विभुः पुराणः पुरुषोत्तमश्च ।
अतीन्द्रियो वेदविदां प्रधानः प्रपाहि मां शङ्खगदास्त्रपाणे ॥ ३४ ॥
कृतन्त्वया देव सुरासुराणां सङ्कीर्त्त्यमानेन अनन्तमूर्त्ते ।
सृष्ट्यर्थमेतत्तव देव विष्णो सञ्चेष्टितं कूटगतस्य तत्स्यात् ॥ ३५ ॥
तथापि कूर्मत्वमृगत्वमुच्चैस्त्वया कृतं रूपमनेकरूप ।
सर्वज्ञभावादसकृच्च जन्म सङ्कीर्त्त्यते तेऽच्युत नैतदस्ति ॥ ३६ ॥
नृसिंह वामन नमो जमदग्निनाम दशास्यगोत्रान्तक वासुदेव ।
नमोऽस्तु ते बुद्ध कल्किन्सुरेश[1] शम्भो नमस्ते विबुधारिनाशन ॥ ३७ ॥
नमोऽस्तु नारायण पद्मनाभ नमो नमस्ते पुरुषोत्तमाय ।
नमः समस्तामरसङ्घपूज्य नमोऽस्तु ते सर्वविदां प्रधान ॥ ३८ ॥
नमः करालास्य नृसिंहमूर्त्ते नमो विशालाद्रिसमान कूर्म ।
नमः समुद्रप्रतिमान मत्स्य नमामि त्वां क्रोडरूपिन्ननन्त ॥ ३९ ॥
सृष्ट्यर्थमेतत्तव देव चेष्टितं न मुख्यपक्षे तव मूर्त्तिता विभो ।
अजानता ध्यानमिदं प्रकाशितं न लक्ष्यसे त्वं पुरुषः पुराणः ॥ ४० ॥
आद्यो मखस्त्वं स्वयमेव विष्णो मखाङ्गभूतोऽसि हविस्त्वमेव ।
पशुर्भवान् ऋत्विगाज्यन्त्वमेव त्वां देवसङ्घा मुनयो यजन्ति ॥ ४१ ॥

---

१. वरेश इति कुत्रचिद्वा पाठः ।

चलाचलं जगदेतच्च यस्मिन् सुरादिकालानलसंस्थमुत्तमम् ।
न त्वं विभक्तोऽसि जनार्दनेश प्रयच्छ सिद्धिं हृदयेप्सितां मे ॥ ४२ ॥
नमः कमलपत्राक्ष मूर्त्तामूर्त्त नमो हरे । शरणन्त्वां प्रपन्नोऽस्मि संसारान्मां समुद्धर ॥
एवं स्तुतस्ततो देवस्तेन राज्ञा महात्मना । विशालाम्रतलस्थेन तुतोष परमेश्वरः ॥४४॥
कुब्जरूपस्ततो भूत्वा आजगाम हरिः स्वयम् ।
तस्मिन्नागतमात्रे तु सोऽप्याम्रः कुब्जकोऽभवत् ॥ ४५ ॥
तद्दृष्ट्वा महदाश्चर्यं स राजा शंसितव्रतः ।
विशालस्य कथं कौब्जमिति चिन्तापरोऽभवत् ॥ ४६ ॥
तस्य चिन्तयतो बुद्धिर्जातेयं ब्राह्मणम्प्रति । अनेनागतमात्रेण कृतमेतन्न संशयः ॥४७॥
एतस्मादेव भविता भगवान्पुरुषोत्तमः । एवमुक्त्वा नमश्चक्रे तं विप्रं स नृपोत्तमः ॥४८॥
अनुग्रहाय भगवन्नूनं त्वं पुरुषोत्तमः । आगतोऽसि स्वरूपं मे दर्शयस्वाधुना हरे ॥४९॥
एवमुक्तस्तदा देवः शङ्खचक्रगदाधरः । बभौ तत्पुरतः सौम्यो वाक्यञ्चेदमुवाच ह ॥५०॥
वरं वृणीष्व राजेन्द्र यत्ते मनसि वर्त्तते । मयि प्रसन्ने त्रैलोक्यं तिलमात्रमिति प्रभो ॥
एवमुक्तस्ततो राजा हर्षोत्फुल्लितलोचनः । मोक्षं प्रयच्छ देवेशेत्युक्त्वा नोवाच किञ्चन ॥
एवमुक्तः स भगवान् पुनर्वाक्यमुवाच ह ॥ ५३ ॥
मय्यागते विशालोऽयमाम्रः कुब्जत्वमागतः ।
यस्मात्तस्मात्तीर्थमिदं कुब्जकाम्रं भविष्यति ॥ ५४ ॥
तिर्यग्योन्यादयोऽप्यस्मिन् ब्राह्मणा वा यदि स्वकम् ।
कलेवरं त्यजिष्यन्ति तेषां पञ्च शतानि च ।
विमानानि भविष्यन्ति योगिनो मुक्तिरेव च ॥ ५५ ॥
एवमुक्त्वा नृपं देवः शङ्खाग्रेण जनार्दनः । स्पृश्य संस्पृष्टमात्रोऽसौ परं निर्वाणमाप्तवान् ॥
तस्मात्त्वमपि राजेन्द्र तं देवं शरणं व्रज । येन भूयः पुनः शोच्यपदवीं नो प्रयास्यसि ॥
य इदं शृणुयान्नित्यं प्रातरुत्थाय मानवः । पठेद्यश्चरितन्ताभ्यां मोक्षधर्मार्थदो भवेत् ॥
शुभ्रव्रतमिदं पुण्यं यश्च कुर्याज्जनेश्वर । स सर्वसम्पदश्चेह भुक्त्वान्ते तल्लयं व्रजेत् ॥
इति वाराहपुराणे शुभ्रव्रतं नाम पञ्चपञ्चाशोऽध्यायः ।

---

## षट्पञ्चाशोऽध्यायः

अगस्त्य उवाच

अतः परं प्रवक्ष्यामि धन्यव्रतमनुत्तमम् । येन सद्यो भवेद्धन्यः अधनोऽपि हि यो भवेत् ॥
मार्गशीर्षे सिते पक्षे प्रतिपद्या तिथिर्भवेत् । तस्यां नक्तं प्रकुर्वीत विष्णुमग्निं प्रपूजयेत् ॥
वैश्वानराय पादौ तु अग्नयेत्युदरं तथा । हविर्भुजाय च उरो द्रविणोदेति वै भुजौ ॥
संवर्त्तायेति च शिरो ज्वलनायेति सर्वतः । अभ्यर्च्यैवं विधानेन देवदेवं जनार्दनम् ॥
तस्यैव पुरतः कुण्डं कारयित्वा विधानतः । होमं तत्र प्रकुर्वीत एभिर्मन्त्रैर्विचक्षणः ॥

ततः सयावकञ्चान्नं भुञ्जीयाद्घृतसंयुतम् । कृष्णपक्षेऽप्येवमेव चातुर्मास्यन्तु यावता॥
चैत्रादिषु च भुञ्जीत पायसं सघृतं बुधः । श्रावणादिषु सक्तूंश्च ततश्चैतत्समाप्यते ॥
समाप्ते तु व्रते वह्निं काञ्चनं कारयेद्बुधः । रक्तवस्त्रयुगच्छन्नं रक्तपुष्पानुलेपनम् ॥८॥
कुङ्कुमेन तथालिप्य ब्राह्मणं सत्त्वमेव च । सर्वावयवसम्पूर्णं ब्राह्मणं प्रियदर्शनम् ।
पूजयित्वा विधानेन रक्तवस्त्रयुगेन च । दद्यात्पश्चाच्च तं तस्य मन्त्रेणानेन बुद्धिमान् ॥

धन्योऽस्मि धन्यकर्मास्मि धन्यचेष्टोऽस्मि धन्यवान् ।
धन्येनानेन चीर्णेन व्रतेन स्यां सदा सुखी ॥ ११ ॥
एवमुच्चार्य तं विप्रे न्यस्य कोशं महात्मने ।
सद्यो धन्यत्वमाप्नोति योऽपि स्याद्भोगवर्जितः ॥ १२ ॥

इह जन्मनि सौभाग्यं धनं धान्यञ्च पुष्कलम् । अनेन कृतमात्रेण जायते नात्र संशयः ॥
प्राग्जन्मजनितं यावदग्निर्दहति पापकम्[1] । दग्धे पापे विमुक्तात्मा इह जन्मन्यसौ भवेत्॥

योऽपीदं शृणुयान्नित्यं यश्च भक्त्या पठेन्नरः[2] ।
उभौ ताविह लोकौ तु धन्यौ सद्यो भविष्यतः ॥ १५ ॥

श्रूयते च व्रतञ्चैतच्चीर्णमासीन्महात्मना । धनदेन पुरा कल्पे शूद्रायोनौ स्थितेन हि॥

इति वाराहपुराणे धन्यव्रतं नाम षट्पञ्चाशोऽध्यायः ।

---

## सप्तपञ्चाशोऽध्यायः

अगस्त्य उवाच

अतः परं प्रवक्ष्यामि कान्तिव्रतमनुत्तमम् । यत्कृत्वा तु पुरा सोमः कान्तिमानभवत्पुनः॥

यक्ष्मणा दक्षशापेन पुरा क्रान्तो निशाचरः ।
एतच्चीर्त्वा व्रतं सद्यः कान्तिमानभवत्किल ॥ २ ॥

द्वितीयायान्तु राजेन्द्र कार्त्तिकस्य सितन्दिनम् । नक्तं कुर्वीत यत्नेन अर्चयन् बलकेशवम्॥
बलदेवाय पादौ तु केशवाय शिरोऽर्चयेत् । एवमभ्यर्च्य मेधावी वैष्णवं रूपमुत्तमम् ॥
परन्तु रूपं सोमाख्यं द्विकलं तद्दिने हि यत् । तस्य देवस्य चार्घ्यन्तु दद्यान्मन्त्रेण सुव्रत॥
नमोऽस्त्वमृतरूपाय स वै विधिवराय च । यज्ञलोकाधिपतये सोमाय परमात्मने ॥६॥

रात्रौ स विप्रो भुञ्जीत यवान्नं सघृतन्नरः ॥ ७ ॥

फाल्गुनादिचतुष्कन्तु पायसम्भक्षयेच्छुचिः । शालिहोमं प्रकुर्वीत कार्त्तिके तु यवैस्तथा॥
आषाढादिचतुष्के तु तिलहोमन्तु कारयेत् । तद्वत्तिलान्नं भुञ्जीत एष एव विधिः स्मृतः॥
ततः संवत्सरे पूर्णे काञ्चनं शशिनं व्रती । सितवस्त्रयुगच्छन्नं सितपुष्पानुलेपनम् ॥१०॥
दद्याद्द्विजाय सम्पूज्य काञ्चनं शशिनं तथा । अथ संवत्सरे पूर्णे कृत्वा सोमन्तु राजतम्॥

---

१. पातकमिति पाठान्तरम् । २. पठेद्द्विज इत्यपि पाठः क्वचिदुपलभ्यते ।

सितवस्त्रयुगच्छन्नं सितपुष्पानुलेपनम् । एवमेव द्विजं पूज्य ततस्तं प्रतिपादयेत् ॥ १२ ॥
कान्तिमानपि लोकेऽस्मिन् सर्वज्ञः प्रियदर्शनः। त्वत्प्रसादात्सोमरूपिन्नारायण नमोऽस्तु ते॥
अनेन किल मन्त्रेण दत्त्वा विप्राय वाग्यतः ।
दत्तमात्रे ततस्तस्मिन् कान्तिमाञ्जायते नरः ॥ १४ ॥
आत्रेयेणापि सोमेन कृतमेतत्पुरा नृप । तस्य व्रतान्ते सन्तुष्टः स्वयमेव जनार्दनः ॥१५॥
यक्ष्माणमपनीयाशु अमृताख्यां कलां ददौ । तां कलां सोमराजासौ तपसा लब्धवान्निशि॥
सोमत्वञ्चागमत्सोमो द्विजराजत्वमेव च ।
द्वितीयामश्विनौ सोमभुजौ कीर्त्यौ तु तद्दिने ॥ १७ ॥
तौ शेषविष्णुविख्यातौ शुक्लपक्षौ न संशयः । न विष्णोर्व्यतिरिक्तः स्याद्दैवतं नृपसत्तम ।
नामभेदेन सर्वत्र संस्थितः पुरुषोत्तमः ॥ १८ ॥
इति वाराहपुराणे कान्तिव्रतं नाम सप्तपञ्चाशोऽध्यायः ।

---

# अष्टपञ्चाशोऽध्यायः

अगस्त्य उवाच

अतःपरं महाराज सौभाग्यकरणं व्रतम् । शृणु येनाशु सौभाग्यं स्त्रीपुंसोरुपजायते ॥
फाल्गुनस्य तु मासस्य तृतीया शुक्लपक्षगा । उपासितव्या नक्तेन शुचिना सत्यवादिना॥
सस्त्रीकञ्च हरिं पूज्य रुद्रं वा चोमया सह ।
या श्रीः सा गिरिजा प्रोक्ता यो हरिः स त्रिलोचनः ॥ ३ ॥
एवं सर्वेषु शास्त्रेषु पुराणेषु च गद्यते । एतस्मादन्यथा यस्तु ब्रूते शास्त्रं पृथक्तया ॥४॥
रुद्रो जनानां मर्त्यानां काव्यं शास्त्रं न तद्भवेत् ।
विष्णुं रुद्रकृतं ब्रूयाच्छ्रीगौरीति निगद्यते ॥ ५ ॥
एतयोरन्तरं[1] ब्रूयात् सोऽधमेत्युच्यते जनैः ।
तं नास्तिकं विजानीयात्सर्वधर्मबहिष्कृतम् ॥ ६ ॥
एवं ज्ञात्वा सलक्ष्मीकं हरिं सम्पूज्य यत्नतः । मन्त्रेणानेन राजेन्द्र ततस्तं परमेश्वरम् ॥
गम्भीरायेति पादौ तु सुभगायेति वै कटिम् । उदरं देवदेवाय त्रिनेत्रायेति वै मुखम् ॥
शिरश्च वाचस्पतये रुद्रायेति च सर्वतः ।
एवमभ्यर्च्य मेधावी विष्णुं लक्ष्म्या समन्वितम् ॥ ९ ॥
हरं वा गौरीसंयुक्तं गन्धपुष्पादिभिः क्रमात् ।
ततस्तस्याग्रतो होमं कारयेन्मधुसर्पिषा ।
तिलैः सह महाराज सौभाग्यपतयेति च ॥ १० ॥

---

१. यश्चेति पाठान्तरम्

ततस्त्वक्षारविरसं निःस्नेहं धरणीतले । गोधूमान्नन्तु भुञ्जीत कृष्णेऽप्येवं विधिः स्मृतः ॥
आषाढादिद्वितीया तु पारणां तत्र कल्पयेत । यवान्नेन ततः पश्चात्कार्त्तिकादिषु पार्थिव॥
श्यामाकं तत्र भुञ्जीत त्रीन्मासान्नियतः शुचिः ॥ १३ ॥
ततो माघसिते पक्षे तृतीयायां नराधिप ।
सौवर्णं कारयेद्गौरीं रुद्रञ्चैकत्र बुद्धिमान् ।
सलक्ष्मीकं हरिं वापि यथाशक्त्या प्रसन्नधीः ॥ १४ ॥
ततस्तान् ब्राह्मणे दद्यात्पात्रभूते विचक्षणे ।
अन्नेन हीने वेदानां पारगे साधुवर्त्तिनि ।
सदाचारेऽथ वा दद्याद्विष्णुभक्ते विशेषतः ॥ १५-१६ ॥
षड्भिः पात्रैरुपेतन्तु ब्राह्मणाय निवेदयेत् । एकं मधुमयं पात्रं द्वितीयं घृतपूरितम् ।
तृतीयं तिलतैलस्य चतुर्थं गुडसंयुतम् । पञ्चमं लवणैः पूर्णं षष्ठं गोक्षीरसंयुतम् ॥१७-१८॥
एतानि दत्त्वा पात्राणि सप्तजन्मान्तरे भवेत् ।
सुभगो दर्शनीयश्च नारी वा पुरुषोऽपि वा ॥ १९ ॥

इति वाराहपुराणे सौभाग्यव्रतं नाम अष्टपञ्चाशोऽध्यायः ।

---

# ऊनषष्टितमोऽध्यायः

अगस्त्य उवाच

अथ विघ्नहरं राजन् कथयामि शृणुष्व मे । सम्यक्कृतेन येनाशु न विघ्नैः परिभूयते ॥
चतुर्थ्यां फाल्गुने मासि ग्रहीतव्यं व्रतन्त्विदम् ।
नक्ताहारेण राजेन्द्र तिलान्नं पारणं स्मृतम् ॥ २ ॥
तदेवाग्नौ तु होतव्यं ब्राह्मणाय च तद्भवेत् । चातुर्मास्यं व्रतञ्चैतत्कृत्वा वै पञ्चमे तथा॥
विप्राय दद्यात्सौवर्णं गजवक्त्रं सुपूजितम् । पायसैः पञ्चभिः पात्रैरुपेतन्तु तिलैस्तथा ॥
एवं कृत्वा व्रतञ्चैतत्सर्वविघ्नैर्विमुच्यते । हयमेधस्य विघ्ने तु सञ्जाते सगरस्तथा ॥
एतदेव चरित्वा तु हयमेधं स आप्तवान् । तथा रुद्रेण देवेन त्रिपुरं निघ्नता पुरा ॥६॥
एतदेव कृतन्तस्मात्त्रिपुरस्तेन पातितः । मया समुद्रं पिबता एतदेव कृतं व्रतम् ॥ ७ ॥
अन्यैरपि महीपालैरेतदेव कृतं पुरा । तपोऽर्थिभिर्ज्ञानकृद्भिरविघ्नार्थं परन्तप ॥ ८ ॥
शूराय धीराय गजाननाय लम्बोदरायैकदंष्ट्राय चैव ।
एवं सम्पूज्य तद्दिने पुण्यकृद्भिर्होमं कुर्याद्विघ्ननाशस्य हेतोः ॥ ९ ॥
अनेन कृतमात्रेण सर्वविघ्नैः प्रमुच्यते । विनायकस्य दानेन कृतकृत्यो नरो भवेत् ॥

इति वाराहपुराणे अविघ्नव्रतं नाम ऊनषष्टितमोऽध्यायः ।

# षष्टितमोऽध्यायः

अगस्त्य उवाच

शान्तिव्रतं प्रवक्ष्यामि तव राजन् शृणुष्व तत् ।
येन चीर्णेन शान्तिः स्यात्सर्वदा गृहमेधिनाम् ॥ १ ॥
पञ्चम्यां शुक्लपक्षस्य कार्त्तिके मासि सुव्रत । आरम्भे वर्षमेकन्तु भुञ्जीयादुष्णवर्जितम् ॥
नक्ते देवन्तु सम्पूज्य हरिं शेषोपरि स्थितम् ।
अनन्तायेति पादौ तु कटिं वासुकिने नमः ॥ ३ ॥
तक्षकायेति जठरमुरः कर्कोटकाय च । पद्माय कण्ठं सम्पूज्य महापद्माय दोर्युगम् ॥
शङ्खपालाय वक्त्रन्तु कुटिलायेति वै शिरः । एवं विष्णुगतं पूज्य पृथगेव च पूजयेत् ॥
क्षीरेण स्नपनं कुर्याच्चानुद्दिश्य हरेः पुनः । तदग्रे होमयेत् क्षीरं तिलैः सह विचक्षणः ॥
एवं संवत्सरस्यान्ते ब्राह्मणान् भोजयेत्ततः ।
नागन्तु काञ्चनं कुर्याद्ब्राह्मणाय निवेदयेत् ॥ ७ ॥
एवं यः कुरुते भक्त्या व्रतमेतन्नराधिप । तस्य शान्तिर्भवेन्नूनं नागेभ्यो न भयं तथा ॥

इति वाराहपुराणे शान्तिव्रतं नाम षष्टितमोऽध्यायः ।

---

# एकषष्टितमोऽध्यायः

अगस्त्य उवाच

कामव्रतं महाराज शृणु मे गदतोऽधुना ।
येन कामाः समृद्ध्यन्ते मनसा चिन्तिता अपि ॥ १ ॥
षष्ठ्यां फलाशनो यस्तु वर्षमेकं व्रतं चरेत् । पौषमासे सिते पक्षे पञ्चम्यां कृतभाजनः ॥
षष्ठ्यान्तु प्राशयेद्धीमान्प्रथमन्तु फलं नृप । ततो भुञ्जीत यत्नेन वाग्यतः शुद्धमोदनम् ॥
ब्राह्मणैः सह राजेन्द्र अथवा केवलैः फलैः । तमेकं दिवसं स्थित्वा सप्तम्यां पारयेन्नृप ॥
अग्निकार्यन्तु कुर्वीत गुहरूपेण केशवम् । पूजयित्वा विधानेन वर्षमेकं व्रतं चरेत् ॥
षड्वक्त्रः कार्त्तिकेयश्च सेनानीः कृत्तिकासुतः ।
कुमारः स्कन्द इत्येवं पूज्यो विष्णुः स्वनामभिः ॥ ६ ॥
समाप्तौ तु व्रतस्यास्य कुर्याद्ब्राह्मणभोजनम् । षण्मुखं मूर्त्तसौवर्णं ब्राह्मणाय निवेदयेत् ॥
सर्वे कामाः समृद्ध्यन्तां मम देव कुमारक ।
त्वत्प्रसादादिमं भक्त्या गृह्यतां विप्र मा चिरम् ॥ ८ ॥
अनेन दत्तमात्रेण ब्राह्मणाय सवस्त्रकम् । ततः कामाः समृद्ध्यन्ते सर्वे वै इह जन्मनि ॥
अपुत्रो लभते पुत्रं अधनो [1]लभते धनम् । भ्रष्टराज्यो लभेद्राज्यं नात्र कार्या विचारणा ॥

---

१. धनार्थीति वा पाठः ।

एतद्व्रतं पुरा चीर्णं नलेन नृपसत्तम । ऋतुपर्णस्य विषये वसता व्रतचर्यया ॥ ११ ॥
तथा राज्यच्युतैरन्यैर्बहुभिर्नृपसत्तमैः । पौराणिकैर्व्रतञ्चैव सिद्ध्यर्थं नृपसत्तम ॥

इति वाराहपुराणे कामव्रतं नाम एकषष्टितमोऽध्यायः ।

---

# द्विषष्टितमोऽध्यायः

अगस्त्य उवाच

अथापरं महाराज व्रतमारोग्यसंज्ञितम् । कथयामि परं पुण्यं सर्वपापप्रणाशनम् ॥१॥
आदित्य भास्कर रवे भानो सूर्य दिवाकर । प्रभाकरेति सम्पूज्य एवं व्रतमुपाचरेत् ॥
षष्ठ्याञ्चैव कृताहारः सप्तम्यां भानुमर्चयेत् । अष्टम्याञ्चैव भुञ्जीत एष एव विधिक्रमः॥
अनेन वत्सरं पूर्णं विधिना योऽर्चयेद्रविम् । तस्यारोग्यं धनं धान्यमिह जन्मनि जायते॥
परत्र च शुभं स्थानं यद्गत्वा न निवर्त्तते । सार्वभौमः पुरा राजा अनरण्यो महाबलः ॥
तेनायमर्चितो देवो व्रतेनानेन पार्थिव । यस्य तुष्टो वरं[1] देवः प्रादादारोग्यमुत्तमम् ॥६॥

भद्राश्व उवाच

किमसौ रोगवान्राजा येनारोग्यमवाप्तवान् । सार्वभौमस्य च कथं ब्रह्मन्रोगस्य सम्भवः॥

अगस्त्य उवाच

स राजा सार्वभौमोऽभूद्यशस्वी च सुरूपवान् ।
स कदाचिन्महाराज नृपश्रेष्ठो महाबलः ॥ ८ ॥
गतवान्मानसं दिव्यं सरो देवगणान्वितम् । तत्रापश्यद्बृहत्पद्मं सरोमध्यगतं सितम् ॥
तत्र चाङ्गुष्ठमात्रन्तु स्थितं पुरुषसत्तमम् । रक्तवासोभिराच्छन्नं द्विभुजन्तिग्मतेजसम् ॥
तं दृष्ट्वा सारथिम्प्राह पद्ममेतन्ममानय । इदन्तु शिरसा बिभ्रत्सर्वलोकस्य सन्निधौ ॥
श्लाघनीयो भविष्यामि तस्मादानय मा चिरम् ।
एवमुक्तस्तदा तेन सारथिः प्रविवेश ह ॥ १२ ॥
ग्रहीतुमुपचक्राम तत्पद्मं नृपसत्तम । स्पृष्टमात्रे ततः पद्मे हुङ्कारः समजायत ॥ १३ ॥
तेन शब्देन वित्रस्तः स पपात ममार च । राजा च तत्क्षणादेव शब्देन समपद्यत ॥
कुष्ठी विगतवर्णश्च बलवीर्यविवर्जितः । तथागतमथात्मानं दृष्ट्वा स पुरुषर्षभः ॥ १५ ॥
तस्थौ तत्रैव शोकार्त्तः किमेतदिति चिन्तयन् ।
तस्य चिन्तयतो धीमानाजगाम महातपाः ॥ १६ ॥
वसिष्ठो ब्रह्मपुत्रोऽथ स तं पप्रच्छ पार्थिवम् । कथन्ते राजशार्दूल इह देहस्य शासनम्॥
इदानीं मे च किङ्कार्यं तन्ममाचक्ष्व पृच्छतः । एवमुक्तस्ततो राजा वसिष्ठेन महात्मना ॥
सर्वं पद्मस्य वृत्तान्तं कथयामास च प्रभुः । तं श्रुत्वा स मुनिस्तत्र साधु राजन्तथाब्रवीत्॥

---

१. अभवद्देव इति क्वचित्पठ्यते ।

असाधुरथ चातिष्ठस्तस्मात्कुष्ठित्वमागतः । एवमुक्तस्तदा राजा वेपमानः कृताञ्जलिः ॥
पप्रच्छ साध्वहं विप्र कथं वासाध्वहं मुने । कथं मे कुष्ठं सञ्जातमेतन्मे वक्तुमर्हसि ॥

वसिष्ठ उवाच

एतद्ब्रह्मोद्भवं नाम पद्मं त्रैलोक्यविश्रुतम् । दृष्टमात्रेण चानेन दृष्टाः स्युः सर्वदेवताः ॥
एतस्मिन्दृश्यते चैतत् षण्मासं क्वापि पार्थिव ।
एतस्मिन्दृष्टमात्रे तु यो जलं विशते नरः ॥ २३ ॥
सर्वपापविनिर्मुक्तः परं निर्वाणमर्हति । ब्रह्मणः प्रागवस्थायां मूर्त्तिरप्सु व्यवस्थिता ॥
एतां दृष्ट्वा जले मग्नः संसाराब्धिं प्रमुच्यते । इमञ्च दृष्ट्वा ते सूतो जले मग्नो नरोत्तम॥
प्रविष्टश्च पुनरिमं हन्तुमिच्छन्नराधिप । प्राप्तवानसि दुर्बुद्धे कुष्ठित्वं पापपुरुष । । २६ ॥
दृष्टमेतत्त्वया यस्मात्त्वं साध्विति ततः प्रभो ।
मयोक्तो मोहमापन्नस्तेनासाधुरितीरितः ॥ २७ ॥
ब्रह्मपुत्रो वदन्नेवं नृपमन्तर्हितोऽभवत् । स तद्वचनमाकर्ण्य राजापि परमेश्वरम् ॥२८॥
अहन्यहनि चागच्छत्तं पुनर्द्दष्टवानपि । देवा अपि वदन्त्येते पद्मं काञ्चनमुत्तमम् ॥
मानसे ब्रह्मपद्मन्तु दृष्ट्वा चात्रागतं हरिम् । प्राप्स्यामस्तत्परं ब्रह्म यद्गत्वा न पुनर्भवेत्॥
इदञ्च कारणं चान्यत्कुष्ठस्य शृणु पार्थिव ।
आदित्यः पद्मगर्भोऽस्मिन्स्वयमेव व्यवस्थितः ॥ ३१ ॥
तं दृष्ट्वा तत्त्वतो भावः परमात्मैष शाश्वतः ।
धारयामि शिरस्येनं ततः ख्यातिर्भविष्यति ॥ ३२ ॥
इतीमं भावमास्थाय सूतोऽयं प्रेषितस्त्वया ।
तत्क्षणादेव स मृतः त्वञ्च कुष्ठित्वमागतः ॥ ३३ ॥
तस्मात्त्वमपि राजेन्द्र व्रतमेतत्समाचर । व्रतस्यास्य प्रभावेण कुष्ठरोगात्प्रमुच्यसे ॥३४॥

इति वाराहपुराणे आरोग्यव्रतं नाम द्विषष्टितमोऽध्यायः ।

---

## त्रयःषष्टितमोऽध्यायः

अगस्त्य उवाच

अथापरं महाराज पुत्रप्राप्तिव्रतं शुभम् । कथयामि समासेन तन्मे निगदतः शृणु ॥
मासे भाद्रपदे या तु कृष्णपक्षे नरेश्वर । अष्टम्यामुपवासेन पुत्रप्राप्तिव्रतं हि तत् ॥२॥
सप्तम्याञ्चैव सङ्कल्प्या अष्टम्यामर्चयेद्धरिम्[1] ।
देवक्युत्सङ्गगं विष्णुं मातृभिः परिवेष्टितम् ॥ ३ ॥
प्रभाते विमलेऽष्टम्यामर्चयेत्प्रयतो हरिम् ।
प्राग्विधानेन गोविन्दमर्चयित्वा विधानतः ॥ ४ ॥

---

१. षष्ठ्याञ्चैव तु सङ्कल्प्य सप्तम्यां पूजयेद्धरिमिति, क्वचित्पुस्तके पठ्यते ।

ततो यवैः कृष्णतिं सघृतैर्होमयेद्दधि । ब्राह्मणान्भोजयेद्भक्त्या यथा शक्त्या सदक्षिणम् ॥
ततः स्वयन्तु भुञ्जीत प्रथमं बिल्वमुत्तमम् । पश्चाद्यथेष्टं भुञ्जीत स्नेहैः सर्वरसैर्युतम् ॥६॥
प्रतिमासमनेनैव विधिनोपोष्य मानवः । कृष्णाष्टम्यां व्रतं कृत्वा अपुत्रः पुत्रवान्भवेत्॥
श्रूयते च पुरा राजा शूर ेनः प्रतापवान् । अपुत्रः स तपस्तेपे पर्वते च हिमालये ॥
तस्यैवं कुर्वतो देवो व्रतमेतज्जगाद ह । सोऽप्येतत्कृतवान्राजा पुत्रञ्चैवोपलब्धवान् ॥९॥
वसुदेवं महाभागमनेकव्रतयाजिनम् । तं लब्ध्वा सोऽपि राजर्षिः परं निर्वाणमाप्तवान्॥
एवं कृष्णाष्टमी राजन्मया ते परिकीर्त्तिता । संवत्सरान्ते दातव्यं गोयुग्मन्तु द्विजातये ॥
एतत्पुत्रव्रतं नाम मया ते परिकीर्त्तितम् । एतत्कृत्वा नरः पापैः सर्वैरेव प्रमुच्यते ॥१२॥

इति वाराहपुराणे पुत्रप्राप्तिव्रतं नाम त्रयःषष्टितमोऽध्यायः ।

## चतुःषष्टितमोऽध्यायः

अगस्त्य उवाच

अथापरं प्रवक्ष्यामि शौर्यव्रतमनुत्तमम् ।
येन भीरोरपि महच्छौर्यं[1] भवति तत्क्षणात् ॥ १ ॥
मासि चाश्वयुजे शुद्धां नवमीं समुपोषयेत् ।
सप्तम्यां कृतसङ्कल्पः स्थित्वाष्टम्यां निरोदनः ।
नवम्यां प्राशयेत्पिष्टं प्रथमं भक्तितो नृप ॥ २ ॥
ब्राह्मणान्भोजयेद्भक्त्या देवीञ्चैव तु पूजयेत् ।
दुर्गां देवीं महाभागां महामायां महाप्रभाम् ॥ ३ ॥

एवं संवत्सरं यावदुपोष्येति विधानतः । व्रतान्ते भोजयेद्धीमान्यथाशक्त्या कुमारिकाः ॥
हेमवस्त्रादिभिस्तास्तु भूषयित्वा तु शक्तितः । पश्चात्क्षमापयेत्तान्तु देवी मे प्रीयतामिति॥

एवं कृते भ्रष्टराज्यो लभेत् राज्यं न संशयः ।
अविद्यो लभते विद्यां भीतः शौर्यञ्च विन्दति ॥ ६ ॥

इति वाराहपुराणे शौर्यव्रतं नाम चतुःषष्टितमोऽध्यायः ।

## पञ्चषष्टितमोऽध्यायः

अगस्त्य उवाच

सार्वभौमव्रतञ्चान्यत्कथयामि समासतः । येन सम्यक् कृतेनाशु सार्वभौमो नृपो भवेत्॥
कार्त्तिकस्य तु मासस्य दशमी शुक्लपक्षगा ।
तस्यां नक्ताशनो भूत्वा दिक्षु शुद्धबलिं हरेत् ॥ २ ॥

१. अष्टमीति पाठान्तरम् ।

विचित्रैः कुसुमैर्भक्त्या पूजयित्वा द्विजोत्तमान् ।
दिशान्तु प्रार्थनां कुर्यान्मन्त्रेणानेन सुव्रतः ॥ ३ ॥
सर्वा भवत्यः सिध्यन्तु मम जन्मनि जन्मनि ।
एवमुक्त्वा बलिन्ताभ्यो दत्त्वा शुद्धेन चेतसा ॥ ४ ॥
ततो रात्रौ स भुञ्जीत दध्यन्नन्तु सुसंस्कृतम् । पूर्वं पश्चाद्यथेष्टन्तु एवं संवत्सरं नृप ॥५॥
यः करोति नरो नित्यं तस्य दिग्विजयो भवेत् ।
एकादश्यां निराहारो नरः कुर्याद्यथाविधि ॥ ६ ॥
मार्गशीर्षे शुक्लपक्षादारभ्याब्दं विचक्षणः । तद्व्रतं धनदस्येष्टं कृतं वित्तं प्रयच्छति ॥७॥
एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने ।
शुक्ले वाप्यथवा कृष्णे तद्व्रतं वैष्णवं महत् ॥ ८ ॥
एवञ्चीर्णं सुघोराणि हन्ति पापानि पार्थिव । त्रयोदश्यान्तु नक्तेन धर्मव्रतमथोच्यते ॥
शुक्लपक्षे फाल्गुनस्य तथारभ्य विचक्षणः । रौद्रव्रतं चतुर्दश्यां कृष्णपक्षे विशेषतः ॥१०॥
माघमासात्तथारभ्य पूर्णं संवत्सरं नृप ।
इदं व्रतन्तु पञ्चम्यां शुक्लायां नक्तभोजनम् । पितृव्रतममायां स्यादिति राजन्तथेरितम् ॥
दश पञ्च च वर्षाणि य एवं कुरुते नृप । तिथिव्रतादिकं तस्य फलं स्यात्तत्प्रमाणतः ॥१२॥
अश्वमेधसहस्राणि राजसूयशतानि च । यष्टानि तेन राजेन्द्र कल्पोक्तव्रतकारिणा ॥१३॥
एकमेव कृतं हन्ति व्रतं पापानि नित्यशः ॥ १४ ॥
यः पुनः सर्वमेतद्धि कुर्यान्नरवरात्मजः । स शुद्धो विरजाल्ँलोकानाप्नोति सकलान्नृप॥

इति वाराहपुराणे भगवच्छास्त्रे अगस्तिगीतासु सार्वभौमव्रतं नाम
पञ्चषष्टितमोऽध्यायः ।

---

## षट्षष्टितमोऽध्यायः

भद्राश्व उवाच

आश्चर्यं यदि ते किञ्चिद्विदितं दृष्टमेव च । तन्मे कथय धर्मज्ञ परं कौतूहलं महत् ॥१॥

अगस्त्य उवाच

आश्चर्यरूपो भगवानेष एव जनार्दनः । तस्याश्चर्याणि दृष्टानि बहूनि विविधानि वै ॥
श्वेतद्वीपगतः पूर्वं नारदः किल पार्थिव । सोऽपश्यच्छङ्खचक्राब्जान्पुरुषांस्तिग्मतेजसः ॥
अयं विष्णुरयं विष्णुरेष विष्णुः सनातनः ।
चिन्ताऽभूत्तस्य तान्दृष्ट्वा कोऽस्मिन्विष्णुरिति प्रभुः ॥ ४ ॥
एवं चिन्तयतस्तस्य चिन्ता कृष्णं प्रति प्रभो । आराधयामि च कथं शङ्खचक्रगदाधरम् ॥
येन वेद्मि परं देवं कृष्णं नारायणं प्रभुम् । एवं सञ्चिन्त्य दध्यौ स तं देवं परमेश्वरम् ॥

दिव्यं वर्षसहस्रन्तु साग्रं ब्रह्मसुतस्तदा । ध्यायतस्तस्य देवोऽसौ परितोषं जगाम ह ॥
उवाच स प्रसन्नात्मा प्रत्यक्षत्वङ्गतः प्रभुः । वरं ब्रह्मसुत ब्रूहि किन्ते दद्मि महामुने ॥८॥

नारद उवाच

सहस्रमेकं वर्षाणां ध्यातस्त्वं भुवनेश्वर । त्वत्प्राप्तिर्येन तद्ब्रूहि यदि तुष्टोऽसि मेऽच्युत ॥

देवदेव उवाच ।

पौरुषं सूक्तमास्थाय ये यजन्ति द्विजाशु माम् ।
ते मां प्राप्स्यन्ति सततं संहिताध्ययनेन च ॥ १० ॥
अलाभे वेदशास्त्राणां पञ्चरात्रोदितेन हि ।
मार्गेण मां यजन्ते ये ते मां प्राप्स्यन्ति मानवाः ।
ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते ॥ ११ ॥

शूद्रादीनान्तु मे क्षेत्रपदवीगमनं द्विज । अन्नाम विहितन्तेषां नान्यत्पूजादिकं चरेत् ॥
एवं मयोक्तं विप्रेन्द्र पुराकल्पे पुरातनम् । पञ्चरात्रं सहस्राणां यदि कश्चिद् ग्रहीष्यति ॥

कर्मक्षये च मां कश्चिद्यदि भक्तो भविष्यति ।
तस्य चेदं पञ्चरात्रं नित्यं हृदि वसिष्यति ॥ १४ ॥

इतरे राजसैर्भावैस्तामसैश्च समावृताः । भविष्यन्ति द्विजश्रेष्ठ मय्यासनपराङ्मुखाः ॥

कृतं त्रेता द्वापरञ्च युगानि त्रीणि नारद ।
सत्त्वस्था मां समेष्यन्ति कलौ रजस्तमोऽधिकाः ॥ १६ ॥
अन्यच्च ते वरं दद्मि शृणु नारद साम्प्रतम् ।

यदिदं पञ्चरात्रं मे शास्त्रं परमदुर्लभम् । तद्भवान्वेत्स्यते सर्वं मत्प्रसादान्न संशयः ॥१७॥
वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विज । प्राप्योऽहं नान्यथा वत्स वर्षकोट्ययुतैरपि ॥
एवमुक्त्वा स भगवान्नारदं परमेश्वरः । जगमादर्शनं सद्यो नारदोऽपि दिवं ययौ ॥१९॥

इति वाराहपुराणे अगस्तिगीतासु नारदपुराणसूचनं नाम षट्षष्टितमोऽध्यायः ।

---

## सप्तषष्टितमोऽध्यायः

भद्राश्व उवाच

भगवन्सितकृष्णे द्वे ये ते जगति सत्तम ।
स्त्रियौ बभूवतुः के द्वे सिता कृष्णा च का शुभा ॥ १ ॥
कश्चासौ पुरुषो ब्रह्मन्पावकः सप्तधाऽभवत् ।
कोऽसौ द्वादशधा विप्र द्विदेहः षट्शिराः प्रभुः ॥ २ ॥

दम्पत्यञ्च द्विजश्रेष्ठ कृतसूर्योदयादलम् । कस्मादेतज्जगदिदं विततं द्विजसत्तम ॥ ३ ॥

अगस्त्य उवाच

सितकृष्णे स्त्रियौ यैते ते भगिन्यौ प्रकीर्त्तिते

सितासिता द्विवर्णा च नारी रात्रिरुदाहृता ॥ ४ ॥
यः पुमान्सप्तधा जात एको भूत्वा नरेश्वर। स समुद्रस्तु विज्ञेयः सप्त चैको व्यवस्थितः॥
योऽसौ द्वादशधा राजन्द्विदेहः षटशिराः प्रभुः।
संवत्सरः स विज्ञेयः शरीरे द्वे गती स्मृते।
ऋतवः षट् च वक्त्राणि एष संवत्सरः स्मृतः ॥ ६ ॥
दम्पत्यं तदहोरात्रं सूर्याचन्द्रमसौ यतः। ततो जगत्समुत्तस्थौ देवादस्माच्च सत्तम ॥७॥
स विष्णुः परमो देवो विज्ञेयो नृपसत्तम। न च वेदक्रियाहीनः पश्यते परमेश्वरम् ॥८॥

इति वाराहपुराणे अगस्तिगीतासु विष्णवाख्यं नाम सप्तषष्टितमोऽध्यायः।

---

## अष्टषष्टितमोऽध्यायः

भद्राश्व उवाच

योऽसौ सर्वगतो देवः परमात्मा व्यवस्थितः।
चतुर्युगे त्वसौ कीदृग्विज्ञेयः परमेश्वरः ॥ १ ॥
युगे युगे क आचारो वर्णानां भविता मुने। कथञ्च शुद्धिर्विप्राणामन्यस्त्रीसङ्करे मुने ॥

अगस्त्य उवाच

कृते युगे मही देवैर्युज्यते वेदकर्मणा। यजद्भिश्च सुरांस्त्रेता तद्वद्देवैश्च सत्तम ॥ ३ ॥
द्वापरे सत्त्वरजसोबहुले नृपसत्तम। यावद्धर्मसुतो राजा भविष्यति महामते।
ततस्तमः प्रभविता कलिरूपो नरेश्वर ॥ ४ ॥
तस्मिन् कलौ वर्त्तमाने स्वमार्गाच्च्यविता द्विजाः।
राजानो वैश्यशूद्राश्च प्रायशो हीनजातयः ॥ ५ ॥
भविष्यन्ति नृपश्रेष्ठ सत्यशौचविवर्जिताः।
ततो विनश्यते[1] लोको वर्णधर्मश्च नश्यति ॥ ६ ॥

भद्राश्व उवाच

अगम्यागमनं कृत्वा ब्राह्मणः क्षत्रियोऽपि वा।
शूद्रोऽपि शुध्यते केन किं वागम्यन्तु शस्यते ॥ ७ ॥

अगस्त्य उवाच

चतुर्गामी भवेद्विप्रस्त्रिगामी क्षत्रियः स्मृतः।
द्विगामी तु भवेद्वैश्यः शूद्र एकगमः स्मृतः ॥ ८ ॥
अगम्यां ब्राह्मणीं प्राहुः क्षत्रियस्य नरेश्वरः।
क्षत्रिया चापि वैश्यस्य शूद्रस्य सा च पार्थिव ॥ ९ ॥
अधमस्योत्तमा नारी अगम्या मनुरब्रवीत्।

---

१. अत्रात्मनेपदमार्षम्।

माता मातृष्वसा श्वश्रूर्भ्रातृपत्नी च पार्थिव ॥ १० ॥
अधमस्योत्तमा नारी यत्नेन परिवर्ज्यते । स्नुषां दुहितरश्चैव मित्रपत्नीश्च सर्वदा ॥
जाया स्वमातृजा चैव अगम्याख्याः सुतस्त्रियः ॥ ११ ॥
रजक्यादिषु चान्याश्च स्त्रियोऽगम्याः प्रकीर्त्तिताः ।
अगम्यागमनश्चैतत्कृतं पापाय जायते ॥ १२ ॥
वियोनिगमनादाशु ब्राह्मणाय भवत्यलम् । शेषस्याशुद्धिरेषैवं प्राणायामशतं भवेत् ॥१३॥
बहुनापि हि कालेन यत्पापं समुपार्जितम् । वर्णसङ्करसङ्गत्या ब्राह्मणेन नरर्षभ ॥१४॥
दशप्रणवगायत्रीप्राणायामशतैस्त्रिभिः । मुच्यते ब्रह्महत्यायाः किम्पुनः शेषपातकैः ॥१५॥
अथवा पररूपं यो देवं ब्राह्मणपुङ्गवः । वेत्ति ध्यानादिभिः पूजां न स पापैर्हि लिप्यते ॥
वेदाध्यायी पापशतैः कृतैरपि न लिप्यते । स्मरन्विष्णुं पठन्वेदं ददन्दानं यजन् हरिम् ॥
ब्राह्मणः शुद्ध एवास्ते विरुद्धमपि तारयेत् । एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं त्वया नृप ॥
मन्वादिभिर्विस्तरशः कथितं यच्च पार्थिव । समासतस्तच्च मया कथितं नृपसत्तम ॥२९॥

इति वाराहपुराणे प्रागितिहासे अष्टषष्टितमोऽध्यायः ।

---

# ऊनसप्ततितमोऽध्यायः

भद्राश्व उवाच

भगवंस्त्वच्छरीरे तु यद्वृत्तं द्विजसत्तम । चिरजीवी भवांस्तन्मे वक्तुमर्हसि सत्तम ॥१॥

अगस्त्य उवाच

मच्छरीरमिदं राजन् बहुकौतूहलान्वितम् । अनेककल्पसंस्थायि वेदविद्याविशोधितम् ।
अटन्नहं महीं सर्वां गतवानस्मि पार्थिव । इलावृतं महावर्षं मेरोः पार्श्वे व्यवस्थितम् ॥
तत्र रम्यं सरो दृष्टं तस्य तीरे महाकुटी । तत्रोपवासशिथिलं दृष्टवानस्मि तापसम् ॥
अस्थिचर्मावशेषन्तु चीरवल्कलधारिणम् । तं दृष्ट्वाहं नृपश्रेष्ठ क एषस्तापसोत्तमः ॥५॥
विश्वस्य प्रतिपत्त्यर्थं मयाक्तः स द्विजोत्तमः ।
ब्रह्मन्मे दीयतां किञ्चिदागतोऽहं तवान्तिके ।
इति मां स मुनिः प्राह स्वागतन्ते द्विजोत्तम ॥ ६ ॥
स्थीयतां स्थीयतां ब्रह्मन्नातिथ्यं करवाणि ते ।
एतच्छ्रुत्वा वचस्तस्य प्रविष्टोऽहं कुटीं तु ताम् ॥ ७ ॥
तावत्पश्याम्यहं विप्रं ज्वलन्तमिव तेजसा ।
भूमौ स्थितन्तु मां दृष्टवा हुङ्कारमकरोद्द्विजः ॥ ८ ॥
तद्धुङ्काराच्च पातालं भित्त्वा पञ्च हि कन्यकाः ।
निर्ययुः काञ्चनं पीठमेका तासान्तु गृह्य वै ॥ ९ ॥
सा मां प्रादात्तदा कन्या सलिलं करसंस्थितम् ।

गृहीत्वान्या तु मे पादौ क्षालितुञ्चोपचक्रमे ॥ १० ॥
अन्ये द्वे व्यजनं गृह्य मत्पक्षाभ्यां व्यवस्थिते । ततो हुङ्कारमकरोत्पुनरेव महातपाः ॥
तच्छब्दानन्तरं हैमद्रोणीं योजनविस्तृताम् । गृह्याजगाम अकरोत्प्लावं सरसि पार्थिव॥
तस्यान्तु कन्याः शतशो हेमकुम्भकराः शुभाः ।
आययुस्ता अथोदृष्ट्वा स मुनिः प्राह मां नृप ॥ १३ ॥
स्नानार्थं कल्पितं ब्रह्मन्निदं ते सर्वमेव तु ।
द्रोणीं प्रविश्य चेमां त्वं स्नातुमर्हसि सत्तम ॥ १४ ॥
ततोऽहं तस्य वचनात्तस्यां द्रोण्यां नराधिप ।
विशामि तावत्सरसि सा द्रोणी प्रत्यमज्जत ॥ १५ ॥
द्रोण्यां जले निमग्नोऽहं तमृषिं तच्च वै पुरम् ।
तावन्मेरुगिरेर्मूर्ध्नि पश्याम्यात्मानमात्मना ॥ १६ ॥
समुद्रान् सप्त पश्यामि तथैव कुलपर्वतान् । सप्तद्वीपवतीं पृथ्वीं दृष्टवानस्मि पार्थिव ॥
अद्यापि तं लोकवरं ध्यायन्तिष्ठामि सुव्रत ।
कदा प्राप्स्येऽथ तं लोकमिति चिन्तापरोऽभवम् ॥ १८ ॥
एवं ते कौतुकं राजन् कथितं परमेष्ठिनः । यद्वृत्तं मम देहे तु किमन्यच्छ्रोतुमिच्छसि ॥
इति वाराहपुराणे नारायणाश्चर्यकथने ऊनसप्ततितमोऽध्यायः ।

---

## सप्ततितमोऽध्यायः

भद्राश्व उवाच

भगवन् किं कृतं लोकं त्वया तमनुपश्यता ।
व्रतं तपो वा धर्मो वा प्राप्त्यर्थं तस्य वै मुने ॥ १ ॥

अगस्त्य उवाच

अनाराध्य हरिं भक्त्या न लोकान् कामयेद्बुधः ।
आराधिते हरौ लोकाः सर्वे करतलेऽभवन् ॥ २ ॥
एवं सञ्चिन्त्य राजेन्द्र मया विष्णुः सनातनः । आराधितो वर्षशतं क्रतुभिर्भूरिदक्षिणैः ॥
ततः कदाचिद्बहुना कालेन नृपनन्दन । यजतो मम देवेशं यज्ञमूर्त्तिं जनार्दनम् ॥४॥
आहूता आगता देवाः सममेव सवासवाः ।
स्वे स्वे स्थाने स्थिता आसन्यावद्देवाः सवासवाः ॥ ५ ॥
तावत् तत्रैव भगवानागतो वृषभध्वजः । महादेवो विरूपाक्षस्त्र्यम्बको नीललोहितः ॥
सोऽपि रौद्रे स्थितः स्थाने बभूव परमेश्वरः । तान्सर्वानागतान्दृष्ट्वा देवानृषिमहोरगान् ॥
सनत्कुमारो भगवानाजगामाब्जसम्भवः । त्रसरेणुप्रमाणेन विमाने सूर्यसन्निभे ॥७॥

अवस्थितो महायोगी भूतभव्यभविष्यवित् ।
आगम्य शिरसा रुद्रं स ववन्दे महामुनिः ॥ ८ । ९ ॥
तानहं संस्थितान्देवान्नारदादीनृषींस्तथा । सनत्कुमाररुद्रौ च दृष्ट्वाहमिदब्रवम् ॥१०॥
क एषां भवतां याज्यो वरिष्ठश्च नृपोत्तम । एवमुक्ते तदोवाच रुद्रो मां सुरसन्निधौ ॥११॥

रुद्र उवाच

शृण्वन्तु विबुधाः सर्वे तथा देवर्षयोऽमलाः ।
ब्रह्मर्षयश्च विख्याताः सर्वे शृण्वन्तु मे वचः ।
त्वञ्चागस्त्य महाबुद्धे शृणु मे गदतो वचः ॥ १२ ॥
यो यज्ञैरिज्यते देवो यस्मात्सर्वमिदं जगत् ।
उत्पन्नं सर्वदा यस्मिँल्लीनं भवति सामरम् । नारायणः परो देवः सर्वरूपो जनार्दनः॥
त्रिधात्मानं स भगवान्ससर्ज परमेश्वरः ।
रजस्तमोभ्यां युक्तोऽभूत् रजःसत्त्वाधिकं विभुः ॥ १५ ॥
ससर्ज नाभिकमलाद् ब्रह्माणं कमलासनम् । रजसा तमसा युक्तः सोऽपि मामसृजद्विभुः॥
यत्सत्त्वं स हरिर्देवो यो हरिस्तत्परं पदम् । ये सत्त्वरजसी सोऽपि ब्रह्मा कमलसम्भवः॥
यो ब्रह्मा सैव देवस्तु यो देवः स चतुर्मुखः । यद्रजस्तमसोपेतं सोऽहं नास्त्यत्र संशयः ॥
सत्त्वं रजस्तमश्चैव त्रितयं चैतदुच्यते । सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम् ॥
रजसा सत्त्वयुक्तेन भवेत्सृष्टी रजोऽधिका । तच्च पैतामहं वृत्तं सर्वशास्त्रेषु पठ्यते ॥
यद्वेदवाह्यं कर्म स्याच्छास्त्रमुद्दिश्य सेव्यते । तद्रौद्रमिति विख्यातं तन्नेष्टं गदितं नृणाम् ॥
यद्वा न रजसा कर्म केवलं तामसन्तु यत् । तद्दुर्गतिपरं नृणामिह लोके परत्र च ॥२२॥
सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम् । नारायणश्च भगवान्यज्ञरूपी विभाव्यते॥
कृते नारायणः शुद्धः सूक्ष्मरूप उपास्यते । त्रेतायां यज्ञरूपेण पञ्चरात्रैस्तु द्वापरे ॥२४॥
कलौ मत्कृतमार्गेण बहुरूपेण तामसैः । इज्यते द्वेषबुद्ध्या सः परमात्मा जनार्दनः ॥
न तस्मात्परतो देवो भविता न भविष्यति ।
यो विष्णुः स स्वयं ब्रह्मा यो ब्रह्मासौ महेश्वरः ॥ २६ ॥
वेदत्रये च यज्ञेऽस्मिन्पण्डितेष्वेष निश्चयः ।
यो भेदं कुरुतेऽस्माकं त्रयाणां द्विजसत्तमः ।
स पापकारी दुष्टात्मा दुर्गतिं समवाप्नुयात् ॥ २७ ।
इदञ्च शृणु मेऽगस्त्य गदतः प्राक्तनं तथा । यथाकल्पे हरेर्भक्तिं न कुर्वन्तीह मानवाः ॥
भूर्लोकवासिनः सर्वे पुरा यष्ट्वा जनार्दनम् । भुवर्लोकं प्रपद्यन्ते तत्रस्था अपि केशवम् ॥
आराध्य स्वर्गतिं यान्ति क्रमान्मुक्त्वा व्रजन्ति हि ।
एवं मुक्तिपदे प्राप्ते[1] सर्वलोकैस्तथैव च ।

---

१. व्याप्ते इति पाठान्तरम् ।

मुक्तिभाजस्ततो देवास्तं दध्युः प्रयता हरिम् ।
सोऽपि सर्वगतत्वाच्च प्रादुर्भूतः सनातनः ॥ ३० । ३१ ॥

उवाच ब्रूत किङ्कार्यं सर्वे योगिवराः सुराः । ते तं प्रणम्य देवेशमूचुश्च परमेश्वरम् ॥३२॥
देवदेव जनः सर्वो मुक्तिमार्गे व्यवस्थितः । कथं सृष्टिश्च भविता नरकेषु च को वसेत्॥
एवमुक्तस्ततो देवैस्तानुवाच जनार्दनः । युगानि त्रीणि बहवो मामुपेष्यन्ति मानवाः ॥

अन्त्ये युगे प्रविरला भविष्यन्ति मदाश्रयाः ।
एष मोहं सृजाम्याशु यो जनं मोहयिष्यति ॥ ३५ ॥
त्वञ्च रुद्र महाबाहो मोहशास्त्राणि कारय ।
अल्पायासं दर्शयित्वा मोहयाशु महेश्वरः ॥ ३६ ॥

एवमुक्त्वा तदा तेन देवेन परमेष्ठिना । आत्मा तु गोपितः सद्यः प्रकाशोऽहंकृतस्तदा॥
तस्मादारभ्य कालात्तु मत्प्रणीतेषु सत्तम । शास्त्रेष्वभिरतो लोको बाहुल्येन भवेदतः ॥

वेदानुवर्त्तिनं मार्गं देवं नारायणन्तथा ।
एकीभावञ्च पश्यन्तो मुक्ताश्चैव भवन्वि ते ॥ ३९ ॥
मां विष्णोर्व्यतिरिक्तं ये ब्रह्माणञ्च द्विजोत्तम ।
भजन्ते पापकर्माणस्ते यान्ति नरकं नराः ॥ ४० ॥

ये वेदमार्गनिर्मुक्तास्तेषां मोहार्थमेव च । नयसिद्धान्तसंज्ञाभिर्मया शास्त्रन्तु दर्शितम् ॥

पाशोऽयं पशुभावस्तु स यदा पतितो भवेत् ।
तदा पाशुपतं शास्त्रं जायते वेदसंज्ञितम् ॥ ४२ ॥

वेदमूर्त्तिरहं विप्र नान्यशास्त्रार्थवादिभिः । ज्ञायते मत्स्वरूपन्तु मुक्त्वा देवमनादिवत् ॥
वेदवेद्योऽस्मि विप्रर्षे ब्राह्मणैश्च विशेषतः । युगानि त्रीण्यहं विप्र ब्रह्मा विष्णुस्तथैव च ॥

त्रयोऽपि सत्त्वादिगुणास्त्रयो वेदास्त्रयोऽग्नयः ।
त्रयो लोकास्त्रयः सन्ध्यास्त्रयो वर्णास्तथैव च ॥ ४५ ॥

सवनानि तु तावन्ति त्रिधा बद्धमिदं जगत् । य एवं वेत्ति विप्रर्षे परं नारायणं तथा ॥
अपरं पद्मयोनिन्तु ब्रह्माणं त्वपरन्तु माम् । गुणतो मुख्यतस्त्वेक एवाहं मोह इत्युभे ॥

इति वाराहपुराणे रुद्रगीतासु सप्ततितमोऽध्यायः ।

---

# एकसप्ततितमोऽध्यायः

अगस्त्य उवाच

एवमुक्तास्ततो देवा ऋषयश्च पिनाकिना । अहञ्च नृपते तस्य देवस्य प्रणतोऽभवम् ॥
प्रणम्य शिरसा देवं यावत्पश्यामि हे नृप । तावत्तस्यैव रुद्रस्य देहस्थं कमलासनम् ॥२॥
नारायणञ्च हृदये त्रसरेणुसुसूक्ष्मकम् । ज्वलद्भास्करवर्णाभं पश्यामि भवदेहतः ॥ ३ ॥

तं दृष्ट्वा विस्मिताः सर्वे याजका ऋषयोऽभवन् ।
जयशब्दरवांश्चक्रुः सामऋग्यजुषां स्वनन् ॥ ४ ॥
कृत्वोचुस्तं तदा देवं किमिदं परमेश्वर। एकस्यामेव मूर्त्तौ ते लक्ष्यन्ते चित्तमूर्त्तयः ॥

रुद्र उवाच

यज्ञेऽस्मिन्यद्धुतं हव्यं मामुद्दिश्य महर्षयः । ते त्रयोऽपि वयं भागं गृह्णीमः कविसत्तमाः॥
नास्माकं विविधो भावो वर्त्तते मुनिसत्तमाः । सम्यग्दृशः प्रपश्यन्ति विपरीतेष्वनेकशः॥
एवमुक्ते तु रुद्रेण सर्वे ते मुनयो नृप । पप्रच्छुः शङ्करं देवं मोहशास्त्रप्रयोजनम् ॥ ८ ॥

ऋषय ऊचुः

मोहनार्थन्तु लोकानां त्वया शास्त्रं पृथक्कृतम् । तत्त्वया हेतुना केन कृतं देव वदस्व नः॥

रुद्र उवाच

अस्त्येके भारते वर्षे वनं दण्डकसंज्ञितम् । तत्र तीव्रन्तपो घोरं गौतमो नाम वै द्विजः॥
चकार तस्य ब्रह्मा तु परितोषं गतः प्रभुः । उवाच तं मुनिं ब्रह्मा वरं ब्रूहि तपोधन ॥११॥
एवमुक्तस्तदा तेन ब्रह्मणा लोककर्त्तृणा । उवाच शस्यपङ्क्तिर्मे धान्यानां देहि सङ्गता ॥
एवमुक्तो ददौ तस्य तमेवार्थं पितामहः ॥ १२ ॥
लब्ध्वा तु तं वरं विप्रः शतशृङ्गे महाश्रमम् ।
चकार तस्योषसि च पाकान्ते शालयो द्विजः ॥

लूयन्ते तेन मुनिना मध्याह्ने पच्यते तथा। सर्वातिथ्यमसौ विप्रो ब्राह्मणेभ्यो ददत्यलम्॥
कस्यचित्त्वथ कालस्य महती द्वादशाब्दिका । अनावृष्टिर्द्विजवर अभवल्लोमहर्षिणी ॥१५॥
तां दृष्ट्वा मुनयः सर्वे अनावृष्टिं वनेचराः । क्षुधया पीड्यमानाश्च प्रययुर्गौतमं तदा ॥१६॥
अथ तानागतान्दृष्ट्वा गौतमः शिरसा नतः । उवाच स्थीयतां मह्यं गृहे मुनिवरात्मजाः॥
एवमुक्तास्तु ते तेन तस्थुर्विविधभोजनम्। भुञ्जमानाम नावृष्टिर्यावत्सा निवृत्ताऽभवन्॥
निवृत्तायाञ्च ते तस्यामनावृष्ट्यान्तु ते द्विजाः। तीर्थयात्रानिमित्तन्तु प्रयातुमनसोऽभवन्॥

तत्र शाण्डिल्यनामानं तापसं मुनिसत्तमम् ।
प्रत्युवाचेति सञ्चिन्त्य मारीचः परमो मुनिः ॥ २० ॥

मारीच उवाच

शाण्डिल्य शोभनं वक्ष्ये पिता ते गौतमो मुनिः ।
तमनुक्त्वा न गच्छामस्तपश्चर्तुं तपोवनम् ॥ २१ ॥
एवमुक्तेऽथ जहसुः सर्वे ते मुनयस्तथा ।
किमस्माभिः स्वकोऽदेहो विक्रीतोऽस्यान्नभक्षणात् ॥ २२ ॥
एवमुक्त्वा पुनश्चोचुः सोपाधिं गमनम्प्रति। कृत्वा मायामयीं गान्तु तच्छालायां व्यसर्जयन्॥
तां चरन्तीं ततो दृष्ट्वा शालायां गौतमो मुनिः ।
गृहीत्वा सलिलं पाणौ प्राणिरुद्रेत्यभाषत। ततो मायामयी सा गौः पपात जलबिन्दुवत् ॥

निहतां तां ततो दृष्ट्वा मुनिं जिगमिषूंस्तथा ।
उवाच गौतमो धीमांस्तान्मुनीन्प्रणतः स्थितः ॥ २५ ॥
किमर्थं गम्यते विप्राः साधु शंसत मा चिरम् । मां विहाय सदा भक्तं प्रणतञ्च विशेषतः॥

ऋषय ऊचुः

गोवध्येयमिह ब्रह्मन्यावत्तव शरीरगा । तावदत्र न भुञ्जामो भवतोऽन्नं महामुने ॥२७॥
एवमुक्तो गौतमस्तु तान्मुनीन्प्राह धर्मवित् ।
प्रायश्चित्तं गोवध्याया दीयतां मे तपोधनाः ॥ २८ ॥

ऋषय ऊचुः

इयं गौरमृता ब्रह्मन्मूर्छितेव व्यवस्थिता । गङ्गाजलप्लुता चेयमुत्थास्यति न संशयः ॥
प्रायश्चित्तं मृतायाः स्यादमृतायाः कृतन्त्विदम् ।
व्रत वा मा कृथाः कोपमित्युक्त्वा प्रययुस्तु ते ॥ ३० ॥
गतैस्तैर्गौतमो धीमान् हिमवन्तं महागिरिम् । मामाराधयितुः प्रायात्तमुञ्चाशु महातपः॥
शतमेकन्तु वर्षाणामहमाराधितोऽभवम् । तुष्टेन च मया प्रोक्तो वरं वरय सुव्रत ॥३२॥
सोऽब्रवीन्मां जटासंस्थां देहि गङ्गां तपस्विनीम् ।
मया सार्द्धं प्रयात्वेषा पुण्या भागीरथी नदी ॥ ३३ ॥
एवमुक्ते जटाखण्डमेकं स प्रददौ शिवः । तां गृह्य गतवान् सोऽपि यत्रास्ते सा तु गौर्मृता ॥

तज्जलप्लाविता सा गौर्गता चोत्थाय भामिनी ।
नदी च महती जाता पुण्यतोया शुचिह्रदा ॥ ३५ ॥
तं दृष्ट्वा महदाश्चर्यं तत्र सप्तर्षयोऽमलाः ।
आजग्मुश्च विमानस्थाः साधु साध्विति वादिनः ॥ ३६ ॥
साधु गौतम साधूनां कोऽस्ति वा सदृशं तव । यदेवं जाह्नवी देवी दण्डके चावतारिता॥
एवमुक्तस्तदा तैस्तु गौतमः किमिदं त्विति । गोवध्याकारणं मह्यं तावत्पश्यति गौतमः॥
ऋषीणां मायया सर्वमिदं जातं विचिन्त्य वै । शशाप ताञ्जटाभस्ममिथ्याव्रतधरांस्तथा ।
भविष्यथ त्रयीबाह्या वेदकर्मबहिष्कृताः ॥ ३९ ॥
तच्छ्रुत्वा क्रूरवचनं गौतमस्य महामुनेः । ऊचुः सप्तर्षयो मैवं सर्वकालं द्विजोत्तम ॥४०॥
एवन्तु किन्तु ते वाक्यं मोघं नास्त्यत्र संशयः ।
यदि नाम कलौ सर्वे भविष्यन्ति द्विजोत्तमाः ॥ ४१ ॥
उपकारिणि एते हि अपकर्त्तार एव तु । इत्थम्भूता अपि कलौ भक्तिभाजो भवन्तु ते ॥
त्वद्वाक्यवह्निनिर्दग्धाः सदा कलियुगे द्विजाः । भविष्यन्ति क्रियाहीना वेदकर्मबहिष्कृताः॥
अस्याश्च गौर्णा नामेह नदी गोदावरीति च । एतां प्राप्य कलौ ब्रह्मन् गान्ददन्ति जनाश्च ये॥
यथाशक्त्या तु दानानि मोदन्ते त्रिदशैः सह ॥ ४४ ॥
सिंहस्थे च गुरौ तत्र यो गच्छति समाहितः ।
स्नात्वा च विधिना तत्र पितॄंस्तर्पयते तथा ॥ ४५ ॥

स्वर्गं गच्छन्ति पितरो निरये पतिता अपि। स्वर्गस्थाः पितरस्तस्य मुक्तिभाजो न संशयः॥
त्वं ख्यातिं महतीं प्राप्य मुक्तिं यास्यसि शाश्वतीम् ॥ ४६ ॥
एवमुक्ताथ मुनयो ययुः कैलासपर्वतम्। यत्राहमुमया सार्द्धं सदातिष्ठामि सत्तमाः॥
ऊचुर्मां ते च मुनयो भवितारो द्विजोत्तमाः। कलौ त्वद्रूपिणः सर्वे जटामुकुटधारिणः॥
स्वेच्छया प्रेतवेषाश्च मिथ्यालिङ्गधराः प्रभो। तेषामनुग्रहार्थाय किञ्चिच्छास्त्रं प्रदीयताम्।
ये चास्मद्वंशजाः सर्वे वर्त्तयुः कलिपीडिताः ॥ ४९ ॥
एवमभ्यर्थितस्तैस्तु पुराहं द्विजसत्तम। वेदक्रियासमायुक्तां कृतवानस्मि संहिताम्॥
निःश्वासाख्यां ततस्तस्यां लीना बाभ्रव्यशाण्डिलाः।
अल्पापराधं श्रुत्वैव गतास्ते दाम्भिकाभवन् ॥ ५१ ॥
मयैव मोहितास्ते तु भविष्यज्जानता द्विजाः।
लौल्यार्थिनः स्वशास्त्राणि करिष्यन्ति कलौ नराः ॥ ५२ ॥
निश्वाससंहितायां हि लक्षमात्रं प्रमाणतः। सैव पाशुपती दीक्षा योगः पशुपतेस्तथा॥
एतस्माद्वेदमार्गाद्धि यदन्यदिह जायते। तत्क्षुद्रकर्म विज्ञेयं रौद्रं शौचविवर्जितम् ॥५४॥
ये रुद्रामुपजीवन्ति कलौ वैदान्तिका नराः।
लौल्यार्थिनः स्वशास्त्राणि करिष्यन्ति कलौ नराः।
उच्छुष्मरुद्रास्ते ज्ञेया नाहन्तेषु व्यवस्थितः ॥ ५५ ॥
भैरवेण स्वरूपेण देवकार्ये यदा पुरा। नर्त्तितन्तु मया सोऽयं सम्बन्धः क्रूरकर्मणाम्॥
क्षयं निनीषता दैत्यान्सोऽट्टहासो मया कृतः।
यः पुरा तत्र ते मह्यां पतिता अश्रुबिन्दवः।
असंख्यातास्तु ते रौद्रा भवितारो महीतले ॥ ५७ ॥
उच्छुष्मनिरता रौद्राः सुरामांसप्रियाः सदा।
स्त्रीलोलाः पापकर्माणः सम्भूता भूतलेषु ते।
तेषां गौतमशापाद्धि भविष्यन्त्यन्वये द्विजाः ॥ ५८ ॥
तेषां मच्छासनरताः सदाचाराश्च ये द्विजाः।
स्वर्गश्चैवापवर्गश्च इत्येवं त्वा संशयात्पुरा। वेदान्तिकाऽधो यास्यन्ति मम सन्ततिदूषकाः॥
प्राग्गौतमोऽग्निना दग्धाः पुनर्मद्वचनाद् द्विजाः।
नरकन्तु गमिष्यन्ति नात्र कार्या विचारणा ॥ ६० ॥
रुद्र उवाच
एवं मया ब्रह्मसुताः प्रोक्ता जग्मुर्यथागतम्।
गौतमोऽपि स्वकं गेहं जगामाशु परन्तपाः ॥ ६१ ॥
एतद्वः कथितं विप्रा मया धर्मस्य लक्षणम्।
एतस्माद्विपरीतो यः स पाषण्डरतोऽभवत् ॥ ६२ ॥
इति वाराहपुराणे रुद्रगीतासु एकसप्ततितमोऽध्यायः।

# द्विसप्ततितमोऽध्यायः

वराह उवाच

सर्वज्ञं सर्वकर्त्तारं भवं रुद्रं पुरातनम् । प्रणम्य प्रयतोऽगस्त्यः पप्रच्छ परमेश्वरम् ॥१॥

अगस्त्य उवाच

भवान् ब्रह्मा च विष्णुश्च त्रयमेतत्त्रयी स्मृता ।
दीपोऽग्निर्दीपसंयोगैः सर्वशास्त्रेषु सर्वगः ॥ २ ॥
कस्मिन् प्रधानो भगवान् काले कस्मिन्नधक्षजः ।
ब्रह्मा वा एतदाचक्ष्व मम देव त्रिलोचन ॥ ३ ॥

रुद्र उवाच

विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते । वेदसिद्धान्तमार्गेषु तन्न जानन्ति मोहिताः ॥४॥
विश प्रवेशने धातुस्तत्र स्नुप्रत्ययादनु । विष्णुर्यः सर्वदेवेषु परमात्मा सनातनः ॥५॥

योऽयं विष्णुस्तु दशधा कीर्त्यते चैकधा द्विजाः ।
स आदित्यो महाभाग योगैश्वर्यसमन्वितः ॥ ६ ॥

यो देवकार्याणि सदा कुरुते परमेश्वरः । मनुष्यभावमाश्रित्य स मां स्तौति युगे युगे ॥
लोकमार्गप्रवृत्त्यर्थं देवकार्यार्थसिद्धये । अहञ्च तौ सदा स्तौमि श्वेतद्वीपे कृते युगे ॥

सृष्टिकाले चतुर्वक्त्रं स्तौमि कालो भवामि च ।
ब्रह्मा देवासुराः स्तौति मां सदा तु कृते युगे ॥ ९ ॥
लिङ्गमूर्त्तिञ्च मां देवा यजन्ते भोगकाङ्क्षिणः ।

सहस्रशीर्षकं देवं मनसा तु मुमुक्षवः । यजन्ते यं स विश्वात्मा देवो नारायणः स्वयम् ॥
ब्रह्मयज्ञेन ये नित्यं यजन्ते द्विजसत्तम । ते ब्रह्माणं प्रीणयन्ति वेदो ब्रह्मा प्रकीर्त्तितः ॥
नारायणः शिवो विष्णुः शङ्करः पुरुषोत्तमः । एतेषु नामभिर्ब्रह्म परं प्रोक्तं सनातनम् ॥

कर्मवेदयुजां विप्र ब्रह्मा विष्णुर्महेश्वरः ।
वयं त्रयोऽपि मन्त्राणां[1] नात्र कार्या विचारणा ॥ १३ ॥

अहं विष्णुस्तथा वेदा ब्रह्मकर्माणि चाप्युत । एतत्त्रयन्त्वेकमेव न पृथग्भावयेत्सुधीः ॥
योऽन्यथा भावयेदेतत्पक्षपातेन सुव्रत । स याति नरकं घोरं तेनैव पापपूरुषः ॥१५॥

अहं ब्रह्मा च विष्णुश्च ऋग्यजुः साम एव च ।
तेनास्मिन् भेदमप्यस्ति सर्वेषां द्विजसत्तमाः ॥ १६ ॥

इति वाराहपुराणे प्रकृतिपुरुषनिर्णये द्विसप्ततितमोऽध्यायः ।

---

१. मन्त्राद्या इति क्वचित् पठ्यते ।

# त्रयःसप्ततितमोऽध्यायः

रुद्र उवाच

शृणु चान्यद्द्विजश्रेष्ठ कौतूहलसमन्वितम्। अपूर्वभूतं सलिले मग्नेन मुनिपुङ्गव ॥१॥
ब्रह्मणाहं पुरा सृष्टः प्रोक्तश्च सृज वै प्रजाः। अविज्ञानसमर्थोऽहं निमग्नः सलिले द्विज॥
तत्र यावत्क्षणञ्चैकं तिष्ठामि परमेश्वरम्। अङ्गुष्ठमात्रपुरुषं ध्यायन् प्रयतमानसः ॥३॥
तावज्जलात्समुत्तस्थुः प्रभयाग्निसमप्रभाः। पुरुषा दश चैकश्च तापयन्तोंऽशुभिर्जलम् ॥
मया पृष्टाः के भवन्तो जलादुत्तीर्य तेजसा। तापयन्तो जलञ्चेदं क्व वा यास्यथ शंसत॥
एवमुक्ता मया ते तु नोचुः किञ्चन सत्तमः। एवमेव गतास्तूष्णीन्ते नरा द्विजपुङ्गवाः॥
ततस्तेषामनु महापुरुषोऽतीव शोभनः। स तस्मिन्मेघसङ्काशः पुण्डरीकनिभेक्षणः॥७॥
तमहं पृष्टवान् कस्त्वं के चेमे पुरुषा गताः। किं वा प्रयोजनमिह कथ्यतां पुरुषर्षभ ॥

पुरुष उवाच

य एते वै गताः पूर्वं पुरुषा दीप्ततेजसः।
आदित्यास्ते त्वरन् यान्ति ध्याता वै ब्रह्मणाभवन् ॥ ९ ॥
सृष्टिं सृजति वै ब्रह्मा तदर्थं यान्त्यमी नराः।
प्रतिपालनाय तस्यास्तु सृष्टेर्देव न संशयः ॥ १० ॥

शम्भुरुवाच

जानीयां भगवन्कथं महापुरुषसत्तमम्। भवेति नाम्ना तत्सर्वं कथयस्व परोह्यहम् ॥
एवमुक्तस्तु रुद्रेण स पुमान् प्रत्यभाषत। अहं नारायणो देवो जलशायी सनातनः ॥
दिव्यं चक्षुर्भवति वै तव मां पश्य यत्नतः। एवमुक्तस्तदा तेन यावत्पश्याम्यहन्तु तम् ॥

तावदङ्गुष्ठमात्रन्तु ज्वलद्भास्करतेजसम् ।
तमेवाहं प्रपश्यामि तस्य नाभौ तु पङ्कजम्।
ब्रह्माणं तत्र पश्यामि आत्मानञ्च तदन्तकः॥ १३। १४ ॥

एवं दृष्ट्वा महात्मानं ततो हर्षमुपागतः। तं स्तोतुं द्विजशार्दूल मतिर्मे समजायत ॥१५॥

तस्यां मतौ तु जातायां स्तोत्रेणानेन सुव्रत।
स्तुतो मया स विश्वात्मा तपसा स्मृतकर्मणा ॥ १६ ॥

रुद्र उवाच

नमोऽस्त्वनन्ताय विशुद्धचेतसे सरूपरूपाय सहस्रबाहवे ।
सहस्ररश्मिप्रवराय वेधसे विशालदेहाय विशुद्धकर्मणे[1] ॥ १७ ॥
समस्तविश्वार्त्तिहराय शम्भवे सहस्रसूर्यानिलतिग्मतेजसे ।
समस्तविद्याविधृताय चक्रिणे समस्तगीर्वाणनुते सदा नमः ॥ १८ ॥
अनादिदेवाच्युत शेषशेखर प्रभो विभो भूतपते महेश्वर।

---

१. विशुद्धमूर्त्तये इति वा पठ्यते क्वचित्।

मरुत्पते सर्वपते जगत्पते भुवः पते भुवनपते सदा नमः ॥ १९ ॥
जलेश नारायण विश्वशङ्कर क्षितीश विश्वेश्वर विश्वलोचन ।
शशाङ्क सूर्याच्युत वीर विश्वग प्रतर्क्यमूर्तेऽमृतमूर्तिरव्यय ॥ २० ॥
ज्वलद्धृताशार्चिविरुद्धमण्डल प्रपाहि नारायण विश्वतोमुख ।
नमोऽस्तु देवार्त्तिहरामृताव्यय प्रपाहि मां त्वं शरणागतं सदा[1] ॥२१॥
वक्त्राण्यनेकानि विभो तवाहं पश्यामि मध्यस्थगतं पुराणम् ।
ब्रह्माणमीशं जगतां प्रसूतिं नमोऽस्तु मह्यन्तु पितामहाय ॥ २२ ॥
संसारचक्रभ्रमणैरनेकैः क्वचिद्भवान्देववरादिदेव ।
सन्मार्गिभिर्ज्ञानविशुद्धसत्त्वैरुपास्यसे किम्प्रगमाम्यहं त्वाम् ॥ २३ ॥
एकं भवन्तं प्रकृतेः परस्ताद्यो वेत्ति स सर्वविदादिदेव ।
गुणा न तेषु प्रसभं विमेद्या विशालमूर्त्तिर्हि सुसूक्ष्मरूपः ॥ २४ ॥
वाग्योनिसङ्गो विगतेन्द्रियोऽसि विकर्मा भवान्नो विगतैककर्मा ।
संसारवांस्त्वं हि न तादृशोऽसि परं वपुर्देव विशुद्धभावैः ॥ २५ ॥
संसारविच्छित्तिकरैर्यजद्भिरतोऽवसीयेत चतुर्भुजस्त्वम् ।
परं न जानाति यतो वपुस्ते देवादयोऽप्यद्भुतकारणं तत् ॥ २६ ॥
अतोऽवतारोक्ततनुं पुराणमाधारयेयुः कमलासनाद्याः ।
न ते वपुर्विश्वसृगब्जयोनिरेकान्ततो वेद महानुभावः ॥ २७ ॥
परन्त्वहं वेद्मि कविं पुराणं भवन्तमाद्यं तपसा विशुद्धः ।
पद्मासनो मे जनकः प्रसिद्धश्चैतः प्रसूतावसकृत्पुराणः ॥ २८ ॥
सम्बुध्यते नाथ न मद्विधाऽपि विदुर्भवन्तं तपसा विहीनाः ।
ब्रह्मादिभिस्तत्प्रवरैरबोध्यं त्वां देवरूपाः समनन्त नत्या ॥ २९ ॥
प्रबोधमिच्छन्ति न तेषु बुद्धेरुदारकीर्त्तिष्वपि वेदहीनाः ।
जन्मान्तरैर्वेदविदां विवेकैर्बुद्धिर्भवेन्नाथ तव प्रसादात् ॥ ३० ॥
त्वल्लब्धलाभस्य न मानुषत्वं न देवगन्धर्वगतिः शिवं स्यात् ।
त्वं विश्वरूपोऽसि भवान्सुसूक्ष्म स्थूलोऽसि चेदं कृतकृत्यताद्य ॥ ३१ ॥
स्थूलः सुसूक्ष्मः सुलभोऽसि देव त्वद्बाह्यवृत्त्या नरके पतन्ति ।
किमुच्यते वा भवति स्थितेऽस्मिन्नाथे तु वस्वर्कमरुन्महीभिः ॥ ३२ ॥
सत्त्वैः सतोयैः समरूपधारिण्यात्मस्वरूपे विततस्वभावे ।
इति स्तुतीर्मे भगवाननन्त जुषस्व भक्तस्य विशेषतश्च ॥ ३३ ॥
सृष्टिं सृजस्वेति तवोदितस्य सर्वज्ञतां देहि नमोऽस्तु विष्णो ।
चतुर्मुखो वा यदि कोटिवक्त्रो भवेन्नरः कोऽपि विशुद्धचेताः ।
स ते गुणानामयुतैरनेकैर्वदेत्तदा देववर प्रसीद ॥ ३४ ॥

---

१. प्रपाहि मां शरणगतं सदाच्युतेति पाठः क्वचिदुपलभ्यते, स तु छन्दोभङ्गदोषदुष्ट एव ।

समो वियुक्तस्य विशुद्धभावस्तद्भावभावैकमनोऽनुगस्य ।
सदा हृदिस्थोऽसि भवान्नमस्ते न सर्वगस्यास्ति पृथग्व्यवस्था: ॥ ३५ ॥
इति प्रकाशं कृतमेतदीश स्तवं मया सर्वगतं विबुद्धा ।
संसारचक्रक्रमसमाणयुक्त्या भीतं पुनीह्यच्युत कैवलत्वम् ॥ ३६ ॥

वराह उवाच

इति स्तुतस्तदा देवो रुद्रेणामिततेजसा । उवाच वाक्यं सन्तुष्टो मेघगम्भीरनिस्वनः ॥

विष्णुरुवाच

वरं वरय भद्रोऽस्तु देवदेव उमापते । न भेदश्चावयोर्देव एकावावामुभावपि ॥ ३८ ॥

रुद्र उवाच

ब्रह्मणाहं नियुक्तस्तु प्रजाः सृज इति प्रभो । तत्र ज्ञानं प्रयच्छस्व त्रिविधं भूतभावन: ॥

विष्णुरुवाच

सर्वज्ञस्त्वन्न सन्देहो ज्ञानराशिः सनातनः । देवानाञ्च परं पूज्यः सर्वथा त्वं भविष्यसि।
एवमुक्तः पुनर्वाक्यमुवाचोमापतिस्तदा । अन्यं देहि वरं देव प्रसिद्धं सर्वजन्तुषु ॥४१॥
मूर्त्तो भूत्वा भवानेव मामाराधय केशव ।
मां वहस्व स देवेश वरं मत्तो गृहाण च । येन त्वं सर्वदेवानां पूज्यात्पूज्यतरो भव ॥

विष्णुरुवाच

देवकार्यावतारेषु मानुषत्वमुपागतः । त्वामेवाराधयिष्यामि त्वञ्च मे वरदो भव ॥४३॥
यत्त्वयोक्तं वहस्वेति देवदेव उमापते ।
सोऽहं वहामि देव त्वां मेघो भूत्वा शतं समाः ॥ ४४ ॥
एवमुक्त्वा हरिर्मेघः स्वयं भूत्वा महेश्वरम् । उज्जहार जलात्तस्माद्वाक्यं देवमुवाच ह ॥
य एते दश चैकश्च पुरुषाः प्राकृताः प्रभो ।
ते वैराजा महीं याता आदित्या इति संज्ञिताः ॥ ४६ ॥
मदंशो द्वादशो यस्तु विष्णुनामा महीतले । अवतीर्णो भवन्तन्तु आराधयति शङ्कर ॥
एवमुक्त्वा स्वकादंशात्सृष्ट्वादित्यं घनं तथा ।
नारायणः शब्दवच्च न विद्मः क लयं गतः ॥ ४८ ॥

रुद्र उवाच

एवमेष हरिर्देवः सर्वगः सर्वभावनः ।
वरदोऽभूत्पुरा मह्यं तेनाहं दैवतैर्वरः । नारायणात्परो देवो न भूतो न भविष्यति ॥
एतद्रहस्यं वेदानां पुराणानाञ्च सत्तम । मया वः कीर्त्तितं सर्वं यथा विष्णुरिहेज्यते ॥
इति वाराहपुराणे रुद्रगीतासु त्रयःसप्ततितमोऽध्यायः ।

# चतुःसप्ततितमोऽध्यायः

वराह उवाच

पुनस्ते ऋषयः सर्वे तं पप्रच्छुः सनातनम् ।
रुद्रं पुराणपुरुषं शाश्वतं क्रतुमव्ययम् । विश्वरूपमजं शम्भुं त्रिनेत्रं शूलपाणिनम् ॥ १ ॥

ऋषय ऊचुः

त्वं परः सर्वदेवानामस्माकञ्च सुरेश्वर । पृच्छामस्तेन त्वां प्रश्नमेकं तद्वक्तुमर्हसि ॥२॥
भूमिप्रमाणं संस्थानं पर्वतानाञ्च विस्तरम् । अस्माकं ब्रूहि कृपया देवदेव उमापते ॥३॥

रुद्र उवाच

सर्वेष्वेव पुराणेषु भूर्लोकः परिकीर्त्यते ।
इदानीञ्च प्रवक्ष्यामि समासाद्वः क्षमातलम् । तन्निबोधत धर्मज्ञा गदतो मम सत्तमाः॥

योऽसौ सकलविद्यावबोधितपरमात्मरूपी विगतकल्मषः परमाणुरचिन्त्यात्मा नारायणः सकललोकालोकव्यापी पीताम्बरोरुवक्षःक्षितिधरो गुणतः सूच्येत् तमस्त्वप्रपञ्चमदीर्घमखर्वमकृशमलोहितमित्येवमाद्योपलक्षितविज्ञानमात्ररूपः स भगवांस्त्वप्रकारः सत्त्वरजस्तमोद्रिक्तः सलिलं ससर्ज्ज । तत्सृष्ट्वा आदिपुरुषः परमेश्वरो नारायणः सकलजगन्मयः सर्वमयो देवमयो यज्ञमय आपोमय आपोमूर्त्तिर्योगनिद्रया सुप्तस्य तस्य नाभौ तदब्जं निःससार । तस्मिन् सकलवेदनिधिरचिन्त्यात्मा परमेश्वरो ब्रह्मा प्रजापतिरभवत् । स च सनकसनन्दनसनातनसनत्कुमारादीन् ज्ञानधर्मिणः पूर्वमुत्पाद्य पश्चान्मनुं स्वायम्भुवं मरीच्यादीन्दक्षान्त्यान् ससर्ज्ज । यः स्वायम्भुवो मनुर्भगवता सृष्टस्तस्मादारभ्य भुवनस्यातिविस्तरो वर्ण्यते । तस्य च मनोर्द्वौ पुत्रौ बभूवतुः प्रियव्रतोत्तानपादौ ।

प्रियव्रतस्य दश पुत्राः बभूवुः, अग्नीध्रोऽग्निबाहुर्मेधो मेधातिथिर्ध्रुवो ज्योतिष्मान्द्युतिमान्हव्यो वपुष्मान् सवनान्ताः । द्वितीयः स च प्रियव्रतः सप्तद्वीपेषु सप्तपुत्रान् स्थापयामास । तत्र चाग्नीध्रं जम्बूद्वीपेश्वरं चक्रे शाकद्वीपेश्वरं मेधातिथिं ज्योतिष्मन्तं क्रौञ्चे द्युतिमन्तं शाल्मलौ गोमेदस्येश्वरं हव्यं वपुष्मन्तं प्लक्षद्वीपेश्वरं पुष्कराधिपतिं सवनमिति । पुष्करेशस्यापि सवनस्य द्वौ पुत्रौ महावीतिधातकौ भवेताम् । तयोर्नाम्ना तौ देशौ व्यवस्थितौ धातके धातकीखण्डं कुमुदस्य च कौमुदम्। शाल्मलाधिपतेरपि ज्योतिष्मतस्त्रयः पुत्राः स्युः कुशवैद्युतजीमूतवाहनास्तेषां नाम्ना ते देशा जाताः । तथा च द्युतिमतः सप्त पुत्राः कुशलो मनुगव्यौ स्तः पीवरोऽप्यान्धकारकमुनिर्दुन्दुभिश्चेति तन्नाम्ना क्रौञ्चे सप्त महादेशनामानि । कुशद्वीपेश्वरस्यापि ज्योतिष्मतः सप्त पुत्राः । उद्भिदो वेणुमांश्चैव रथोपलं मनो धृतिः प्रभाकरः कपिल इति तन्नन्नामानि वर्षाणि द्रष्टव्यानि । शाकाधिपस्यापि मेधातिथेः सप्त पुत्रा नाभिशान्तभयशिशिरमुखोदमनन्दशिवक्षेमकध्रुवा इति । तन्नामान्येव वर्षाणि नाभेर्हेमवन्तं

हेमकूटं किम्पुरुषं नैषधं हरिवर्षं मेरुमध्यमिलावृतं नीलं रम्यकं श्वेतं हिरण्मयमुत्तरञ्च शृङ्गवतः कुरवो माल्यवन्तं भद्राश्वं गन्धमादनम्। केतुमाले तु एवं स्वायम्भुवेऽन्तरे भुवनप्रतिष्ठा कल्पे कल्पे चैवमेव सप्तसप्तपार्थिवैः क्रियते भूमेः पालनव्यवस्था च एष स्वभावः कल्पस्य सदा भवतीति। अत्र नाभेः सर्गं कथयामि, नाभिर्मेरुदेव्यां पुत्रमजनयदृषभनामानं, तस्य भरतो जज्ञे पुत्रश्च तावदग्रजः, तस्य भरतस्य पिता ऋषभः हेमाद्रेर्दक्षिणं वर्षं महद्भारतं नाम शशास। भरतस्य पुत्रः सुमतिस्तस्य राज्यं दत्त्वा सोऽपि वनं ययौ। सुमतेस्तेजस्तत्पुत्रः सत्सुतस्तस्यापीन्द्रद्युम्नस्तस्यापि परमेष्ठी तस्य प्रतिहर्त्ता, तस्य निखातः, निखातस्य उन्नेता, उन्नेतुरप्यभावस्तस्योद्गाता, तस्य प्रस्तोता, प्रस्तोतुर्विभोः पृथुः पृथोरनन्तः, अनन्तस्य गयः गयस्य नयस्तस्य विराट्, तस्य महावीर्यस्य सुधीमान्।

तस्य पुत्रशतं जज्ञे तेनेमा वर्धिताः प्रजाः। तैरिदं भारतं वर्षं सप्तद्वीपं समाङ्कितम् ॥१॥
तेषां वंशप्रसूत्या तु भुक्तेयं भूमिरुत्तमा। कृतत्रेतादियुक्त्या तु युगाख्या ह्येकसप्ततिः ॥२॥
भुवनस्य प्रसङ्गेन मन्वन्तरमिदं शुभम्। स्वायम्भुवञ्च कथितमपरं यन्निबोधत ॥३॥

इति वाराहपुराणे रुद्रगीतासु भुवनकोशे चतुःसप्ततितमोऽध्यायः।

---

## पञ्चसप्ततितमोऽध्यायः

रुद्र उवाच

अत ऊर्ध्वं प्रवक्ष्यामि जम्बूद्वीपं यथातथम्।
संख्या चापि समुद्राणां द्वीपानाञ्चैव विस्तरम् ॥ १ ॥
यावन्ति चैव वर्षाणि तेषु नद्यश्च याः स्मृताः।
महाभूतप्रमाणञ्च गतिश्चन्द्रार्कयोः पृथक् ॥ २ ॥
द्वीपभेदसहस्राणि सप्तस्वन्तर्गतानि च। न शक्यन्ते क्रमेणेह वक्तुं यैर्विततं जगत् ॥
सप्त द्वीपान् प्रवक्ष्यामि चन्द्रादित्यग्रहैः सह। येषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते ॥
अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत्।
प्रकृतेश्च परं यत्तु तदचिन्त्यं विभाव्यते ॥ ५ ॥
नववर्षं प्रवक्ष्यामि जम्बूद्वीपं यथातथम्। विस्तारं मण्डलञ्चैव योजनैस्तन्निबोधत ॥
शतमेकं सहस्राणां योजनानां समन्ततः। नानाजनपदाकीर्णं योजनैर्विविधैः शुभैः ॥
सिद्धचारणसङ्कीर्णं पर्वतैरुपशोभितम्। सर्वधातुविवृद्धैश्च शिलाजालसमुद्भवैः ॥ ८ ॥
पर्वतप्रभवाभिश्च नदीभिः सर्वतश्चितम्। जम्बूद्वीपं पृथु श्रीमत्सर्वतः परिमण्डलम् ॥
नवभिश्चावृतं श्रीमान यत्रास्ते भूतभावनः। लवणेन समुद्रेण सर्वतः परिवारितः ॥१०॥
जम्बूद्वीपस्य विस्तारात्समेन तु समन्ततः।
तस्य प्रागायता दीर्घाः षडेते वर्षपर्वताः। उभयत्रावगाहाश्च समुद्रौ पूर्वपश्चिमौ ॥११॥

हिमप्रायश्च हिमवान् हेमकूटश्च हेमवान् । सर्वत्र सुसुखश्चापि निषधः पर्वतो महान् ॥
चतुर्वर्णः ससौवर्णो मेरुश्चोक्तो यथा गिरिः । वृत्ताकृतिप्रमाणश्च चतुरस्रः समुच्छ्रितः[1]॥
नानावर्णः सुपार्श्वेषु प्रजापतिगुणान्वितः । नाभिमण्डलसम्भूतो ब्रह्मणः परमेष्ठिनः ॥
पूर्वतः श्वेतवर्णस्तु ब्राह्मण्यं तेन तस्य तत् । पीतश्च दक्षिणेनासौ तेन वैश्यत्वमिष्यते ॥
भृङ्गपत्रनिभश्चासौ पश्चिमेन यतोऽथ सः । तेनास्य शूद्रता प्रोक्ता मेरोर्नामार्थकर्मणः ॥

पार्श्वमुत्तरतस्तस्य रक्तवर्णं विभाव्यते ।
तेनास्य क्षत्रभावः स्यादिति वर्णाः प्रकीर्त्तिताः ॥ १७ ॥
वृत्तः स्वभावतः प्रोक्तो वर्णतः परिमाणतः ।

नीलश्च वैदूर्यमयः श्वेतशुक्लो हिरण्मयः । मयूरबर्हिवर्णस्तु शातकौम्भस्य शृङ्गवान् ॥
एते पर्वतराजानः सिद्धचारणसेविताः । तेषामन्तरविष्कम्भो नवसाहस्र उच्यते ॥१९॥
मध्ये त्विलावृतं नाम महामेरोस्तु सम्भवः । तेनैव तु सहस्राणि विस्तीर्णः सर्वतश्च सः॥
मध्यं तस्य महामेरुर्विधूम इव पावकः । वेद्यर्धदक्षिणं मेरोरुत्तरार्धं तथोत्तरम् ॥ २१ ॥
वर्षाणि यानि षडत्र तेषान्ते वर्षपर्वताः । योजनाग्रन्तु वर्षाणां सर्वेषां तद्विधीयते ॥२२॥
द्वे द्वे वर्षे सहस्राणां राजान्यानां समुच्छ्रयः । जम्बूद्वीपस्य विस्तारस्तेषामायाम उच्यते ॥

योजनानां सहस्राणां शते द्वे चापि तौ गिरी ।

नीलश्च निषधश्चैव ताभ्यां हीनाश्च ये परे । श्वेतश्च हेमकूटश्च हिमवाञ्छृङ्गवांश्च यः ॥
जम्बूद्वीपप्रमाणेन निषधः परिकीर्त्तितः । तस्माद्द्वादशभागेन हेमकूटः प्रहीयते ।

हिमवान्विंशभागेन हेमकूटात् प्रहीयते ॥ २५ ॥

अष्टांशाद्धिमवाञ्छैल आयतः पूर्वपश्चिमे । द्वीपस्य मण्डलीभावाद्ध्रासवृद्धी प्रकीर्त्यते॥
वर्षाणां पर्वतानाञ्च यथा चेमे तथोत्तरम् । तेषां मध्ये जनपदास्तानि वर्षाणि चैव तत् ॥
प्रपातविषमैस्तैस्तु पर्वतैरावृतानि तु । सन्ततानि नदीभेदैरगम्यानि परस्परम् ॥ २८ ॥
वसन्ति तेषु सत्त्वानि नानाजातीनि सर्वशः । एतद्धैमवतं वर्षं भारती यत्र सन्ततिः ॥
हेमकूटे परं यत्र नाम्ना किम्पुरुषोत्तमः । हेमकूटात्तु निषधं हरिवर्षन्तदुच्यते ॥ ३० ॥
हरिवर्षात्परञ्चैव हेमपार्श्वे इलावृतम् । इलावृतात्परं नीलं रम्यकं नाम विश्रुतम् ॥ ३१ ॥
रम्यकाच्च परं श्वेतं विश्रुतं तद्धिरण्मयम् । हिरण्मयात्परञ्चैव शृङ्गवन्तं कुरु स्मृतम् ॥
धनुःसंस्थे तु द्वे वर्षे विज्ञेये दक्षिणोत्तरे । द्वीपानां खलु चत्वारि चतुरस्रमिलात्रनम् ॥
अर्वाक् च निषधस्याथ वेद्यर्धं दक्षिणं स्मृतम् । परं शृङ्गवतो यच्च वेद्यर्धं हि तदुत्तरम् ॥
वेद्यर्द्धदक्षिणे त्रीणि वर्षाणि त्रीणि चोत्तरे । तयोर्मध्ये तु विज्ञेयो यत्र मेरुस्त्विलावृतः ॥
आयामतश्चतुस्त्रिंशत्सहस्राणि प्रकीर्त्तितः । तस्य प्रतीच्यां विज्ञेयः पर्वतो गन्धमादनः ॥

आयामोच्छायविस्तारात्तुल्यो माल्यवता तु सः ।
परिमण्डलस्तयोर्मध्ये मेरुः कनकपर्वतः ।
चतुर्वर्णः स सौवर्णश्चतुरस्रः समुत्थितः ॥ ३७ ॥

---

१. समुत्थित इति पाठान्तरम् ।

अव्यक्तधातवः सर्वे समुत्पन्ना जनादयः। अव्यक्तपृथिवी पद्मं मेरुस्तस्य च कर्णिका॥
चतुष्पत्रं समुत्पन्नं व्यक्तं पञ्चगुणं महत्। ततः सर्वाः समुत्पन्ना विततवा हि प्रवृत्तयः॥
अनेककल्पजीवद्भिः पुरुषैः पुण्यकारिभिः। कृतात्मभिर्महात्मभिः प्राप्यते पुरुषोत्तमः॥
महायोगी महादेवो जगद्वन्द्येयो जनार्दनः। सर्वलोकगतोऽनन्तो व्यापको पूर्तिरव्ययः॥

न तस्य प्राकृता मूर्त्तिर्मांसमेदोऽस्थिसम्भवा।
योगित्वाच्चेश्वरत्वाच्च सर्वरूपधरो विभुः॥ ४२॥

तन्निमित्तं समुत्पन्नं लोके पद्मं सनातनम्।
कल्पशेषस्य तस्यासौ कालस्य गतिरीदृशी॥ ४३॥

तस्मिन् पद्मे समुत्पन्नो देवदेवश्चतुर्मुखः। प्रजापतिपतिर्देव ईशानो जगतः प्रभुः॥
तस्य बीजनिसर्गे हि पुष्करस्य यथार्थवत्। कृत्स्नं प्रजानिसर्गेण विस्तरेणैव वर्ण्यते॥
तदम्बु वैष्णवः कायो यतो रत्नविभूषितः। पद्माकारा समुत्पन्ना पृथिवी सवनह्रदा॥

तत्तस्य लोकपद्मस्य विस्तरं सिद्धभावितम्।
वर्ण्यमानं विभागेन क्रमशः शृणुत द्विजाः॥ ४७॥
महावर्षाणि ख्यातानि चत्वार्यत्र च संस्थिताः।
तत्र पर्वतसंस्थानो मेरुर्नाम महाबलः॥ ४८॥

नानावर्णः स पार्श्वेषु पूर्वतः श्वेत उच्यते।
पीतञ्च दक्षिणे तस्य भृङ्गवर्णन्तु पश्चिमम्। उत्तरं रक्तवर्णन्तु तस्य पार्श्वं महात्मनः॥
मेरुस्तु शोभते शुक्लो राजवंशेष्वधिष्ठितः। तरुणादित्यसङ्काशो विधूम इव पावकः॥
योजनानां सहस्राणि चतुरशीतिमुच्छ्रितः। प्रविष्टः षोडशाधस्ताद्विस्तृतः षोडशैव तु॥

शरावसंस्थितत्वाच्च द्वात्रिंशन्मूर्ध्नि विस्तृतः।
विस्तारत्रिगुणश्चास्य परिणाहः समन्ततः॥ ५२॥

मण्डलेन प्रमाणेन व्यस्यमानन्तदिष्यते। नवतिश्च सहस्राणि योजनानां समन्ततः॥

ततः षट्काधिकानाञ्च व्यस्यमानं प्रकीर्त्तितम्।
चतुरस्रेण मानेन परिणाहः समन्ततः॥ ५४॥

स पर्वतो महादिव्यो दिव्यौषधिसमन्वितः। भवनैरावृतः सर्वैर्जातरूपमयैः शुभैः॥
तत्र देवगणाः सर्वे गन्धर्वोरगराक्षसाः। शैलराजे प्रमोदन्ते तथैवाप्सरसां गणाः॥

स तु मेरुः परिवृतो भवनैर्भूतभावनैः।
चत्वारो यस्य देशास्तु नानापार्श्वेष्वधिष्ठिताः॥ ५७॥

भद्राश्वो भारतश्चैव केतुमालश्च पश्चिमे। उत्तरे कुरवश्चैव कृतपुण्यप्रतिश्रयाः॥ ५८॥

कर्णिका तस्य पद्मस्य समन्तात्परिमण्डलम्।
योजनानां सहस्राणि योजनानां प्रमाणतः॥ ५९॥

तस्य केसरजालानि नव षट् च प्रकीर्त्तिताः। चतुरशीतिरुत्सेधो विवरान्तरगोचराः॥

त्रिंशच्चापि सहस्राणि योजनानां प्रमाणतः ।
तस्य केसरजालानि विकीर्णानि समन्ततः ॥ ६१ ॥
शतसाहस्र आयामः अशीतिः पृथुलानि च ।
चत्वारि तत्र पर्णानि योजनानां चतुर्दश ॥ ६२ ॥
तत्र या सा मया तुभ्यं कर्णिकेत्यभिविश्रुता ।
तां वर्ण्यमानामेकाग्रयात्समासेन निबोधत ॥ ६३ ॥

मणिपर्णशतैश्चित्रां नानावर्णप्रभासिताम् । अनेकपर्णनिचयं सौवर्णमरुणप्रभम् ॥ ६४॥
कान्तं सहस्रपर्वाणं सहस्रोदरकन्दरम् । सहस्रशतपत्रञ्च वृतमेकं नगोत्तमम् ।
मणिरत्नार्पितैः श्वभ्रैर्मणिचित्रिततोरणैः ॥ ६५ ॥
तत्र ब्रह्मसभा रम्या ब्रह्मर्षिजनसङ्कुला । नाम्ना मनोवती सा तु सर्वलोकेषु विश्रुता ॥
तत्रेशानस्य देवस्य सहस्रादित्यवर्चसः । महाविमानसंस्थस्य महिमा वर्तते सदा ॥
तत्र सर्वे देवगणाश्चतुर्वक्त्रं स्वयं प्रभुम् । इष्ट्वा पूज्या नमस्कारैरर्चनीयमुपस्थिताः ॥

यैस्तदा जितसङ्कल्पैर्ब्रह्मचर्यं महात्मभिः ।
चीर्णं चारुमनोभिश्च सदाचारपरिस्थितैः ॥ ६९ ॥
सम्यग्भक्त्या सुतुष्ट्या च पितृदेवार्चने रताः ।
गृहाश्रमपरास्तत्र विनीता अतिथिप्रियाः ॥ ७० ॥
गृहिणः शुक्लकर्मस्था विरक्ताः कारणात्मकाः ।
यमैर्नियमदानैश्च दृढनिर्दग्धकिल्बिषाः ॥ ७१ ॥
तेषां निवासः शुक्ले च ब्रह्मलोके अनिन्दिते ।
उपर्युपरि सर्वासां गतीनां परमा गतिः ॥ ७२ ॥

चतुर्दशसहस्राणि योजनानान्तु कीर्त्तितम् । ततोर्ध्वरुचिरे कृष्णे तरुणादित्यवर्चसि ॥
महागिरौ ततो रम्ये रत्नधातुविचित्रिते । नैकरत्नसमावासे मणितोरणमन्दिरे ।
मेरुः सर्वेषु पार्श्वेषु समन्तात्परिमण्डले ॥ ७४ ॥
त्रिंशद्योजनसाहस्रं चक्रपादो नगोत्तमः । दशयोजनविस्तीर्णा चक्रपादोपनिर्गता ॥७५॥

सा तूर्ध्ववाहिनी चापि नदी भूमौ प्रतिष्ठिता ।
सा पुर्याममरावत्यां क्रममाणेन्दुसप्रभा ॥ ७६ ॥
तया तिरस्कृता चापि सूर्येन्दुज्योतिषां गणाः ।
उदयास्तमिते सन्ध्ये ये सेवन्ते द्विजोत्तमाः ॥ ७७ ॥
तान्तुष्यन्ते द्विजाः सर्वानष्टावप्यचलोत्तमान् ।
परिभ्रमज्ज्योतिषां या सा रुद्रेन्द्रमता शुभा ॥ ७८ ॥

इति वाराहपुराणे रुद्रगीतासु भुवनकोशे पञ्चसप्ततितमोऽध्यायः ।

# षट्सप्ततितमोऽध्यायः

रुद्र उवाच

तस्यैव मरोः पूर्वे तु देशे परमवर्चसे। चक्रपादपरिक्षिप्ते नानाधातुविराजिते ॥
तत्र सर्वामरपुरं चक्रपादसमुद्भृतम् ॥ १ ॥

दुर्धर्षबलदृप्तानां देवदानवरक्षसाम्। तत्र जाम्बूनदमयः सुप्राकारः सुतोरणः ॥ २ ॥
तस्याप्युत्तरपूर्वे तु देशे परमवर्चसे। अलोकजनसम्पूर्णा विमानशतसङ्कुला ॥ ३ ॥

महावापीसमायुक्ता नित्यं प्रमुदिता शुभा।
शोभिता पुष्पशबलैः पताकाध्वजमालिनी ॥ ४ ॥

देवैर्यक्षोऽप्सरोभिश्च ऋषिभिश्च सुशोभिता। पुरन्दरपुरी रम्या समृद्धा त्वमरावती ॥

तस्या मध्येऽमरावत्या वज्रवैदूर्यवेदिका।
त्रैलोक्यगुणविख्याता सुधर्मा नाम वै सभा ॥ ६ ॥

तत्रास्ते श्रीपतेः श्रीमान् सहस्राक्षः शचीपतिः।
सिद्धादिभिः परिवृतः सर्वाभिर्देवयोनिभिः ॥ ७ ॥

तत्र चैव तु वंशः स्याद्भास्करस्य महात्मनः। साक्षात्तत्र सुराध्यक्षः सर्वदेवनमस्कृतः ॥
तस्याश्च दिक्षु विस्तीर्णा तत्तद्गुणसमन्विता। तेजोवती नाम पुरी हुताशस्य महात्मनः ॥
तद्वद्गुणवती रम्या पुरी वैवस्वतस्य च। नाम्ना संयमनी नाम पुरी त्रैलोक्यविश्रुता ॥

तथा चतुर्थे दिग्भागे नैर्ऋताधिपतेः श्रुता।
नाम्ना कृष्णवती नाम विरूपाक्षस्य धीमतः ॥ ११ ॥

पञ्चमे ह्युत्तरपुटे नाम्ना शुद्धवती पुरी।
उदकाधिपतेः ख्याता वरुणस्य महात्मनः ॥ १२ ॥

तथा पञ्चोत्तरे देवस्यास्योत्तरपुटे पुरी। वायोर्गन्धवती नाम ख्याता सर्वगुणोत्तरा ॥
तस्योत्तरपुटे रम्या गुह्यकाधिपतेः पुरी। नाम्ना महोदया नाम शुभा वैदूर्यवेदिका ॥
तथाष्टमेऽन्तरपुटे ईशानस्य महात्मनः। पुरी मनोहरा नाम भूतैर्नानाविधैर्युता ॥
पुण्यैर्धर्म्यैश्च विविधैर्वनैराश्रमसंस्थितैः। प्रार्थ्यते देवलोकोऽयं स स्वर्ग इति कीर्तितः।

इति वाराहपुराणे रुद्रगीतासु भुवनकोशे षट्सप्ततितमोऽध्यायः

---

# सप्तसप्ततितमोऽध्यायः

रुद्र उवाच

यदेतत्कर्णिकामूलं मेरोर्मध्यं प्रकीर्तितम्। तद्योजनसहस्राणि संख्यया मानतः स्मृतम् ॥

चत्वारिंशत्तथा चाष्टौ सहस्राणि तु मण्डलैः।
शैलराजस्य तत्तत्र मेरुमूलमिति स्मृतम् ॥ २ ॥

तेषां गिरिसहस्राणामनेकानां महोच्छ्रयः ।
दिगष्टौ च पुनस्तस्य मर्यादापर्वताः शुभाः ॥ ३ ॥
जठरो देवकूटश्च पूर्वस्यां दिशि पर्वतौ । मर्यादापर्वतानेतानष्टावाहुर्मनीषिणः ॥ ४ ॥
योऽसौ मेरुर्द्विजश्रेष्ठाः प्रोक्तः कनकपर्वतः ।
दिगस्यास्य तु वक्ष्यामि शृणुध्वं गदतस्ततः ॥ ५ ॥
मर्यादायास्तु चत्वारो शिरोवग्रं चतुर्दश । येनाचचाल विष्टब्धा सप्तद्वीपवती मही ॥
दशयोजनसाहस्रं व्यायामस्तेषु शङ्क्यते[1] । तिर्यगूर्ध्वञ्च रचिता हरितालतलैर्वृता ॥७॥
मनःशिलादरीभिश्च सुवर्णमणिचित्रिता । अनेकसिद्धभवनैः क्रीडास्थानैश्च सुप्रभा ॥
पूर्वेण मन्दरस्तस्य दक्षिणे गन्धमादनः । विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्थितः ॥
तेषां शृङ्गेषु चत्वारो महावृक्षाः प्रतिष्ठिताः ।
देवदैत्याप्सरोभिश्च सेविताः सुसमृद्धिभिः ॥ १० ॥
मन्दरस्य गिरेः शृङ्गे कदम्बो नाम पादपः ।
प्रलम्बशाखाशिखरः कदम्बश्चैव पादपः ॥ ११ ॥
महाकुम्भप्रमाणैश्च पुष्पैर्विकचकेसरैः । महागन्धमनोज्ञैश्च शोभितः सर्वकालजः ॥
समसेनापरिवृतो भुवनैर्भूतभावनैः । सहस्रमधिकं सोऽथ गन्धेनापूरयन्दिशः ॥१३॥
भद्राश्वो नाम वृक्षोऽय वर्षद्भिः केतुसम्भवः ।
कीर्तिमान् रूपवान् श्रीमान्महापादपपादपः ॥ १४ ॥
यत्र साक्षाद्धृषीकेशः सिद्धमन्त्रैर्निषेवितः । तस्य लोकसहस्रस्य तथा स्ववदनो हरिः ॥
पृष्टवांश्चामरश्रेष्ठः स हि सानुं पुनः पुनः । तेन चालोकितं वर्षं सर्वद्विपदनायकाः ॥
यस्य नाम्ना समाख्यातो भद्राश्वेति न संशयः ॥ १६ ॥
दक्षिणस्यापि शैलस्य शिखरे द्वे च सेविते ।
जम्बूसङ्घः पुष्पफलमहाशाखापशोभितः ॥ १७ ॥
सदा ह्यतिसनामानि स्वादूनि सुरभीणि च ।
फलान्यमृतकल्पानि पतन्ति गिरिमूर्धनि ॥
तस्माद्गिरिवरश्रेष्ठात् फलप्रस्तरवाहिनी: ॥ १८ ॥
तत्र जाम्बूनदं नाम सुवर्णमनलप्रभम् । देवालङ्कारमतुलमतिसुन्दरवर्चसम् ॥ १९ ॥
देवदानवगन्धर्वयक्षराक्षसगुह्यकाः । पिबन्त्यमृतकल्पञ्च प्रीत्या जम्बूफलासवम् ॥
मोक्षते दक्षिणे वर्षे जम्बूलोकेति विश्रुता ।
यस्या नाम्ना समाख्याता जम्बूद्वीपेति मानवैः ॥ २१ ॥
विपलस्य य च शैलस्दक्षिणेन महात्मनः । जातिशृङ्गोऽतिमहानश्वत्थश्चेति पादपः ॥
महोच्छ्रायो महास्कन्धो नैकसत्त्वगुणालयः ।

१. सन्ततेति क्वचित्पठ्यते ।

कुम्भप्रमाणै रुचिरैः फलैः सर्वर्तुकैः शुभैः ॥ २३ ॥
सकेतुकेतुमालोक्य देवगन्धर्वसेवितैः ।
केतुमालेति यः ख्यातो नाम्ना तत्र प्रकीर्तितः ॥
तन्निबोधत विप्रेन्द्रा निरुक्तन्तेन वर्षके ॥ २४ ॥
क्षीरोदमथने वृत्ते मालां स्कन्धनिषेविताम् ।
इन्द्रेण चैत्यकेतोश्च केतुमालस्ततः स्मृतः ॥
तेन तच्चिह्नितं वर्षं केतुमालेति विश्रुतम् ॥ २५ ॥
सुपार्श्वस्योत्तरे शृङ्गे वटो नाम महाद्रुमः ।
न्यग्रोधो विपुलस्कन्धो यस्त्रियोजनमण्डलः ॥ २६ ॥
माल्यमान[1]कलापैश्च विविधैस्तु समन्ततः ।
शाखाभिर्लम्बमानाभिः सेविते सिद्धसेविते ॥ २७ ॥
प्रलम्बकुम्भसदृशैर्हेमवर्णफलैः सदा । सदास्ते वै ततस्तस्मिन् वटवृक्षप्रकाशकाः ॥ २८ ॥
सनत्कुमारावरजा मानसा ब्रह्मणः सुताः ।
सप्त तत्र महाभागाः कुरवो नाम विश्रुताः ॥ २९ ॥
तत्र स्थिरगतैः क्षान्तैर्नीरजस्कैर्महात्मभिः ।
अब्दैः स्वपक्षपर्यन्तैः खम्प्राप्तास्ते सनातनाः ॥ ३० ॥
तस्य नामाङ्कितं वर्षं सप्ततिवैं महात्मनः ।
दिवि देवे च विख्याता भर्तारः कुरवः सदा ॥ ३१ ॥

इति वाराहपुराणे रुद्रगीतासु भुवनकोशे सप्तसप्ततितमोऽध्यायः

---

# अष्टसप्ततितमोऽध्यायः

रुद्र उवाच

तथा चतुर्णां वक्ष्यामि शैलेन्द्राणां यथाक्रमम् ।
अनुविन्ध्यानि रम्याणि विहङ्गैः कूजितानि च ॥ १ ॥
अनेकपक्षियुक्तात्मश्रृङ्गाणि सुबहूनि च ।
देवानां दिव्यनारीभिः समं क्रीडामयानि च ॥ २ ॥
किन्नरोद्गीतघुष्टानि शीलमन्दसुगन्धिभिः । पवनैः सेव्यमानानि रमणीयतराणि च ॥
चतुर्दिक्षु विराजन्ते नामतः श्रृणु ता नदीः । पूर्वे चैत्ररथं नाम दक्षिणे गन्धमादनम् ।
प्रभावेण सुतोयानि वनखण्डयुतानि च ॥ ४ ॥
वनखण्डान्तथाक्रम्य देवताल्लना युताः ।
यत्र क्रीडन्ति चोद्देशे मुदा परमया युताः ॥ ५ ॥

---

१. माल्यदानेति क्वचित्पुस्तके पठ्यते ।

रत्नौघकीर्णतीर्थानि महापुण्यजलानि च । अनेकजलयन्त्रैश्च नादितानि महान्ति च॥
शाखाभिर्लम्बमानाभी रुवत्पक्षिकुलालिभिः ।
कमलोत्पलकह्लारशोभितानि सरांसि च ।
चतुर्षु तेषु गिरिषु नानागुणयुतेषु च ॥ ७ ॥
अरुणोदन्तु पूर्वेण दक्षिणे मानसं स्थितम् । असितोदं पश्चिमे च महाभद्रं तथोत्तरे ।
कुमुदैः श्वेतकपिलैः कह्लारैर्भूषितानि च ॥ ८ ॥
अरुणोदस्य ये शैलाः प्राच्या वै नामतः स्मृताः ।
तान्कीर्त्यमानान्तत्त्वेन श्रृणुध्वं गदतो मम ॥ ९ ॥
विकङ्को मणिश्रृङ्गश्च सुपात्रश्चोपलो महान् । महानीलोऽथ कुम्भश्च सुबिन्दुर्मदनस्तथा ।
वेणुनद्धः सुमेदाश्च निषधो देवपर्वतः ॥ १० ॥
इत्येते पर्वतवराः पुण्याश्च गिरयोऽपि च । सरसो मानसस्येह दक्षिणेन महाचलाः ।
ये कीर्तिता मया तुभ्यं नामतस्तान्निबोध मे ॥ ११ ॥
शैलस्त्रिशिखरश्चैव शिशिरश्चाचलोत्तमः । कपिश्च शतमक्षश्च[1] तुरगश्चैव सानुमान् ॥१२॥
ताम्राहश्च विषश्चैव तथा श्वेतोदनो गिरिः । समूलश्चैव सरलो रत्नकेतुश्च पर्वतः ॥
एकमूलो महाश्रृङ्गो गजमूलोऽपि शावकः । पञ्चशैलश्च कैलासो हिमवानचलोत्तमः ॥
उत्तरा ये महाशैलास्तान् वक्ष्यामि निबोधत ।
कपिलः पिङ्गलो भद्रः सरसश्च महाचलः ॥ १५ ॥
कुमुदो मधुमांश्चैव गर्जनो मर्कटस्तथा । कृष्णश्च पाण्डवश्चैव सहस्रशिरसस्तथा ॥
पारिपात्रश्च शैलेन्द्रः श्रृङ्गवानचलोत्तमः ।
इत्येते पर्वतवराः श्रीमन्तः पश्चिमे स्मृताः ॥ १७ ॥
महाभद्रस्य सरस उत्तरेण द्विजोत्तमाः ।
ये पर्वताः स्थिता विप्रास्तान् वक्ष्यामि निबोधत ॥ १८ ॥
हंसकूटो महाशैलो वृषहंसश्च पर्वतः । कपिञ्जलश्च शैलेन्द्र इन्द्रशैलश्च सानुमान् ॥
नीलः कनकश्रृङ्गश्च शतश्रृङ्गश्च पर्वतः ।
पुष्पकरो मेघशैलो विराजश्चाचलोत्तमः ॥ २० ॥
जारुचिश्चैव शैलेन्द्र इत्येते उत्तरा स्मृताः ॥ २१ ॥
इत्येतेषान्तु मुख्यानामुत्तरेषु यथाक्रमम् ।
स्थलीर्नगरद्रोणीश्च सरांसि च निबोधत ॥ २२ ॥

इति वाराहपुराणे रुद्रगीतासु भुवनकोशेऽष्टसप्ततितमोऽध्यायः ।

---

१. शतमद्रिश्चेति वा पठ्यते ।

# एकोनाशीतितमोऽध्यायः

रुद्र उवाच

सीतान्तस्याचलेन्द्रस्य कुमुदस्यान्तरेण च ।
द्रोण्यां विहङ्गजुष्टायां नानासत्त्वनिषेविताम् ॥ १ ॥
त्रियोजनशतायामां शतयोजनविस्तृताम् । सुरसामलपानीयां रम्यां तत्र सुरोचनीम् ॥
द्रोणमात्रप्रमाणैश्च पुण्डरीकैः सुगन्धिभिः । सहस्रशतपत्रैश्च महापद्मैरलङ्कृतम् ॥३॥
देवदानवगन्धर्वैर्महासर्पैरधिष्ठितम् । पुण्यं तच्छ्रीसरो नाम सप्रकाशमिहैव च ।
प्रसन्नसलिलैः पूर्णं शरण्यं सर्वदेहिनाम् ॥ ४ ॥
तत्र त्वेकं महापद्मं मध्ये पद्मवनस्य च । कोटिपत्रप्रकलितं तरुणादित्यवर्चसम् ॥
नित्यं व्याकोशमधुरं चरत्वादतिमण्डलम् ।
चारुकेसरजालाढ्यं मत्तभ्रमरनादितम् ॥ ६ ॥
तस्मिन्मध्ये भगवती साक्षाच्छ्रीर्नित्यमेव हि ।
लक्ष्मीस्तु तं सदावासं[1] मूर्तिमन्तं न संशयः ॥ ७ ॥
सरसस्तस्य तीरे तु तस्मिन् सिद्धनिषेवितम् ।
सदापुष्पफलं रम्यं तत्र बिल्ववनं महत् ।
शतयोजनविस्तीर्णं द्वियोजनशतायतम् ॥ ८ ॥
अर्धक्रोशोच्चशिखरैर्महावृक्षैः समन्ततः । शाखासहस्रकलितैर्महास्कन्धैः समाकुलम्॥
फलैः सहस्रसङ्काशैर्हरितैः पाण्डुरैस्तथा । अमृतस्वादुसदृशैर्भेरीमात्रैः सुगन्धिभिः ॥
शीर्यद्भिश्च पतद्भिश्च कीर्णभूमिवनान्तरम् ।
नाम्ना तच्छ्रीवनं नाम सर्वलोकेषु विश्रुतम् ॥ ११ ॥
देवादिभिः समाकीर्णमष्टाभिः ककुभिः शुभम् ।
बिल्वाशिभिश्च मुनिभिः सेवितं पुण्यकारिभिः ॥ १२ ॥
तत्र श्रीः संस्थिता नित्यं सिद्धसङ्घनिषेविता ।
एकैकस्याचलेन्द्रस्य मणिशैलस्य चान्तरम् ॥ १३ ॥
शतयोजनविस्तीर्णं द्वियोजनशतायतम् । विमलं पङ्कजवनं सिद्धचारणसेवितम् ॥१४॥
पुष्पं लक्ष्म्या धृतं[2] भाति नित्यमप्रज्वलतीव ह ।
अर्धक्रोशश्च शिखरैर्महास्कन्धैः समावृतम् ॥
प्रफुल्लशाखाशिखरं पिञ्जरं भाति तद्वनम् ॥ १५ ॥
द्विबाहुपरिणाहैस्तैस्त्रिहस्तायामविस्तृतैः । मनःशिलापूर्वनिभैः पाण्डुकेसरशालिभिः ॥
पुष्पैर्मनोहरैर्व्याप्तं व्याकोशैर्गन्धशालिभिः[3] । विराजति वनं सर्वं मत्तभ्रमरनादितम् ॥

---

१. तदावासमिति कुत्रचित पुस्तके पाठोऽवलोक्यते ।
२. भृतमिति ( ख )
३. एतदर्धं ( ग [illegible] स्तक नास्ति ।

तद्वनं दानवैर्दैवै[1]र्गन्धर्वैर्यक्षराक्षसैः । किन्नरैरप्सरामिश्च महाभोगैश्च[2] सेवितम् ॥१८॥
तत्राश्रमो भगवतः कश्यपस्य प्रजापतेः । सिद्धसाधुगणाकीर्णं नानाश्रमसमाकुलम् ॥
महानीलस्य मध्ये तु ककुभस्य गिरेस्तथा ।
मध्ये सुखानदी[3] नाम तस्यास्तीरे महद्वनम् ॥ २० ॥
पञ्चाशद्योजनायामं त्रिंशद्योजनमण्डलम् ।
रम्यं तालवनं श्रीमत्कोशार्धोच्छ्रितपादपम् ॥ २१ ॥
महाबलैर्महासारैः स्थिरैरविचलैः शुभैः । महदञ्जनसंस्थानैः परिवृत्तैर्महाफलैः ॥
मृष्टगन्धगुणोपेतैरुपेतं सिद्धसेवितम् ॥ २२ ॥
ऐरावतस्य करिणस्तत्रैव समुदाहृतिः । ऐरावतस्य रुद्रस्य देवशीलस्य चाम्बरे[4] ॥ २३ ॥
सहस्रयोजनायामः शतयोजनविस्तृतः । सर्वा ह्येकशिला भूमिर्वृक्षवीरुधवर्जिता ॥
आप्लुता पादमात्रेण सलिलेन समन्ततः ॥ २४ ॥
इत्येताभ्यन्तरे द्रोण्यो नानाकाराः प्रकीर्तिताः ।
मेरोः पार्श्वेन विप्रेन्द्रा यथावदनुपूर्वशः ॥ २५ ॥

इति वाराहपुराणे रुद्रगीतासु भुवनकोशे एकोनाशीतितमोऽध्यायः

---

## अशीतितमोऽध्यायः

रुद्र उवाच

अथ दक्षिणदिग्व्यवस्थिताः पर्वतद्रोण्यः सिद्धाचरिताः कीर्त्यन्ते । शिशिरपतङ्गयोर्मध्ये शुक्ला भूमिः क्रिया मुक्ता गलितपादपा ।

इक्षुक्षेपे च शिखरे पादपैरुपशोभिते ।
उदुम्बरवनं रम्यं पक्षिसङ्घनिषेवितम् ॥ १ ॥
फलितं तद्वनं भाति महाकूर्म्मोपमैः फलैः ।
तद्वनं देवयोन्योऽष्टौ [illegible]वन्ते सर्वदैव हि[5] ॥ २ ॥

तत्र प्रसन्नस्वादुसलिला बहूदका नद्यो वहन्ति । तत्राश्रमो भगवतः कर्दमस्य प्रजापतेः नानामुनिजनाकीर्णस्तत्र्ध शतयोजनमेकं परिमण्डलं वनञ्च । तथाच ताम्राभस्य शैलस्य पतङ्गस्य चान्तरे शतयोजनविस्तीर्णं द्विगुणायतं बालार्कसदृशराजीवपुण्डरीकैः समन्ततः सहस्रपत्रैर्विरलैरलङ्कृतं महत्सरोऽनेकगन्धर्वसिद्धगन्धर्वाध्युषितम् । तस्य च मध्ये महाशिखरः शतयोजनायामस्त्रिंशद्योजनविस्तीर्णोऽनेकधातुरत्नभूषितस्तस्य चोपरि महती रथ्या रत्नप्राकारतोरणा तस्यां महद्विद्याधरपुरन्तत्र पुलोमनामा विद्याधरराजः शतसहस्रपरीवारः । तथाच विशाखाचलेन्द्रस्य श्वेतस्य चान्तरे सरः ।

---

१. दैत्यैरिति ( ग ) । २. महाभागैश्चेति ( ख ) ।
३. सुखा नदीति क्वचित् पाठः । ४. चान्तरे इति वा पाठः ।
५. सव एव हीति पाठान्तरम् ।

तस्य च पूर्वतीरे महदाम्रवनं कनकसङ्काशैः फलैरतिसुगन्धिभिर्महत्कुम्भमात्रैः सर्वतश्चितं देवगन्धर्वादयश्च तत्र निवसन्ति ।

समूलस्याचलेन्द्रस्य वसुधारस्य चान्तरे ।
त्रिंशद्योजनविस्तीर्णे पञ्चाशद्योजनायते ॥

बिल्वस्थली नाम, तत्र फलानि महाकुम्भसङ्काशानि, तैश्च पतद्भिः स्थलमृत्तिका क्लिन्ना, ताञ्च स्थलीं सुगुह्यकादयः सेवन्ते बिल्वफलाशिनः । तथाच वसुधाररत्नधारयोर्मध्ये विंशद्योजनविस्तीर्णं शतयोजनायतं सुगन्धि किंशुकवनं सदा कुसुमचयस्य गन्धेन वासयते योजनशतम् । तच्च सिद्धाध्युषितं जलोपेतञ्च । तत्र चादित्यस्य देवस्य महदायतनम् । स मासे मासे भगवानवतरति सूर्यः । प्रजापतिं लोककजनकं देवादयो नमस्यन्ति । तथा च पञ्चकूटस्य कैलासस्य चान्तरे सहस्रयोजनायामं विस्तीर्णं शतयोजनं हंसपाण्डुरं क्षुद्रसत्त्वैरनाधृष्यं स्वर्गसोपानमिव भूमण्डलम् । अथ पश्चिमे दिग्भागे व्यवस्थिता गिरिद्रोण्यः कीर्त्यन्ते । सुपार्श्वशिखिशैलयोर्मध्ये समन्ताद्योजनशतमेकं भौमशिलातलं नित्यतप्तं दुस्पर्शम्, तस्य मध्ये त्रिंशद्योजनविस्तीर्णं मण्डलं वह्निस्थानं स च सर्वकालमनिन्धनो भगवाल्लोँकक्षयकारी संवर्तको ज्वलते । अन्तरे च शैलवरयोः कुमुदाञ्जनयोः शतयोजनविस्तीर्णा मातुलुङ्गस्थली सर्वसत्त्वानामगम्या पीतवर्णैः फलैरावृता सा स्थली शोभते । तत्र च पुण्यो ह्रदः सिद्धैरुपेतः । बृहस्पतेस्तद्वनम् । तथाच शैलयोः पिञ्जरगौरयोरन्तरे सरो द्रोण्यो ह्यनेकशतयोजनायताः । महद्भिश्च षट्पदोऽङ्कुष्टैः कुमुदैरुपशोभिताः । तत्र च भगवतो विष्णोः परमेश्वरस्यायतनम् । तथाच शुक्लपाण्डुरयोरपि महागिर्योरन्तरे त्रिंशद्योजनविस्तीर्णो नवत्यायत एकः शिलोदेशो वृक्षविवर्जितः । तत्र च निष्कम्पा दीर्घिका सवृक्षा स्थलपद्मिनी अनेकजातिजैश्च[1] पद्मैः शोभिता तस्याश्च मध्ये पञ्चयोजनप्रमाणो न्यग्रोधो वृक्षस्तस्मिंश्चन्द्रशेखरोमापतिर्नीलवासाश्च देवो निवसति यक्षादिभिरीड्यमानः । सहस्रशिखरस्य गिरेः कुमुदस्य चान्तरे वर्तमानं पञ्चाशद्योजनायामं विंशद्योजनविस्तृतं इक्षुक्षेपोच्चशिखरमनेकपक्षिसेवितमनेकवृक्षफलैर्मधुरसैरुपशोभितम् । तत्र चेन्द्रस्य महानाश्रमो दिव्याभिप्रायनिर्मितः । तथाच शङ्खकूट-ऋषभयोर्मध्ये पुरुषस्थली रम्याऽनेकगुणालङ्कृता[2] अनेकयोजनायता बिल्वप्रमाणैः कङ्कोलकैः सुगन्धिभिरुपेता । तत्र पुरुषरसोन्मत्ताः नागाद्याः प्रतिवसन्ति । तथा कपिञ्जलनागशैलयोरन्तरे द्विशतयोजनमायता शतयोजनविस्तीर्णा स्थली नानाजनविभूषिता द्राक्षाखर्जूरखण्डैरुपेता अनेकवृक्षवल्लीभिरुपेता सा स्थली । तथाच पुष्करमहामेघयोरन्तरे षष्टियोजनविस्तीर्णा शतायामा पाणितलप्रख्या महती स्थली वृक्षवीरुद्विवर्जिता, तस्याश्च पार्श्वे चत्वारि

---

१. अनेकजातं यैरिति पुस्तकान्तर एकस्मिन् पाठः ।
२. अनेकेषु पुस्तकेषु अलङ्कृतेति पदं नास्ति ।

महावनानि सरांसि चानेकयोजनानि । दश पञ्च सप्त तथाष्टौ त्रिंशद्विंशतियोजनाः स्थल्यो द्रोण्यश्च तत्र काश्चिन्महाघोराः पर्वतक्षयाः ।

इति वाराहपुराणे रुद्रगीतासु भुवनकोशेऽशीतितमोऽध्यायः ।

---

## एकाशीतितमोऽध्यायः ।

रुद्र उवाच ।

अतःपरं पर्वतान्तेषु देवानामवकाशा वर्ण्यन्ते । तत्र योऽसौ सीताख्यः पर्वतस्तस्योपरि महेन्द्रस्य क्रीडास्थानम् । तत्र देवराजस्य पारिजातकवृक्षवनम् । तस्य पूर्वपार्श्वे कुञ्जरो नाम गिरिः । तस्योपरि दानवानामष्टौ पुराणि च । तथा वज्रके पर्वते राक्षसानामनेकानि पुराणि । ते च नाम्ना नीलकाः कामरूपिणः । महानीले च शैलेन्द्रे पुराणि पञ्चदशसहस्राणि किन्नराणां ख्यातानि तत्र देवदत्तचन्द्रादयो राजानः पञ्चदश किन्नराणां गर्विताः । तानि सौवर्णानि बिलप्रवेशनानि च पुराणि चन्द्रोदये च पर्वतवरे नागानामधिवासः । ते च बिलप्रवेशा बिलेषु[1] वैनतेयविषयवर्तिना व्यवस्थितानुरागे च दानवेन्द्रा व्यवस्थिताः । वेणुमत्यपि विद्याधरपुरत्रयं त्रिंशद्योजनशतविस्तीर्णमेकैकन्तावदायतम् । उलूकरोमशमहावेत्रादयो राजानो विद्याधराणाञ्च । तत्र एकैके शैलराजनि[2] स्वयमेव गरुडो व्यवस्थितः । कुञ्जरे तु पर्वतवरे नित्यं पशुपतिर्व्यवस्थितः । वसुधारे च वृषभाङ्की महादेवः शङ्करो योगिनां वरः अनेकगुणभूतकोटिसहस्रपरीवारोऽनादिपुरुषो व्यवस्थितः । वसुधारे च पुष्पवतां वसूनां समवासः । वसुधार-रत्नधारयोर्मूर्ध्नि अष्टौ सप्त च संख्यया पुराणि वसुसप्तर्षीणाञ्चेति । एकशृङ्गे च पर्वतोत्तमे प्रजापतेः स्थानं चतुर्वक्त्रस्य ब्रह्मणः । गजपर्वते च महाभूतपरिवृता स्वयमेव भगवती तिष्ठतीति । वसुधारे च पर्वतवरे मुनिसिद्धविद्याधराणामायतनं चतुराशीत्यं वरपुरमिह प्राकारतोरणाः । तत्र चानेकपर्वता नाम गन्धर्वा युद्धशालिनो निवसन्ति । तेषाञ्चाधिपतिर्देवो राजराजैकपिङ्गलः । सुरराक्षसाः पञ्चकूटे दानवाः शतशृङ्गे दानव[2]यक्षाणां पुरःशतम् । प्रभेदकस्य पश्चिमे दले देवदानवसिद्धादिपुराणि । तस्य गिरेर्मूर्ध्नि महती नाम शिला तिष्ठति, तस्याञ्च पर्वणि पर्वणि सोमः स्वयमेवावतरति । तस्यैवोत्तरपार्श्वे त्रिकूटं नाम, तत्र ब्रह्मा तिष्ठति । क्वचित्तत्र तथा च वह्न्यायतनम्[3] । मूर्त्तिमान्वह्निरुपास्यते देवैः । उत्तरे च शृङ्गाख्ये पर्वतवरे देवतानामायतनानि । पूर्वेण नारायणस्यायतनम् । मध्ये ब्रह्मणः शङ्करस्य पश्चिमे तत्र यक्षादीनां कानिचित्पुराणि । तस्य चोत्तरे तीरे जातुच्छमहापर्वते त्रिंशद्योजनमण्डलं नन्दजलं

---

१. बिलप्रवेशातीतेष्विति क्वचित्पठ्यते । २. दानवेति क्वचिन्नास्ति ।
३. ब्रह्मायतनमिति पाठान्तरम् ।

नाम सरस्तत्र नन्दो नाम नागराजो वसति। शतशीर्षप्रचण्ड इति इत्येतेऽष्टौ देवपर्वता विज्ञेयाः ते चानुक्रमेण हेमरजतरत्नवैदूर्यमनःशिलादिवर्णाः। इत्थञ्च पृथ्वी लक्षकोटिशतानेकसंख्याता पूर्णा तेषु च सिद्धविद्याधराणां निलयाः। तद्यथा मेरोः पार्श्वतः केसरवलयालबालं सिद्धलोक इति कीर्त्यते। इयञ्च पृथ्वी पद्माकारेण व्यवस्थिता। एष सर्वपुराणेषु क्रमः सामान्यतः प्रतिपाद्यते।

इति वाराहपुराणे रुद्रगीतासु भुवनकोशे एकाशीतितमोऽध्यायः।

# द्व्यशीतितमोऽध्यायः

रुद्र उवाच

अथ नदीनामवतारं शृणुत। आकाशसमुद्रो यः प्रोच्यते तस्मादाकाशगामिनी नदी प्रवृत्ता सा चानवरतमिन्द्रगजेन क्षोभ्यते सा च चतुरशीतिसहस्रोच्छ्रयान्मेरोरुपरि पतति। सा च मेरुकूटतटान्तेभ्यः प्रस्खलिता चतुर्द्धा सञ्जाता षष्टिसहस्रयोजनान्निरालम्बा पतमाना प्रदक्षिणमनुसरन्ती चतुर्द्धा जगाम सीता चालकन्दा चक्षुर्भद्रा चेतिनामभिः। तासां मध्ये एकाशीतिसहस्रपर्वतान्दारयन्ती गां गता गङ्गेत्युच्यते। अथ गन्धमादनपार्श्वेऽमरगण्डिका वर्ण्यते। एकत्रिंशद्योजनसहस्राणि आयामश्चतुःशतविस्तीर्णम्। तत्र केतुमालाः सर्वे जनपदाः कृष्णवर्णाः पुरुषा महाबलिन उत्पलवर्णाः स्त्रियः शुभदर्शनाः। तत्र च महावृक्षाः पनसाः सन्ति। तत्रेश्वरो ब्रह्मपुत्रस्तिष्ठति तत्रोदपानाच्च जरारोगविवर्जिता वर्षायुतायुषो जुष्टापाश्च नराः। माल्यवतः पूर्वपार्श्वे पूर्वगण्डिका एकश्रृङ्गाद्योजनसहस्राणि मानतस्ते च भद्राश्वा नाम जनपदाः। भद्रसालवनञ्च तत्र व्यवस्थितम्। कालाम्रवृक्षाः पुरुषाः श्वेताः पद्मवर्णिनः स्त्रियः कुमुदवर्णा दशवर्षसहस्राणि तेषामायुस्तत्र च पञ्च कुलपर्वतास्ते च शैलवर्णो मालाख्यः कोरजस्कस्त्रिपर्णः नीलश्चेति तद्विनिर्गताः, तदम्भःस्थितानां देशानां तान्येव नामानि। ते च देशा एता नदीः पिबन्ति, तद्यथा सीता सुवाहिनी हंसवती कासा महावक्त्रा चन्द्रवती कावेरी सुरसाख्यावती इद्रवती अङ्गारवाहिनी हरित्तोया सोमावर्त्ता शतह्रदा वनमाला वसुमती हंसा सुपर्णा पञ्चगङ्गा धनुष्मती मणिवप्रा[1] सुब्रह्मभागा विलासिनी कृष्णतोया पुण्योदा नागवती शिवा शैवालिनी मणितटा क्षीरोदा वरुणताली विष्णुपदी महानदी ये पिबन्ति ते दशवर्षसहस्रायुषो रुद्रोमाभक्ता इति।

इति वाराहपुराणे रुद्रगीतासु भुवनकोशे द्व्यशीतितमोऽध्यायः।

---

१. मणिबसेति पाठान्तरम्।

# त्र्यशीतितमोऽध्यायः

रुद्र उवाच

निसर्ग एव भद्राश्वानां कीर्तितो नः केतुमालानां विस्तरेण कथितम् । नैषधस्याचलेन्द्रस्य पश्चिमेन कुलाचलजनपदनद्यः कीर्त्यन्ते । तथाच विशाखकम्बलजयन्तकृष्णहरिताशोकवर्द्धमान इत्येते सप्त कुलपर्वतानां कोटिशः प्रसूतिः । तन्निवासिनो जनपदास्तन्नामान एव द्रष्टव्याः । तद्यथा सौरग्रामान्तः शातपः कृतशुराश्रवणकम्बलमाहेयाचलकूटवासमूलतपक्रौञ्चकृष्णाङ्गमणिपङ्कजचूडमलसोमीयसमुद्रान्तकुरकुञ्जसुवर्णतटकुहश्वेताङ्गकृष्णपादविदकपिलकर्णिकमाहिषकुब्जकरनाटमहोत्कटशुकनासगजभूमककुरञ्जनमहानाहकिकिसपर्णभौमचोरकधूमजन्मअङ्गारजजीवलौकिकवाचांसहाङ्गमधुरेयशुकेयचकेयश्रवणमत्तकाशिकगोदावामकुलपञ्जावर्जहमोदशालकाः एते जनपदास्तत्पर्वतस्था नदीः पिबन्ति । तद्यथा प्लाक्षा महाकदम्बा मानसी श्यामा सुमेधा बहुला विवर्णा मुङ्खा माला दर्भवती भद्रनदी शुकनदी पल्लवा भीमा प्रभञ्जना काम्बा कुशावती दक्षा काशवती तुङ्गा पुण्योदा चन्द्रावती सुमूलावती ककुपद्मिनी विशाला करण्टका पीवरी महामाया महिषी मानुषी चण्डा एता नद्यः प्रधानाः शेषाः क्षुद्रनद्यः सहस्रशश्चेति ।

इति वाराहपुराणे रुद्रगीतासु त्र्यशीतितमोऽध्यायः ।

---

# चतुरशीतितमोऽध्यायः

रुद्र उवाच

उत्तराणाञ्च वर्षाणां दक्षिणानाञ्च सर्वशः ।
आचक्षते[2] यथान्यायं ये ये पर्वतवासिनः ।
तच्छृणुध्वं मया विप्राः कीर्त्यमानं समाहिताः ॥ १ ॥
दक्षिणेन तु मेरोश्च श्वेतस्य चोत्तरेण च ।
वायव्यं रम्यकं नाम जायन्ते तत्र मानवाः ।
मतिप्रधाना विमला जरादुर्गतिवर्जिताः ॥ २ ॥
तत्रापि सुमहान्वृक्षो न्यग्रोधो रोहितः स्मृतः ।
तत्फलरसपानाच्च दशवर्षसहस्रिणः ।
आयुषा सर्वमनुजा जायते देवरूपिणः ॥ २ ॥
उत्तरेण च श्वेतस्य त्रिशृङ्गस्य च दक्षिणे ।
वर्षं हिरण्मयं नाम तत्र हैरण्वती नदी ।

---

२. आख्यायन्त इति पाठान्तरम् ।

यक्षा वसन्ति तत्रैव बलिनः कामरूपिणः ॥ ४ ॥
एकादशसहस्राणि समानान्तैर्हि जीव्यते ।
शतान्यन्यानि जीव्यन्ते वर्षाणां दश पञ्च च ॥ ५ ॥
लकुचाः पनसा वृक्षास्तस्मिन्देशे व्यवस्थिताः ।
तत्फलप्राशनादेव जीवन्ति बहुवासरम् ॥ ६ ॥

तथा त्रिशृङ्गे च मणिकाञ्चनसर्वरत्नशिखरोरुक्रमेण तस्य चोत्तरशृङ्गाद्दक्षिणसमुद्रान्तं चोत्तरकुरवः । तत्र च क्षीरवृक्षाश्चासवाः सन्ति । तेषु वृक्षेष्वेव वस्त्राण्याभरणानि च । मणिमया भूमिः सुवर्णवालुका तस्मिन् स्वर्गच्युताः पुरुषा वसन्ति त्रयोदशवर्षसहस्रायुषः । तस्यैव द्वीपस्य पश्चिमेन चतुर्योजनसहस्रमतिक्रम्य देवलोकाच्चन्द्रद्वीपो भवति योजनसहस्रपरिमण्डलः । तस्य मध्ये चन्द्रकान्तसूर्यकान्तनामानौ गिरिप्रवरौ तयोर्मध्ये चन्द्रावर्ता नाम महानदी अनेकवृक्षसमाकुलानेकनदीयुक्ता । एतत्कुरुवर्षान्तस्योत्तरपार्श्वे समुद्रोर्मिमालाढ्यं पञ्चयोजनसहस्रमतिक्रम्य देवलोकात्सूर्यद्वीपो भवति योजनसहस्रपरिमण्डलः । तस्य मध्ये गिरिवरः शतयोजनविस्तीर्णस्तदुच्छ्रितः । तस्मात्सूर्यावर्त्तनामा नदी निर्गता, तत्र च सूर्यस्याधिष्ठानं, तत्र सूर्यदैवत्यास्तद्वर्णाश्च प्रजाः दशवर्षसहस्रायुषः । तस्य च द्वीपस्य पश्चिमेन चतुर्योजनसहस्रमतिक्रम्य समुद्रदेशे योजनसाहस्रपरिमण्डलेन द्वीपो भद्राकारो नाम । तत्र च भद्रासनं वायोरनेकरत्नशोभितं, तत्र सकलविग्रहवान् वायुस्तिष्ठति । तपनीयवर्णाश्च प्रजाः पञ्चवर्षसहस्रायुषः ।

इति वाराहपुराणे रुद्रगीतासु भुवनकोशे चतुरशीतितमोऽध्यायः ।

---

# पञ्चाशीतितमोऽध्यायः

रुद्र उवाच

इयं भूः पद्मव्यवस्था कथिता इदानीं भारतं नवभेदं शृणुत । तद्यथा । इन्द्रः कसेरुः ताम्रवर्णो गभस्तिः नागद्वीपः तथा सौम्यो गान्धर्वो वारुणो भारतश्चेति । सागरसंवृतमेकैकं योजनसहस्रप्रमाणम् । तत्र च सप्त कुलपर्वताः सन्ति । तद्यथा

महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवांतः ।
विन्ध्यश्च पारिपात्रश्च इत्येते कुलपर्वताः ॥

अन्ये च मन्दरशारदर्दूरकैलासमैनाकवैद्युतवारन्धमपाण्डुरतुंगप्रस्थकृष्णगिरिजयन्तैरावतऋष्यमूकगोमन्तचित्रकूटश्रीपर्वतशैलकृतस्थला इत्येते क्षुद्रपर्वता एतेषामपि क्षुद्रतराः । तेषामार्या म्लेच्छा जनपदा वसन्ति । पिबन्ति चैतासु नदीषु पानीयम् । तद्यथा गङ्गा सिन्धुः सरस्वती शतद्रुर्वितस्ता विपाशा

चन्द्रभागा सरयूर्यमुना इरावती देविका कुहूर्गोमती धूतपापा बहुदा दृषद्वती कौशिकी निस्वीरा गण्डकी चक्षुष्मती लोहिता इत्येता हिमवत्पादनिर्गताः। वेदस्मृति-र्वेदवती सिन्धुपर्णी चन्दनाभा नाशदाचारा रोहीपारा चर्मण्वती विदिशा वेदत्रयी वपन्ती इत्येता पारियात्रोद्भवाः। शोणो ज्योतीरथा नर्मदा सुरसा मन्दाकिनी दशार्णा चित्रकूटा तमसा पिप्पला करतोया पिशाचिका चित्रोत्पला विशला वञ्जुका बालु-वाहिनी शुक्तिमती वीरजा पङ्क्तिनी रात्री इत्येताः ऋक्षप्रसूताः। मणिजाला शुभा तापी पयोष्णी शीघ्रोदा वेष्णापाशा वैतरणी वेदिपाला कुमुद्वती तोया दुर्गा अन्त्या गिरा एता विन्ध्यपादोद्भवाः। गोदावरी भीमरथी मरथी कृष्णा वेणा वञ्जुला तुङ्गभद्रा सुप्रयोगा बाह्यकावेरी इत्येताः सह्यपादोद्भवाः। शतमाला ताम्रपर्णी पुष्पा-वती उत्पलावती इत्येता मलयजाः। त्रियामा ऋषिकुल्या इक्षुला त्रिबिन्दाला मूलिनी महेन्द्रतनयाः। ऋषिका लूसती मन्दगामिनी पलाशिनी इत्येताः शुक्तिमत्प्रभावाः एताः प्राधान्येन कुलपर्वतनद्यः। शेषाः क्षुद्रनद्यः। एष जम्बूद्वीपो योजनलक्षप्रमाणः।

इति वाराहपुराणे रुद्रगीतासु भुवनकोशे पञ्चाशीतितमोऽध्यायः।

---

## षडशीतितमोऽध्यायः

रुद्र उवाच

अतः परं शाकद्वीपं निबोधत। जम्बूद्वीपस्य विस्ताराद्द्विगुणपरिणाहाल्लवणोद-कश्च जम्बूद्वीपसमस्तेन द्विगुणावृतस्तत्र च पुण्याः जनपदाश्चिरात्मानः ते दुर्भिक्ष-जराव्याधिरहिताश्च। देशेऽत्र सप्तैव कुलपर्वतास्तावत्तिष्ठन्ति, तस्य चोभयतो लव-णक्षीरोदधी व्यवस्थितौ। तत्र च प्रागायतः शैलेन्द्र उदयो नाम पर्वतः तस्यापरेण जलधारो नाम गिरिः स एव चन्द्रेति कीर्त्तितः। तस्य जलञ्च इन्द्रो गृहीत्वा वर्षति। तस्यापरः श्वेतकोनाम गिरिस्तस्मिन्षट्चेति कीर्त्तिताः प्रजाऽनेकविधाः क्रीडन्ति तस्यापरो रजतो गिरिः स एव शाकोच्यते। तस्य परेणाम्बिकेयः स च विभ्राजस्यो भण्यते। स एव केसरीत्युच्यते। ततो वायुः प्रवर्त्तते। गिरिनामान्येव वर्षाणि तद्यथा। उदयसुकुमारी जलधारक्षेमकमहाद्रुमेतिप्रधाननामानि द्वितीयपर्वतनामभि-रपि वक्तव्यानि, तस्य च मध्ये शाकवृक्षस्तत्र च सप्त महानद्यो द्विनाम्न्यस्तद्यथा सुकुमारी कुमारी नन्दा वेणिका धेनुरिक्षुमती गभस्तिरित्येता नद्यः।

इति वाराहपुराणे रुद्रगीतासु भुवनकोशे षडशीतितमोऽध्यायः।

---

# सप्ताशीतितमोऽध्यायः

रुद्र उवाच

अथ तृतीयं कुशद्वीपं शृणुत। कुशद्वीपेन क्षीरोदः परिवृतः शाकद्वीपस्य विस्तार-द्विगुणेन। तत्रापि सप्त कुलपर्वताः सर्वे च द्विनामानः, तद्यथा कुमुदः विद्रुमेति च उच्यते स उन्नतो हेमपर्वतः स एव द्रोणः पुष्पवान् स एव कङ्कश्च पर्वतः स एव कुशेश-योऽग्निमान् स एव तथा षष्ठो महिषनामा स एव हरिरुच्यते तत्राग्निर्वसति। सप्तमस्तु ककुधनामा स एव मन्दरः कीर्त्यते। इत्येते पर्वताः कुशद्वीपे व्यवस्थिताः। एतेषां वर्षभेदो भवति द्विनामसंज्ञः। कुमुदस्य श्वेतमुद्भिदन्तदेवादौ कीर्त्यते। उन्नतस्य लोहितं वेणुमण्डलं तदेव भवति वलाहकस्य जीमूतं तदेवास्य रथाकार इति। द्रोणस्य हरिं तदेव बलाधानं भवति। तत्र द्विनाम्न्यो नद्यः प्रतोया प्रवेशा सैवोच्यते। द्वितीया शिवा यशोदा सा च भवति। तृतीया चित्रा नाम सैव कृष्णा भण्यते। चतुर्थी ह्लादिनी नाम सैव चन्द्रा निगद्यते। विद्युल्ला पञ्चमी शुक्ला सैव वर्णा षष्ठी सैव विभावरी महती सप्तमी सैव धृतिः। एताः प्रधानाः शेषाः क्षुद्रनद्यः। इत्येष कुशद्वीपस्य सन्नि-वेशः। शाकद्वीपोऽपि द्विगुणसन्निवेशश्च कथितः। तस्य च मध्ये महाकुशस्तम्बः। एष च कुशद्वीपः दधिमण्डोदेनामृतसम्मितेन क्षीरोदद्विगुणेन।

इति वाराहपुराणे रुद्रगीतासु भुवनकोशे सप्ताशीतितमोऽध्यायः।

---

# अष्टाशीतितमोऽध्यायः

रुद्र उवाच

अथ क्रौञ्चो भवति चतुर्थः कुशद्वीपाद् द्विगुणमानतः समुद्रः क्रौञ्चेन द्विगुणेनावृतस्त-स्मिंश्च सप्तैव प्रधानपर्वताः प्रथमः क्रौञ्चो विद्युल्लतो रैवतो मानसः सैव पावकः, तथैवान्धकारः सैवाच्छोदकः। देवावृत्तो देवावृतः स च सुरापो भण्यते। ततो देविष्ठः स एव काञ्चनशृङ्गो भवति। देवनन्दात्परो गोविन्दो द्विविन्द इति। ततः पुण्डरीकः स एव तोयासहः। एते सप्त रत्नमयाः पर्वताः क्रौञ्चद्वीपे व्यवस्थिताः सर्वे च परस्प-रेणोच्छ्रयाः। तत्र वर्षाणि तथा क्रौञ्चस्य कुशलो देशः स एव माधवः स्मृतो वामकस्य मनोऽनुगः स एव संवर्तकस्ततोष्णवान् स सप्रकाशस्ततः पावकः सैव सुदर्शनस्तथा चान्धकारः सैव संमोहः, ततो मुनिदेशः स च प्रकाशः, ततो दुन्दुभिः सैवानर्थ उच्यते।

तत्रापि सप्तैव नद्यः

गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा।
ख्यातिश्च पुण्डरीका च नद्यः सप्तविधाः स्मृताः॥

गौरी सैव पुष्पवहा कुमुद्वती नार्द्रवती रौद्रा सन्ध्या सुखावहा भोगजवा क्षिप्रोदा चाख्याति: सैव बहुला पुण्डरीका चित्रवर्णदेशा क्षुद्रनद्यः । क्रौञ्चद्वीपो घृताब्धिनावृतो घृतोदः शाल्मलेनेति ।

इति वाराहपुराणे रुद्रगीतासु भुवनकोशेऽष्टाशीतितमोऽध्यायः ।

## एकोननवतितमोऽध्यायः

रुद्र उवाच

त्रिषु शिष्टेषु वक्ष्यामि द्वीपेषु मनुजान्युत ।
शाल्मलं पञ्चमं वर्षं प्रवक्ष्यन्तं निबोधत ।
क्रौञ्चद्वीपस्य विस्ताराच्छाल्मलो द्विगुणो मतः ॥ १ ॥

घृतसमुद्रमावृत्य व्यवस्थितस्तद्विस्तारो द्विगुणस्तत्र च सप्त पर्वताः [1]प्रवरास्तावत्यो नद्यः । तत्र च पर्वताः सुमहान्पीतशातकौम्भात्सर्वगुणसौवर्णरोहित-सुमनस-कुशल-जाम्बूनदवैद्युत इत्येते कुलपर्वताः वर्षाणि चेति । अथ षष्ठं गोमेदं कथ्यते । शाल्मलं यथा सुरोदेनावृतं तद्वत्सुरोदोऽपि तद्द्विगुणेन गोमेदेनावृतस्तत्र च प्रधानपर्वतौ द्वावेव । एकश्च तावतावसरः अपरश्च कुमुद इति । समुद्रेक्षुरसस्तद्द्विगुणेन पुष्करेणावृतः, तत्र च पुष्कराख्ये मानसो नाम पर्वतः, तदपि द्विधाच्छिन्नं वर्षं तत्प्रमाणेन च स्वादूदकेनावृतः । ततश्च कटाहम् । एतत् पृथिव्याः प्रमाणं ब्रह्माण्डस्य च सकटाहविस्तारप्रमाणम् । एवंविधानां मण्डलानां परिसंख्या न विद्यते[2] । एतानि कल्पे कल्पे भगवान्नारायणः क्रोडरूपी रसातलान्तःप्रविष्टान्दंष्ट्रयैकयोद्धृत्य स्थितौ स्थापयति ।

एष वः कथितो मार्गो भूमेरायामविस्तरः ।
स्वस्ति वोऽस्तु गमिष्यामि कैलासनिलयं द्विजाः ॥

वराह उवाच

एवमुक्त्वा गतो रुद्रः क्षणात्कैलासपर्वते[3] ।
ते च सर्वे गता देवा ऋषयश्च यथागतम् ॥

इति वाराहपुराणे रुद्रगीतासु भुवनकोशे एकोननवतितमोऽध्यायः ।

## नवतितमोऽध्यायः

धरण्युवाच

परमात्मा शिवः पुण्य इति केचिद्भवं विदुः । अपरे हरिमीशानमिति केचिच्चतुर्मुखम् ॥
एतेषां कतमो देवः परः को वाथवापरः । एतद्व समाचक्ष्व परं कौतूहलं हि मे ॥२॥

१. प्रधाना इति पाठान्तरम् । २. परिसंख्यानं विद्यत इति क्वचित् पठ्यते ।
३. कैलासपर्वतमिति पाठान्तरम् ।

वराह उवाच

परो नारायणो देवस्ततस्तस्माच्चतुर्मुखः । तस्माद्रुद्रोऽभवद्देवि स च सर्वज्ञतां गतः ॥३॥
तस्याश्चर्याण्यनेकानि विविधानि वरानने । शृणु सर्वाणि चार्वङ्गि कथ्यमानं मयानघे॥
कैलासशिखरे रम्ये नानाधातुविचित्रिते । वसत्यनुदिनं देवः शूलपाणिस्त्रिलोचनः ॥
सैकस्मिन्दिवसे देवः सर्वभूतनमस्कृतः । गणैः परिवृतो देव्या महानासीत् पिनाकधृक् ॥
तत्र सिंहमुखाः केचिद्गणा नर्दन्ति सिंहवत् । अपरे हस्तिवक्त्राश्च हयवक्त्रास्तथापरे ॥

अपरे शिशुमारास्या अपरे शूकराननाः ।
अपरेऽश्वमुखा रौद्राः खरास्याजाननास्तथा ।
छागमत्स्याननाः शूरा अनन्ताः शस्त्रपाणयः ॥ ८ ॥

केचिद् गायन्ति नृत्यन्ति धावन्ति स्फोटयन्ति च ।
हसन्ति किलकिलायन्ति गर्जन्ति च महाबलाः ॥ ९ ॥

केचिल्लोष्ट्रांस्तु संगृह्य युयुधुर्गणनायकाः । अपरे मल्लयुद्धेन युयुधुर्बलदर्पिताः ॥१०॥
एवं गणसहस्रेण वृतो देवो महेश्वरः । यावदास्ते स्वयं देव्या क्रीडन्देववरः स्वयम् ।

तावद् ब्रह्मा स्वयं देवैरुपायातस्तत्र सत्वरः ॥ ११ ॥

तमागतमथो दृष्ट्वा पूजयित्वा विधानतः । उवाच परमो देवो रुद्रो ब्रह्माणमव्ययम् ॥
किमागमनकृत्यं ते ब्रह्मन् ब्रूहि ममाचिरम् । किञ्च देव त्वरायुक्त आगतो मम सन्निधौ॥

ब्रह्मोवाच

अस्त्यन्धको महादैत्यस्तेन सर्वे दिवौकसः ।
अर्दिता मत्समीपन्तु दृष्ट्वा मां शरणैषिणः ॥ १४ ॥

ततश्चैते मया प्रोक्ताः सर्वे देवा भवम्प्रति । गच्छाम इति देवेश ततस्त्वेते समागताः ॥

एवमुक्त्वा स्वयं ब्रह्मा वीक्षाञ्चक्रे पिनाकिनम् ।
नारायणञ्च मनसा सस्मार परमेश्वरम् ॥ १६ ॥
ततो नारायणो देवो द्वाभ्यां मध्ये व्यवस्थितः ।
ततस्त्वेकीगतास्ते तु ब्रह्मविष्णुमहेश्वराः ॥ १७ ॥

परस्परं सूक्ष्मदृष्ट्या वीक्षाञ्चक्रुर्मुदा युताः । ततस्तेषां त्रिधा दृष्टिर्भूत्वैका समजायत ॥
तस्यां दृष्टयां समुत्पन्ना कुमारी दिव्यरूपिणी । नीलोत्पलदलश्यामा नीलकुञ्चितमूर्धजा॥

सुनासा सुललाटान्ता सुवक्त्रा सुप्रतिष्ठिता ॥ १९ ॥

त्वष्ट्रा यदग्निजिह्वन्तु लक्षणम्परिभावितम् । तत्सर्वमेकतः संस्थं कन्यायां सम्प्रदृश्यते ॥

अथ तां दृश्य कन्यान्तु ब्रह्मविष्णुमहेश्वराः ।
ऊचुः कासि शुभे ब्रूहि किं वा कार्यं विपश्चिते ॥ २१ ॥
त्रिवर्णा च कुमारीति[1] कृष्णा शुक्ला च पीतिका ।

---

१. कुमारी सा इति वा पाठः ।

उवाच भवतां दृष्टेर्योगाज्जातास्मि सत्तमाः ।
किं मां न वेत्थ सुश्रोणीं स्वशक्तिं परमेश्वरीम् ॥ २२ ॥
ततो ब्रह्मादयस्ते च तस्यास्तुष्टा वरं ददुः ।
नाम्नासि त्रिकला देवी पाहि विश्वञ्च सर्वदा ॥ २३ ॥
अपराण्यपि नामानि भविष्यन्ति तवानघे । गुणोत्थानि महाभागे सर्वसिद्धिकराणि च॥
अन्यच्च कारणं देवि त्रिवर्णासि वरानने । मूर्त्तित्रयं त्रिभिर्वर्णैः कुरु देवि स्वकं द्रुतम् ॥
एवमुक्ता तदा देवैरकरोत्त्रिविधान्तनुम् ।
सितां रक्तां तथा कृष्णां त्रिमूर्त्तित्वं जगाम सा ॥ २६ ॥
या सा ब्राह्मी शुभा मूर्त्तिस्तया सृजति वै प्रजाः ।
सौम्यरूपेण सुश्रोणी ब्रह्मसृष्टिविधानतः ॥ २७ ॥
या सा रक्तेन वर्णेन सुरूपा तनुमध्यमा । शङ्खचक्रधरा देवी वैष्णवी सा कला स्मृता ।
सा पाति सकलं विश्वं विष्णुमायेति कोर्त्यते ॥ २८ ॥
या सा कृष्णेन वर्णेन रौद्रा मूर्त्तिस्त्रिशूलिनी ।
दंष्ट्राकरालिनी देवि सा संहरति वै जगत् ॥ २९ ॥
या सृष्टिर्ब्रह्मणो देवी श्वेतवर्णा विभावरी । सा कुमारी महाभागा विपुलाब्जदलेक्षणा॥
सद्यो ब्रह्माणमामन्त्र्य तत्रैवान्तरधीयत ॥ ३० ॥
सान्तर्हिता ययौ देवी वरदा श्वेतपर्वते[1] । तपस्तप्तुं महत्तीव्रं सर्वज्ञत्वमभीप्सती ॥
या वैष्णवी कुमारी तु साप्यनुज्ञाय केशवम् । मन्दराद्रिं ययौ तप्तुं तपः परमदुश्चरम् ॥
या सा कृष्णा विशालाक्षी रौद्री दंष्ट्राकरालिनी ।
सा नोलपर्वतवरं तपश्चर्तुं ययौ शुभा ॥ ३३ ॥
अथ कालेन महता प्रजाः स्रष्टुं प्रजापतिः ।
आरब्धवान्न तास्तस्य ववृधुः सृजतः प्रजाः[2] ॥ ३४ ॥
यदा न ववृधुस्तस्य ब्रह्मणो मानसप्रजाः। तदा दध्यौ किमेतन्मे न तथा वर्धते प्रजाः ॥
ततो ब्रह्मा हृदा दध्यौ योगाभ्यासेन सुव्रते ।
चिन्तयन् बुबुधे देवस्तां कन्यां श्वेतपर्वते । तपश्चरन्तीं सुमहत्तपसा दग्धकिल्बिषाम् ॥
ततो ब्रह्मा ययौ तत्र यत्र सा कमलेक्षणा । तपश्चरन्तीं तां दृष्ट्वा वाक्यमेतदुवाच ह ॥

ब्रह्मोवाच

किन्तपः क्रियते भद्रे कार्यमावेक्ष्य शोभने ।
तुष्टोऽस्मि ते विशालाक्षि वरं वरय कन्यके ॥ ३८ ॥

सृष्टिरुवाच

भगवन्नेकदेशस्था[3] नोत्सहे स्थातुमञ्जसा ।
अतोऽर्थं त्वां वरं याचे सर्वगत्वमभीप्सती ॥ ३९ ॥

---

१. श्वेतपर्वतमिति वा पाठः । २. केषुचित् पुस्तकेषु श्लोकोऽयं नास्ति ।
३. भगवन्ते करे संस्थेति पाठान्तरम् ।

एवमुक्तस्तदा देव्या सृष्टया ब्रह्मा प्रजापतिः ।
उवाच तां तदा देवीं सर्वगा त्वं भविष्यसि ॥ ४० ॥
एवमुक्ता तदा तेन सृष्टिः सा कमलेक्षणा ।
तस्य ह्यङ्के लयं प्राप्ता सा देवी पद्मलोचना ॥ ४१ ॥
तस्मादारभ्य कालात्तु ब्रह्मसृष्टिर्व्यवर्धत । ब्रह्मणो मानसाः सप्त तेषामन्ये तपोधनाः ॥
तेषामन्ये ततस्त्वन्ये चतुर्धा भूतसंग्रहः । सस्थाणुजङ्गमानाञ्च सृष्टिः सर्वत्र संस्थिता॥
यत्किञ्चिद्वाङ्मयं लोके जगत्स्थावरजङ्गमम् ।
तत्सर्वं स्थापितं सृष्टया भूतं भव्यञ्च सर्वदा ॥ ४४ ॥

इति वाराहपुराणे सृष्टिविभागे नवतितमोऽध्यायः ।

---

## एकनवतितमोऽध्यायः

वराह उवाच

श्रृणु चान्यं वरारोहे तस्या देव्या महाविधिम् ।
या सा त्रिशक्तिरुद्दिष्टा शिवेन परमेष्ठिना ॥ १ ॥
तत्र सृष्टिः पुरा प्रोक्ता श्वेतवर्णा सुरूपिणी । एकाक्षरेति विख्याता सर्वाक्षरमयी शुभा ॥
वागीशेति समाख्याता क्वचिद्देवी सरस्वती । सैव विद्येश्वरी देवी सैव काप्यमिताक्षरा ।
सैव ज्ञाननिधिः कापि सैव देवी विभावरी ॥ ३ ॥
यानि सौम्यानि नामानि ज्ञानोद्भवकराणि च[1] ।
तानि तस्या विशालाक्षि द्रष्टव्यानि वरानने ॥ ४ ॥
या वैष्णवी विशालाक्षी रक्तवर्णा सुरूपिणी ।
अपरा सा समाख्याता रौद्री चैव परायणा ॥ ५ ॥
एतास्त्रयोऽपि सिध्यन्ति यो रुद्रं वेत्ति तत्त्वतः ।
सर्वा सेयं वरारोहे एकैव त्रिविधा स्मृता ॥ ६ ॥
एषा सृष्टिर्वरारोहे कथिता ते पुरातनी । तया सर्वमिदं व्याप्तं जगत्स्थावरजङ्गमम् ॥
या सादौ वर्धिता सृष्टिर्ब्रह्मणोऽव्यक्तजन्मनः ।
तया तुल्यां स्तुतिं चक्रे तस्या देव्याः पितामहः ॥ ८ ॥

ब्रह्मोवाच

जयस्व सत्यसम्भूते ध्रुवे देवि वरे क्षमे[2] । सर्वगे सर्वजननि सर्वभूतमहेश्वरि ॥ ९ ॥
सर्वज्ञा त्वं वरारोहे सर्वसिद्धिप्रदायिना । सिद्धिबुद्धिकरे देवि प्रसूतिः परमेश्वरी ॥

---

१. यानि ज्ञानोद्भवानि चेति वा पाठः । २. वरेऽक्षरे इति वा पाठः ।

त्वं स्वाहा त्वं स्वधा देवि त्वमुत्पत्तिर्वरानने ।
त्वमोङ्कारस्थिता देवि वेदोत्पत्तिस्त्वमेव च ॥ ११ ॥
देवानां दानवानाञ्च यक्षगन्धर्वरक्षसाम् । पशूनां वीरुधाञ्चापि त्वमुत्पत्तिर्वरानने ॥
विद्या विद्येश्वरी सिद्धा प्रसिद्धाहं सुरेश्वरी । सर्वज्ञा त्वं वरारोहे सर्वसिद्धिप्रदायिनी[1] ॥
सर्वगा गतसन्देहा सर्वशत्रुनिबर्हिणी । सर्वविद्येश्वरी देवी नमस्ते स्वरितकारिणि ॥
ऋतुस्नातां स्त्रियं गच्छेद्यस्त्वां स्मृत्वा वरानने ।
तस्यावश्यं भवेत्सृष्टिस्त्वत्प्रसादात्प्रजेश्वरि ।
स्वरूपा विजया भद्रे सर्वशत्रुविनाशिनि ॥ १५ ॥

इति वाराहपुराणे सृष्टिस्तुतिर्नामैकनवतितमोऽध्यायः ।

---

## द्विनवतितमोऽध्यायः ।

वराह उवाच[2]

या मन्दरगता देवी तपः कर्तुन्तु वैष्णवी । राजसी परमा शक्तिः कौमारव्रतधारिणी ॥
सैकाकिनी तपस्तेपे विशालायान्तु शोभना । तस्यास्तपन्त्याः कालेन महता क्षुभितं मन ॥
तस्मात्क्षोभात्समुत्तस्थुः कुमार्यः सौम्यलोचनाः ।
नीलकुञ्चितकेशान्ता बिम्बोष्ठ्यायतलोचनाः ।
नितम्बरसनादाम[3] नूपुराढ्याः सुवर्चसः ॥ ३ ॥
एवंविधाः स्त्रियो देव्याः क्षोभिते मनसि द्रुतम् ।
उत्तस्थुः शतसाहस्राः कोटिशो विविधाः प्रजाः ॥ ४ ॥
दृष्ट्वा कुमार्यः सा देवी तस्मिन्नेव गिरौ शुभाः ।
तपसा निर्ममे देवि पुरं हर्म्यशताकुलम् ॥ ५ ॥
विशालरथ्यं सौवर्णप्रासादैरुपशोभितम् । अन्तर्जलानि वेश्मानि मणिसोपानवन्ति च ।
रत्नजालगवाक्षाणि आसन्नोपवनानि च ॥ ६ ॥
असंख्यातानि हर्म्याणि तथा कन्या धरावरे[4] ।
प्राधान्येन प्रवक्ष्यामि कन्यानामानि शोभने ॥ ७ ॥
विद्युत्प्रभा चन्द्रकान्तिः सूर्यकान्तिस्तथापरा ।
गम्भीरा चारुकेशी च सुजाता मुञ्जकेशिनी ॥ ८ ॥
घृताची चोर्वशी चान्या शशिनी शीलमण्डिता ।
चारुकन्या[5] विशालाक्षी धन्या पीनपयोधरा ॥ ९ ॥

---

१. विधायिनीति पाठान्तरम् । २. एष पाठः क्वचिन्नास्ति ।
३. रसनोद्दाम इति पाठान्तरम् । ४. धराधरे इति क्वचित् पठ्यते ।
५. चारुकन्येति पाठान्तरम् ।

चन्द्रप्रभा गिरिसुता तथा सूर्यप्रभामृता । स्वयम्प्रभा चारुमुखी शिवदूती विभावरी ॥
जया च विजया चैव जयन्ती चापराजिता ॥ १० ॥

एताश्चान्याश्च शतशः कन्यास्तस्मिन्पुरोत्तमे ।
देव्या अनुचराः सर्वाः पाशाङ्कुशधराः शुभाः ॥ ११ ॥

ताभिः परिवृता देवी सिंहासनगता शुभा ।
सुसितैश्चामरैः स्त्रीभिर्वीज्यमाना विलासिनी ॥ १२ ॥

कौमारं व्रतमास्थाय तपः कर्तुं समुद्यता । पूज्यमाना वरस्त्रीभिः कुमारीभिः समन्ततः ॥
सर्वाङ्गशोभिनी देवी यावदास्ते तपोऽन्विता । तावदागतवांस्तत्र नारदो ब्रह्मणः सुतः ॥
तं दृष्ट्वा सहसा देवी ब्रह्मपुत्रं तपोधनम् । विद्युत्प्रभामुवाचेदमासनं दीयतामिति ।
पाद्यमाचमनीयञ्च क्षिप्रमस्मै प्रदीयताम् ॥ १५ ॥

एवमुक्ता तदा देव्या कन्या विद्युत्प्रभा शुभा । आसनं पाद्यमर्घ्यञ्च नारदाय न्यवेदयत् ॥
ततः कृतासनं दृष्ट्वा प्रणतं नारदं मुनिम् । उवाच देवी वचनं हर्षेण महतान्विता ॥

स्वागतं भो मुनिश्रेष्ठ कस्माल्लोकादिहागतः ।
किङ्कार्यं वद ते कृत्यं मा ते कालात्ययो भवेत् ॥ १८ ॥

एवमुक्तस्तदा देव्या नारदः प्राह लोकवित् ।
ब्रह्मलोकादिन्द्रलोकं तस्माद्रौद्रमथाचलम् ।
ततस्त्वामिह देवेशि द्रष्टुमभ्यागतः शुभे ॥ १९ ॥

एवमुक्त्वा मुनिः श्रीमांस्तां देवीमन्ववेक्षत[1] ।
दृष्ट्वा मुहूर्त्तं देवेशि विस्मितो नारदोऽभवत् ॥ २० ॥

अहो रूपमहो कान्तिरहो धैर्यमहो वयः ।
अहो निष्कामता देव्या इति खेदमुपाययौ ॥ २१ ॥

देवगन्धर्वसिद्धानां यक्षकिन्नररक्षसाम् । न रूपमीदृशं क्वापि स्त्रीष्वन्यासु प्रदृश्यते ॥

एव सञ्चिन्त्य मनसा नारदो विस्मयान्वितः ।
प्रणम्य देवीं सहसा उत्पपात नभस्तलम् ॥ २३ ॥

गतश्च त्वरया युक्तः पुरीन्दैत्येन्द्रपालिताम् ।
महिषाख्येन भूतेशि समुद्रान्तस्थितां पुरीम् ॥ २४ ॥

तत्राससाद भगवानसुरं महिषाकृतिम् । दृष्ट्वा लब्धवरं वीरं देवसैन्यान्तकं महत् ॥
स तेन पूजितो भक्त्या तदा लोकचरो मुनिः । प्रीतात्मा नारदस्तस्मै देव्या रूपमनुत्तमम् ।
आचचक्षे यथान्यायं यद्वृत्तं देवतापुरे ॥ २६ ॥

---

१. अन्ववेक्षयत् इति क्वचित् पाठः ।

नारद उवाच

असुरेन्द्र शृणुष्वैकं कन्यारत्नं समाहितः । त्रैलोक्यं वरदानेन स्वाधीनन्ते चराचरम् ॥
ब्रह्मलोकादहं दैत्य मन्दराद्रिमुपागतः । तत्र देवीपुरं दृष्टं कुमारीशतसङ्कुलम् ॥ २८ ॥

तत्र प्रधाना या कन्या तापसी व्रतधारिणी[1] ।
सा देवदैत्ययक्षाणां मध्ये काचिन्न दृश्यते ॥ ९२ ॥
यादृशी सा मया दृष्टा तादृशी काण्डमध्यतः ।
भ्रमता चेदृशी दृष्टा न कदाचिन्मया सती ॥ ३० ॥
तस्याश्च देवगन्धर्वा ऋषयः सिद्धचारणाः ।
उपासाञ्चक्रिरे सर्वे येऽप्यन्ये दैत्यनायकाः ॥ ३१ ॥
तां दृष्ट्वा वरदां देवीमहं तूर्णमिहागतः ।
अजित्वा देवगन्धर्वान् न तां जयति कश्चन ॥ ३२ ॥
एवमुक्त्वा स्थित्वा तमनुज्ञाप्य नारदः ।
यथागतं ययौ धीमानन्तर्धानेन तत्क्षणात् ॥ ३३ ॥

इति वाराहपुराणे प्रागितिहासे द्विनवतितमोऽध्यायः ।

---

# त्रयोनवतितमोऽध्यायः

वराह उवाच

गते तु नारदे दैत्यश्चिन्तयामास तां शुभाम् ।
कथितां नारदमुखाच्छ्रुत्वा विस्मितमानसः ॥ १ ॥

तामेव चिन्तयन्शर्म न लेभे दैत्यसत्तमः । मन्त्रिणश्चानयामास अलंशर्माणमुत्तमम् ॥

तस्याष्टौ मन्त्रिणः शूरा नीतिमन्तो बहुश्रुताः ।
प्रघसो विघसश्चैव शङ्कुकर्णो विभावसुः ।
विद्युन्माली सुमाली च पर्जन्यः क्रूर एव च ॥ ३ ॥
एते मन्त्रिवरास्तस्य प्राधान्येन प्रकीर्तिताः ।
ते दानवेन्द्रमासीनमूचुः कृत्यं विधीयताम् ॥ ४ ॥

तेषां तद्वचनं श्रुत्वा दानवेन्द्रो महाबलः । उवाच कन्यालाभार्थं नारदावाप्तनिश्चयः ॥

महिष उवाच

मह्यन्तु कथिता बाला नारदेन महर्षिणा । सा चाजित्य सुराध्यक्षं न लभ्येत वराङ्गना।
एतदर्थं भवन्तो वै कथयन्तु विमृश्य मे । कथं सा लभ्यते बाला कथं देवाश्च निर्जिताः॥

भवेयुरिति तत्सर्वं कथयन्तु द्रुतं मम ॥ ७ ॥

एवमुक्तास्ततः सर्वे कथयाम सुरञ्जसा । एवमुक्तस्तथोवाच प्रघसो दानवेश्वरम् ॥ ८ ॥

---

१. व्रतचारिणीति पाठान्तरम् ।

या सा ते कथिता दैत्य नारदेन महासती ।
सा शक्तिः परमा देवी वैष्णवी रूपधारिणी ॥ ९ ॥

गुरुपत्नी राजपत्नी तथा सामन्तयोषितः । जिघृक्षन्नश्यते राजा तथागम्यागमेन च ॥
प्रघसेनैवमुक्तस्तु विघसो वाक्यमब्रवीत् । सम्यगुक्तं प्रघसेन तान्देवीं प्रति पार्थिव ।

यदि नाम मतैक्यन्तु बुद्धिः स्मरणमागता ॥ ११ ॥
वरणीया कुमारी तु सर्वदा विजिगीषुभिः ।
न स्वतन्त्रेण कन्यायाः कार्यं क्वापि प्रकर्षणम् ॥ १२ ॥

यदि वो रोचते वाक्य मदीयं मन्त्रिसत्तमाः ।
तदानीं तां शुभां देवीं गत्वा याचन्तु मन्त्रिणः ।
यो महात्मा भवेत्तस्या बन्धुस्तं याचयामहे ॥ १३ ॥

साम्नैवादौ ततः पश्चात्करिष्यामः प्रदानकम् । ततो भेदं करिष्यामस्ततो दण्डं क्रमेण च॥
अनेन क्रमयोगेन यदि सा नैव लभ्यते । ततः सन्नह्य गच्छामो बलाद् गृह्णीम तां शुभाम्॥
विघसेनैवमुक्तस्तु शेषास्तु मन्त्रिणो वचः । शुभमूचुः प्रशंसन्तः सर्वे हर्षितमानसाः ॥
साधूक्तं विघसेनेदं यत्तां प्रति वराननाम् । तदेव क्रियतां शीघ्रं दूतस्तत्र विसर्ज्यताम् ॥

यः सर्वशस्त्रनीतिज्ञः शुचिः शौर्यसमन्वितः ।
तस्माज्ज्ञात्वा तु तान्देवीं वर्णतो रूपतो गुणैः ॥ १८ ॥
पराक्रमेण शौर्येण शौण्डीर्येण बलेन च ।
बन्धुवर्गेण सामग्र्या वा स्थानकरणेन च ।
एवं ज्ञात्वा तु तान्देवीं ततः कार्यं विधीयताम्[1] ॥ १६ ॥

ततः सपदि दैत्यस्य तद्वचः साधु साध्विति । प्रशशंसुर्वरारोहे विघसं मन्त्रिसत्तमम्।
प्रशस्य सर्वे तं दूतं सन्देष्टुमुपचक्रमुः ॥ २० ॥
विद्युत्प्रभं महाभागं बहुमायाविदं शुभम् ।
विसर्जयित्वा तन्दूतं विघसो वाक्यमब्रवीत् ॥ २१ ॥
क्रियतां विजयस्तावद्देवसैन्यं प्रति प्रभो ॥ २१ ॥

सन्नह्यतां दानवेन्द्राश्चतुरङ्गबलेन ह । असुरेन्द्र सुरैर्भग्नैस्तत्पराक्रमभीषितैः ।
सा कन्या वशतामेति त्वयि शक्रे समागते ॥ २२ ॥
लोकपालैर्जितैः सर्वैस्तथैव मरुतां गणैः । नागैर्विद्याधरैः सिद्धैर्गन्धर्वैः सर्पभोजनैः ।
रुद्रैर्वसुभिरादित्यैस्त्वमेवेन्द्रो भविष्यसि ॥ २३ ॥
इन्द्रस्य ते शतं कन्या देवगन्धर्वयोषितः। वशमायान्ति सापि स्यात् सर्वथा वशमागता॥
एवमुक्तस्तदा दैत्यः सेनापतिमुवाच ह । विरूपाक्षं महामेघवर्णं नीलाञ्जनप्रभम् ॥२५॥

---

१. इयानंशः केषुचित् पुस्तकेषु न दृश्यते ।

आनीयतां द्रुतं सैन्यं हस्त्यश्वरथपत्तिनाम् ।
येन देवान्सगन्धर्वान् क्षयामि युधि दुर्जयान् ॥ २६ ॥
एवमुक्ते विरूपाक्षे तदा सेनापतिर्द्रुतम् । आनिनाय महत्सैन्यमनन्तमपराजितम् ॥
एकैको दानवस्तत्र वज्रहस्तसमो युधि । एकैकं स्पर्धते देवं जेतुं स्वेन बलेन हि[1] ॥२८॥
तेषां प्रधानभूतानामर्बुदं नवकोटयः । एकस्य तेषा[2]मनुपाति तावद्बलमथोर्जितम् ॥
तेषां नैकसहस्राणि दैत्यानान्तु महात्मनाम् ।
समिति[3]ञ्चक्रुरव्यग्रास्तदा दैत्याः प्रहारिणः । प्रयाणञ्चारयामासुर्देवसैन्यजिघांसया ॥
विचित्रयाना विविधध्वजाग्रा विचित्रशस्त्रा विविधोग्ररूपाः ।
दैत्याः सुराञ्जेतुमिच्छन्त उच्चैर्ननर्तुरात्तायुधयुक्तहस्ताः ॥ ३१ ॥
इति वाराहपुराणे नारदमहिषासुरयोः परस्परसंवादो नाम
त्रयोनवतितमोऽध्यायः ।

---

## चतुर्नवतितमोऽध्यायः

वराह उवाच

ततो महिषदैत्यस्तु कामरूपी महाबलः । मत्तहस्तिनमारुह्य यियासुर्मेरुपर्वतम् ॥ १ ॥
तत्रैन्द्रपुरमासाद्य देवैः सह शतक्रतुम् । अभिदुद्राव दैत्येन्द्रो देवान्क्रोधसमन्वितः ॥
आदाय स्वानि शस्त्राणि वाहनानि विशेषतः ।
अधिष्ठाय सुरानाजौ दुद्रुवुर्मुदिता भृशम् ॥ ३ ॥
तेषां प्रावर्तते[4] युद्धन्तुमुलं लोमहर्षणम् । घोरं प्रचण्डयोधानामन्योन्यमभिगर्जताम् ॥
तत्राञ्जनो नीलकुक्षिर्मेघवर्णो बलाहकः । उदाराक्षो ललाटाक्षः सुभीमो भीमविक्रमः ।
स्वर्भानुश्चेति दैत्याष्टौ वसून्दुद्रुवुराहवे ॥ ५ ॥
यथासंख्येन तद्वच्च दैत्या द्वादश चापरे । आदित्यान्दैत्यवर्यास्तु तेषां प्राधान्यतः शृणु ॥
भीमोध्वांक्षो ध्वस्तकर्णः शङ्कुकर्णस्तथैव च ।
वज्रको ज्योतिवीर्यश्च विद्युन्माली तथैव च ।
रक्ताक्षो भीमदंष्ट्रस्तु विद्युज्जिह्वस्तथैव च[5] ॥ ७ ॥
अतिकायो महाकायो दीर्घबाहुः कृतान्तकः ।
एते द्वादश दैत्येन्द्रा आदित्यान् युधि दुद्रुवुः ॥
स्वकं सैन्यमुपादाय तद्वदन्येऽपि दानवाः । रुद्रान् दुद्रुवुरव्यग्रा यथासंख्येन कोपिताः ॥
कालः कृतान्तो रक्ताक्षो हरणो मित्रहा नलः ।
यज्ञहा ब्रह्महा गोघ्नः स्त्रीघ्नः संवर्तकस्तथा ॥ १० ॥

---

१. ह इति पाठान्तरम् । २. येषामिति पाठान्तरम् ।
३. सम्मतिमिति पाठभेदः । ४ प्रवृत्ते इति पाठान्तरम् ।
५. केषुचित्पुस्तकेषु एतदर्धं न दृश्यते ।

इत्येते दश चैकश्च दैत्येन्द्रा युद्धदुर्मदाः। यथासंख्येन रुद्रांस्तु दुद्रुवुर्भीमविक्रमाः॥
शेषान्देवान् शेषदैत्या यथायोगमुपाद्रवन्। स्वयं महिषदैत्यस्तु इन्द्रन्दुद्राव वेगतः॥
स चापि बलवान्दैत्यो ब्रह्मणो वरदर्पितः। अवध्यः पुरुषेणाजौ यद्यपि स्यात्पिनाकधृक्॥
आदित्यैर्वसुभिः सार्धं रुद्रैश्च निहता भृशम्। असुरा यातुधानाश्च संख्यापूरणकेवलाः॥
देवानामपि सैन्यानि निहतान्यसुरैर्युधि॥ १४॥
एवम्भूते तदा भग्ने देवेन्द्रे विद्रुताः सुराः। अर्दिता विविधैः शस्त्रैः शूलपट्टिशमुद्गरैः॥
गतवन्तो ब्रह्मलोकमसुरैरर्दिताः सुराः॥ १६॥

इति वाराहपुराणे त्रिशक्तिमाहात्म्ये महिषासुरवधे चतुर्नवतितमोऽध्यायः।

---

# पञ्चनवतितमोऽध्यायः।

वराह उवाच

अथ विद्युत्प्रभो दैत्यस्तथा दूतो विसर्जितः। प्रणम्य प्रयतो भूत्वा कुमारीशतसङ्कुलाम्।
अस्थाने विजयापन्नस्ततो वचनमब्रवीत्॥ १॥

विद्युत्प्रभ उवाच

देवि पूर्वमृषिस्त्वासीदादिसर्गैकसम्भवः।
सख्ना सारस्वतो जातः सुपार्श्वो नाम वै विभुः॥ २॥
तस्याभवन्महातेजाः सिन्धुद्वीपः प्रतापवान्। स हि तीव्रन्तपस्तेपे माहिष्मत्यां पुरोत्तमे
कुर्वतस्तु तपो घोरं निराहारस्य शोभने। आद्या तु विप्रचित्तेः सा सुता परमशोभना॥
माहिष्मतीति विख्याता रूपेणासदृशी भुवि॥ ४॥
सा सखीभिः परिवृता विहरन्ती यदृच्छया। आगता मन्दरद्रोणीं तत्रापश्यत्तपोवनम्।
मुनेरस्वरसंज्ञस्य विविधद्रुममालितम्। लतागृहैस्तु विविधैर्वकुलैर्लकुचैस्तथा।
चन्दनैः स्पन्दनैः शालैः सरलैरुपशोभितम्॥ ६॥
विचित्रवनखण्डैश्च भूषितन्तु महात्मनः। दृष्टवाश्रमपदं रम्यं साऽसुरी कन्यका शुभम्।
माहीष्मती वरारोहा चिन्तयामास भामिनी॥ ७॥
भीषयित्वाऽहमेनन्तु तापसन्त्वाश्रमे स्वयम्।
तिष्ठामि क्रीडती सार्धं सखीभिः परमार्चिता॥ ८॥
एवं सञ्चिन्त्य सा देवी महिषी सम्बभूव तु[1]।
सखीभिः सह विश्वेशि तीक्ष्णशृङ्गाग्रधारिणी॥ ९॥
तमृषिं भीषितुं ताभिः सह गत्वा वरानना।
असौ विभीषितस्ताभिस्तां ज्ञात्वा ज्ञानचक्षुषा।
आसुरीं क्रोधसम्पन्नः शशाप शुभलोचनाम्॥ १०॥

---

१. सम्बभूव हेति पाठान्तरम्।

यस्माद्भीषयसे मान्त्वं महिषीरूपधारिणी । अतो भव महिष्येव पापकर्मे शतं समाः ॥
एवमुक्ता ततः सा तु सखीभिः सह वेपती । पादयोर्न्यपतत्तस्य शापान्तं कुरु जल्पती ॥
तस्यास्तद्वचनं श्रुत्वा स मुनिः करुणान्वितः । शापान्तमकरोत्तस्या वाक्यञ्चेदमुवाच ह ॥
अनेनैव स्वरूपेण पुत्रमेकं प्रसूय वै । शापान्तो भविता भद्रे मद्वाक्यं न मृषा भवेत् ॥
एवमुक्ता गता सा तु नर्मदातीरमुत्तमम् । यत्र तेपे तपो घोरं सिन्धुद्वीपो महातपाः ॥
तत्र चेन्दुमती नाम दैत्यकन्यातिरूपिणी । सा दृष्टा तेन मुनिना विवस्त्रा मज्जती जले ॥

चस्कन्द स मुनिः शुक्रं शिलाद्रोण्यां महातपाः ॥ १६ ॥
तच्च माहिष्मती दृष्ट्वा दिव्यगन्धि सुगन्धि च ।
ततः सखीरुवाचेदं पिबामीदं जलं शुभम् ॥ १७ ॥
एवमुक्त्वा तु सा पीत्वा तच्छुक्रं मुनिसम्भवम् ।
प्राप्ता गर्भं मुनेर्वीर्यात्सुषुवे च तदा सती ॥ १८ ॥

तस्याः पुत्रोऽभवद्धीमान् महाबलपराक्रमः । महिषेति स्मृतो नाम्ना ब्रह्मवंशविवर्धनः ॥
स त्वां वरयते देवि देवसैन्यविमर्दनः । स सुरानपि जित्वाजौ त्रैलोक्यञ्च तवानघे ॥
दास्यते देवि सुप्रीतस्तव सर्वं महासुरः । तस्यात्मोपप्रदानेन कुरु देवि महत्कृतम् ॥
एवमुक्ता तदा देवी तेन दूतेन शोभना । जहास परमा देवी वाक्यं नोवाच किञ्चन ॥

तस्या हसन्त्या दूतोऽसौ त्रैलोक्यं सचराचरम् ।
ददर्श कुक्षौ सम्भ्रान्तस्तत्क्षणात्समजायत ॥ २२ ॥

ततो देव्याः प्रतीहारी जयाख्या अतितेजना ।
देव्या हृदि स्थितं वाक्यमुवाच तनुमध्यमा ॥ २३ ॥

जया उवाच

कन्यार्थी वदते यत्तु तत्त्वया समुदीरितम् ।
यदि नाम व्रतञ्चास्याः कौमारं सर्वकालिकम् ॥ २४ ॥

अपि चान्याः कुमार्योऽत्र सन्ति देव्याः पदानुगाः ।
तासामेकापि नो लभ्या किमु देवी स्वयं शुभा ।
याहि दूत त्वरं मा ते किञ्चिदन्यद्भविष्यति ॥ २५ ॥

एवमुक्तो गतो दूतस्तावद्व्योम्नि महामुनिः । आयातो नारदस्तूर्णं गृणन्नुच्चैर्महातपाः ॥

दिष्ट्या दिष्ट्येति चागत्य तां कन्यां प्रणिपत्य च ।
उपविष्टो जगादाथ आसने परमेऽर्चितः ।
प्रणम्य देवीः सर्वास्ता उवाच च महातपाः ॥ २७ ॥

देवि देवैरहं प्रीतः प्रेषितोऽस्मि तवान्तिकम् ।
महिषाख्येन दैत्येन युधि देवा विनिर्जिताः ॥ २८ ॥

त्वां ग्रहीतुं प्रयत्नं स कृतवान्देवि दैत्यराट् ।
एवमुक्तोऽथ[1] देवैस्त्वां बोधयामि वरानने ॥ २९ ॥
स्थिरीभूता महादेवी तं दैत्यम्प्रतिघातय ।
उक्त्वैवान्तर्हितः सद्यो नारदः स्वेच्छया ययौ ।
देवी च कन्यास्ताः सर्वाः सन्नह्यन्तामुवाच ह ॥ ३० ॥
ततः कन्या महाभागाः सर्वास्ता देवीशासनात् ।
बभूवुर्घोररूपिण्यः खड्गचर्मधनुर्धराः ।
सङ्ग्रामहेतोः सन्तस्थुर्दैत्यविध्वंसनाय ताः ॥ ३१ ॥
तावद्दैत्यबलं सर्वं मुक्त्वा देवचमून्द्रुतम् ।
आययौ यत्र तद्देव्याः सन्नद्धं स्त्रीबलं महत् ॥ ३२ ॥

ततस्ता युयुधुः कन्या दानवैः सह दर्पिताः । क्षणेन तद्बलन्ताभिश्चतुरङ्गं निपातितम् ॥
शिरांसि तत्र केषाञ्चिच्छिन्नानि पातितानि च ।
अपरेषां विदार्योरः क्रव्यादाः पान्ति शोणितम् ॥ ३४ ॥

अन्ये कबन्धभूतास्तु ननृतुर्दैत्यनायकाः । एवं क्षणेन ते सर्वे विद्रुताः पापचेतसः ॥
अपरे विद्रुताः सर्वे यत्रासौ महिषासुरः । ततो हाहाकृतं सर्वं तथा दैत्यबलं महत् ॥
एवं तदाकुलं दृष्ट्वा महिषो वाक्यमब्रवीत् । सेनापते किमेतद्धि बलं भग्नं समाग्रतः ॥
ततो यज्ञहनुर्नामा दैत्यो हस्तिस्वरूपवान् । उवाच भग्नमेतद्धि कुमारीभिः समन्ततः ॥
ततो दुद्राव महिषस्ताः कन्याः शुभलोचनाः । गदामादाय तरसा घातितुन्तास्ततोऽसुरः॥
यत्र तिष्ठति सा देवी देवगन्धर्वपूजिता । तत्रैव सोऽसुरः प्रायाद्यत्र देवी व्यवस्थिता ॥

सा च दृष्ट्वा तमायान्तं विंशद्धस्ता बभूव ह ।
धनुः खड्ग तथा शक्तिं शरान् शूलं गदान्तथा ॥ ४१ ॥

मुसलञ्च तथा चक्रं भिन्दिपालं तथैव च । दण्डं पाशं ध्वजञ्चैव पद्मञ्चेति च विंशतिः ॥
भूत्वा विंशद्भुजा देवी सिंहमास्थाय दंशिता । सस्मार रुद्रं देवेशं रौद्रं संहारकारणम् ।
ततो वृषध्वजः साक्षाद् द्रुतन्तत्रैव आययौ । तया प्रणम्य विज्ञप्तः सर्वान्दैत्यान्जयाम्यहम् ।
त्वयि सन्निधिमात्रे तु देवदेव सनातन ॥ ४४ ॥

एवमुक्त्वाऽसुरान्सर्वाञ्जिगाय परमेश्वरी । मुक्त्वा तमेकं महिषं शेषं हत्वा तमध्ययात् ।
यावद्देवो ततः सापि तां दृष्ट्वा सोऽपि दुद्रुवे ॥ ४५ ॥
क्वचिद् द्रुह्यति[2] दैत्येन्द्रः क्वचिच्चैव पलायति । क्वचित्पुनर्मृधञ्चक्रे क्वचित्पुनरुपारमत्

एवं वर्षसहस्राणि दश तस्य तया सह ।
दिव्यानि विगतानि स्युर्युध्यतश्चैव शोभने ॥ ४७ ॥
बभ्राम सकलन्त्वाजौ ब्रह्माण्डं भीतयानसम् । ततः कालेन महता शतशृङ्गे महागिरौ ॥

१. उक्तोऽस्मीति पाठान्तरम् । २. कश्चिद्युध्यतीति पाठान्तरम् ।

पद्भ्यामाक्रम्य शूलेन निहतो दैत्यसत्तमः[१] ॥ ४८ ॥
शिरश्चिच्छेद खड्गेन तत्र चान्तःस्थितः[२] पुमान् ।
निर्गत्य विगतः स्वर्गं देव्याः शस्त्रनिपातनात् ॥ ४९ ॥

ततो देवगणाः सर्वे महिषं वीक्ष्य निर्जितम् । सब्रह्मकाः स्तुतिञ्चक्रुर्देव्यास्तुष्टेन चेतसा ॥

देवा ऊचुः

नमो देवि महाभागे गम्भीरे भीमदर्शने । जयस्थे स्थितिसिद्धान्ते त्रिनेत्रे विश्वतोमुखि॥
विद्याविद्ये जपे जाप्ये महिषासुरमर्दिनि । सर्वगे सर्वदेवेशि विश्वरूपिणि वैष्णवि ॥
वीतशोके ध्रुवे देवि पद्मपत्रशुभेक्षणे । शुद्धसत्त्वव्रतस्थे च चण्डरूपे विभावरि ॥
ऋद्धिसिद्धिप्रदे देवि विद्येऽविद्येऽमृते शिवे । शाङ्करी वैष्णवी ब्राह्मी सर्वदेवनमस्कृते ॥
घण्टाहस्ते त्रिशूलास्त्रे महामहिषमर्दिनि । उग्ररूपे विरूपाक्षि महामायेऽमृतस्रवे ॥
सर्वसत्त्वहिते देवि सर्वसत्त्वमये ध्रुवे । विद्यापुराणशिल्पानां जननी भूतधारिणि ॥
सर्ववेदरहस्यानां सर्वसत्त्वमतां[३] शुभे । त्वमेव शरणं देवि विद्येऽविद्ये श्रियेऽम्बिके ॥
विरूपाक्षि तथा क्षान्तिः क्षोभितान्तर्जलेऽमले ।
नमोऽस्तु ते महादेवि नमस्ते परमेश्वरि[४] ॥ ५८ ॥

शरणं त्वां प्रपद्यन्ते ये देवि परमेश्वरि । न तेषाञ्जायते किञ्चिदशुभं रणसङ्कटे ॥ ५९ ॥
यश्च व्याघ्रभये घोरे चौरराजभये तथा । स्तवमेनं सदा देवि पठिष्यति यतात्मवान्॥
निगडस्थोऽपि यो देवि त्वां स्मरिष्यति मानवः ।
सोऽपि बन्धैर्विमुक्तस्तु [५]सुसुखं वसते सुखी ॥ ६१ ॥

वराह उवाच

एवं स्तुता तदा देवी देवैः प्रणतिपूर्वकम् । उवाच देवान् सुश्रोणि वृणुध्वं वरमुत्तमम् ॥

देवा ऊचुः

देवि स्तोत्रमिदं ये हि पठिष्यन्ति तवानघे ।
सर्वकामशमापन्नान् कुरु देवि स नो वरः ॥ ६३ ॥
एवमस्त्विति तान्देवानुक्त्वा देवी परापरा ।
विससर्ज ततो देवान् स्वयं तत्रैव संस्थिता ॥ ६४ ॥

एतद् द्वितीयं यो जन्म वेद देव्या धराधरे । स वीतशोको विरजाः पदं गच्छत्यनामयम्॥

इति वाराहपुराणे त्रिशक्तिमाहात्म्ये महिषासुरवधो नाम पञ्चनवतितमोऽध्यायः ।

---

१. दैत्यनायक इति पाठान्तरम् । २. अन्ते स्थित इति वा पाठः ।
३. सत्त्ववतामिति पाठान्तरम् ।
४. कस्मिंश्चित् पुस्तके नमस्ते सर्वदेवानां भावनित्ये अघक्षये इत्यधिकार्धं वर्तते ।
५. विनिर्मित इति क्वचित्पठ्यते ।

# षण्णवतितमोऽध्यायः

वराह उवाच

या सा नीलगिरिं याता तपसे धृतमानसा ।
रौद्री तमोद्भवा शक्तिस्तस्याः शृणु धरे व्रतम् ॥ १ ॥
तपः कृत्वा चिरं[1] कालं पालयाम्यखिलं जगत् ।
एवमुद्दिश्य पञ्चाग्निं साधयामास भामिनी ॥ २ ॥
तस्याः कालान्तरे देव्यास्तपन्त्यास्तप उत्तमम् ।
रुरुर्नाम महातेजा ब्रह्मदत्तवरोऽसुरः ॥ ३ ॥
समुद्रमध्ये रत्नाढ्यं पुरमस्ति महावरम्[2] । तत्र राजा स दैत्येन्द्रः सर्वदेवभयङ्करः ॥४॥
अनेकशतसाहस्रकोटिकोटिशतोत्तरैः । असुरैरन्वितः श्रीमान्द्वितीयो नमुचिर्यथा ॥
कालेन महता चासौ लोकपालपुराण्यथ । जिगीषुः सैन्यसंवीतो देवैर्युद्धमरोचयत् ॥
उत्तिष्ठतस्तस्य महासुरस्य समुद्रतोयं ववृधेऽतिमात्रम् ।
अनेकनक्रग्रहमीन[3]जुष्टमाप्लावयत्पर्वतसानुदेशान् ॥ ७ ॥
अन्तःस्थितानेकसुरारिसङ्घाद्विचित्रवर्मायुधचित्रशोभम् ।
भीमं बलं वर्मितचारुयोधं विनिर्ययौ सिन्धुजलाद्विशालात्[4] ॥ ८ ॥
तत्र द्विपा दैत्यवरैरुपेताः समानघण्टायुतकिङ्किणीकाः ।
विनिर्ययुः स्वाकृतिभीषणाश्च समत्वमुच्चैः खलु दर्शयन्तः ॥ ९ ॥
अश्वास्तथा काञ्चनपीठनद्धा रोहितमत्स्यैः[5] समभा जलान्तम्[6] ।
व्यवस्थितास्ते सममेव तूर्णं विनिर्ययुर्लक्षशः कोटिशश्च ॥ १० ॥
रथा रविस्यन्दनतुल्यवेगाः सुचक्रदण्डाक्षत्रिवेणुयुक्ताः ।
सुशस्त्रयन्त्राः [6]परिपीडिताङ्गाश्चलत्पताकाः[7] त्वरितं विशक्ताः ॥ ११ ॥
तथैव योधाः स्थगितेतरेतरास्तितीर्षवो ये वरतूणपाणयः ।
पदे पदे लब्धजयाः प्रहारिणो विरेजुरुच्चैरसुरानुगा भृशम् ॥ १२ ॥
दैत्येषु चैव भग्नेषु विनिर्गत्य जलात्ततः । चतुरङ्गबलोपेतः प्रायादिन्द्रपुरं प्रति ॥ १३ ॥
युयोध च सुरैः सार्धं रुरुदैत्यपतिस्तथा । मुद्गरैर्मुशलैर्घोरैः शरैर्दण्डायुधैस्तथा ।
ययुर्दैत्याः[8] सुरान् संख्ये सुराश्चैव तथासुरान् ॥ १४ ॥
एवं क्षणमथो युद्ध्वा तदा देवाः सवासवाः ।
असुरैर्निर्जिताः सद्यो दुद्रुवुर्विमुखा भृशम् ॥ १५ ॥

---

१. अचिरमिति वा पाठः । २. महावनमिति क्वचित्पठ्यते ।
३. 'जाल' इति पाठान्तरम् । ४. विशालमिति इति पाठान्तरम् ।
५. रोहैस्तु युक्ताः सितचामरैश्चेति क्वचित्पठ्यते ।
६. सुशस्त्रपक्षोपरीति पाठान्तरम् । ७. चलन्त्यनन्ता इति पाठान्तरम् ।
८. जघ्नुर्दैत्या इति क्वचित्पठ्यते ।

देवेषु चैवम्भग्नेषु विद्रुतेषु विशेषतः । असुरः सर्वदेवानामन्वधावत वीर्यवान् ॥१६॥
ततो देवगणाः सर्वे द्रवन्तो भयविह्वलाः । नीलं गिरिवरं जग्मुर्यत्र देवी व्यवस्थिता ॥
रौद्री तपोरता देवी तामसी शक्तिरुत्तमा । संहारकारिणी देवी कालरात्रीति तां विदुः

सा दृष्ट्वा तान्तदा देवान् भयत्रस्तान्विचेतसः ।
मा भैष्टेत्युच्चकैर्देवी तानुवाच सुरोत्तमान् ॥ १९ ॥

देव्युवाच

किमियं व्याकुला देवा गतिर्व उपलक्ष्यते । कथयध्वं द्रुतन्देवाः सर्वथा भयकारिणम्[1]॥

देवा ऊचुः

अयमायाति दैत्येन्द्रो रुरुर्भीमपराक्रमः । एतस्य भीतान्रक्षस्व त्वं देवान् परमेश्वरि ॥
एवमुक्ता तदा देवैर्देवी भीमपराक्रमा । जहास परया प्रीत्या देवानां पुरतः शुभा ॥

तस्या हसन्त्या वक्त्रात्तु बह्व्यो देव्यो विनिर्ययुः ।
याभिर्विश्वमिदं व्याप्तं विकृताभिरनेकशः ॥ २३ ॥
पाशाङ्कुशधराः सर्वाः सर्वाः पीनपयोधराः ।
सर्वाः शूलधरा भीमाः सर्वाश्चापधराः शुभाः ॥ २४ ॥
ताः सर्वाः कोटिशो देव्यस्तां देवीं वेष्ट्य संस्थिताः ।
युयुधुर्दानवैः सार्धं बद्धतूणा महाबलाः ॥ २५ ॥

क्षणेन दानवबलं तत्सर्वं निहतन्तु तैः । देवाश्च सर्वे सम्पन्ना युयुधुर्दानवं बलम् ॥
कालरात्र्या बलञ्चैव यच्च देवबलं महत् । तत्सर्वन्दानवबलमनयद्यमसादनम् ॥२७॥
एक एव महादैत्यो रुरुस्तस्थौ महामृधे । स्वाञ्च[2] मायां महारौद्रीं रौरवीं विससर्ज ह ॥

सा माया ववृधे भीमा सर्वदेवप्रमोहिनी ।
तया विमोहिता देवाः सद्यो निद्रान्तु भेजिरे[3] ॥ २९ ॥
देवी च त्रिशिखेनाजौ तं दैत्यं समताडयत् ॥ ३० ॥

तया तु ताडितस्याथास्य दैत्यस्य शुभलोचने । चर्ममुण्डे उभे सम्यक् पृथग्भूते बभूवतुः ॥
रुरोस्तु दानवेन्द्रस्य चर्ममुण्डे क्षणाद्यतः । अपहृत्याहरद्देवी चामुण्डा तेन साऽभवत् ॥
सर्वभूतमहारौद्री या देवी परमेश्वरी । संहारिणी तु या चैव कालरात्रिः प्रकीर्तिता ॥

तस्या ह्यनुचरा देव्यो बाह्यसंख्यातकोटयः ।
तास्तान्देवीं महाभागां परिवार्य व्यवस्थिताः ।
याचयामासुरव्यग्रास्तास्तान्देवीं बुभुक्षिताः ॥ ३४ ॥
वयं देवि क्षुधार्ताः स्मो देहि नो भोजनं शुभे ।

---

१. भयकारणमिति पाठान्तरम् ।
२. स चेति क्वचित्पठ्यते । ३. सर्वे निद्रान्तु भेजिरे इति पाठान्तरम् ।

एवमुक्ता तदा देवी दध्यौ तासान्तु भोजनम् ॥ ३५ ॥
न चाध्यगच्छद्य यदा[1] तासां भोजनमन्तिकात् ।
ततो दध्यौ महादेवं रुद्रं पशुपतिं विभुम् ॥ ३६ ॥
सोऽपि ध्यानात्समुत्तस्थौ परमात्मा त्रिलोचनः ।
उवाच च द्रुतं देवीं किन्ते कार्यं विवक्षितम् ।
ब्रूहि देवि वरारोहे यत्ते मनसि ॥ ३७ ॥

देव्युवाच

भक्ष्यार्थमासां देवेश किञ्चिद्दातुमिहार्हसि ।
बलात्कुर्वन्ति मामेता भक्षार्थिन्यो महाबलाः ।
अन्यथा मामपि बलाद्भक्षयिष्यन्ति ताः प्रभो ॥ ३८ ॥

रुद्र उवाच

एतासां शृणु देवेशि भक्ष्यमेकं मयोदितम् । कथ्यमानं वरारोहे कालरात्रे महाप्रभे ॥
या स्त्री सगर्भा देवेशि अन्यस्त्रीपरिधानकम् । परिधत्ते स्पृशेद्वापि[2] पुरुषस्य विशेषतः ।
स भागोस्तु महाभागे कासाञ्चित्पृथिवीतले ॥ ४० ॥
अन्यास्छिद्रेषु वाऽज्ञानां गृहीत्वा तत्र वै बलिम् ।
लब्ध्वा भवन्तु सुप्रीता अपि वर्षशतान्यपि ॥ ४१ ॥
अन्याः सूतिगृहे छिद्रं गृह्णीयुस्तत्र पूजिताः ।
निवसिष्यन्ति देशे च[3] तथान्या जातहारिकाः ॥ ४२ ॥
गृहे क्षेत्रे तडागेषु वाप्युद्यानेषु चैव हि । अन्यचित्ता[4] रुदन्त्यो याः स्त्रियस्तिष्ठन्ति नित्यशः।
तासां शरीराण्याविश्य काञ्चित्तृप्तिमवाप्स्यथ ॥ ४३ ॥
एवमुक्त्वा तदा देवीं स्वयं रुद्रः प्रतापवान् । दृष्ट्वा रुरुञ्च सबलमसुरेन्द्रं निपातितम् ।
स्तुतिञ्चकार भगवान् स्वयं देवस्त्रिलोचनः ॥ ४४ ॥

रुद्र उवाच

जयस्व देवि चामुण्डे जय भूतापहारिणि । जय सर्वगते देवि कालरात्रे नमोऽस्तु ते ॥
विश्वमूर्त्ते शुभे शुद्धे विरूपाक्षि त्रिलोचने । भीमरूपे शिवे वेद्ये महामाये महोदये ॥
मनोजवे[5] जये जृम्भे भीमाक्षि क्षुभितक्षये ।
महामारि विचित्राङ्गे जय नृत्यप्रिये शुभे ॥ ४७ ॥
विकरालि[6] महाकालि कालिके पापहारिणी ।
पाशहस्ते दण्डहस्ते भीमरूपे भयानके ॥ ४८ ॥

---

१. नाध्यगच्छद्यदेति पाठान्तरम् ।
२. स्पृशेद्वापीति कुत्रचित् पुस्तके पाठः ।
३. देवेश्य इति पाठान्तरम् ।
४. अन्यचिन्ता इति पाठान्तरम् ।
५. महाजवे इति वा पाठः ।
६. विकराले इति पाठान्तरम् ।

चामुण्डे ज्वलमानास्ये तीक्ष्णदंष्ट्रे महाबले[1] । शवयानस्थिते देवि प्रेतासनगते शिवे ॥
भीमाक्षि भीषणे देवि सर्वभूतभयङ्करि । कराले विकराले च महाकाले करालिनि ।
काली कराली विक्रान्ता कालरात्रि नमोऽस्तु ते ॥ ५७ ॥
इति स्तुता तदा देवी रुद्रेण परमेष्ठिना । तुतोष परमा देवी वाक्यञ्चेदमुवाच ह ।
वरं वृणीष्व देवेश यत्ते मनसि वर्तते ॥ ५१ ॥

रुद्र उवाच

स्तोत्रेणानेन ये देवि त्वां स्तुवन्ति वरानने । तेषान्त्वं वरदा देवि भव सर्वगता सती ॥
यश्चेमन्त्रिःप्रकारन्तु देवि भक्त्या समन्वितः । स पुत्रपौत्रपशुमान् समृद्धिमुपगच्छति ॥
यश्चेमं शृणुयाद्भक्त्या त्रिशक्त्यास्तु समुद्भवम् ।
सर्वपापविनिर्मुक्तो पदं गच्छत्यनामयम् ॥ ५४ ॥
एवं स्तुत्वा ततो[2] देवीं चामुण्डां परमेश्वरीम्[3] ।
क्षणादन्तर्हितो देवस्ते च देवा दिवं ययुः ॥ ५५ ॥
य एतां वेद वै देव्या उत्पत्तिं त्रिविधां वराम् ।
स कर्मपाशनिर्मुक्तः[4] परं निर्वाणमृच्छति ॥ ५६ ॥
भ्रष्टराज्यो यदा राजा नवम्यान्नियतः शुचिः । अष्टम्याञ्च चतुर्दश्यामुपवासी नरोत्तमः ।
संवत्सरेण लभते राज्यं निष्कण्टकं नृपः ॥ ५७ ॥
एषा त्रिशक्तिरुद्दिष्टा नयसिद्धान्तगामिनी ।
एषा श्वेतापरा सृष्टिः सात्त्विकी ब्रह्मसंस्थिता ॥ ५८ ॥
एषैव रक्ता रजसि वैष्णवी परिकीर्तिता । एषैव कृष्णा तमसि रौद्री देवी प्रकीर्तिता ॥
परमात्मा यथा देव एक एव त्रिधा स्थितः । प्रयोजनवशाच्छक्तिरेकैव त्रिविधाऽभवत् ॥
य एतं शृणुयात्सर्गं त्रिशक्त्याः परमं शिवम् । सर्वपापविनिर्मुक्तः परन्निर्वाणमाप्नुयात् ॥
यश्चेमं शृणुयान्नित्यं नवम्यां नियतः स्थितः । स राज्यमतुलं लेभे भयेभ्यश्च प्रमुच्यते ॥
यस्येदं लिखितं गेहे सदा तिष्ठति धारितम्[5] ।
न तस्याग्निभयं घोरं सर्पचौरादिजं भवेत् ॥ ६३ ॥
यश्चेमं पूजयेद्भक्त्या पुस्तकेऽपि स्थितं बुधः ।
तेन यष्टं भवेत्सर्वं त्रैलोक्यं सचराचरम् ॥ ६४ ॥
जायन्ते पशवः पुत्रा धनं धान्यं वराः स्त्रियः ।
रत्नान्यश्वास्तथा गावो दासा दास्यो भवन्ति हि ।
यस्येदं तिष्ठते गेहे तस्य सम्पद्भवेद् ध्रुवम् ॥ ६५ ॥

---

१. महावशी इति पाठान्तरम् । २. भव इति केषुचित् पुस्तकेषु पाठः ।
३. चामुण्डां च परमेश्वरीमिति वा पाठः । ४. सर्वपापविनिर्मुक्त इति पाठान्तरम् ।
५. धारिणीति वा पाठः ।

वराह उवाच

एतदेव रहस्यन्ते कीर्त्तितं भूतधारिणि । रुद्रस्य खलु माहात्म्यं सकलं कीर्त्तितं मया ॥

नवकोट्यस्तु चामुण्डा भेदभिन्ना व्यवस्थिताः ।
या रौद्री तामसी शक्तिः सा चामुण्डा प्रकीर्तिता ॥ ६७ ॥
अष्टादश तथा कोट्यो वैष्णव्या भेद उच्यते ।
या सा तु[1] राजसी शक्तिः पालनी चैव वैष्णवी ।
या ब्रह्मशक्तिः सत्त्वस्था सा अनन्ता प्रकीर्तिता ॥ ६८ ॥

एतासां सर्वभेदेषु पृथगेकैकशो धरे[2] । सर्वासां भगवान्रुद्रः सर्वगश्च पतिर्भवेत् ॥
यावन्त्यस्या महाशक्त्यास्तावद्रूपाणि शङ्करः । कृत्तिवासाश्च[3] भजते पतिरूपेण सर्वदा ॥

यश्चाराधयते तस्य रुद्रस्तुष्टो भविष्यति ।
सिध्यन्ति तस्य कामाश्च मनसा चिन्तिता अपि ॥ ७१ ॥

इति वाराहपुराणे त्रिशक्तिमाहात्म्यं नाम षण्णवतितमोऽध्यायः ।

---

# सप्तनवतितमोऽध्यायः

वराह उवाच

अथ रुद्रव्रतोत्पत्तिं शृणु देवि वरानने । येन ज्ञातेन पापेभ्यो[4] मुच्यते नात्र संशयः ॥
ब्रह्मणा तु यदा सृष्टः पूर्वं रुद्रो वरानने । तृतीये जन्मनि विभुः पिङ्गाक्षो नीललोहितः॥
तदा कौतूहलाद्ब्रह्मा स्कन्धे तं जगृहे प्रभुः । स्कन्धारूढस्तदा रुद्रो ब्रह्मणोऽव्यक्तजन्मनः॥
जन्मतश्च शिरो यद्धि पञ्चमं तज्जगाद ह । मन्त्रमाथर्वणं धात्रि[5] येन सद्यः प्रमुच्यते ॥
कपालिन् रुद्र बभ्रोऽथ भव कैरात सुव्रत । पाहि विश्वं विशालाक्ष कुमार वरविक्रम ॥
एवमुक्तस्तदा रुद्रो भविष्यैर्नामभिर्भवः । कपालशब्दात्कुपितस्तच्छिरो विचकर्त ह ॥
वामाङ्गुष्ठनखेनाद्यं प्राजापत्यं विचक्षणः । तन्निकृत्तं शिरो धात्रि हस्तलग्नं बभूव ह ॥

तस्मिन् छिन्नेऽथ[6] शिरसि प्राजापत्यं त्रिलोचनः ।
ब्रह्माणं प्रयतो भूत्वा रुद्रो वचनमब्रवीत् ॥ ८ ॥

रुद्र उवाच

कथं कपालं मे देव करात्पतति सुव्रत । नश्यते च कथं पापं ममैतद्वद सुव्रत ॥ ९ ॥

---

१. विष्णो इति क्वचित् पाठः ।
२. साधने इति वा पाठः ।
३. कृतवांस्ताश्चेति पाठान्तरम् ।
४. पापानामिति पाठान्तरम् ।
५. रुद्र इति वा पाठः ।
६. तस्मिन्निकृत्ते इति क्वचित्पठ्यते ।

ब्रह्मोवाच

इदमेव व्रतं देव चर कापालिकं विभो । समयाचारसंयुक्तं कृत्वा स्वेनैव तेजसा ॥
एवमुक्तस्तदा रुद्रो ब्रह्मणाऽव्यक्तमूर्त्तिना । आजगाम गिरिश्रेष्ठं माहेन्द्रं पापनाशनम् ॥
तत्र स्थित्वा महादेवस्तच्छिरो विभिदे त्रिधा ।
तस्मिन् भिन्ने पृथक्केशान् गृहीत्वा भगवान् भवः ॥ १२ ॥
यज्ञोपवीतं केशन्तु महास्थाक्षमणींस्तथा । कपालशकलञ्चैकमसृक्पूर्णं करे स्थितम् ॥
अपरं खण्डशः कृत्वा जटाजूटे न्यवेशयत् । एवं कृत्वा महादेवो बभ्रामेमां वसुन्धराम् ॥
सप्तद्वीपवतीं पुण्यां मज्जंस्तीर्थेषु नित्यशः । समुद्रे प्रथमं स्नात्वा ततो गङ्गां व्यगाहत ॥
सरस्वतीं ततो गत्वा यमुनासङ्गमन्ततः । शतद्रुञ्च ततो गत्वा देविकाञ्च महानदीम् ॥
वितस्तां चन्द्रभागाञ्च गोमतीं सिन्धुमेव च ।
तुङ्गभद्रां तथा गोदामुत्तरे गण्डकीं तथा ॥ १७ ॥
नेपालञ्च[1] ततो गत्वा यतो[2] रुद्रमहालयम् । ततो दारुवनं गत्वा केदारगमनम्पुनः ॥
महेश्वरं[3] ततो गत्वा गयां पुण्यमथाऽगमत् । तत्र फल्गुकृतस्नानः पितॄन् सन्तर्प्य यत्नतः॥
पश्चाद्[4] वेगेन सकलं ब्रह्माण्डं भूतधारिणी । बभ्राम सर्वदेवेशः षष्ठेऽब्दे तस्य चापतत् ।
परिधानन्तु कौपीनं नग्नः कापालिकोऽभवत्[5] ॥ २० ॥
पुनरब्दद्वयम्भ्रान्तस्तीर्थे तीर्थे हरः स्वयम् ।
कपालन्त्यक्तुकामः सन् तद्धस्तात्तत्तु नापतत्[6] ॥ २१ ॥
ततोऽब्दमेकं बभ्राम हिमवत्पर्वते शुभे[7] । गत्वा हरिहरक्षेत्रंस्नात्वा देवाङ्कदे तथा ।
सोमेश्वरं समभ्यर्च्य गतोऽसौ चक्रतीर्थकम् ॥ २२ ॥
तत्र स्नात्वा तथा नत्वा त्रिजलेश्वरसंज्ञितम् ।
अयोध्यायां तथा गत्वा वाराणस्यां ततोऽगमत् ॥ २३ ॥

---

१. ऊर्ध्वगङ्गेति पाठान्तरम् । २. तत इति क्वचित् पठ्यते ।
३. भद्रेश्वरमिति वा पाठः । ४. एवमिति क्वचित्पठ्यते ।
५. भ्रमतः परिधानन्तु कौपीनं रसनागतम् ।
तस्मिंस्तु पतिते देवि नग्नः कापालिकोऽभवत् ॥ इति कुत्रचित् पाठः ।
६. पुनरब्दद्वयं भ्रान्तो ब्रह्माण्डं तीर्थकारणात् ।
तीर्थे तीर्थे हरः स्नात्वा क[illegible]लं त्यक्तुमिच्छति ।
त्यजतोऽपि न तद्धस्ताच्च्यवते भूतधारिणीति पाठान्तरम् ॥
७ इतः षड्विंशश्लोकपर्यन्तं पुस्तकान्तरेऽन्यथैव । यथा—
ततोऽन्यद्वर्षमेकन्तु वर्तते हिमवद्गिरौ । भ्रमतो विभ्रमो जातस्त्रिनेत्रस्य महात्मनः ॥
पुनरब्दद्वयञ्चान्यत्परमेष्ठी वृषाकपिः । बभ्राम रुद्रस्तीर्थानि पुराणानि समन्ततः ॥
कस्यचित्त्वथ कालस्य द्वादशेऽब्दे धराधरे । वाराणसीं गतो देवस्तत्र स्नानमथारभत् ॥
गङ्गायां देवदेवेशो यावन्मज्जति भामिनि । भवेत्कपालं पतितं हस्तायाद्ब्रह्मणः पुरा ॥
कपालमोचनं नाम ततस्तीर्थमनुत्तमम् । पृथिव्यां ख्यातिमगमद्वाराणस्यां धराधरे ॥

द्वादशाब्दैर्गतवतः सीमाचारिगणैस्तथा। बलात्कारेण तद्धस्तात्कपालं पातितं भुवि।
कपालमोचनं तीर्थं ततो जातमघापहम् ॥ २४ ॥
गङ्गाम्भसि ततः स्नाप्य विश्वेशम्पूज्य भक्तितः।
रुद्रो विशुद्धिमापन्नो मुक्तः स ब्रह्महत्यया ॥ २५ ॥
कपालमोचनं नाम तीर्थं त्रैलोक्यविश्रुतम्।
यत्राप्लुतो नरो भक्त्या ब्रह्महा तु विशुध्यति ॥ २६ ॥
कपालं पतितं दृष्ट्वा रुद्रहस्ताच्चतुर्मुखः। आगतो देवसहितो वाक्यञ्चेदमुवाच ह ॥

ब्रह्मोवाच

भव रुद्र विरूपाक्ष लोकमार्गेऽव्यवस्थितः[1]। व्रतानि कुरुते देव त्वत्कृतानि हि पुत्रक।
स त्वत्प्रसादाद्देवेश ब्रह्महापि विशुध्यति ॥२८।
यद्व्रतं नग्नकापालं यद्बाभ्रव्यन्त्वया कृतम्।
यत्कृतं शुद्धशैवञ्च तत्तन्नाम्ना भविष्यति ॥ २९।
मां पुरस्कृत्य देवस्त्वं पूज्यसे यैर्विधानतः। तेषां शास्त्राणि सर्वाणि शास्त्रं पाशुपतं तथा।
कथयस्व महादेव सविधानं समासतः ॥ ३० ॥
एवमुक्तस्ततो रुद्रो ब्रह्मणाऽव्यक्तमूर्त्तिना। देवैर्जयेति सन्तुष्टः कैलासनिलयं ययौ ॥
ब्रह्मा अपि ययुः सुरैः सार्धं गतः स्वर्लोकमुत्तमम्।
देवा अपि ययुः खञ्च स्वस्थानं स्वं यथागतम् ॥ ३२ ॥
एतद्रुद्रस्य माहात्म्यं मया ते परिकीर्त्तितम्।
चरितं यच्च देवस्य वित्तं समभवद्भुवि ॥ ३३ ॥

इति वाराहपुराणे रुद्रमाहात्म्यं नाम सप्तनवतितमोऽध्यायः।

---

## अष्टनवतितमोऽध्यायः

धरण्युवाच

योऽसौ सत्यतपा नाम लुब्धो भूत्वा द्विजो बभौ।
येनारुणिर्व्याघ्रभयाद्रक्षितो यः स्वशक्तितः ॥ १ ॥

---

१. इतोऽपि चित्वाच्छ्लोकपर्यन्तं पुस्तकान्तरेऽधोलिखितरूपः पाठो दृश्यते। यथा—
रुद्र भव विरूपाक्ष लोकमार्गे व्यवस्थित। व्रतानि कुरुते देव त्वच्चीर्णानि महाप्रभ ॥
कपालं गृह्य यद्भ्रान्तं कपालव्यग्रपाणिना। तद्व्रतं नग्नकापालं भविष्यति नृणां भुवि ॥
यच्च ते बभ्रुता जाता हिमवत्यचलोत्तमे। भ्रमतस्तद्व्रतं देव बाभ्रव्यन्तद्भविष्यति ॥
यच्चेदानीं विशुद्धस्य तीर्थेऽस्मिन् देहशुद्धता। तच्छुद्धशैवं भवतु व्रतं ते पापनाशनम् ॥
ये पुरस्कृत्य देवास्त्वां पूजयन्ते विविधान्विताः। शास्त्राणि तानि सर्वेषां कथयिष्यामि नान्यथा ॥

दुर्वासाः संश्रुतार्थश्च हिमवन्तं नगं ययौ । तस्योपरि महच्चित्र भवतीति त्वयेरितम् ।
कीदृशं तन्ममाचक्ष्व महत्कौतूहलं विभो ॥ २ ।

वराह उवाच

स हि सत्यतपाः पूर्वं भृगुवंशोद्भवो द्विजः । दस्युसंसर्गसम्भूतो दस्युवत्समजायत ।३॥
ततः कालेन महता ऋषिसङ्गात्पुनर्द्विजः । बभौ दुर्वाससा सम्यग्बोधितश्च विशेषतः ॥
हिमाद्रेरुत्तरे पादे पुष्यभद्रा नदी शुभा ।
तस्यास्तीरे शिला दिव्या नाम्ना चित्रशिला धरे ॥ ५ ॥
न्यग्रोधश्च महांस्तत्र नाम्ना भद्रो महावटः ।
तत्र सत्यतपाः स्थित्वा तपः कुर्वन्महातपः ॥ ६ ॥
स कदाचित्कुठारेण चकर्त समिधः किल ।
चिच्छेद अङ्गुलीमेकां वामतर्जनिकां मुनिः ॥ ७ ॥
छिन्नायामङ्गुलौ तस्य भस्मचूर्णं भवत्किल । न लोहितं न मांसन्तु न मज्जा तत्र दृश्यते॥
अङ्गुली सन्धिता तेन[1] पूर्ववच्चाभवत्कृते ॥ ९ ॥
तस्मिन् भद्रवटे चैकं मिथुनं किन्नरं स्थितम् । रात्रौ सुप्तमृषेस्तस्य दृष्ट्वा तन्महदद्भुतम् ।
प्रभाते विमले प्राप्तमिन्द्रलोकमिति स्मृतिः ॥ १० ॥
अथेन्द्रेण सुराः सर्वे यक्षगन्धर्वकिन्नरैः । पृष्टाः किञ्चिदिहाश्चर्यमपूर्वं कथ्यतामिति ॥
तत्र रुद्रसरस्तीरे यदेतन्मिथुनं शुभम् । स्थितं किन्नरयोस्तच्च वाक्यञ्चेदमुवाच ह ॥
दृष्टन्तु महदाश्चर्यं पुष्यभद्रातटे शुभे । यदेतत्सत्यतपसः समबोचत्ततः शुभे[2] ॥ १३ ॥
स्रवणं भस्मनश्चैव श्रुतं सर्वं शशंस ह । तच्छ्रुत्वा सहसा शक्रो विस्मितो विष्णुमब्रवीत्
आगच्छ विष्णो गच्छामो हिमवत्पार्श्वमुत्तमम् । तत्राश्चर्यमपूर्वं मे कथितं किन्नरेण ह॥
एवमुक्तस्ततो विष्णुर्वाराहं रूपमग्रहीत् । मृगयुश्च तथैवेन्द्रो जग्मतुस्तमृषिं प्रति ।।१६॥
विष्णुर्वाराहरूपेण ऋषिदृष्टिपथे स्थितः । भूत्वा दृश्योऽप्यदृश्योऽभूत्पुनरेव च दृश्यते॥
तावदिन्द्रो धनुष्पाणिस्तीक्ष्णसायकधृग्वने । आगत्य सत्यतपसमृषिमेनमुवाच ह ।।१८॥
भगवन्निह दृष्टस्ते वराहः पृथुलो महान् । येन तं हन्मि भृत्यानां पोषणाय महामुने ॥
एवमुक्तो मुनिस्तेन चिन्तयामास तत्क्षणात् । यदि तं दर्शयाम्यस्मै वराहं हन्यते तदा ।
नो चेत्कुटुम्बः क्षुधया सीदत्यस्य न संशयः ॥ २० ॥
जायापुत्रसमायुक्तो लुब्धकोऽयं क्षुधान्वितः । सशल्यश्च वराहोऽयं ममाश्रममुपागतः ॥
एवं गते तु किं कार्यमथासौ चिन्तयन् मुनिः[3] ।
नाध्यगच्छत बुद्धिश्च क्षणात्तस्य व्यजायत ॥ २२ ॥

---

१. अङ्गुलीसंविधानेनेति वा पठ्यते ।

२. दृष्टं किञ्चिदिहाश्चर्यं दृष्टिस्तु हिमवद्गिरौ । पुष्पभद्रानदीतीरे महदाश्चर्यमुत्तमम् ।
यदेतत्सत्यतपसः समबोचस्ततः शुभे ॥ इति कस्मिंश्चित् पुस्तके पाठः ।

३. प्रभुरिति पाठः ।

द्रष्टुं चक्षुर्निहितं जङ्गमेषु जिह्वा वक्तुं मृगयौ तद्विसृष्टम् ।
द्रष्टुं चक्षुर्नास्ति जिह्वेह वक्तुं जिह्वायाः स्यात्तत्त्वतोऽस्तीह चक्षुः ॥ २३ ॥
एवं श्रुत्वा द्वावपि तस्य तुष्टौ इन्द्राविष्णू दर्शयन्तौ स्वमूर्त्तिम् ।
वाक्यं चेदमूचतुर्ब्रूहि नौ ते तुष्टौ धन्यं वरमेकं वदस्व ॥ २४ ॥
तच्छ्रुत्वाऽसौ सत्यतपा उवाच न चातिरिक्तोऽस्ति वरः पृथिव्याम् ।
यद्दृष्टौ मे पुरतो देवदेवावलं वरेणापि कृतार्थतासीत् ॥ २५ ॥
तथापीदं ये सदा पर्वकाले विप्रा विप्रांश्चार्चयन्तीह भक्त्या ।
तेषां पापं नश्यतां मासमेकं यत्सञ्चितं त्वेष एको वरोऽस्तु ॥ २६ ॥
मुक्तिश्चाहं व्रजामीति द्वितीयोऽस्तु वरो मम ॥ २७ ॥
तथेत्युक्त्वा तु तौ देवौ दत्त्वा तस्य वरं शुभम् ।
अदर्शनं गतौ देवौ सोऽपि तत्र व्यवस्थितः ।
लब्ध्वा वरं सत्यतपा ब्रह्मभूतोऽभवद्धृदि ॥ २८ ॥
यावदास्ते शुभे देशे कृतकृत्यो महामुनिः । तावत्तस्य गुरुस्तत्र आरुणिः समदृश्यत ।
पृथ्वीं प्रदक्षिणीकृत्य तीर्थहेतोर्विचक्षणः ॥ २९ ॥
तेन चासौ महाभक्त्या पूजितो मुनिपुङ्गवः ।
पाद्याचमनगोदानैः कृतासनपरिग्रहः ॥ ३० ॥
ज्ञात्वा स शिष्यं सिद्धन्तु तपसा दग्धकिल्बिषम् ।
उवाच विनयापन्नं प्राञ्जलिं पुरतः स्थितम् ॥ ३१ ॥

आरुणिरुवाच

पुत्र सिद्धोऽसि तपसा ब्रह्मभूतोऽसि सुव्रत ।
इदानीमात्मना सार्धं मुक्तिकालो मतोऽस्ति ते ॥ ३२ ॥
उत्तिष्ठ गम्यतां पुत्र मया सार्धं परं पदम् ।
यद्गत्वा न पुनर्जन्म भवतीति न संशयः ॥ ३३ ॥
एवमुक्त्वा तु तौ सिद्धौ उभौ सत्यतपारुणी ।
ध्यात्वा नारायणं देवं तद्देहे तौ लयं गतौ ॥ ३४ ॥
यश्चापि शृणुयात् पादं पर्वाध्यायं सविस्तरम् ।
श्रावयेद्वापि स नरो गतिमिष्टामवाप्नुयात् ॥ ३५ ॥
इति वाराहपुराणे पर्वाध्यायो नाम अष्टनवतितमोऽध्यायः ।

# नवनवतितमोऽध्यायः

धरण्युवाच

या सा माया शरीरात्तु ब्रह्मणोऽव्यक्तजन्मनः ।
गायत्र्यष्टभुजा भूत्वा वैत्रासुरं[1] मयोधयत् ॥ १ ॥
सैव नन्दाभवद्देवी देवकार्यचिकीर्षया । महिषाख्यासुरवधं कुर्वती ब्रह्मणेरिता ।
वैष्णव्याख्या ततो देव कथमेतद्धि शंस मे ॥ २ ॥

वराह उवाच

इयं जगद्धिता देवी गङ्गा शङ्करसुप्रिया । कश्चित्किञ्चिद्धवेदत्तं स्वपदं वेद सर्ववित् ॥
स्वायम्भुवे हतो दैत्यो वैष्णव्या मन्दरे गिरौ ।
महिषाख्यः परः पश्चात्स वै वृत्रासुरः पुनः[2] ।
नन्दया निहतो विन्ध्ये महाबलपराक्रमः ॥ ४ ॥
अथवा ज्ञानशक्तिः सा महिषोऽज्ञानमूर्त्तिमान् ।
अज्ञानं ज्ञानसाध्यन्तु भवतीति न संशयः ॥ ५ ॥
मूर्त्तिपक्षे चेतिहासममूर्त्तं चैकवद्धृदि । ख्यायते[3] वेदवाक्यैश्च इह सा वेदवादिभिः ॥
इदानीं शृणु मे देवि पञ्चपातकनाशनम् । यजनन्देवदेवस्य विष्णोः पुत्रवसुप्रदम् ॥७॥
इह जन्मनि दारिद्र्यव्याधिकुष्ठादिपीडितः । अलक्ष्मीवानपुत्रस्तु योभवेत्पुरुषो भुवि ॥
तस्य सद्यो भवेल्लक्ष्मीरायुर्वित्तं सुतः सुखम् । दृष्ट्वा तु मण्डलगतं देवं देव्या समन्वितम्॥
नारायणं परन्देवं यः पश्यति विधानतः । आचार्यदर्शितं देवि मन्त्रमूर्त्तिमयोनिजम् ॥
कार्त्तिके मासि शुक्लायां द्वादश्यान्तु विशेषतः ।
सर्वासु वा यजेद्देवं द्वादशीषु विधानतः ॥ ११ ॥
संक्रान्त्यां वा महाभागं चन्द्रसूर्यग्रहेऽपि वा[4] । यः पश्यति हरिं देवि पूजितं गुरुणा शुभे॥
तस्य सद्योभवेत्तुष्टिः पापध्वंसश्च जायते । सामान्यदेवतानाञ्च भवतीति न संशयः ॥
ब्राह्मणक्षत्रियविशां भक्तानान्तु परीक्षणम् । संवत्सरं गुरुः कुर्याज्जातिशौचक्रियादिभिः ।
उपासन्नं ततो ज्ञात्वा हृदयेनावधारयेत् ॥ १४ ॥
तेऽपि भक्तिमतो ज्ञात्वा आत्मानं परमेश्वरे[5] ।
संवत्सरं गुरोर्भक्तिं कुर्युर्विष्णोरिवाचलाम् ॥ १५ ॥
संवत्सरे ततः पूर्णे गुरुञ्चैव प्रसादयेत् । भगवंस्त्वत्प्रसादेन संसारार्णवतारणम् ।
इच्छामस्त्वैहिकीं लक्ष्मीं विशेषेण तपोधन ॥ १६ ॥
एवमभ्यर्च्य मेधावी गुरुं विष्णुमिवाग्रतः ।
अभ्यर्चितस्तैः सोऽप्याशु दशम्यां कार्त्तिकस्य तु ॥ १७ ॥

---

१. चैत्रासुर इति पाठान्तरम् ।
२. चैत्रासुरो हतः इति क्वचित् पाठः ।
३. ख्याप्यत इति पाठान्तरम् ।
४. वथा इति क्वचित् पठ्यते ।
५. परमेश्वरम् इति पाठान्तरम् ।

क्षीरवृक्षसमुद्भूतं दन्तकाष्ठं समन्त्रकम् । भक्षयित्वा स्वपेयुर्हि देवदेवस्य सन्निधौ ॥
स्वप्नान्दृष्ट्वा गुरोरग्रे श्रावयेत विचक्षणः । ततः शुभाशुभं तत्र लक्षयेत्परमो गुरुः ॥१९॥

एकादश्यामुपोष्यैवं स्नात्वा देवालयं व्रजेत् ।
गुरुश्च मण्डलं भूमौ कल्पितायान्तु वर्तयेत् ॥ २० ॥

लक्षणैर्विविधैर्भूमिं लक्षयित्वा विधानतः । षोडशारं लिखेच्चक्रं सर्वतोभद्रमेव च ॥
अथवा अष्टपत्रञ्च लिखित्वा दर्शयेद्बुधः । नेत्रबन्धं तु कुर्वीत सितवस्त्रेण यत्नतः ॥

वर्णानुक्रमतः शिष्यान् पुष्पहस्तान् प्रवेशयेत् ॥ २२ ॥

नवनाभं यदा कुर्यान्मण्डलं वर्णकैर्बुधः । तदानीं पूर्वतो देवमिन्द्रपूर्वन्तु पूजयेत् ॥

लोकपालैः समं तद्वद् अग्निं सम्पूजयेच्छुभे ।
स्वदिक्षु तद्वद्याम्यायां नैर्ऋत्यान्निर्ऋतिं न्यसेत् ॥ २४ ॥

वरुणं वारुणायाञ्च वायुं वायव्यतो न्यसेत् । धनदञ्चोत्तरे न्यस्य रुद्रमीशानगोचरे ॥
पूज्यैव तु विधानेन दिक्क्षेत्रेषु व्यवस्थितान् । पद्ममध्ये तथा विष्णुमर्चयेत्परमेश्वरम् ।
पूर्वपत्रे बलं पूर्व[1] प्रद्युम्नं दक्षिणे तथा । अनिरुद्धं तथा पूज्य पश्चिमे चोत्तरे तथा ।

पूजयेद्वासुदेवन्तु सर्वपातकशान्तिदम् ॥ २७ ॥
ऐशान्यां विन्यसेच्छङ्खमाग्नेय्याञ्चक्रमेव तु ।
याम्यायान्तु गदां पूज्य वायव्यां पद्ममेव च ॥ २८ ॥
ऐशान्यां मुसलम्पूज्य दक्षिणे गरुडं न्यसेत् ।
वामतो विन्यसेल्लक्ष्मीं देवदेवस्य बुद्धिमान् ॥ २९ ॥

धनुश्चैव तु खड्गन्तु देवस्य पुरतो न्यसेत् । श्रीवत्सं कौस्तुभञ्चैव देवस्य पुरतो न्यसेत्[2]॥
एवं पूज्य यथान्यायं देवदेवं जनार्दनम् । दिङ्मण्डलेषु[3] विन्यस्य अष्टौ कुम्भान्विधानतः

वैष्णवं कलसञ्चैवं नवमं तत्र कल्पयेत् ॥ ३१ ॥

स्नापयेन्मुक्तिकामन्तु वैष्णवेन घटेन ह । श्रीकामं स्नापयेत्तद्वदैन्द्रेण तु घटेन ह[4] ॥
प्राज्यप्रतापकामञ्च आग्नेयेन तु स्नापयेत् । मृत्युञ्जयविधानाय याम्येन स्नपनं तथा ॥
दुष्टप्रध्वंसनायालं निर्ऋतेन विधीयते । शान्तये वारुणेनाशु पापनाशाय वायवे ॥
द्रव्यसम्पत्तिकामस्य कौवेरेण विधीयते । रौद्रेण ज्ञानहेतोश्च लोकपालपदाप्तये ॥
एकैकेन नरः स्नातः सर्वपापविवर्जितः । भवेदव्याहतं ज्ञानं श्रीमान्विप्रो विचक्षणः ॥
किं पुनर्नवभिः स्नातो नरः पातकवर्जितः । जायते विष्णुसदृशः सद्योराजाथ वा पुनः[5]॥

---

१. पूज्य इति वा पाठः । २. नवमं तत्र कल्पयेत् इति पाठान्तरम् ।
३. दिक्षु दलेषु इति क्वचित् पठ्यते ।
४. एकस्मिन् पुस्तके श्लोकोऽयं नास्ति । ५. भवेत् इति पाठान्तरम् ।

अथवा दिक्षु सर्वासु यथासंख्येन लोकपान् ।
पूजयीत स्वशास्त्रोक्तविधानेन विधानवित् ॥ ३८ ॥
एवं सम्पूज्य देवांश्च लोकपालान् प्रसन्नधीः ।
पश्चात्प्रदक्षिणान् शिष्यान् बद्धनेत्रान् प्रवेशयेत् ॥ ३९ ॥
आग्नेयी वारुणी दग्ध्वा वायुना विधिना ततः ।
सौमेनाप्यायिता पश्चाच्छ्रावयेत्समयान् बुधः ॥ ४० ॥

अनिन्द्या ब्राह्मणा वेदा विष्णुर्ब्राह्मण एव च । रुद्रमादित्यमग्निञ्च लोकपालग्रहांस्ततः ॥
गुरूंश्च वैष्णवांश्चापि पुरुषः पूर्वदीक्षितः । एवन्तु समयं स्थाप्य[1] पश्चाद्धोमन्तु कारयेत्॥

ओं नमो भगवते सर्वरूपिणे विष्णवे स्वाहा[2] ।
षोडशाक्षरमन्त्रेण होमयेज्ज्वलिताग्नये ॥ ४३ ॥

गर्भाधानादिकाश्चैव क्रियाः समवधारयेत् । त्रिभिराहुतिभिश्चापि देवदेवस्य सन्निधौ॥
होमान्ते दीक्षितः पश्चाद्द्याच्च गुरुदक्षिणाम् । हस्त्यश्वकटकादीनि हेमग्रामादिकन्नृपः[3] ।
दद्याच्च गुरवे प्राज्ञो मध्यमे मध्यमन्तथा ॥ ४५ ॥
एवं कृते तु यत्पुण्यं माहात्म्यञ्जायते धरे । तन्न शक्यन्तु गदितुमपि वर्षशतैरपि ॥
दीक्षितात्मा पुनर्भूत्वा वराहं श्रृणयाद्यदि । तेन वेदपुराणानि सर्वे मन्त्राः ससंग्रहाः ॥
जप्ताः स्युः पुष्करे तीर्थे प्रयागे सिन्धुसंगमे । देवागारे कुरुक्षेत्रे वाराणस्यां विशेषतः ॥
ग्रहणे विषुवे चैव यत्फलं जपतां भवेत् । तत्फलं द्विगुणं तस्य दीक्षितो यः श्रृणोति च ॥

देवा अपि तपः कृत्वा ध्यायन्ते च वदन्ति च ।
कदा नो भारते वर्षे जन्म स्याद् भूतधारिणि ॥ ५० ॥
दीक्षिताश्च भविष्यामो वराहं श्रृणुमः कथम् ।
वराहं षोडशात्मानन्त्यक्त्वा देहं कदा वयम् ॥ ५१ ॥
यास्यामः परमं स्थानं यद्गत्वा न पुनर्भवेत् ।
एवं जल्पन्ति विबुधा मनसा चिन्तयन्ति च ॥ ५२॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् । वसिष्ठस्य च संवादं श्वेतस्य च महात्मनः ॥

स्वर्गवासे स्थितो ह्यासीच्छ्वेतो राजा महायशाः ।
आसीदिलावृते वर्षे श्वेतो राजा वृहत्तपाः ॥ ५४ ॥

स महीं सकलान्देवि सपल्लववनद्रुमाम् । दातुमिच्छन्स चोवाच वसिष्ठं तपसान्निधिम्॥
भगवन्दातुमिच्छामि ब्राह्मणेभ्यो वसुन्धराम् ।
देह्यनुज्ञां स चोवाच वसिष्ठो राजसत्तमम् ॥ ५६ ॥

---

१. समये स्थाप्य इति क्वचित् पठ्यते । २. हूँ फट् इति पाठान्तरम् ।
३. नर इत्यपि पाठः कुत्रचित् ।

अन्नं देहि सदा राजन् सर्वकालसुखावहम् । अन्नेन चैव दत्तेन किन्न दत्तं महीतले ॥
सर्वेषामेव दानानामन्नदानं विशेष्यते । अन्नाद्भवन्ति भूतानि अन्नेनैव च वर्धते ।
तस्मात्सर्वप्रयत्नेन अन्नन्दानं ददस्व भोः[1] ॥ ५८ ॥
वसिष्ठस्य वचः श्रुत्वा स राजा न तथाकरोत् ॥ ५९ ॥
रत्नवस्त्रमलङ्कारान् श्रीमन्ति नगराणि च । यत्किञ्चित्कोषजातं स द्विजानाहूय तद्ददौ ॥
स कदाचिन्नृपः पृथ्वीं जित्वा परमधर्मवित् ।
पुरोहितमुवाचेदं वसिष्ठं जपतां वरम् ॥ ६१ ॥
भगवन्नश्वमेधानां सहस्रं कर्तुमुत्सहे । सुवर्णरौप्यताम्राणि यागं कृत्वा द्विजातिषु ॥
दत्तानि तेन राज्ञा वै नान्नं दत्तं तथा जलम् ।
स्वल्पं वस्तु इति ज्ञात्वा सोऽन्नन्तु नाददत्प्रभुः ॥ ६३ ॥
एवं विभवयुक्तस्य तस्य राज्ञो महात्मनः । कालधर्मवशाद्देवि मृत्युः समभवत्तदा ॥
परलोके वर्तमानः स च राजा महामनाः । क्षुधया पीडितो ह्यासीत्तृषया च विशेषतः॥
आनिनायाप्सरोभागङ्गत्वा श्वेताख्यपर्वतम् ।
तत्र प्राग्जन्ममूर्त्तिश्च पुरा दग्धा महात्मनः ॥ ६६ ॥
तत्रास्थीनि स संगृह्य लिहन्नास्ते स पार्थिवः ।
पुनर्विमानमारुह्य दिवमाचक्रमे नृपः ॥ ६७ ॥
अथ कालेन महता स राजा शंसितव्रतः । तान्यस्थीनि लिहन्दृष्टो वसिष्ठेन महात्मना॥
उक्तश्च तेन किञ्च त्वं स्वास्थिं भुङ्क्षे नराधिप । एवमुक्तस्तदा राजा वसिष्ठेन महात्मना ।
उवाच वचनञ्चेदं श्वेतो राजा मुनिं तदा ॥ ६१ ॥
भगवन् क्षुधितश्चास्मि अन्नपानं पुरा मया । न दत्तं मुनिशार्दूल तेन मां बाधते क्षुधा॥
एवमुक्तस्ततो राज्ञा वसिष्ठो मुनिपुङ्गवः । उवाच च मुनिर्भूयः श्वेतं वाक्यं महानृपम् ॥
किन्ते करोमि राजेन्द्र क्षुधितस्य विशेषतः । अदत्तं नोपतिष्ठेत कस्यचित्किञ्चिदुत्तमम्॥
रत्नहेमप्रदानेन भोगवाञ्जायते नरः । अन्नपान[2]प्रदानेन सर्वकामैस्तु तर्पितः ।
तन्न दत्तं त्वया राजन्स्तोकं मत्वा नराधिप ॥ ७२ ॥

श्वेत उवाच

अदत्तस्य च सम्प्राप्तिस्तन्ममाचक्ष्व पृच्छतः ।
शिरसा भक्तियुक्तेन याचितोऽसि महामुने ॥ ७३ ॥

वसिष्ठ उवाच

अस्त्येकं कारणं येन जायते तन्न संशयः । तच्छृणुष्व नरव्याघ्र कथ्यमानं मयाऽनघ ॥
आसीद्राजा पुराकल्पे विनीताश्वेति विश्रुतः । स सर्वमेधमारेभे स्वयं क्रतुवरन्नृपः ॥
यजता तेन विप्रेभ्यो दत्ता गावो द्विपा वसु ।
नान्नन्तेन तदा दत्तं स्वल्पं मत्वा यथा त्वया ॥ ७६ ॥

---

१. अन्नं ददस्व भूपते इति पाठान्तरम् । २. अन्नदानेति क्वचित् पाठः, स तु न मनोरमः।

ततः कालेन महता मृतोऽसौ जाह्नवीजले ।
कृत्वा पुण्यं विनीताश्वः सार्वभौमो नृपोत्तमः ॥ ७७ ॥
स्वर्गञ्च गतवान्सोऽपि यथा राजन्भवान् प्रभो । असावपि क्षुधाविष्ट एवमेव गतो नृपः॥
मर्त्यलोके नदीतीरे गङ्गायां नीलपर्वते[1] । विमानेनार्कवर्णेन भास्वता देववन्नृपः ॥७९॥
ददर्श च तदा राजा क्षुधितः स्वं कलेवरम् । पुरोहितन्ददर्शाथ होतारं जाह्नवीतटे ॥
तद्दृष्ट्वाऽसावपि नृपः पप्रच्छ मुनिसत्तमम् ।
क्षुधायाः कारणं किं मे स होता तमुवाच ह ॥ ८१ ॥
तिलधेनुम्भवान्राजञ्जलधेनुञ्च सत्तम । घृतधेनुञ्च धेनुञ्च रसधेनुञ्च पार्थिव ।
देहि शीघ्रं येन भवान् क्षुधया वर्जितोभवेत् ॥ ८२ ॥
तपते यावदादित्यस्तपते वापि चन्द्रमाः । एवमुक्तस्ततो राजा तं पुनः पृष्टवानिदम् ॥

विनीताश्व उवाच

कथं सा दीयते ब्रह्मंस्तिलधेनुर्जिगीषुभिः ।
भुङ्क्ते स्वर्गञ्च विप्रेन्द्र तन्ममाचक्ष्व पृच्छतः ॥ ८४ ॥

होतोवाच

विधानं तिलधेनोश्च[2] त्वं शृणुष्व नराधिप ।
चतुर्भिः कुडवैश्चैव प्रस्थ एकः प्रकीर्तितः ॥ ८५ ॥
सा तु षोडशभिः कार्या[3] चतुर्भिर्वत्सको भवेत् ॥ ८६ ।
नासा गन्धमयी तस्या जिह्वा गुडमयी शुभा ।
पुच्छे प्रकल्पनीया सा घण्टाभरणभूषिता ॥ ८७ ।
ईदृशीं कलयित्वा तु स्वर्णशृङ्गीन्तु कारयेत् । कांस्यदोहां रौप्यखुरां पूर्वधेनुविधानतः ।
कृत्वा तां ब्राह्मणायाशु दद्याच्चैव नराधिपः ।
कृष्णाजिनं धेनुवासो नन्दितां कल्पितां शुभाम् ॥ ८९ ।
सूत्रेण सूत्रिताङ्कृत्वा सर्वरत्नसमन्विताम् । सर्वौषधिसमायुक्तां मन्त्रपूतां तु दापयेत् ।
अन्नं मे जायतां सद्यः[4] पानं सर्वरसास्तथा ।
सर्वं सम्पादयास्माकं तिलधेनो द्विजार्पिता ॥ ९१ ॥
गृह्णामि देवि त्वां भक्त्या कुटुम्बार्थं विशेषतः ।
भजस्व कामान्मां देवि तिलधेनो नमोऽस्तु ते ॥ ९२ ॥
एवंविधान्ततो दद्यात्तिलधेनुं नृपोत्तम । सर्वकामसमावाप्तिं कुरुते नात्र संशयः ॥
यश्चेदं शृणुयाद्भक्त्या कुर्यात्कारयतेऽपि वा । सर्वपापविनिर्मुक्तो विष्णुलोकं स[5] गच्छति॥
इति वाराहपुराणे श्वेतविनीताश्वोपाख्याने तिलधेनुमाहात्म्यं नाम नवनवतितमोऽध्यायः।

---

१. नीलपर्वतम् इति पाठान्तरम् । २. धेनोस्त्विति पाठान्तरम् ।
३. तैः षोडशैर्भवेत्सा च इति क्वचित् पाठः । ४. अन्यत् इति पाठान्तरम् ।
५. विष्णुलोकञ्च इति पाठान्तरम् ।

# शततमोऽध्यायः

होतोवाच

जलधेनुं प्रवक्ष्यामि पुण्येऽह्नि विधिपूर्वकम् । गोचर्ममात्रं भूभागं गोमयेनोपलेपयेत् ॥

तत्र मध्ये तु राजेन्द्र पूर्णं कुम्भञ्च विन्यसेत् ।
जलपूर्णं सुगन्धाढ्यं कर्पूरागुरुचन्दनैः ।
वासितं गन्धतोयेन तां धेनुं परिकल्पयेत् ॥ २ ॥
वत्सं तथापरं कल्प्य घृतेन[1] परिपूरितम् ।

वर्धनीकं महाराज यन्त्रपुष्पैः समन्वितम् । दूर्वाङ्कुरैरुपस्तीर्य स्रग्भिश्चैव विभूषितम् ॥

पञ्चरत्नानि निक्षिप्य तस्मिन् कुम्भे नराधिप ।
मांसीमुषीरं कुष्ठञ्च तथा शैलेयबालुकम् ॥ ४ ॥
धात्रीफलं सर्षपाश्च सर्वधान्यानि पार्थिव ।
चतुर्दिक्ष्वपि पात्राणि चत्वार्येव प्रकल्पयेत् ॥ ५ ॥

एकं घृतमयं पात्रं द्वितीयं दधिपूरितम् । तृतीयं मधुनश्चैव चतुर्थं शर्कराघृतम् ॥ ६ ॥
सुवर्णमुखचक्षूंषि श्रृङ्गं कृष्णाङ्गरेषु च । प्रशस्तपत्रश्रवणां मुक्ताफलमयेक्षणाम् ॥ ७ ॥
ताम्रपृष्ठां कांस्यदेहां दर्भरोमसमन्विताम् । पुच्छं सूत्रमयङ्कृत्वा कृष्णाभरणघण्टिकाम् ॥

कम्बले पुष्पमालाञ्च गुडास्मां शुक्तिदन्तिकाम् ।
जिह्वां शर्करया कृत्वा नवनीतेन च स्तनान् ॥ ९ ॥
इक्षुपादान्तु राजेन्द्र गन्धपुष्पोपशोभिताम् ।
कृष्णाजिनोपरि स्थाप्य वस्त्रेणाच्छादितां तु ताम् ।
गन्धपुष्पैः समभ्यर्च्य विप्राय विनिवेदयेत् ॥ १० ॥

एवं धेनुन्तदा दत्त्वा ब्राह्मणे वेदपारगे । साधुविप्राय राजेन्द्र श्रोत्रियायाहिताग्नये ।

तपोवृद्धाय पात्राय दातव्या च कुटुम्बिने ॥ ११ ॥
यो ददाति नरो राजन्यः पश्यति श्रृणोति च ।
प्रतिगृह्णाति यो विप्रः सर्वे मुच्यन्ति पातकात् ॥ १२ ॥

ब्रह्महा पितृहा गोघ्नः सुरापो गुरुतल्पगः । विमुक्ताः सर्वपापैस्तु गन्तारो विष्णुमन्दिरे[3]॥
योऽश्वमेधेन यजते समाप्तवरदक्षिणः । जलधेनुञ्च यो दद्यात्सममेतन्नराधिप ॥ १४ ॥
जलाहारस्त्वेकदिनं तिष्ठेच्च जलधेनुदः । ग्राहकोपि त्रिरात्रं वै तिष्ठेदेवं न संशयः ॥
यत्र क्षीरवहा नद्यो मधुपायसकर्दमः । यत्र चाप्सरसाङ्गीतं तत्र यान्ति जलप्रदाः ॥

---

१. जलेन इति क्वचित् पाठः ।

२. संक्षिप्य इति पाठान्तरम् ।

३. विमुक्तः सर्वपापैस्तु विष्णुलोकं स गच्छतीति पठान्तरम् ।

दाता च दापकश्चैव प्रतिग्राही च यो द्विजः । सर्वपापविनिर्मुक्ता विष्णुसायुज्यमाप्नुयुः।
रसधेनु[1] विधानं यः श्रृणुयात्कीर्तयेत्पि वा । सर्वपापविनिर्मुक्तः स्वर्गमेति जितेन्द्रियः ॥

इति वाराहपुराणे जलधेनुविधिर्नाम शततमोऽध्यायः ।

---

## एकाधिकशततमोऽध्यायः

होतोवाच

रसधेनुविधानन्ते कथयामि समासतः । अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे[2] ॥१॥
रसस्य तु घटं राजन् सम्पूर्णं त्वैक्षवस्य तु । तद्वत्सङ्कल्पयेत्प्राज्ञश्चतुर्थांशेन वत्सकम् ॥
इक्षुदण्डमयाः पादा रजतस्य खुरैर्युताः । सुवर्णश्रृङ्गाभरणा वस्त्रपुच्छा घृतस्तनी ॥ ३ ॥
पुष्पकम्बलसंयुक्ता शर्करामुखजिह्विका[3]। दन्ताः फलमयास्तस्याः पृष्ठन्ताम्रमयं शुभम्॥
पुष्परोमान्तु राजेन्द्र मुक्ताफलकृतेक्षणाम् । सप्तव्रीहिसमायुक्तां चतुर्दिक्षु च दीपिताम्॥
सर्वोपस्करसंयुक्तां सर्वगन्धादिवासिताम् । चत्वारि तिलपात्राणि चतुर्दिक्षु निवेशयेत्॥
सर्वलक्षणयुक्ताय श्रोत्रियाय कुटुम्बिने । रसधेनुः प्रदातव्या स्वर्गकामेन नित्यदा ॥
दाता स्वर्गमवाप्नोति सर्वपापविवर्जितः । दाता च ग्राहकश्चैव एककालमभोजनः ॥८।
सोमपानफलं तस्य सर्वत्र फलं तु भवेत् । दीयमानान्तु पश्यन्ते ते च यान्ति परां गतिम्॥
धेनुञ्च पूजयित्वाग्रे गन्धधूपस्रगादिभिः । पूर्वोक्तैरेव मन्त्रैस्तु ततस्तां प्रार्थयेत्सुधीः ॥
प्रार्थनापूर्वकं भक्त्या द्विजाग्र्याय निवेदयेत् । दशपूर्वान् परांश्चैव आत्मानञ्चैकविंशकम्।

प्रापयेत्परमं स्थानं स्वर्गान्नावर्तते पुनः ॥ ११ ॥
एषा ते कथिता राजन्रसधेनुरनुत्तमा ।
ददस्व च महाराज परं स्थानमवाप्नुहि ॥ १२ ॥

य इदं पठते नित्यं श्रृणुयादथ भक्तितः । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥१३॥

इति वाराहपुराणे श्वेतोपाख्याने रसधेनुमाहात्म्यं नाम एकाधिकशततमोऽध्यायः

---

## द्व्यधिकशततमोऽध्यायः

होतोवाच

गुडधेनुं प्रवक्ष्यामि सर्वकामार्थसाधिनीम् । अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशास्तृते॥
तस्योपरिकृतं वस्त्रं गुडमानीय पुष्कलम् । कृत्वा गुडमयीं धेनुं सवत्साङ्कांस्यदोहिनीम् ॥

---

१. जलधेनु इति पाठान्तरम् । २. कुशास्तरे इति वा पाठः ।
३. जिह्वकेति पाठान्तर ।

सौवर्णे मुखशृङ्गे च दन्ताश्च मणिमौक्तिकैः ।
ग्रीवा रत्नमयी त्वस्या घ्राणं गन्धमयन्तथा ॥ ३ ॥

शृङ्गे त्वगुरुकाष्ठेन पृष्ठं ताम्रमयं तथा[1] । पुच्छं क्षौममयं तस्याः सर्वाभरणभूषिताम् ॥
इक्षुपादां रौप्यखुरां कम्बलं पट्टसूत्रकम् । आच्छाद्य पट्टवस्त्रेण घण्टाचामरभूषिताम्[2] ॥
प्रशस्तपत्रश्रवणां नवनीतस्तनीं बुधः । फलैर्नानाविधैस्तस्या उपशोभाम्प्रकल्पयेत् ॥६॥
उत्तमा गुडधेनुः स्यात्सदा धारचतुष्टयम् । भागार्धेन तु तौल्येन चतुर्थांशेन वत्सकम्॥
मध्यमा च तदर्धेन भारेणैकेन चाधमा । वित्तहीनो यथाशक्त्या शतैरष्टाभिरेव च ॥
अत ऊर्ध्वन्तु कर्तव्या गृहवित्तानुसारतः । गन्धपुष्पादिभिः पूज्य ब्राह्मणाय निवेदयेत्
श्रोत्रियाय[3] प्रदातव्या सहस्रकनकेन तु । तदर्धेन महाराज तस्याप्यर्धेन वा पुनः ॥
शतेन वा शतार्धेन यथाशक्त्या निवेदयेत् । गन्धपुष्पादिभिः पूज्य मुद्रिकाकर्णपत्रकैः[4]।
छत्रिकापादुके दत्त्वा इमं मन्त्रमुदीरयेत् । गुडधेनो महावीर्ये सर्वसम्पत्प्रदे शुभे ॥

दानादस्माच्च भोदेवि भक्ष्यभोज्यं प्रयच्छ मे ।
प्राङ्मुखोवापि दाता च ब्राह्मणाय निवेदयेत् ॥

वाचा कृतं कर्मकृतं मनसा यद्विचिन्तितम् । मानकूटं तुलाकूटं कन्यागोऽर्थे उदाहृतम्[5]॥
अनृतं नाशमायाति[6] गुडधेनो द्विजार्पिता । दीयमानां प्रपश्यन्ति ते यान्ति परमां गतिम्।
यत्र क्षीरवहा नद्यो घृतपायसकर्दमाः । ऋषयो मुनयः सिद्धास्तत्र गच्छन्ति धेनुदाः ॥
दश पूर्वान्दश परानात्मानञ्चैकविंशतिम् । विष्णुलोकं नयत्याशु गुडधेनोः प्रसादतः ॥
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये[7] । सर्वदैव प्रदातव्या पात्रं दृष्ट्वा महामते ॥१७॥
श्रद्धान्वितेन दातव्या भुक्तिमुक्तिफलप्रदा । सर्वकामप्रदा नित्यं सर्वपापहरा स्मृता ॥
गुडधेनोः प्रसादात्तु सौभाग्यमखिलं भवेत् ।वैष्णवं पदमाप्नोति दौर्गत्यन्तस्य नश्यति ॥
दशद्वादशसाहस्रा दश चाष्टौ च जन्मनि । न शोकदुःखदौर्गत्यं तस्य सञ्जायते क्वचित्॥

इति पठति शृणोति चेह सम्यक् मतिमपि ददाति योजनानाम् ।
स इह विभवैश्चिरं वसित्वा वसति चिरं दिवि देवतादिपूज्यः[8] ॥ २१ ॥

इति वाराहपुराणे श्वेतोपाख्याने गुडधेनुमाहात्म्यं नाम द्व्यधिकशततमोऽध्यायः ।

---

१ पृष्ठीं ताम्रमयीन्तथेति पाठान्तरम् । २. शोभिताम् इति वा पाठः ।
३. ईदृशायेति पाठान्तरम् । ४. मुद्रिकाकर्णभूषणैरिति पाठान्तरम् ।
५. कन्यानृतगवाकृतमिति वा पाठः । ६. आयातु इति पाठान्तरम् ।
७. एतदेव विधानं स्यादेते चोपस्काराः स्मृताः ।
मन्त्रावाहनसंयोगः सदा पर्वणि पर्वणि ॥ इति क्वचिदधिकः पाठः ।
८ केषुचित् पुस्तकेष्विमौ श्लोकौ न स्तः ।

# त्र्यधिकशततमोऽध्यायः

होतोवाच

तद्वच्च शर्कराधेनुं शृणु राजन् यथार्थतः। अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे[1] ॥
धेनुं शर्करया राजन्कृत्वा भारचतुष्टयम्। उत्तमा कथ्यते सद्भिश्चतुर्थांशेन वत्सकम् ॥
तदर्धं मध्यमा प्रोक्ता कनिष्ठा भारकेण तु। तद्वद्वत्सं प्रकुर्वीत चतुर्थांशेन तत्त्वतः ॥
अथ कुर्यादष्टशतैरूर्ध्वं नृपतिसत्तम। स्वशक्त्या कारयेद्धेनुं तथात्मानं न पीडयेत् ॥
सर्वबीजानि संस्थाप्य चतुर्दिक्षु समन्ततः। सुवर्णस्य मुखं शृङ्गे मौक्तिकैर्नयने तथा ॥
गुडेन तु मुखं कार्यं जिह्वा पिष्टमयी तथा। कम्बलं पट्टसूत्रेण कण्ठाभरणभूषिताम् ॥
इक्षुपादां रौप्यखुरां नवनीतस्तनीं तथा। प्रशस्तपत्रश्रवणां सितचामरभूषिताम् ॥७॥
पञ्चरत्नसमायुक्तां वस्त्रेणाच्छादितां तथा। गन्धपुष्पैरलङ्कृत्य ब्राह्मणाय निवेदयेत् ॥
श्रोत्रियाय दरिद्राय साधुवृत्ताय धीमते। वेदवेदाङ्गविदुषे साग्निकाय कुटुम्बिने[2]।

अदुष्टाय प्रदातव्या न तु मत्सरिणे द्विजे ॥ ९ ॥

अयने विषुवे पुण्ये व्यतीपाते दिनक्षये। एषु पुण्येषु कालेषु यथाविभवशक्तितः ॥१०॥
सत्पात्रञ्च द्विजं दृष्ट्वा आगतं श्रोत्रियं गृहे। तादृशाय[3] प्रदातव्या पुच्छदेशे विमृज्य च।

पूर्वाभिमुखमास्थाय[4] अथवा स उदङ्मुखः।
गां पूर्वाभिमुखीं कृत्वा वत्समुत्तरतो न्यसेत् ॥ १२ ॥

दानकाले तु ये मन्त्रास्तान्पठित्वा समर्पयेत्। सम्पूज्य विधिवद्विप्रं मुद्रिकाकर्णभूषणैः ॥

स्वशक्त्या दक्षिणा देया वित्तशाठ्यविवर्जितः।
हस्ते तु दक्षिणां दत्त्वा गन्धपुष्पसचन्दनाम्।
धेनुं समर्पयेत्तस्य मुखञ्च न विलोकयेत् ॥ १४ ॥

एकाहं शर्कराहारो ब्राह्मणस्त्रिदिनं वसेत्। सर्वपापहरा धेनुः सर्वकामप्रदायिनी ॥१५॥
सर्वकामसमृद्धस्तु जायते नात्र संशयः। दीयमानं प्रपश्यन्ति ते यान्ति परमां गतिम् ॥

य इदं शृणुयाद् भक्त्या पठते वापि मानवः।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ १७ ॥

इति वाराहपुराणे शर्कराधेनुमाहात्म्यं नाम त्र्यधिकशततमोऽध्यायः।

---

१. कुशास्तरे इति पठान्तरम्।
२. आहिताग्नेर्विशेषत इति पाठान्तरम्। ३. आगताय इति पाठान्तरम्।
४. पूर्वामुखः स्थितोदातेति पाठान्तरम्।

# चतुरधिकशततमोऽध्यायः

होतोवाच

मधुधेनुं प्रवक्ष्यामि सर्वपातकनाशिनीम् । अनुलिप्ते महीपृष्ठे कृष्णाजिनकुशोत्तरे ॥१॥
धेनुं मधुमयीं कृत्वा सम्पूर्णघटषोडशाम् । चतुर्थेन तथांशेन वत्सकं परिकल्पयेत् ॥२॥
सौवर्णन्तु मुखं कृत्वा शृङ्गाण्यगुरुचन्दनैः । पृष्ठं ताम्रमयं कृत्वा सास्नां पटमयीं तथा ॥
पादानिक्षुमयान् कृत्वा सितकम्बलकम्बलम् । मुखं गुडमयं कृत्वा जिह्वां शर्करया तथा॥
ओष्ठौ पुष्पमयौ तस्या दन्ताः फलमयाः स्मृताः ।
दर्भरोमधरा[1] देवी खुरैरौप्यैश्च भूषिता ॥ ५ ॥
प्रशस्तपत्रश्रवणा प्रमाणात्परितस्तता । सर्वलक्षणसंयुक्ता सप्तधान्यान्विता तथा ॥६॥
चत्वारि तिलपात्राणि चतुर्दिक्षु प्रकल्पयेत् । छादिता वस्त्रयुग्मेन कण्ठाभरणभूषिता ।
कांस्योपदोहिनीं कृत्वा गन्धपुष्पैस्तु पूजिताम् ॥ ७ ॥
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये । संक्रान्त्यामुपरागे च सर्वकाले यदृच्छया॥८॥
द्रव्यब्राह्मणसम्पत्तिं दृष्ट्वा तां प्रतिपादयेत् । ब्राह्मणाय दरिद्राय श्रोत्रियायाहिताग्नये[2] ।
तादृशाय प्रदातव्या मधुधेनुर्नरोत्तमे ॥ ९ ॥
पुच्छदेशे विमृश्याथ जलपूर्णां सदक्षिणाम् । दद्याद्विप्राय धेनुन्तां मन्त्रपूर्वां विचक्षणः[3]॥
रसज्ञा सर्वदेवानां सर्वभूतहिते रता । प्रीयन्तां पितरो देवा मम धेनो[4] नमोऽस्तु ते ।
एवमुच्चार्य तान्धेनुं ब्राह्मणाय निवेदयेत् ॥ ११ ॥
अहं गृह्णामि त्वां देवि कुटुम्बार्थे विशेषतः । कामं कामदुघे कामान्मधुधेनो नमोऽस्तु ते॥
मधुवातेति मन्त्रेण दद्यादाशुचिकेन तु । दत्त्वा धेनुं महाराज छत्रिकोपानहौ तथा ॥
एवं यः कुरुते भक्त्या मधुधेनुं नराधिप । दत्त्वा दानं पायसेन मधुना च दिनं नयेत् ॥
ब्राह्मणश्च त्रिरात्रन्तु मधुपायससंयुतम् । एवं कृते तु यत्पुण्यं तन्निबोध नराधिप ॥१५॥
यत्र नद्यो मधुवहा यत्र पायसकर्दमाः । ऋषयो मुनयः सिद्धास्तत्र गच्छन्ति धेनुदाः ।
तत्र भोगानथो भुङ्क्ते विष्णोर्लोकं[5] स गच्छति ॥ १६ ॥
दश पूर्वान्दश परानात्मानञ्चैकविंशकम् । नयते विष्णुसायुज्यं मधुधेनुप्रसादतः ॥१७॥
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः । सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति॥
इति वाराहपुराणे मधुधेनुमाहात्म्यं नाम चतुरधिकशततमोऽध्यायः ।

---

१. रोममयी इति पाठान्तरम् । २. गुणयुक्ताय पाठके इति पाठान्तरम् ।
३. पुच्छदेशोपविष्टस्तु गन्धधूपादिपूजिता । आच्छाद्य वस्त्रयुग्मेन मुद्रिकावर्णमात्रकैः ॥
स्वशक्त्या दक्षिणां दत्त्वा वित्तशाठ्यविवर्जितः । जलपूर्वन्तु कर्तव्यं पश्चाद्दानं समर्पयेत् ॥
इति कस्मिंश्चित् पुस्तके भिन्नः पाठः ।
४. मधुधेनो इति पाठान्तरम् । ५. ब्रह्मलोकम् इति वा पाठः ।

# पञ्चाधिकशततमोऽध्यायः

होतोवाच

क्षीरधेनुं प्रवक्ष्यामि तां निबोध नराधिप । अनुलिप्ते महीपृष्ठे गोमयेन नृपोत्तम ॥१॥
गोचर्ममात्रमानेन कुशानास्तीर्य सर्वतः । तस्योपरि महाराज न्यसेत्कृष्णाजिनं बुधः ॥

तत्र कृत्वा कुण्डलिकां गोमयेन सुविस्तृताम् ।
क्षीरकुम्भं ततः स्थाप्य चतुर्थांशेन वत्सकम् ॥ ३ ॥

सुवर्णमुखशृङ्गाणि चन्दनागुरुकाणि च । प्रशस्तपत्रश्रवणां तिलपात्रोपरिन्यसेत् ॥४॥

मुखं गुडमयं तस्या जिह्वां शर्करया तथा ।
फलप्रशस्तदशनां[1] मुक्ताफलमयेक्षणाम् ॥ ५ ॥

इक्षुपादां दर्भरोमां सितकम्बलकम्बलाम् । ताम्रपृष्ठां कांस्यदेहां पट्टसूत्रमयीं शुभाम् ॥
पुच्छञ्च नृपशार्दूल नवनीतमयस्तनीम् । स्वर्णशृङ्गीं रौप्यखुरां पञ्चरत्नसमन्विताम् ॥

चत्वारि तिलपात्राणि चतुर्दिक्ष्वपि विन्यसेत् ।
सप्तधान्ययुतं पात्रं दिक्षु दिक्षु च विन्यसेत्[2] ॥ ८ ॥

एवं लक्षणसंयुक्तां क्षीरधेनुं प्रकल्पयेत् । आच्छाद्य वस्त्रयुग्मेन गन्धपुष्पैः समर्चयेत् ॥
धूपदीपादिकं कृत्वा ब्राह्मणाय निवेदयेत् । आच्छाद्यालङ्कृतां कृत्वा[3] मुद्रिकाकर्णमात्रकैः[4] ।
पादुकोपानहौ छत्रं दत्त्वा दानं समर्पयेत् ॥ १० ॥

दद्यादनेन मन्त्रेण क्षीरधेनुं प्रयत्नतः । आप्यायस्वेति मन्त्रेण वेदोक्तेन विधानतः ॥
प्रतिग्राही पठेन्मन्त्रमेष दानविधिः स्मृतः[5] ॥ ११ ॥

दीयमानां प्रपश्यन्ति ते यान्ति परमां गतिम् । एतां हेमसहस्रेण शतेनाथ स्वशक्तितः ।
दत्त्वा धेनुं महाराज शृणु तस्यापि यत्फलम् ॥ १२ ॥

षष्टिवर्षसहस्रन्तु इन्द्रलोके महीयते । पित्रादिभिश्च सहितो ब्रह्मणो भवनं व्रजेत् ॥१३॥

दिव्यं विमानमारूढो दिव्यस्रगनुलेपनः ।
क्रीडित्वा सुचिरं कालं विष्णुलोकं स गच्छति ॥ १४ ॥

द्वादशादित्यसङ्काशे विमानवरमण्डिते । गीतवादित्रनिर्घोषैरप्सरोगणसेविते ।
तत्रोष्य विष्णोर्भवने विष्णुसायुज्यमाप्नुयात् ॥ १५ ॥

---

१. फलप्रशस्तपत्राणामिति काश्चित्कः पाठः ।
२. सप्तव्रीहिमयीयुक्तां दिक्षु सर्वासु स्थापयेदिति पाठान्तरम् ।
३. वस्त्रादिभिरलङ्कृत्य इति क्वचित् पठ्यते । ४. कुण्डलैरिति पाठान्तरम् ।
५. गृह्णीति च पठेन्मन्त्रं ग्राहको राजसत्तम इति पाठान्तरम् ।

य इमं शृणुयाद्राजन् पठेद्वा भक्तिभावितः[1] ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ १६ ॥

इति वाराहपुराणे क्षीरधेनुविधिर्नाम पञ्चाधिकशततमोऽध्यायः ।

---

## षडधिकशततमोऽध्यायः

होतोवाच

दधिधेनोर्महाराज विधानं शृणु साम्प्रतम् । अनुलिप्ते महाभागे गोमयेन नराधिपः ॥
गोचर्ममात्रन्तु पुनः पुष्पप्रकरशोभिते । कुशैरास्तीर्य वसुधां कृष्णाजिनकुशोत्तरीम् ॥
दधिकुम्भन्तु संस्थाप्य सप्तधान्यचयोपरि । चतुर्थांशेन वत्सं तु सौवर्णमुखमण्डितम् ॥
आच्छाद्य वस्त्रयुग्मेन पुष्पगन्धैस्तु पूजिताम् । ब्राह्मणाय कुलीनाय साधुवृत्ताय धीमते।
क्षमादिगुणयुक्ताय दद्यात्तां दधिधेनुकाम् ॥ ४ ॥
पुच्छदेशोपविष्टस्तु मुद्रिकाकर्णमात्रकैः[2] । पादुकोपानहौ छत्रं दत्त्वा मन्त्रमिमं पठेत् ।
दधिक्राव्णेति मन्त्रेण दद्याद्धेनुं सुपूजिताम् ॥ ५ ॥
एवं दधिमयीं धेनुं दत्त्वा राजर्षिसत्तम । एकाहारो दिनं तिष्ठेद्दध्ना च नृपनन्दन ॥६॥
यजमानो वसेद्राजंस्त्रिरात्रञ्च द्विजोत्तमः । दीयमानां प्रपश्यन्ति ते यान्ति परमं पदम् ॥
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।
सोऽश्वमेधफलं प्राप्य विष्णुलोकं स[3] गच्छति ॥

इति वाराहपुराणे दधिधेनुमाहात्म्यं नाम षडधिकशततमोऽध्यायः ।

---

## सप्ताधिकशततमोऽध्यायः

होतोवाच

नवनीतमयीं धेनुं शृणु राजन्प्रयत्नतः । यां श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः
गोमयेनानुलिप्तायां भूमौ गोचर्ममानतः । चर्म कृष्णमृगस्यैव तस्योपरि च धारयेत् ॥
कुम्भन्तु नवनीतस्य प्रस्थमात्रस्य धारयेत् । वत्सं चतुर्थभागस्य तस्यानुत्तरतो न्यसेत् ॥
कृत्वा विधानेन च राजसिंह सुवर्णशृङ्गी सुमुखा च कार्या ।
नेत्रे च तस्या मणिमौक्तिकैस्तु कृत्वा तथान्यच्च गुडेन जिह्वाम् ।
ओष्ठौ च पुष्पैश्च फलैश्च दन्ताः प्रकल्प्य मास्नाञ्च सितैश्च सूत्रैः ॥ ४ ॥

---

१. भावतः इति वा पाठः । २. भूषणैरिति पाठान्तरम् ।
३. विष्णुलोकञ्च इति वा पाठः ।

नवनीतस्तनीं राजन्निक्षुपादां[1] प्रकल्पयेत् । ताम्रपृष्ठां रौप्यखुरां[2] दर्भरोमकृतच्छविम् ॥
चतुर्भिस्तिलपात्रैश्च संवृतां सर्वतो दिशि । आच्छाद्य वस्त्रयुग्मेन गन्धपुष्पैरलङ्कृताम् ॥
दीपांश्च दिक्षु प्रज्वाल्य ब्राह्मणाय निवेदयेत् ।
मन्त्रास्त एव जप्तव्याः सर्वधेनुषु ये स्मृताः ॥ ७ ॥
पुरा देवासुरैः सर्वैः सागरस्य तु मन्थने । उत्पन्नं दिव्यममृतं नवनीतमिदं शुभम् ।
आप्यायनन्तु भूतानां नवनीत नमोऽस्तु ते ॥ ८ ॥
एवमुच्चार्य तां दद्याद् ब्राह्मणाय कुटुम्बिने । धेनुञ्च दत्त्वा सुदुघां सोपधानां नयेद्गृहम् ॥
हविरेवं रसञ्चैव विप्रवर्यस्य भूपते । भुक्त्वा तिष्ठेद्दिनं राजन्धेनुदस्त्रीणि वै द्विजः ॥
यः प्रपश्यति तान्धेनुं दीयमानां नरोत्तम । सर्वपापविनिर्मुक्तः शिवसायुज्यतां व्रजेत् ॥
पितृभिः पूर्वजैः सार्धं भविष्यैश्चैव मानवः । विष्णुलोकं व्रजत्याशु यावदाभूतसंप्लवम् ॥
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः[3] । सर्वपापविशुद्धात्मा विष्णुलोके महीयते ॥

इति वाराहपुराणे नवनीतधेनुमाहात्म्यं नाम सप्ताधिकशततमोऽध्यायः ।

## अष्टाधिकशततमोऽध्यायः

होतोवाच

लवणधेनुं प्रवक्ष्यामि तन्निबोध नृपोत्तम । षोडशप्रस्थसंयुक्तां धेनुं कृत्वा तु मानवः ॥
वत्सं चतुर्भी राजेन्द्र इक्षुपादांश्च कारयेत् ।
सौवर्णं मुखशृङ्गाणि खुरा रौप्यमयास्तथा ॥ २ ॥
मुखं गुडमयन्तस्या दन्ताः फलमया नृप । जिह्वां शर्करया राजन् घ्राणं गन्धमयन्तथा ॥
नेत्रे रत्नमये कुर्यात्कर्णौ पत्रमयौ तथा । श्रीखण्डस्य कोष्ठौ च नवनीतमयाः स्तनाः ॥
सूत्रपुच्छान्ताम्रपृष्ठान्दर्भरोमां पयस्विनीम् ।
कांस्योपदोहां राजेन्द्र घण्टाभरणभूषिताम् ॥ ५ ॥
सुगन्धपुष्पधूपैश्च पूजयित्वा विधानतः । आच्छाद्य वस्त्रयुग्मेन ब्राह्मणाय निवेदयेत्[4] ॥
ग्रहणे वाथ संक्रान्तौ व्यतीपाते तथायने । द्विजाय साधुवृत्ताय वेदवेदाङ्गपारगे[6] ॥

---

१. तिलपादामिति पाठान्तरम् ।
२. स्वर्णशृङ्गो रौप्यखुरां पञ्चरत्नसमन्वितामित्यधिकः पाठः कस्मिंश्चित् पुस्तके ।
३. मानवः इति पाठान्तरम् ।     ४. सुवर्णेति पाठान्तरम् ।
५. नक्षत्रग्रहपीडासु सर्वकालं प्रदापयेदित्यधिकः पाठः क्वचित् पुस्तके ।
६. वेदवेदाङ्गविदुषे श्रोत्रियायाहिताग्नये । ईदृशाय प्रदातव्या तथाऽमत्सरिणे नृप ॥
यष्टामेवञ्च मन्त्रन्तु पुच्छदेशोपविश्य च । छत्रकोपानहौ देये मुद्रिकाकर्णमात्रकैः ॥
आच्छाद्य वस्त्रयुग्मेन दक्षिणां कम्बलं वदेत् । पूर्वोक्तेन विधानेन स्वशक्त्या कनकेन तु ।
इत्यधिकः पाठः कस्मिंश्चित् पुस्तके ।

ब्राह्मणं पूज्य विधिवत्पूर्वोक्तविधिना नृप । सदक्षिणञ्च गोपुच्छं दत्त्वा ब्राह्मणहस्तके ।
इमं मन्त्रं समुच्चार्य ततस्तां प्रतिपादयेत् ॥ ८ ॥

इमां गृहाण भो विप्र रुद्ररूपां नमोऽस्तु ते । रसज्ञा सर्वभूतानां सर्वदेवनमस्कृता ।
कामं पूरय मे देवि रुद्ररूपे नमोऽस्तु ते ॥ ९ ॥

दत्त्वा धेनुं लवणेन एकाहञ्चैव तिष्ठति । स्वयं त्रिरात्रं विप्रेण तथैव लवणाशिना ॥
सहस्रेण शतेनाथ स्वशक्त्या कनकेन तु । दत्त्वेमां स्वर्गमाप्नोति यत्र देवो वृषध्वजः ॥
य इदं शृणुयाद्भक्त्या श्रावयेद्वापि मानवः ।
मुच्यते सर्वपापेभ्यो रुद्रलोकञ्च गच्छति ॥ १२ ॥

इति वाराहपुराणे लवणधेनुमाहात्म्यं नाम अष्टाधिकशततमोऽध्यायः ।

# नवाधिकशततमोऽध्यायः

होतोवाच

अथातः सम्प्रवक्ष्यामि धेनुं कार्पासकीं नृप । यत्प्रदानान्नरो याति ऐन्द्रलोकमनुत्तमम् ॥
विषुवे त्वयने पुण्ये युगादिग्रहणे तथा । ग्रहपीडासु चोग्रासु दुःस्वप्ने रिष्टदर्शने ॥२॥
पुण्येऽप्यायतने[1] राजंश्छुचिदेशे गवां गणे । गोमयेनोपलिप्तायां दर्भानास्तीर्य वै तिलान् ॥
तन्मध्ये स्थापयेद्धेनुं वस्त्रमाल्यानुलेपनाम् । धूपदीपादिनैवेद्यैः पूजयेच्च विमत्सरः ॥
उत्तमा च चतुर्भारैरर्धेनैव तु मध्यमा । भारेण चाधमा प्रोक्ता वित्तशाठ्यं विवर्जयेत् ॥
चतुर्थांशेन वत्सन्तु कल्पयित्वा विधानतः ।
कर्तव्या रुक्मशृङ्गी तु रजतस्य खुरान्विताः ।
नानाफलमया दन्ता रत्नगर्भसमन्विताः ॥ ६ ॥

इत्येवं सर्वं सम्पूर्णां कृत्वा श्रद्धासमन्वितः । आवाहयेत्तां कार्पासधेनुं मन्त्रैर्द्विजातये ।
दद्याद्धेनुं चर्मपाणिः प्रयतः श्रद्धयाऽन्वितः ॥ ७ ॥
पूर्वोक्तस्तु विधिः कार्यो दानमन्त्रपुरःसरः ॥ ८ ॥

यथा देवगणः सर्वस्त्वया हीनो न वर्तते । तथा उद्धर मां देवि पाहि संसारसागरात् ॥

इति वाराहपुराणे कार्पासधेनुमाहात्म्यं नाम नवाधिकशततमोऽध्यायः ।

---

१. पुण्येष्वायतने इति पाठान्तरम् ।

## दशाधिकशततमोऽध्यायः

होतोवाच

शृणु राजन् प्रवक्ष्यामि धान्यधेनुमनुत्तमाम् ।
यस्याः सङ्कीर्तनादेव सा तुष्येत्पार्वती स्वयम् ॥ १ ॥
विषुवे चायने वापि कार्त्तिक्यान्तु विशेषतः ।
यां दत्त्वा मुच्यते पापाच्छशाङ्क इव राहुणा ॥ २ ॥
दशधेनुप्रदानेन यत्फलं राजसत्तम । तत्सर्वमेव प्राप्नोति व्रीहिधेनुप्रदानतः[1] ॥ ३ ॥
कृष्णाजिनं ततः कृत्वा प्राग्वत्सं स्थापयेद्बुधः ।
गोमयेनानुलिप्तायां भूमौ तां परिपूजयेत् ॥ ४ ॥
उत्तमा तु भवेद्धेनुर्द्रोणैश्चापि चतुर्दशैः । मध्यमा च तदर्धेन वित्तशाठ्यं न कारयेत् ॥
चतुर्थांशेन वत्सन्तु कल्पयित्वा विधानतः[2] ।
अङ्गन्तु पूर्ववत्कार्यं मुखं क्षौद्रमयं शुभम् ॥ ६ ॥
पूर्ववदर्चयित्वा तां कृत्वा दीपार्चनादिकम् ।
पुण्यकालञ्च सम्प्राप्य स्नातः शुक्लाम्बरो गृही ।
त्रिः प्रदक्षिणमावृत्त्य दण्डवत्प्रणमेच्च ताम् ॥ ७ ॥
त्वं हि विप्र महाभाग वेदवेदाङ्गपारग ।
मया दत्ताञ्च गृह्णीष्व प्रसीद त्वं द्विजोत्तम । प्रीयतां मम देवेशो भगवान्मधुसूदनः ॥
या च लक्ष्मीस्तु गोविन्दे स्वाहा या च विभावसौ ।
शक्रे शचीति विख्याता शिवे गौरी च संस्थिता ॥ ९ ॥
गायत्री ब्रह्मणः प्रोक्ता ज्योत्स्ना चन्द्रे रवेः प्रभा ।
बुद्धिर्बृहस्पतेः ख्याता मेधा मुनिषु सत्तमा ॥ १० ॥
तस्मात्सर्वमयी देवी धान्यरूपेण संस्थिता ।
एवमुच्चार्य तां धेनुं ब्राह्मणाय निवेदयेत् ।
दत्त्वा प्रदक्षिणं कृत्वा तं क्षमाप्य द्विजोत्तमम् ॥ ११ ॥

---

१. व्रीहिधेनुप्रदो नर इति पाठान्तरम् ।
२. चतुर्थांशेन धेनोर्वै वत्सन्तु परिकल्पयेत् ।
कर्त्तव्यौ रुक्मशृङ्गौ तु राजतखुरसंयुतौ ।
गौर्मेवा कुर्वीत घ्राणं अगुरु चन्दनन्तथा ॥
मुक्ताफलमया दन्ता घृतक्षौद्रमयं मुखम् ।
प्रशस्तपत्त्रश्रवणं कांस्यदोहनकान्विताम् ॥
इक्षुपुष्टिमयाः पादाः क्षौम्यपुच्छसमन्विताम् ।
नानाफलसमुपेतां रत्नगर्भसमन्विताम् ।
पादुकोपानहच्छत्रभाजनं तर्पणं तथा ॥ इत्यधिकः पाठः कस्मिश्चित् पुस्तके दृश्यते ।

यावच्च पृथिवी सर्वा वसुरत्नानि भूपते । तावत्पुण्यं समधिकं श्रीहिधेनोश्च तत्फलम् ॥
तस्मान्नरेण[1] दातव्या भुक्तिमुक्तिफलप्रदा । इहलोके च सौभाग्यमायुरारोग्यवर्धनम् ॥

विमानेनार्कवर्णेन किङ्किणीजालमालिना ।
स्तूयमानोऽप्सरोभिश्च स याति शिवमन्दिरम् ॥ १४ ॥

यावच्च स्मरते जन्म तावत्स्वर्गे महीयते । ततः स्वर्गात्परिभ्रष्टो जम्बूद्वीपपतिर्भवेत् ॥
एवं हरेण चोद्‌गीर्णं श्रुत्वा वाक्यं नरोत्तमः । सर्वपापविशुद्धात्मा रुद्रलोके महीयते ॥

इति वाराहपुराणे धान्यधेनुमाहात्म्यं नाम दशाधिकशततमोऽध्यायः ।

---

## एकादशाधिकशततमोऽध्यायः

होतोवाच

अथातः सम्प्रवक्ष्यामि कपिलां धेनुमुत्तमाम् । यत्प्रदानान्नरो याति विष्णुलोकमनुत्तमम्॥
पूर्वोक्तेन विधानेन दद्याद्धेनुं सवत्सकाम् । सर्वालङ्कारसंयुक्तां सर्वरत्नसमन्विताम् ॥

शिरो ग्रीवा कपिलायाः सर्वतीर्थानि भामिनि ।
पितामहनियोगाच्च निवसन्ति हि निश्चयः ॥ ३ ॥

प्रातरुत्थाय यो मर्त्यः कपिलागलमस्तकात् ।
च्युतन्तु भक्त्या पानीयं शिरसा वन्दते शुचिः ॥ ४ ॥

स तेन पुण्यतो येन तत्क्षणाद्दग्धकिल्बिषः । त्रिंशद्वर्षकृतं पापं दहत्यग्निरिवेन्धनम् ॥
कल्यमुत्थाय यो मर्त्यः कुर्यात्तासां प्रदक्षिणम । प्रदक्षिणीकृता तेन पृथिवी स्याद्वसुन्धरे ॥
प्रदक्षिणेन चैकेन श्रद्धायुक्तेन तत्क्षणात् । दशजन्मकृत पाप तस्य नश्यत्यसंशयम् ॥७॥
कपिलायास्तु मूत्रेण स्नायाच्चैव शुचिव्रतः । स गङ्गादिषु तीर्थेषु स्नातो भवति मानवः॥
तेन स्नानेन चैकेन भावयुक्तेन वै नरः । यावज्जीवकृतात्पापान्मुच्यते नात्र संशयः ॥
गोसहस्रञ्च यो दद्यादेकां वा कपिलां नरः । सममेतत्पुरा प्राह ब्रह्मा लोकपितामहः ॥
गवामस्थि ततोऽप्येतन्मृतगन्धेन दूषयेत् । यावज्जिघ्रति तं गन्धं तावत्पुण्यैस्तु पूर्यते ॥
गवां कण्डूयनं श्रेष्ठं तथा च परिपालनम् । तुल्यं गोशतदानस्य भयरोगादिपालने ॥
तृणोदकानि यो दद्यात्क्षुधितेन गवाह्निकम् । गोमेधस्य फलं दिव्यं लभते मानवोत्तमः॥

विमानैर्विविधैर्दिव्यैः कन्याभिरभितोऽर्चितैः[2] ।
सेव्यमानः सुगन्धैर्वै दीप्यमान इवाग्नयः ॥ १४ ॥

सुवर्णकपिला पूर्वं द्वितीया गौरपिङ्गला । तृतीया चैव रक्ताक्षी चतुर्थी गुडपिङ्गला ॥
पञ्चमी बहुवर्णा स्यात्षष्ठी च श्वेतपिङ्गला । सप्तमी श्वेतपिङ्गाक्षी अष्टमी कृष्णपिङ्गला॥

---

१. नरेन्द्रेति, राजेन्द्रति वा पाठः । २. अर्पितैरिति पाठान्तरम् ।

नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला । एकादशीखुरश्वेता एतासां सर्वलक्षणाः ॥
सर्वलक्षणसंयुक्ता सर्वालङ्कृतसुन्दरी ।
ब्राह्मणाय प्रदातव्या सर्वमुक्तिप्रदायिनी । भुक्तिमुक्तिप्रदा तेषां विष्णुमार्गप्रदायिनी ॥

इति वाराहपुराणे कपिलामाहात्म्यं नाम एकादशाधिकशततमोऽध्यायः ।

---

## द्वादशाधिकशततमोऽध्यायः

होतोवाच

अतः परं महाराज श्रृणूभयमुखीं ततः ।
विधानं तद्वरारोहे धरण्या कथितं पुरा । तदहं सम्प्रवक्ष्यामि तव पुण्यफलं महत् ॥

धरण्युवाच

या त्वया कपिला प्रोक्ता पूर्वमुत्पादिता प्रभो ।
होमधेनुः सदा पुण्या सा ज्ञेया कतिलक्षणा ॥ २ ॥
कियत्यः कपिलाः प्रोक्ताः स्वयमेव स्वयम्भुवा ।
प्रसूयमाना दानेन किं पुण्यं स्याच्च माधव । एतदिच्छाम्यहं श्रोतुं विस्तरेण जगद्गुरो॥

वराह उवाच

श्रृणुष्व भद्रे[1] तत्त्वेन पवित्रं पापनाशनम् ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥४ ॥
कपिला ह्यग्निहोत्रार्थे यज्ञार्थे च वरानने । उद्धृत्य सर्वतेजोभिर्ब्रह्मणा निर्मिता पुरा ॥
पवित्राणां पवित्रञ्च मङ्गलानाञ्च मङ्गलम् । पुण्यानां परमं पुण्यं कपिला च वसुन्धरे ॥
तपसस्तप एवाग्र्यं व्रतानां व्रतमुत्तमम् । दानानामुत्तमन्दानं निधीनां ह्येतदक्षयम् ॥
पृथिव्यां यानि तीर्थानि गुह्यान्यायतनानि च ।
पवित्राणि च पुण्यानि सर्वलोकेषु सुन्दरि ॥ ८ ॥
होतव्यान्यग्निहोत्राणि सायं प्रातर्द्विजातिभिः । कपिलाया घृतेनेह दध्ना क्षीरेण वा पुनः॥
जुह्वते ह्यग्निहोत्राणि मन्त्रैश्च विविधैः सदा । पूजयन्नतिथींश्चैव परां भक्तिमुपागताः ॥
ते यान्त्यादित्यवर्णैश्च विमानैर्द्विजसत्तमाः । सूर्यमण्डलमध्यात्तु ब्रह्मणा निर्मिता पुरा ॥
कपिला या पिङ्गलाक्षी सर्वसौख्यप्रदायिनी । सिद्धिबुद्धिप्रदा धेनुः कपिलानन्तरूपिणी॥
पूर्वोक्ता यास्तु कपिलाः सर्वलक्षणलक्षिताः[2]। सर्वा ह्येता महाभागास्तारयन्ति न संशयः॥

---

१. देवि इति पाठान्तरम् ।
२. एताहशी समाख्याताः कपिला ते वरानने इति पाठान्तरम् ।

सङ्गमेषु प्रशस्ताश्च सर्वपापप्रणाशनाः[1] । अग्निपुच्छा अग्निमुखी अग्निलोमानलप्रभा ।
तथाग्नायी तथा देवी सुवर्णाख्या प्रवर्तते ॥ १४ ॥
ग्रहीत्वा कपिलां शूद्रान् कामतः सदृशीं पिबेत् ।
पतितः स हि विज्ञेयश्चाण्डालसदृशोऽधमः ॥ १५ ॥
तस्मान्न प्रविगृह्णीयाच्छूद्राद्विप्रः प्रतिग्रहम् । दूरात्ते परिहर्तव्याः श्वभिस्तुल्या इवाध्वरे ॥
सर्वकाले[2] हि सर्वे वै वर्जिताः पितृदैवतैः । असम्भाष्याप्रतिग्राह्याः शूद्रास्ते पापकर्मणः॥
पिबन्ति यावत्कपिलां यावत्तेषां पितामहाः ।
भूमेर्मलं समश्नन्ति जायन्ते विड्भुजश्चिरम् ॥ १८ ॥
तासाङ्क्षीरं घृतं वापि नवनीतमथापि वा । उपजीवन्ति ये शूद्रास्तेषाङ्गतिमतः शृणु ॥
कपिलाजीविनः शूद्राः क्रूरा गच्छन्ति रौरवम् ।
रौरवेषु च पच्यन्ते[3] वर्षकोटिशतन्धरे ॥ २० ॥
ततोविमुक्ताः कालेन शुनो योनिं व्रजन्ति ते[4] ।
शुनो योन्या विमुक्तास्तु विष्ठाभुक्कृमयस्ततः ॥ २१ ॥
विष्ठास्थानेषु पापिष्ठः सुदुर्गन्धिषु नित्यशः । भूयोभूयोजायमानस्ततोत्तारं न विन्दति ॥
ब्राह्मणश्चैव यो विद्वान् कुर्यात्तेषां प्रतिग्रहम् । ततः प्रभृत्यमेध्यान्तः पितरस्तस्य शेरते ॥
न तं विप्रन्तु सम्भाषेन्न चैवैकासनं विशेत् । स नित्यं वर्जनीयो हि दूरात्तु ब्राह्मणैर्धरे॥
यस्तेन सह सम्भाषेत्तथा चैकासनं व्रजेत् । प्राजापत्यञ्चरेत्कृत्स्नं तेन शुध्यति स द्विजः॥
एकस्य गोप्रदानस्य सहस्रांशेन पूर्यते । किमन्यैर्बहुभिर्दानैः कोटिसंख्यानविस्तरैः ॥
श्रोत्रियाय दरिद्राय सुवृत्तायाहिताग्नये । आसन्नप्रसवान्धेनुन्दानार्थं प्रतिपालयेत् ॥
कपिलार्धप्रसूता वै दातव्या च द्विजन्मने ॥ २७ ॥
जायमानस्य वत्सस्य मुखं योन्यां प्रदृश्यते । तावत्सा पृथिवी ज्ञेया यावद्गर्भन्न मुञ्चति
धेन्वा यावन्ति रोमाणि सवत्साया वसुन्धरे ।
तावत्यो वर्षकोटयस्तु ब्रह्मवादिभिरर्चिताः ॥
वसन्ति ब्रह्मलोके वै ये नित्यं कपिलाप्रदाः ॥ ३० ॥
सुवर्णशृङ्गीं यः कृत्वा रौप्ययुक्तखुरां तथा । ब्राह्मणस्य करे दत्त्वा सुवर्णं रौप्यमेव च ।
कपिलायास्तदा पुच्छं ब्राह्मणस्य करे न्यसेत् ॥ ३१ ॥
उदकञ्च करे दत्वा वाचयेच्छुद्धया गिरा । सप्तसमुद्रवना तेन सशैलवनकानना ।
रत्नपूर्णा भवेद्दत्ता पृथिवी नात्र संशयः ॥ ३२ ॥
पृथिवीदानतुल्येन दानेनैतेन वै नरः । नन्दितो याति पितृभिर्विष्णवाख्यं परमम्पदम् ॥
ब्रह्मस्वहारी वा गोघ्नो भ्रूणहा पापदेहकः । महापातकयुक्तोऽपि वञ्चको ब्रह्मदूषकः ॥
निन्दको ब्राह्मणानाञ्च तथा कर्मावदूषकः । महापातकयुक्तोऽपि गवां दानेन शुध्यति ॥

१. विनाशना इति पाठान्तरम् । २. पर्वकाले इति पाठान्तरम् ।
३. रौरवे तु महारौद्रे इति वा पाठः । ४. हि इति पाठान्तरम् ।

यश्चोभयमुखीं दद्यात्प्रभूतकनकान्विताम् । तद्दिनं पायसाहारं पयसा वापि निर्वपेत्[1]॥
सुवर्णस्य सहस्रेण तदर्धेनापि भामिनि । तस्याप्यर्धं[2] शतेनाथ पञ्चाशच्च ततोऽर्धकम्।
यथाशक्त्या प्रदातव्या वित्तशाठ्यं विवर्जयेत् ॥ ३७ ॥
इमां गृह्णोभयमुखीमुभयत्र शमोऽस्तु वै । ददे वंशविवृद्ध्यर्थं सदा स्वस्तिकरी भव ॥
प्रतिगृह्णामि त्वा धेनो कुटुम्बार्थे विशेषतः । शुभं भवतु मे नित्यं देवधात्रि नमोऽस्तु ते॥
ओं द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ।
क इदं कस्मा अदादिति जपित्वा वै वसुन्धरे ।
विसृज्य ब्राह्मणं देवि तां धेनुं तद्गृहं नयेत् ॥ ४० ॥
एवं प्रसूयमानां यो गान्ददाति वसुन्धरे । पृथिवी तेन दत्ता स्यात्सप्तद्वीपा न संशयः॥

वदन्ति तां चन्द्रसमानवक्त्रां प्रतप्तजाम्बूनदतुल्यवर्णाम् ।
महासितत्त्वां तनुवृत्तमध्यां सेवन्त्यजस्रं कुलितां हि देवाः ॥ ४२ ॥
प्रातरुत्थाय यो मर्त्यः कल्पञ्चेदं समाहितः ।
जितेन्द्रियः शुचिर्भूत्वा पठेद्भक्त्या समन्वितः ॥ ४३ ॥
त्रिः सदावर्तनं कृत्वा पापं वर्षकृतञ्च यत् ।
नश्यते तत्क्षणादेव वायुना पांशवो यथा ॥ ४४ ॥
श्राद्धकाले पठेद्यस्तु इदं पावनमुत्तमम् ।
तस्यान्नं संस्कृतन्तद्धि पितरोऽश्नन्ति धीमतः ॥ ४५ ॥
अमायां वाथ यः कश्चिद् द्विजानामग्रतः पठेत् ।
पितरस्तस्य तृप्यन्ति वर्षाणां शतमेव च ॥ ४६ ॥
यश्चैतच्छृणुयान्नित्यं तद्गतेनान्तरात्मना । संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥४७॥

होतोवाच

इदं रहस्यं राजेन्द्र वराहेण पुरातनम् । धरण्यै कथितं राजन्धेनुमाहात्म्यमुत्तमम् ।
मया ते कथितं सर्वं सर्वपापप्रणाशनम् ॥ ४८ ॥
द्वादश्यां माघमासस्य शुक्लायां तिलधेनुदः । सर्वकामसमृद्धार्थो वैष्णवं पदमाप्नुयात्॥
द्वादश्यां श्रावणे मासि शुक्लायां राजसत्तम । प्रत्यक्षधेनुर्दातव्या सहिरण्या नृपोत्तम ॥
सर्वदा सर्वधेनूनां प्रदानं राजसत्तम । सर्वपापप्रशमनं भुक्तिमुक्तिप्रदायकम् ॥५१॥
एतत्ते सर्वमाख्यातं समासाद्बहुविस्तरम् । धेनूनां फलमुद्दिश्य सर्वकामप्रदं नृणाम्[3] ॥
अथवा पीड्यसेऽत्यन्तं क्षुधया पार्थिवोत्तम । इदानीं कार्त्तिकी चेयं वर्तते च नराधिप[4]॥
ब्रह्माण्डं सर्वसम्पन्नं भूतरत्नौषधैर्युतम् । देवदानवयक्षैस्तु युक्तमेतत्सदा विभो ॥ ५४ ॥

---

१. वा भवेत् इति पाठान्तरम् । २. यस्याप्यर्धं इति वा पाठः ।

३. तिलादिसर्वधेनूनां प्रदानं राजसत्तम, इति अपारफलमुद्दिश्य ब्रह्मणा लोककर्तृणेति वा पाठः । ४. एकस्मिन् पुस्तके नास्ति ।

एतद्धेममयं कृत्वा सर्वबीजरसान्वितम् । सरत्नं पुरुषः कृत्वा कार्त्तिक्यां द्वादशीदिने ॥
अथवा पञ्चदश्याञ्च कार्त्तिकस्य विशेषतः । पुरोहिताय गुरवे दापयेद् भक्तिमान् नरः[1]॥

ब्रह्माण्डोदरवर्तीनि यानि भूतानि पार्थिव ।
तानि दत्तानि तेन स्युः समासात्कथितं तव ॥ ५७ ॥

यो यज्ञे यजते राजन्सहस्रशतदक्षिणैः । सैकदेशो यजेत्तस्य ब्रह्माण्डस्य विशेषतः ॥५८॥
यः पुनः सकलञ्चेदं ब्रह्माण्डं यजते नरः । तेन यष्टं हुतं दत्तं पठितं कीर्त्तितं भवेत् ॥
एवं श्रुत्वा ततो राजा हेमकुम्भप्रकल्पितम् । ब्रह्माण्डमृषये प्रादात्सपिधानञ्च तत्क्षणात्॥
सर्वकामैः सुसंवीतो ययौ स्वर्गं नराधिपः । तस्मात्त्वमपि राजेन्द्र तद्दत्त्वा तु सुखी भव॥
एवमुक्तो वसिष्ठेन सोऽप्येवमकरोन्नृपः । जगाम परमां सिद्धिं यत्र गत्वा न शोचति ॥

वराह उवाच

इयं ते कथिता देवि संहिता सर्वकामिका । वराहाख्या वरारोहे सर्वपातकनाशिनी ॥
सर्वज्ञादुत्थिता चेयं ततो ब्रह्मा बुबोध ह । ब्रह्मा स्वसूनवे प्रादात्पुलस्त्याय महात्मने ॥

सोऽपि रामाय च प्रादाद्भार्गवाय महात्मने ।
असावपि स्वशिष्याय प्रादादुग्राय धारिणि ॥ ६५ ॥
उग्रोऽपि मनवे प्रादादेष वः कीर्त्तितो मया ।
सम्बन्धः पूर्वकल्पीयो द्वितीयं शृणु साम्प्रतम् ॥ ६६ ॥
सर्वज्ञाल्लब्धवानस्मि त्वञ्च मत्तो धराधरे ।
त्वत्तश्च तपसा सिद्धा[2] वेत्स्यन्ते कपिलादयः ॥ ६७ ॥

क्रमेण यावद् व्यासेन ज्ञातमेतद्भविष्यति। तस्यापि शिष्यो भविता नाम्ना वै रोमहर्षणिः॥
असौ शुनकपुत्रस्य[3] कथयिष्यति नान्यथा ॥ ६८ ॥
अष्टादश पुराणानि वेद द्वैपायनो गुरुः । ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतन्तथा ॥
तथान्यं नारदीयञ्च मार्कण्डेयञ्च सप्तमम् । आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा ॥
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् । वाराहं द्वादशं प्रोक्तं स्कान्दञ्चापि त्रयोदशम् ॥
चतुर्दशं वामनकं कौर्मं पञ्चदशं स्मृतम् । मात्स्यञ्च गारुडञ्चैव ब्रह्माण्डञ्च ततः परम्॥
य एतत्पाठयेद्भक्त्या कार्त्तिक्यां द्वादशीदिने । तस्य नूनं भवेत्पुत्रो ह्यपुत्रस्यापि धारिणि
यस्येदं तिष्ठते गेहे लिखितं पूज्यते सदा । तस्य नारायणो देवः स्वयं तिष्ठति धारिणि ॥
यश्चैतच्छृणुयाद्भक्त्या नैरन्तर्येण मानवः । श्रुत्वा तु पूजयेद्यस्तु शास्त्रं वराहसंज्ञितम् ॥
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ ७५ ॥

इति वाराहपुराणे श्वेतोपाख्यानं नाम द्वादशाधिकशततमोऽध्यायः ।

---

१. दद्याद् भक्तिसमन्वितः इति पाठान्तरम् ।
२. युक्ता इति पाठान्तरम् ।
३. शुनकपुत्राय इति पाठान्तरम् ।

# त्रयोदशाधिकशततमोऽध्यायः

[1]स तेन सान्त्विताया वै पृथिव्या यः समागतः ।
सनत्कुमारस्तत्क्षेत्रे दृष्ट्वा तां संस्थितां महीम् ।
स्वस्तिवाच्याह पुण्याभे प्रत्युवाच वसुन्धराम् ॥ १ ॥

सनत्कुमार उवाच

यं दृष्ट्वा वर्धसे देवि त्वञ्च यस्यासि माधवि ।
विष्णुना धार्यमाणा च किं त्वया दृष्टमद्भुतम् ॥ २ ॥
एतदाचक्ष्व तत्त्वेन यत्ते हरिमुखाच्छ्रुतम् । ब्रह्मपुत्रवचः श्रुत्वा पृथिवी वाक्यमब्रवीत् ॥

धरण्युवाच

यद्गुह्यं स मया पृष्टो यच्च मे सम्प्रभाषितम् । श्रृणु तत्त्वेन विप्रेन्द्र गुह्यं धर्म महौजसम्॥
भगवत्प्रोक्तधर्मेषु यद्गुह्यं कथयाम्यहम् । तेन मे कथितं ह्येतत्संसारात्तु विमोक्षणम् ।
विष्णुभक्तेन यत्कार्यं यत्क्रिया परितिष्ठता ॥ ५ ॥
उवाच परमं गुह्यं धर्माणां व्याप्तनिश्चयम् । अयं धर्मो मया ह्येतच्छ्रुते धर्मे सनातने ॥
ततो महीवचः श्रुत्वा ब्रह्मपुत्रो महातपाः । कोकामुखे मम क्षेत्रं जपन्तो ब्रह्मवादिनः ॥
तान् सर्वानानयामास यत्र देवी व्यवस्थिता । सनत्कुमारः पूतात्मा प्रत्युवाच महीं प्रति॥
यन्मया पूर्वमुक्तासि कथयस्व वरानने । अप्रमेयगतिश्चैव धर्ममाचक्ष्व तत्त्वतः ॥
ततस्तस्य वचः श्रुत्वा प्रणम्य ऋषिपुङ्गवम् । उवाच परमप्रीता धात्री मधुरया गिरा ॥

धरण्युवाच

श्रृण्वन्तु ऋषयः सर्वे यत्तद्विष्णुमुखाच्छ्रुतम् ।
बाढमित्येव तां देवि स्वस्ति ब्रूहीति सोऽब्रवीत् ॥ ११ ॥

---

१. नमस्तस्मै वराहाय लीलयोद्धरते महीम् ।
खुरमध्यगतो यस्य मेरुः खणखणायते ॥
दंष्ट्राग्रेणोद्धृता गौरुदधिपरिहृता पर्वतैर्निम्नगाभि-
र्संक्तानां भीतिहानौ भुवनरकदशास्यान्तकः क्रोडरूपी ।
विष्णुः सर्वेश्वरोऽयं यमिह हतमला लीलया प्राप्नुवन्ति
त्यक्त्वात्मानोनपापे प्रभवतु मुदितारातिपक्षक्षितीशम् ॥
यस्मिन् काले क्षितिः पूर्वकल्पे वाराहमूर्त्तिना ।
उद्धृता च यथा भक्त्या पप्रच्छ परमेश्वरम् ॥
धरण्युवाच ।
कल्पे कल्पे भवानेव मां समुद्धरते भवान् ।
न वाद्धश्लेष्टते मूर्त्तिर्मादृशीं गाञ्च केशव ॥

नष्टचन्द्रानिले लोके नष्टभास्करतारके । स्तम्भिताश्च दिशः सर्वा न प्राज्ञायत किञ्चन ॥
न वाति पवनस्तत्र नैव चाग्निर्न विद्युतः । न किञ्चित्तत्र विद्येत न तारा न च राशयः ॥
न चैवाङ्गारकस्तत्र न शुक्रो न बृहस्पतिः । शनैश्चरो बुधो नात्र न चेन्द्रो धनदो यमः ॥
वरुणोऽपि न विद्येत नान्ये केचिद्दिवौकसः ।
वर्जयित्वा त्रयो देवान् ब्रह्मविष्णुमहेश्वरान् ॥ १५ ॥
पृथिवी भारसन्तप्ता ब्रह्माणं शरणं गता । गत्वा च शरणं देवी दैन्यं वदति माधवी ॥
प्रसीद मम देवेन्द्र मग्नाहं भारपीडिता । सपर्वतवनैः सार्धं मां तारय पितामह ॥
पृथिव्या वचनं श्रुत्वा ब्रह्मा लोकपितामहः । मुहूर्तं ध्यानमास्थाय पृथिवीन्तामुवाच ह॥
नाहं तारयितुं शक्तो विषमस्थां वसुन्धरे । लोकनाथं सुरश्रेष्ठमादिकर्तारमञ्जसा ॥
लोकेशं धन्विनं श्रेष्ठं याहि मायाकरण्डकम् । सर्वेषामेव नः कार्यं यञ्च किञ्चित्प्रवर्तते ॥
सर्वांस्तारयितुं शक्तः किं पुनस्त्वां वसुन्धरे । अनन्तशयने देवः शयानं योगशायिनम्॥
ततः कमलपत्राक्षी नानाभरणभूषिता । कृताञ्जलिपुटा देवी प्रसादयति माधवम् ॥२२॥

धरण्युवाच

अहं भारसमायुक्ता ब्रह्माणं शरणङ्गता । प्रत्याख्याता भगवता तेनाप्युक्तमिदं वचः ॥
नाहं तारयितुं शक्तः सुश्रोणि व्रज माधवम् ।
स त्वान्तारयितुं शक्तो मग्नासि यदि सागरे ॥ २४ ॥
प्रसीद मम देवेश लोकनाथ जगत्पते[1] । भक्त्या त्वां शरण यामि प्रसीद मम माधव ॥
त्वमादित्यश्च चन्द्रश्च त्वं यमो धनदस्तु वै । वासवो वरुणश्चासि अग्निर्मारुत एव च॥
अक्षरश्च क्षरश्चासि त्वं दिशो विदिशो भवान् ।
मत्स्यः कूर्मो वराहश्च नरसिंहोऽसि वामनः ॥ २७ ॥
रामो रामश्च कृष्णश्च बुद्धः कल्की महात्मवान् ।
एवं पश्यसि योगेन श्रूयते त्वं महायशाः ॥ २८ ॥
युगायुगसहस्राणि व्यतीतान्यसि संस्थितः। पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।

---

वेदेषु चैव नष्टेषु मत्स्यो भूत्वा रसातलम् । प्रविश्य तानथोत्कृष्य ब्रह्मणे दत्तवानसि ॥
अन्यद्देव कूर्मरूपस्त्वं समुद्रस्य मन्थने । धृतवानसि कार्येण मन्दरं मधुसूदन ॥
पुनर्वराहरूपेण मां गच्छन्तीं रसातले । उज्जहारैकदंष्ट्रेण भवानेव महार्णवात् ॥
अन्यद्धिरण्यकशिपुर्वरदानेन दर्पितः । असावपि नृसिंहेन वपुरास्थाय नाशितः ॥
पुनर्निःक्षत्ररूपेण त्वयाऽहं विकृता पुरा । जामदग्न्येन रामेण त्वया दृष्टा सकृत् प्रभो ।
पुनश्च रावणो रक्षः क्षयितं स्वेन तेजसा । बलिश्च बद्धो भगवान् त्वया वामनरूपिणा ॥
न च जानाम्यहं देव तव किञ्चिद्विचेष्टितम् । उद्धृत्य मां कथं देव सृजसे किञ्च कारणम् ॥
सृष्ट्वा किमादिशः सर्वा न प्राज्ञायत किञ्चन । न वाति पवनस्तत्र न चैवाग्निर्न वाति च ॥
अश्विवश्च न विद्यन्ते न नक्षत्रा न वा ग्रहाः । इति पुस्तकान्तरे अयं भिन्नः पाठो दृश्यते ।
१. जगत्प्रभो इति पाठान्तरम् ।

शब्दस्पर्शस्वरूपोऽसि रसोगन्धोऽसि नो भवान्[1] ॥ २९ ॥
सग्रहाणि च ऋक्षाणि कला काष्ठा मुहूर्त्तकाः ।
ज्योतिश्चक्रं ध्रुवश्चासि सर्वेषु द्योतते भवान् ॥ ३० ॥

मासः पक्षमहोरात्रमृतुः संवत्सराण्यपि । ऋतवश्चापि[2] षण्मासाः षड्रसाश्चापि संयमः॥
सरितः सागराश्च त्वं पर्वताश्च महोरगाः । त्वं मेरुर्मन्दरो विन्ध्यो मलयो दर्दुरो भवान्॥

हिमवान्निषधश्चासि सचक्रोऽसि वरायुधः ।
धनुषाञ्च पिनाकोऽसि सांख्ययोगोऽसि[3] चोत्तमः ॥ ३३ ॥
परम्परोऽसि लोकानां नारायणः परायणः ।
संक्षिप्तश्चैव विस्तारो गोप्ता क्षेप्ता च वै भवान्[4] ॥ ३४ ॥
यज्ञानाञ्च महायज्ञो यूपानामसि संस्थितः ।
वेदानां सामवेदोऽसि साङ्गोपाङ्गो महाव्रतः ॥ ३५ ॥

गर्जनं वर्षणश्चासि त्वं वेधा अनृतानृते । अमृतं सृजसे विष्णो येन लोकानधारयत्॥
त्वं प्रीतिस्त्वं परा प्रातिः पुराणः पुरुषो भवान् । धेयाधेयं जगत्सर्वं यच्च किञ्चित्प्रवर्तते॥

सप्तानामपि लोकानां त्वं नाथस्त्वमसङ्ग्रहः ।
त्वञ्च कालश्च मृत्युश्च त्वं भूतो भूतभावनः ॥ ३८ ॥
आदिमध्यान्तरूपोऽसि मेधा बुद्धिः स्मृतिर्भवान् ।
आदित्यस्त्वं युगावर्तास्त्वं तपस्वी महातपाः ॥ ३९ ॥
अप्रमाणः प्रमेयोऽसि ऋषीणाञ्च महानृषिः ।
अनन्तश्चासि नागानां सर्पाणामसि तक्षक ॥ ४० ॥

उद्वहः प्रवहश्चासि वरुणो वारुणो भवान् । क्रीडाविक्षेपगश्चासि गृहेषु गृहदेवताः[5]॥
सर्वात्मकः सर्वगतो वर्धनो मन एव च । युगमन्वन्तरे चापि वृक्षाणाञ्च वनस्पतिः ॥

अण्डजोद्भिज्जस्वेदानां जरायूणाञ्च माधव[6] ।
गरुडोऽसि महात्मानं वहसि त्वं परायणः ॥ ४१ ॥

दुन्दुभिर्नेमिघोषैश्च आकाशममलो भवान् । जयश्च विजयश्चासि गृहेषु गृहदेवताः ॥
सर्वात्मकः सर्वगतश्चेतनो मन एव च । भगस्त्वं विषलिङ्गश्च परस्त्वं परमात्मकः ॥

सर्वभूतनमस्कार्यो नमो देवो नमो नमः ।
आदिकालात्मकः कृष्णः सर्वलोकात्मको विभुः ॥ ४६ ॥

---

१. ज्योतिश्चक्रं ध्रुवश्चासि सर्वेषु द्योतते भवानिति वा पाठः ।
२. कला काष्ठापि इति पाठान्तरम् ।
३. योगः सांख्योऽसीति पाठान्तरम् । ४. यज्ञश्च शाश्वतः इति वा पाठः ।
५. एकस्मिन् पुस्तके श्लोकोऽयं न दृश्यते ।
६. श्रद्धासि त्वञ्च देवेश दोषहन्तासि माधवेति पाठान्तरम् ।

य इदं पठते स्तोत्रं केशवस्य दृढव्रतः। व्याधितो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्॥
अपुत्रो लभते पुत्रं दरिद्रो धनमाप्नुयात्। अभार्यो लभते भार्यामपतिः पतिमाप्नुयात्॥

उभे सन्ध्ये पठेद्यस्तु माधवस्य महात्मकम्।
स गच्छेद्विष्णुलोकं हि नात्र कार्या विचारणा॥

एवन्तु अक्षरोक्तोऽपि भवे तु परिकल्पना। तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥

इति वाराहपुराणे विष्णुस्तवनं नाम त्रयोदशाधिकशततमोऽध्यायः।

---

# चतुर्दशाधिकशततमोऽध्यायः

वराह उवाच

संस्तूयमानो भगवान्मुनिभिर्मन्त्रवादिभिः।
तुष्टो नारायणो देवः केशवः परमो विभुः॥ १॥
ततो ध्यानं समास्थाय दिव्यं योग्यञ्च माधवः।
मधुरं स्वरमास्थाय प्रत्युवाच वसुन्धराम्॥ २॥
तव देवि प्रियार्थाय भक्त्या यं त्वं व्यवस्थिता[1]।
अहं त्वां धारयिष्यामि सशैलवनकाननाम्।
ससागरां ससरितां सप्तद्वीपसमन्विताम्॥ ३॥

एवमाश्वासयित्वा तु वसुधां स च माधवः। रूपं सङ्कल्पयामास वाराहं सुमहौजसम्॥
षट् सहस्राणि चोच्छ्रायो विस्तारेण पुनस्त्रयः। एवं नवसहस्राणि योजनानां विधाय च॥
वामया दंष्ट्रया गृह्य उज्जहार च मेदिनीम्। सपर्वतवनाकारां सप्तद्वीपां सपत्तनाम्॥

नगा विलग्नाः पतिताः केचिद्विज्ञानसंश्रिताः।
शोभन्ते च विचित्राङ्गमेघाः सन्ध्यागमे यथा॥ ७॥

चन्द्रनिर्मलसङ्काशा वराहमुखसंस्थिताः। शोभन्ते चक्रपाणेश्च मृणालं कर्दमे यथा॥
एवं हि धार्यमाणा सा पृथिवी सागरान्विता। वर्षाणाञ्च सहस्रं हि वज्रदंष्ट्रेण साधुना
तस्यामेव तु कालस्य परिमाणं युगेषु च। एकसप्ततिमे कल्पे कर्दमोऽयं प्रजापतिः॥
ततः पृथिव्या देवश्च भगवान्विष्णुरव्ययः। अन्योन्याभिमताश्चैव वाराहे कल्प उत्तमे॥
सा गौः स्तुवति तच्चैव पुराणं परमव्ययम्। योगेन परमेणैव शरणञ्चैव गच्छति॥
आचारः कीदृशो देव उपयोगश्च कीदृशः। काले काले च देवेश कर्मणश्चापि कीदृशः॥

कीदृशी पश्चिमा सन्ध्या कीदृशी ह्यर्धवाह्यतः।
शेषाः समानास्त्वा देव ये तु कर्माणि कुर्वते॥ १४॥

---

१. अतः परं
कारयिष्यामि ते सर्वं यत्ते हृदि व्यवस्थितम्। इत्यधिकः पाठो वर्तते कस्मिंश्चित् पुस्तके।

किन्तु संस्थापनं देव आवाहनविसर्जने । अगुरुञ्चन्धधूपञ्च प्रमाणं गृह्यसे कथम् ॥
कथं पाद्यञ्च गृह्णासि स्थापनालेपनानि च । कथं दीपश्च दातव्यः कथं मूलफलानि च॥
आसनं शयनञ्चैव किङ्कर्माणि विधीयते । कथं पूजाधिकर्तव्या प्राणास्तत्र च वै कति॥
पश्चिमा पूर्वं सन्ध्यायां किं पुण्यञ्चास्ति तत्र वै ।
शरदि कीदृशं कर्म शिशिरे कर्म कीदृशम् ॥ १८ ॥
वसन्ते कीदृशं कर्म ग्रीष्मे किङ्कर्म कारयेत् ।
प्रावृट्काले च किंकर्म वर्षान्ते किञ्च कारयेत् ॥ १९ ॥
यानि तत्रोपयोग्यानि पुष्पाणि च फलानि च ।
कर्मण्यास्ते अकर्मण्या ये च शास्त्रवहिष्कृताः ॥ २० ॥
किङ्कर्मणा भोगवता यावद्गच्छति माधवः । कथं कर्म न चान्येषु अतिगच्छति कीदृशम् ॥
अर्च्चायां किं प्रमाणन्तु स्थापनञ्चापि कीदृशम् । परिमाणं कथं देव उपवासश्च कीदृशः ॥
पीतकं शुक्लरक्तं वा कथं गृह्णाति वाससाम् । तेषान्तु कानि वस्त्राणि यैर्हि तं प्रतिपद्यते ॥
केषु द्रव्येषु संयुक्तं मधुपर्कं प्रदीयते । के तु कर्मगुणास्तस्य मधुपर्कस्य माधव ।
कानि लोकानि[3] गच्छन्ति मधुपर्कस्य भक्षणात्[4] ॥ २४ ॥
स्तवे परमकालेऽपि तव भक्तस्य माधव । किम्प्रमाणन्तु दातव्यं मधुपर्कसमन्वितम् ॥
कानि मांसानि ते देव फलशाकश्च कीदृशः । प्रापणेष्वपि युज्येत कर्म शास्त्रसमायुतम् ॥
आहूतस्य च मन्त्रेण आगतं भक्तिवत्सल[5] । केन मन्त्रविधानेन प्राशनन्ते प्रदीयते ॥
वृतस्य चोपचारेषु अर्च्चयित्वा यथाविधि ।
कानि कर्माणि कुर्वीत तव भक्तस्य भोजनात् ॥ २८ ॥
यस्तु तं प्रापणं देवं न च दोषप्रसादिकम् । केऽत्र भुञ्जति तद्देव सर्वशुद्धिकरम्परम् ॥
ये तु एकाशिनो देवमुवसर्पति माधवम् । तेषान्तु का गतिर्देव तव मार्गानुसारिणाम् ॥
व्रतं कृत्वा यथोक्तेन येऽभिगच्छन्ति माधवम् ।
तेषान्तु का गतिर्देव तव भक्तिं प्रकुर्वताम् ॥ ३१ ॥
कृच्छ्रासान्तपने कृत्वा येऽभिगच्छन्ति माधवम् । कां गतिन्ते प्रपद्यन्ते तव कर्मपरायणाः॥
वाय्वाहारं ततः कृत्वा कृष्णं समधिगच्छति ।
तेषान्तु का गतिः कृष्ण तव भक्तौ व्यवस्थिताः ॥ ३३ ॥
अक्षारलवणं कृत्वा येऽभिगच्छन्ति चाच्युतम् ।
कां गतिन्ते प्रपद्यन्ते तव कर्मानुसारिणः ॥ ३४ ॥
कृत्वा पयोव्रतञ्चैव येऽभिगच्छन्ति चाच्युतम् ।
कां गतिं प्रतिपद्यन्ते नरा ये व्रतचारिणः ॥ ३५ ॥

---

१. कन्द इति वा पाठः । २. चापि इति पाठान्तरम् ।
३. केषु लोकेषु इति वा पाठः । ४. प्राशनादिति पाठान्तरम् ।
५. धर्मवत्सलेति क्वचित् पठ्यते ।

दत्त्वा गवाह्निकञ्चैव ये प्रपद्यन्ति माधवम्।
कां गतिन्ते प्रपद्यन्ते तव भक्त्या व्यवस्थिताः ॥ ३६ ॥
उञ्छवृत्तिं समास्थाय येऽभिगच्छन्ति माधवम्।
कां गतिन्ते प्रपद्यन्ते नरा भिक्षोपजीवनाः ॥ ३७ ॥
गृहस्थधर्मन्त्यक्त्वा वै येऽभिगच्छन्ति माधवम्।
कां गतिन्ते प्रपद्यन्ते तव कर्मपरायणाः ॥ ३८ ॥
वैकुण्ठ तव क्षेत्रेषु ये तु प्राणान्विमुच्यते।
काँल्लोकांस्ते प्रपद्यन्ते तव क्षेत्रेषु ये मृताः ॥ ३९ ॥
कृत्वा पञ्चातपञ्चैव माधवाय प्रयच्छति।
कां गतिं वै परायान्ति ये तु पञ्चातपे मृताः ॥ ४० ॥
कण्टशय्यां समासाद्य ये प्रपश्यन्ति चाच्युतम्।
तेषान्तु का गतिर्देव कण्टशय्यां समाश्रिताः ॥ ४ ॥
आकाशशयनङ्कृत्वा ये प्रपद्यन्ति चाच्युतम्।
तेषान्तु का गतिः कृष्ण तव भक्तिपरायणाः ॥ ४२ ॥
गोव्रजे शयनं कृत्वा ये प्रपद्यन्ति केशवम्। तेषान्तु का गतिर्ब्रह्मंस्तव भक्तिपथे स्थिताः॥
शाकाहारं ततः कृत्वा येऽभिगच्छन्ति चाच्युतम्।
तेषान्तु का गतिर्देव कणभक्षास्तु ये नराः ॥ ४४ ॥
पञ्चगव्यं ततः पीत्वा येऽभिगच्छन्ति माधवम्।
तेषान्तु का गतिर्देव ये नरा यावकाशिनः ॥ ४५ ॥
आहारं गोमयङ्कृत्वा येऽभिगच्छन्ति केशवम्।
नारायण गतिस्तेषां कीदृशोऽत्र विधिः स्मृतः ॥ ४६ ॥
सक्तुं वै भक्षयित्वा तु ये प्रपद्यन्ति चाच्युतम्। तेषान्तु का गतिर्देव तव[१] कर्मपरायणाः ॥
शिरसा दीपकङ्कृत्वा येऽभिगच्छन्ति केशवम्।
तेषान्तु का गतिर्देव शिरसा दीपधारणात् ॥ ४८ ॥
ये हि नित्यं पयः पीत्वा तव चिन्ताव्यवस्थिताः।
ते गतिं कां प्रपद्यन्ति तव चिन्तापरायणाः ॥ ४९ ॥
अश्माशनं व्रतङ्कृत्वा ये प्रपद्यन्ति नित्यशः। तेषान्तु का गतिर्देव तव भक्तिपरायणाः ॥
भक्षयित्वा तु दूर्वां ये प्रपद्यन्ति मनीषिणः। तेषान्तु का गतिर्देव स्वकर्म[२]गुणचारिणः ॥
जानुभ्यां प्रतिपद्यन्ति तव प्रीत्या च माधव।
तेषान्तु का गतिर्देव तन्ममाचक्ष्व पृच्छतः ॥ ५२ ॥
उत्तानशयनङ्कृत्वा धारयन्ति हि दीपिकाम्।
ते यान्ति कां गतिन्देव कथ्यते या च शाश्वती ॥ ५३ ॥

---

१. तव भक्तिपरायणा इति पाठान्तरम्। २. स्वधर्मेति पाठान्तरम्।

जानुभ्यां दीपकं कृत्वा केशवाय प्रपद्यते । तेषान्तु का गतिर्देव कथ्यते चैव शाश्वती ॥
अवाङ्मुखस्तु भूत्वा वै यः प्रपद्येज्जनार्दनम् ।
भगवन् का गतिस्तस्य अवाक्शिरसि शायिनः ॥ ५५ ॥
पुत्रदारगृहञ्चैव मुक्त्वा योऽनुप्रपद्यते । का गतिस्तस्य सिद्धा तु कथयस्व सुरोत्तम ॥५६॥
भाषितोऽसि मया ह्येवं सर्वलोकसुखावहम् । गमनागमनञ्चैव त्वत्प्रसन्नेन माधव॥५७॥
त्वं ज्ञाता त्वं पिता चैव सर्वधर्मविनिश्चयः ।
अतस्त्वयैव वक्तव्यो योगसाङ्ख्यविनिश्चयः ॥ ५८ ॥
त्वां भजंश्च गते जीवे मधुपर्कसमन्वितम् । भस्माकुलेषु निक्षिप्य कथञ्चाग्नौ प्रपद्यते ॥
कां गतिं प्रतिपद्यन्ते त्वद्भक्तो जलमास्थितः ।
त्वत्क्षेत्रसंस्थितो वापि तन्ममाचक्ष्व पृच्छतः ॥ ६० ॥
स्मरणं पुत्र रे कृष्ण यैस्तु नाम प्रकीर्त्यते ।
नमो[1] नारायणेत्युक्त्वा तेषां वै का गतिर्भवेत् ॥ ६ ॥
उद्यतेष्वपि शस्त्रेषु हन्यमाना रणे नराः । नामप्रकीर्त्तनात्तेषां कीदृशा तु गतिर्भवेत् ॥
अहं शिष्या च दासी च तव भक्त्या व्यवस्थिता ।
रहस्यं धर्मसंयुक्तं तन्ममाचक्ष्व माधव ॥ ६२ ॥
एवं तत्परमं गुह्यं मम प्रीत्या जगद्गुरो । सञ्चिन्त्य लोकधर्मार्थं तद्भवान्वक्तुमर्हति॥
इति वाराहपुराणे पृथिव्याः प्रश्नो नाम चतुर्दशाधिकशततमोऽध्यायः ।

---

## पञ्चदशाधिकशततमोऽध्यायः

ततो महीवचः श्रुत्वा देवो नारायणोऽब्रवीत् ।
कथयिष्यामि ते देवि कर्म स्वर्गसुखावहम् ॥ १ ॥
यत्त्वया पृच्छ्यते देवि तच्छृणुष्व वसुन्धरे ।
स्थितिं सत्तान्तु मर्त्यानां भक्त्या ये च व्यवस्थिताः ॥ २ ॥
नाहं दानसहस्रेण नाहं यज्ञशतैरपि ।
तुष्यामि न तु वित्तेन ये नराः स्वल्पचेतसः ॥ ३ ॥
एकचित्तं समाधाय यो मां जानाति माधवि ।
नित्यं तुष्यामि तस्याहं पुरुषं बहुदोषकम् ॥ ४ ॥
यच्च पृच्छसि मां भद्रे कर्म स्वर्गसुखावहम् । तच्छृणुष्व वरारोहे गदतो मे शुचिस्मिते॥
ये नमस्यन्ति मां नित्यं पुरुषा बहुचेतसः । अर्द्धरात्रेऽन्धकारे च मध्याह्ने वापराह्णयोः ॥
यस्य चित्तं पश्येत भक्तिव्यवस्थितम् ।
द्वादश्यामुपवासन्तु यः कुर्यान्मम तत्परः ॥

---

१. सकृत् इति पाठान्तरम् ।

ते मामेव प्रपश्यन्ति मयि भक्तिपरायणाः[1] ॥ ७ ॥
कृत्वा चैवोपवासन्तु गृह्य चैव जलाञ्जलिम् ।
नमो नारायणेत्युक्त्वा आदित्यञ्चावलोकयेत् ॥ ८ ॥
यावन्तो बिन्दवः किञ्चित्पतन्त्येवाञ्जलेर्जलात् ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ९ ॥
अथ चैव तु द्वादश्यां पुरुषा धर्मवादकाः ।
विधिना च प्रयत्नेन ये मां कुर्वन्ति मानवाः[2] ॥ १० ॥

पाण्डुरैश्चैव पुष्पैश्च सूक्ष्मैर्धूपैस्तु धूपयेत् । यो मे धारयते भूमौ तस्यापि शृणु या गतिः।
दत्त्वा शिरसि पुष्पाणि इमं मन्त्रमुदीरयेत् । हृदि कृत्वा तु मन्त्रांश्च शुक्लाम्बरधरो धरे॥

सुमान्यः सुमना गृह्य प्रीयतां भगवान् हरिः ॥ २ ॥

नमोऽस्तु विष्णवे व्यक्ताव्यक्तिगन्धिगन्धान् सुगन्धान् वा गृह्य गृह्य नमो भगवते विष्णवे । अनेन मन्त्रेण गन्धं दद्यात् । श्रुत्वा प्रत्यागतमाधारसवनं पतये भवं प्रविष्टं मे धूप धूपनं गृह्णातु मे भगवानच्युतः । अनेन मन्त्रेण धूपं दद्यात् ।

श्रुत्वा चैवञ्च शास्त्राणि यो मामेव तु कारयेत् । मम लोकञ्च गच्छेत जायेतैव चतुर्भुजः
एतत्ते कथितं देवि श्रेष्ठञ्चैव मम प्रियम् । तव चैवं प्रियार्थाय मन्त्रपूजां सुखावहाम् ॥
श्यामाकं स्वस्तिकञ्चैव गोधूमं मुद्गकन्तथा । शालयस्तु यवाश्चैव तथा नीवारकाङ्कुकाः ।
एतानि यस्तु भुञ्जीत मम कर्मपरायणः । शङ्खं चक्रं लाङ्गलञ्च मुसलं स च पश्यति ॥
ब्राह्मणस्य प्रवक्ष्यामि[3] शृणु कर्म वसुन्धरे । यानि कर्माणि कुर्वीत मम भक्तिपरायणः ॥
षट्कर्मनिरतो भूत्वा अहङ्कारविवर्जितः । लाभालाभं परित्यज्य भिक्षाहारी जितेन्द्रियः ॥
मम कर्मसमायुक्तः पैशुन्येन विवर्जितः । शास्त्रानुसारिमध्यस्थो न वृद्धशिशुचेतनः ॥
एतद्वै ब्रह्मणः कर्म एकाचित्तो जितेन्द्रियः । इष्टापूर्त्तञ्च कुरुते स मामेति वसुन्धरे ॥

क्षत्रियाणां प्रवक्ष्यामि मम कर्मसु तिष्ठताम् ।
यानि कर्माणि कुर्वीत क्षत्रियो मध्यसंस्थितः ॥ २ ॥

दानशूरश्च कर्मज्ञो यज्ञेषु कुशलः शुचिः । मम कर्मसु मेधावी अहङ्कारविवर्जितः॥

---

१. लब्धचेता गुणज्ञश्च नरो भक्तिव्यवस्थितः ( परायणः ) ।
इच्छयाऽपि भवेद्भद्रे स्वर्गे वसति सुन्दरि ॥
स्वल्पकेन न गम्यन्ते दुःप्राप्योऽहं वरानने ॥
यानि कर्माणि कुर्वन्तु मां प्रपश्यन्ति माधवि ।
तानि ते कथयिष्यामि येन भक्त्या व्यवस्थिताः ॥
द्वादश्यामुपवासन्तु ये च कुर्वन्ति ते नराः ।
तेषामेव प्रपश्यन्ति मम भक्तिपरायणाः ॥ इत्यधिकः पाठोऽस्ति एकस्मिन् पुस्तके ।

२. मानुषा इति पाठान्तरम् ।    ३. तु वक्ष्यामि इति वा पाठः ।

अल्पभाषी गुणज्ञश्च नित्यं भागवतप्रियः । गुरुविद्योऽनसूयश्च निन्द्यकर्मविवर्जितः ॥
अभ्युत्थानादिकुशलः पैशुन्येन विवर्जितः ॥ २३ ॥
[1]एभिर्गुणैः समायुक्तो यो मां व्रजति क्षत्रियः ।
भजते मम यो नित्यं मम लोकाय गच्छति ॥ २४ ॥
वैश्यानान्तु प्रवक्ष्यामि मम कर्मसु तिष्ठताम् ।
यानि कर्माणि कुरुते मम भक्तिपथे स्थितः ॥ २५ ॥
एतैर्गुणैः स्वधर्मेण लाभालाभविवर्जितः ।
ऋतुकालाभिगामी च शान्तात्मा मोहवर्जितः ॥ २६ ॥
शुचिर्दक्षो निराहारो मम कर्मरतः सदा । गुरुसम्पूजको नित्यं युक्तो भक्तानुवत्सलः ॥
वैश्योऽप्येवं सुसंयुक्तो यस्तु कर्माणि कारयेत् ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ २८ ॥
अथ शूद्रस्य वक्ष्यामि कर्माणि शृणु माधवि ।
कर्माणि यानि कृत्वा ह शूद्रो मह्यं व्यवस्थितः ॥ २९ ॥
दम्पती मम भक्तौ यौ मम कर्मपरायणौ । उभौ भागवतौ भक्तौ [2]मद्भक्तौ कर्मनिष्ठितौ॥
देशकालौ च जानाति रजसा तमसोज्झितः । निरहङ्कारशुद्धात्मा आतिथेयी विनीतवा ॥
श्रद्धानोऽतिपूतात्मा लोभमोहविवर्जितः ।
नमस्कारप्रियो नित्यं मम चिन्ताव्यवस्थितः ॥ ३२ ॥
शूद्रः कर्माणि मे देवि य एवं समाचरेत् ।
त्यक्त्वा ऋषिसहस्राणि शूद्रमेव भजाम्यहम् ॥ ३३ ॥
चातुर्वर्ण्यस्य कर्माणि यत्त्वया परिपृच्छितम् । एवं कर्मगुणाश्चैव येन भक्त्या व्यवस्थितः ।
सर्ववर्णानि मां देवि अपरं क्षत्रिये शृणु । येन तत्प्राप्यते योगं तच्छृणुष्व वसुन्धरे ॥
त्यक्त्वा लाभमलाभञ्च मोहं कामञ्च वर्जयेत् ।
न शीते च न चोष्णे च लब्धाऽलब्धं विचिन्तयेत् ॥ ३६ ॥
न तिक्तेनातिकटुना मधुराम्लैर्न लावणैः ।
न कषायैः स्पृहा यस्य प्राप्नुयात्सिद्धिमुत्तमाम् ॥ ३७ ॥
भार्या पुत्राः पिता माता उपभोगार्थसंयुतम् ।
य एतान्हि परित्यज्य मम कर्मरतः सदा ॥ ३८ ॥
धृतिज्ञः कुशलश्चैव श्रद्धानो धृतव्रतः । तत्परो नित्यमुद्युक्तः अन्यकार्यजुगुप्सक ॥
बाले वयसि कल्पश्च अल्पभोगो कुलान्वितः ।
कारुण्यः सर्वसत्त्वानां प्रत्युत्थायी महाक्षमः ॥ ४० ॥
काले मौनक्रियां कुर्याद्यावत्तत्कर्म कारयेत् ।
त्रिकालञ्च दिशो भागं सदा कर्मपथि स्थितः ॥ ४ ॥

१. एतैरिति इति पाठान्तरम् । २. मत्पराविति (ग) ।

उपपन्नानुभुञ्जानः कर्माण्यभोजनानि च । अनुष्ठानपरश्चैव मम पार्श्वे मनश्वरः ॥
काले मूत्रपुरीषाणि विसृज्य स्नानवत्सलः । पुष्पे गन्धे च धूपे च मत्कर्मणि सदारतः
कदाचित्कन्दमूलानि फलानि च कदाचन । पयसा यावकेनापि कदाचिद्वायुभक्षणः ॥
कदाचित्षष्ठकालेन क्वचिद्दृष्टमहाफलः । कदाचित्तु चतुर्थेन कदाचित्फलमेव च ।
कदाचिद्दशमे भुञ्जेत्पक्षे मासे वसुन्धरे ॥ ४५ ॥
य एतत्सप्त जन्मानि मम कर्माणि कुर्वते ।
योगिनस्तान् प्रपश्यन्ति पूर्वोक्तान् कर्मसु स्थितान् ॥ ४६ ॥

इति वाराहपुराणे विविधकर्मोत्पत्तौ पञ्चदशाधिकशततमोऽध्यायः ।

---

## षोडशाधिकशततमोऽध्यायः

वराह उवाच

मया प्रोक्तविधानेन यस्तु कर्माणि कारयेत् ।
तच्छृणुष्व महाभागे येन साफल्यमाप्नुयात् ॥ १ ॥
एकचित्तः समास्थाय अहङ्कारविवर्जितः ।
मच्चित्तसंहतो नित्यं क्षान्तो दान्तो जितेन्द्रियः ॥ २ ॥
फलमूलानि शाकानि द्वादश्यां वा कदाचन । पयोव्रतश्च तत्काले पुनरेव निरामिषः ॥
पञ्चषष्ठमी अमावास्या उभे पक्षे चतुर्दशी । मैथुनं नाभिसेवेत द्वादश्याञ्च तथा प्रिये ॥
एवं योगविधानेन कर्म कुर्याद्दृढव्रतः । पूतात्मा धर्मसंयुक्तो विष्णुलोकन्तु गच्छति ॥
न ग्लानिर्न जरा तस्य न मोहो रोग एव च ।
भुजाष्टादश जायन्ते धन्वी खड्गी शरी गदी ।
तेषां व्युष्टिं प्रवक्ष्यामि मम कर्मसमुत्थिताम् ॥ ६ ॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च । ममार्च्चनविधिङ्कृत्वा मम लोके महीयते ॥
दुःखमेवं प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे । उचितेनोपचारेण दुःखमोक्षविनाशनम् ॥
अहङ्कारावृतो नित्यं नरो मोहेन चावृतः ।
[1]यो मां नैव प्रपद्येत ततो दुःखतरं नु किम् ॥
सर्वाशी सर्वविक्रेता नमस्कारविवर्जितः ।
यो न मां प्रतिपद्येत ततो दुःखतरं नु किम् ॥ १० ॥
प्राप्तकाले वैश्वदेवे दृष्ट्वा चातिथिमागतम् ।
अदत्त्वा तस्य यो भुङ्क्ते ततो दुःखतरं नु किम् ॥ ११ ॥
सर्वान्नानि तु सिद्धानि पाकभेदं करोति यः ।
तस्य देवा न चाश्नन्ति ततो दुःखतरं नु किम् ॥ १२ ॥

---

१. ये मां नैव प्रपद्यन्त इति पाठान्तरम् ।

असन्तुष्टस्तु पैशुन्ये[1] परदाराभिमर्षकः ।
परोपतापी मन्दात्मा ततो दुःखतरं नु किम् ॥ १३ ॥

अकृत्वा पुष्कलं कर्म गृहे संवसते नरः । मृत्युकालवशं प्राप्तस्ततो दुःखतरं नु किम् ॥
हस्त्यश्वरथयानानि गच्छमानानि पश्यति । धावन्त्यस्याग्रतः पृष्ठे ततो दुःखतरं नु कि॥

अश्नन्ति पिशितं केचित्केचिच्छालिसमन्वितम् ।
शुष्कान्नं केचिदश्नन्ति ततो दुःखतरं नु किम् ॥ १६ ॥

वरवस्त्रावृतां शय्यां समासेवति भूषिताम् । केचित्तृणेषु शेरन्ते ततो दुःखतरं नु किम्[2] ॥
विद्वान् कृती गुणज्ञश्च सर्वशास्त्रविशारदः । केचिन्मूकाश्च दृश्यन्ते ततो दुःखतरं नु किम्
विद्यमाने धने केचित्कृपणा भोगवर्जिताः । दरिद्रो जायते दाता ततो दुःखतरं नु किम्
द्विभार्यः पुरुषो यस्तु तयोरेकाम्प्रशंसति । एका तु दुर्भगा तत्र ततो दुःखतरं नु किम् ॥
ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णाः सुमध्यमे । पापकर्मरता ह्यासन्ततो दुःखतरं नु किम् ॥
एतत्ते कथितं भद्रे दुःखकर्मविनिश्चयम् । सर्वभूताहितं पापं यत्त्वया परिपृच्छितम् ॥
यच्च मां पृच्छसे भद्रे शुभं कीदृशमुच्यते । तच्छृणुष्वानवद्याङ्गि मम कर्मविनिश्चयम् ॥
कृत्वा तु विपुलं कर्म मद्भक्तेषु निवेदयेत् । यस्य बुद्धिर्विजायेत स दुःखायोपजायते[3] ॥

मां पूजयित्वा नैवेद्यं विशिष्टं परिकल्प्य च ।
शेषमन्नं समश्नाति ततः सौख्यतरं नु किम् ॥ २५ ॥
त्रिकालं ये प्रपद्यन्ते मामेव ये[4] वसुन्धरे ।
कृत्वा सायाह्निकं कर्म ततः सौख्यतरं नु किम् ॥ २६ ॥
देवतातिथिमर्त्यानां त्यक्त्वा चान्नं वसुन्धरे ।
यश्चात्मा वै समश्नाति ततः सौख्यतरं नु किम्[5] ॥ २७ ॥

प्रविष्टस्त्वतिथिर्यस्य निराशो यन्न गच्छति । येन केनचिद्दत्तेन ततः सौख्यतरं नु किम्॥

मासि मास्येकदिवसः अमावास्येति योच्यते ।
पितरो यस्य तृप्यन्ति ततः सौख्यतरं नु किम् ॥ २९ ॥

भोजनेषु प्रपन्नेषु यवान्नं यः प्रयच्छति । अभिन्नमुखरागेण ततः सौख्यतरं नु किम् ॥
उभयोरपि भार्यासु यस्य बुद्धिर्न नश्यति । समं पश्यति यो देवि ततः सौख्यतरं नु किम्
अहिंसनन्तु कुर्वीत विशुद्धेनान्तरात्मना । अहिंसापरतः शुद्धः स सुखायोपपद्यते[6] ॥

---

१. वैषम्ये इति वा पाठः ।
२. अतः परं—सुरूपो दृश्यते कश्चित्पुरुषश्चात्मकर्मभिः ।
केचिद्विरूपा दृश्यन्ते ततो दुःखतरं नु किम् ॥
इत्यधिकः पाठः कुत्रचिद् दृश्यते ।
३. उपपद्यते इति पाठान्तरम् ।
४. मयोक्तेन इति वा पाठः ।
५. एष श्लोकः केषुचित् पुस्तकेषु न दृश्यते ।
६. उपजायते इति पाठान्तरम् ।

परभार्यां सुरूपान्तु दृष्ट्वा दृष्टिर्न चाल्यते ।
यस्य चित्तं न गच्छेत ततः सौख्यतरं नु किम् ॥ ३३ ॥
मौक्तिकादीनि रत्नानि तथैव कनकानि च । लोष्टवत्पश्यते यस्तु ततः सौख्यतरं नु किम्
मुदिते वाऽवनागेन्द्रे उभे सैन्ये पथि स्थिते ।
यस्तु प्राणान् प्रमुच्येत ततः सौख्यतरं नु किम् ॥ ३५ ॥
लब्धेन चाप्यलब्धेन कुत्सितं कर्म गर्हयन् । यस्तु जीवति सन्तुष्टः स सुखायोपपद्यते ॥
भर्तुः सुखं व्रतं[1] स्त्रीणामेवमेव वसुन्धरे । या तोषयति भर्त्तारं ततः सौख्यतरं नु किम् ॥
विद्यते विभवेनापि पुरुषो यस्तु पण्डितः । निगृहीतेन्द्रियः पञ्च ततः सौख्यतरं नु किम्॥
सहते चावमानन्तु व्यसने न तु दुर्मनाः । यस्येदं विदितं सर्व ततः सौख्यतरं नु किम्॥
अकामो वा सकामो वा मम क्षेत्रे वसुन्धरे ।
यस्तु प्राणान् प्रमुच्येत ततः सौख्यतरं नु किम् ॥ ४० ॥
मातरं पितरञ्चैव यः सदा पूजयन्नरः । देवतेव सदा पश्येत्ततः सौख्यतरं नु किम् ॥
ऋतुकाले तु यो गच्छेन्मासे मासे च मैथुनम् ।
अनन्यमानसो भूत्वा ततः सौख्यतरं नु किम् ॥ ४२ ॥
प्रयुक्तः सर्वदेवानां यो मामेवं प्रपूजयेत् । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति
एतत्ते कथितं भद्रे शुभनिर्दृदेशनिश्चयः । सर्वलोकहितार्थाय यन्मान्त्वं परिपृच्छसि ॥

इति वाराहपुराणे सुखदुःखं नाम षोडशाधिकशततमोऽध्यायः ।

---

## सप्तदशाधिकशततमोऽध्यायः

वराह उवाच

शृणु भद्रे महाश्चर्यमाहारविधिनिश्चयम् । आहारञ्चाप्यनाहारं तच्छृणुष्व वसुन्धरे ॥
भुञ्जानो याति चाश्नाति मम योगाय माधवि ।
अशुभं कर्म कृत्वापि पुरुषो धर्ममाश्रितः ॥ २ ॥
आहारञ्चैव धर्मज्ञ उपभुञ्जीत नित्यशः । सर्वे चात्रैव कर्मण्या व्रीहयः शालयस्तथा ॥
अकर्मण्यानि वक्ष्यामि येन भोज्यन्ति मां प्रति । तेन वै मुक्तमार्गेण अपराधो महौजसः
प्रथमञ्चापराधान्नं रोचते न मम प्रिये । भुक्त्वा तु परकीयान्नं तत्परस्तन्निवर्त्तनः ।
द्वितीयस्त्वपराधोऽयं धर्मविघ्नाय वै भवेत् ॥ ५ ॥
गत्वा मैथुनसंयोगं यो नु मां स्पृशते नरः । तृतीयमपराधन्तु कल्पयामि वसुन्धरे ॥
दृष्ट्वा रजस्वलां नारीमस्माकं यः प्रपद्यते । चतुर्थमपराधन्तु दृष्टं नैव क्षमाम्यहम् ॥
स्पृष्ट्वा तु मृतकं चैव असंस्कारकृतन्त वै । पञ्चमञ्चापराधञ्च न क्षमामि वसुन्धरे ।
दृष्ट्वा तु मृतकं यस्तु नाचम्य स्पृशते तु माम् । षष्ठं तं चापराधं वै न क्षमामि वसुन्धरे॥

---

१. भर्तुस्तु वै इति पाठान्तरम् ।

समार्जनस्य काले तु पुरीषं यस्तु गच्छति । सप्तमञ्चापराधन्तु कल्पयामि वसुन्धरे ॥
यस्त नीलेन वस्त्रेण प्रावृतो मां प्रपद्यते । अष्टमञ्चापराधञ्च कल्पयामि वसुन्धरे ॥
ममैवार्च्चनकाले तु यस्त्वसमं प्रभाषते । नवमञ्चापराधन्तं न रोचामि वसुन्धरे ॥११॥
अविधानं तु यः स्पृश्य मामेव प्रतिपद्यते । दशमश्चापराधोऽयं मम चाप्रियकारकः ॥
क्रुद्धस्तु यानि कर्माणि कुरुते कर्मकारकः । एकादशापराधन्तु कल्पयामि वसुन्धरे ॥
अकर्मण्यानि पुण्यानि यस्तु मामुपकल्पयेत् । द्वादशञ्चापराधं तु कल्पयामि वसुन्धरे॥
यस्तु रक्तेन वस्त्रेण कौसुम्भेनोपगच्छति । त्रयोदशञ्चापराधं तु कल्पयामि वसुन्धरे ॥
अन्धकारे च मान्देवि यः स्पृशेत कदाचन । चतुर्दशापराधन्तु कल्पयामि वसुन्धरे ॥
यस्तु कृष्णेन वस्त्रेण मम कर्माणि कारयेत् । पञ्चदशापराधन्तं कल्पयामि वसुन्धरे ॥
अधौतेन तु वस्त्रेण यस्तु मामुपकल्पयेत् । षोडशन्त्वपराधानां कल्पयामि वरानने ॥
स्वयमन्नन्तु यो ह्यद्यादज्ञानादपि माधवि । सप्तदशापराधन्तु कल्पयामि वसुन्धरे॥२०॥
यस्तु मात्स्यानि मांसानि भक्षयित्वा प्रपद्यते । अष्टादशापराधञ्च कल्पयामि वसुन्धरे॥
जालपादं भक्षयित्वा यस्तु मामुपसर्पति । एकोनविंशापराधं कल्पयामि वसुन्धरे ॥२२॥
यस्तु मे दीपकं स्पृष्ट्वा मामेव प्रतिपद्यते[१] । विंशकञ्चापराधन्तं कल्पयामि वरानने ॥२३॥
श्मशानं यस्तु वै गत्वा मामेव प्रतिपद्यते । एकविंशापराधन्तं कल्पयामि वसुन्धरे ॥

पिण्याकं भक्षयित्वा तु यो मामेवाभिगच्छति ।
द्वाविंशञ्चापराधन्तं कल्पयामि प्रिये सदा ॥ २५ ॥

यस्तु वाराहमांसानि प्रापणेनोपपादयेत् । अपराधं त्रयोविंशं कल्पयामि वसुन्धरे ॥२६॥
सुरां पीत्वा त यो मर्त्यः कदाचिदुपसर्पति । अपराधं चतुर्विंशं कल्पयामि वसुन्धरे ॥
यः कुसुम्भञ्च मे शाकं भक्षयित्वोपचक्रमे । अपराधं पञ्चविंशं कल्पयामि वसुन्धरे[२] ॥
परप्रावरणेनैव यस्तु मामुपसर्पति । अपराधेषु षड्विंशं कल्पयामि वसुन्धरे ॥ २९ ॥
नवान्नं यस्तु भक्षेत न देवान्न पितॄन्यजेत् । सप्तविंशञ्चापराध कल्पयामि गुणान्विते ॥
उपानहौ च प्रपदे तथा वापीञ्च गच्छति । अपराधमष्टविंशं कल्पयामि गुणान्विते ॥
शरीरं मर्दयित्वा तु यो मामाप्नोति माधवि । एकोनत्रिंशापराधो न स स्वर्गेषु गच्छति॥
अजीर्णेन समाविष्टो यस्तु मामुपगच्छति । त्रिंशकञ्चापराधन्तं कल्पयामि वसुन्धरे ॥
गन्धपुष्पाण्यदत्त्वा तु यस्तु धूपं प्रयच्छति । एकत्रिंशञ्चापराधं कल्पयामि मनस्विनि ॥
विना भेर्यादिशब्देन द्वारस्योद्घाटनं मम । महापराधं जानीयाद्द्वात्रिंशन्तं मम प्रिये ॥
अन्यच्च शृणु वक्ष्यामि दृढव्रतमनुत्तमम् । कृत्वा चावश्यकं कर्म मम लोकञ्च गच्छति ॥
नित्ययुक्तश्च शास्त्रज्ञो मम कर्मपरायणः । अहिंसापरमश्चैव सर्वभूतदयापरः ॥ ३७ ॥
सामान्यश्च शुचिर्दक्षो मम नित्यं पथे स्थितः । निगृह्य चेन्द्रियग्राममपराधविवर्जितः॥

---

१. नवमे दीपकं दृष्ट्वा यो मां स्पृशति माधवीति इति पाठान्तरम् ।
२. मनोरमे इति वा पाठः ।

उदारो धार्मिकश्चैव स्वदारेषु सुनिष्ठितः । शास्त्रज्ञः कुशलश्चैव मम कर्मपरायणः ।
चातुर्वर्ण्यस्य मे भद्रे सन्मार्गेषु व्यवस्थितः ॥ ३९ ॥

आचार्यभक्ता देवेषु भक्ता भर्त्तरि वत्सला । संसारेष्वपि वर्त्तन्ती गच्छन्ती अग्रतो यदि ।
मम लोकस्थिता सा वै भर्त्तारं सम्प्रतीक्षते ॥ ४० ॥
पुरुषो यदि मद्भक्तः स्त्रियन्त्यक्त्वा च गच्छति ।
स ततोऽत्र प्रतीक्षेत भार्यां भर्त्तरि वत्सलाम् ॥ ४१ ॥
अन्यच्च ते प्रवक्ष्यामि कर्मणां कर्म चोत्तमम् ।
ऋषयो मां न पश्यन्ति मम कर्मपथे स्थिताः ॥ ४२ ॥
अन्यदेवेषु ये भक्ता मूढा वै पापचेतसः ।
मम मायाविमूढास्तु न प्रपद्यन्ति माधवि ॥ ४३ ॥
मान्तु ये वै प्रपद्यन्ते मोक्षकामा वसुन्धरे ।
तानहं भावसंसिद्धान् बुद्ध्वा संविभजामि वै ॥ ४४ ॥
येन त्वं परया शक्त्या धारिताऽसि मया धरे ।
तेनेदं कथितं देवि आख्यानं धर्मसंयुतम् ॥ ४५ ॥
पिशुनाय न दातव्यं न च मूर्खाय माधवि ।
नादीक्षिताय दातव्यं नोपसर्प्याय यत्नतः ॥ ४६ ॥
शठाय च न दातव्यं नास्तिकाय न माधवि ।
वर्जयित्वा भागवतं मम कर्मपरायणम् ॥ ४७ ॥
एतत्ते कथितं देवि मम धर्मं महौजसम् ।
सर्वलोकहितार्थाय किमन्यत् परिपृच्छसि ॥ ४८ ॥

इति वाराहपुराणे द्वात्रिंशदपराधकल्पनं नाम सप्तदशाधिकशततमोऽध्यायः ।

---

# अष्टादशाधिकशततमोऽध्यायः

वराह उवाच

शृणु तत्त्वेन मे भद्रे प्रायश्चित्तं यथाविधि ।
यथावत् स च दातव्यो मम भक्तेन विद्यया ॥ १ ॥
वक्ष्यमाणेन मन्त्रेण उद्धृत्य दन्तकाष्ठकम ।
दीपं न ज्वालयेत् तावद् यावन्न स्पृश्यते धरा ॥ २ ॥
दीपे प्रज्वालिते तत्र हस्तशौचं तु कारयेत् ।
ततः प्रक्षाल्य हस्तौ तु पुनरेवमुपागतः ॥ ३ ॥
वन्दयित्वाऽस्य चरणौ दन्तधावनमानयेत् ।
अनेनैव तु मन्त्रेण दद्याद् वै दन्तकाष्ठकम् ॥ ४ ॥

मन्त्रश्च । भुवनभवन रविसंहरण अनन्तो मध्यश्चेति गृह्णेमं भुवनं दन्तधावनम् ।

यत्त्वया भाषितं सर्वमेवं धर्मविनिश्चयम् ।
दन्तधावनं दन्ते दद्याद् यावत् कर्म वसुन्धरे ॥ ५ ॥
निर्माल्यं शिरसोत्तार्य धृत्वा शिरसि चात्मनः ।
पश्चात्तु जलपूतेन ततो हस्तेन सुन्दरि ॥ ६ ॥
कुर्यात्तु मुखकर्माणि स्वल्पेन सलिलेन च ।
मुखप्रक्षालने चेमं शृणु मन्त्रञ्च सुन्दरि । यष्ट्वेमं कृतमन्त्रेण संसारात् तु प्रमुच्यते ॥

मन्त्रश्च । तद् भगवन् त्वां गुणश्च आत्मानश्चापि गृह्ण वारिणः सर्वदेवतानां मुखमेवं प्रक्षालयेत् । एतेन मन्त्रेण सगन्धधूपदीपनैवेद्यं पुनरेवं समर्पयेत् ।

ततः पुष्पाञ्जलिं दत्त्वा भगवन् भक्तवत्सल ।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदाहरेत्[1] ॥ ८ ॥
मन्त्रज्ञानां यज्ञयष्टारं व्रतस्रष्टारमेव च ।
अन्यपुष्पाणि संगृह्य कल्यमुत्थाय माधवि ॥ ९ ॥
पूजयेद् देवदेवेशं ज्ञानी भागवतः शुचिः ।
निपतेद् दण्डवद्भूमौ[2] सर्वकर्मसमन्वितः ॥ १० ॥
कायं निपतितं कृत्वा प्रसीदेति जनार्दनम् ।
शिरसा चाञ्जलिं कृत्वा इमं मन्त्रमुदाहरेत् ॥ ११ ॥
मन्त्रैर्लब्ध्वा संज्ञां त्वयि नाथ प्रसन्ने त्वदिच्छातो ह्यपि योगिनाञ्चैव मुक्तिः ।
यतस्त्वदीयः कर्मकरोऽहमस्मि त्वयोक्तं यत्तेन देवः प्रसीदतु[3] ॥ १२ ॥
एवं मन्त्रविधिं कृत्वा मम भक्तिव्यवस्थितः ।
पृष्ठतोऽनुपदं कृत्वा शीघ्रं यावन्न हीयते ॥ १३ ॥
एवं सर्वं समादाय मम कर्म दृढव्रतः ।
शीघ्रं मेऽभ्यञ्जनं दद्यात् तैलेनाथ घृतेन वा ॥ १४ ॥
ततस्तं स्नेहमुद्दिश्य[4] मन्त्रज्ञः कर्मकारकः ।
एवं चित्तं समाधाय इमं मन्त्रमुदीरयेत् ॥ १५ ॥

मन्त्रः—

स्नेहं स्नेहेन संगृह्य लोकनाथ मया हृतम् ।

---

१. उदीरयेदिति क्वचित् पाठः । २. देवीतले निपतेत्तु इति कुत्रचित् पाठः ।
३. लब्ध्वा संज्ञामपि नाथ प्रसन्नेच्छातः ।
संसारान्मुक्तयेऽहं कर्मकरो यत् त्वया पूर्वमुक्तं प्रसीदतु । इति क्वाचित्कः पाठः स तु न मनोरमः । ४. ततः स्नेहं समुद्दिश्येति पाठान्तरम् ।

सर्वंलोकेषु सिद्धात्मा ददाम्यात्मकरेण च ।
मया प्रोक्तः क्षमस्वेति तुभ्यञ्चैव नमो नमः ॥ २६ ॥
एवं मन्त्रैः समाख्यातः शिरसि प्रथमं ददौ[1] ।
दक्षिणाङ्गं ततोऽभ्यज्याद् वाममङ्गं ततोऽनु च[2] ॥ २७ ॥
पश्चात् पृष्ठं समारुह्य ततः पश्चात् कटिं तथा[3] ।
पश्चाल्लिम्पेत् ततो भूमिं गोमयेन दृढव्रतः ॥ २८ ॥
तस्य दृष्ट्वा श्रृत भद्रे गोमयेन सुनिश्चतम्[4] ।
यानि पुण्यान्यवाप्नोति मम मार्गानुसारिणः[5] ॥ १९ ॥
यावन्ति जलबिन्दूनि लिप्यमानस्य सुन्दरि ।
तावद् वर्षसहस्राणि स्वर्गलोके महीयते ॥ २० ॥
ततः पुण्यकृताँल्लोकान् पुरुषो योऽनुलिप्यते[7] ।
एकैककणसंख्यातः स्वर्गलोके महीयते[8] ॥ २१ ॥
एवं योऽभ्यञ्जयेद् गात्रं तैलेन तु घृतेन वा ।
तावद् वर्षसहस्राणि मम लोके प्रतिष्ठति[9] ॥ २२ ॥
अथ चोद्वर्तनं भद्रे प्रवक्ष्यामि प्रियं मम ।
येन शुद्ध्यन्ति चाङ्गानि विशुद्धिर्मम जायते[10] ॥ २३ ॥
भोगिना यदि वा रोध्रं यदि पिप्पलिका मधु ।
मधूकमश्वपर्णं वा रोहिणञ्चैव कर्कटम् ।
एतेषां प्राप्य लभते शास्त्रज्ञः कर्मकारकः ॥ २४ ॥
करेण यस्य चूर्णेन पिष्टचूर्णेन वा पुनः ।
एतदुद्वर्तनं[11] कुर्यान्मम गात्रसुखावहम् ॥ २५ ॥

---

१. मन्त्रः समाख्यातस्तेनाज्यात् प्रथमः शिरः । इति पाठान्तरम् ।
२. पश्चाद् दक्षिणमङ्गेषु ततो वामन्तु लेपयेत् । इति क्वाचित्कः पाठः ।
३. समभ्यज्य ततोऽभ्यज्यात् इति वा पाठः ।
४. लिम्प यश्च सुनिश्चितः इति क्वाचित्कः पाठः ।
५. तानि मे गदतः शृणु इति पाठान्तरम् ।
६. आज्यमानपि तथा यावन्तस्तैलबिन्दवः । इति केषुचित् पुस्तकेषु पाठः ।
७. पुरुषैयैरनुलिप्यते इति पाठान्तरम् ।
८. एकेनैवानुलेपेन गोषु योन्या प्रमुच्यते इति पाठान्तरम् ।
९. एवं योऽभ्यञ्जनं दत्वा विशिष्टेनैव कर्मणा ।
यावन्तो बिन्दवः केचित् स्नेहं घृततिलानि वा ॥ इति पुस्तकविशेषे पाठः
१०. मम प्रीतिश्च जायते इति केषुचित् पुस्तकेषु पाठः ।
११. एतेनोद्वर्तनं कुर्याद् इति क्वाचित्कः पाठः ।

यदीच्छेत् परमां सिद्धिं मम कर्मानुसारकः ।
एवमुद्वर्तनं कृत्वा स्नानकर्म तु कारयेत् ॥ २६ ॥

तत आमलकञ्चैव बसुगन्धार्णमुत्तमम् । तेन मे सर्वगात्राणि मर्दयित्वा दृढव्रतः ।

जलकुम्भं ततो गृह्य इमं मन्त्रमुदाहरेत् ॥ २७ ॥
देवानां देवदेवोऽसि देवः परमनादिभूः ।
इदं तवाव्यक्तरूपं तेन स्नानं गृहाण माम् ॥ २८ ॥
एवं तु स्नापनं कुर्यात् मम मार्गानुसारकः ।
अथ सौवर्णकुम्भेन रजतस्य घटेन वा ॥ २९ ॥
एतेषामप्यलाभेन कर्मज्ञः कर्म कारयेत् ।
ताम्रकुम्भमयेनैव कुर्यात् स्नापनमुत्तमम् ॥ ३० ॥
एवं तु स्नापनं कृत्वा विधिदृष्टेन कर्मणा ।
पश्चाद् गन्धः प्रदातव्यः प्रकृष्टो मन्त्रसंयुतः ॥ ३१ ॥
सर्वगन्धाः सौमनस्याः सर्ववर्णाश्च ते मताः ।
उत्पन्नाः सर्वलोकेषु त्वया सत्येषु योजिताः ॥ ३२ ॥
मया च ते तवाङ्गेषु तानावह शुचीन् प्रभो ।
मम भक्त्या सुसन्तुष्टः प्रतिगृह्णीष्व माधव ॥ ३३ ॥
एवं गन्धांस्ततो दत्त्वा उत्कृष्टं कर्म कारयेत् ।
कर्मण्यान्यपि माल्यानि ततो मह्य प्रदापयेत्[1] ॥ ३४ ॥
तदेव चार्चनं कृत्वा कर्मण्यः कर्मसंमितः ।
ततः पुष्पाञ्जलिं दत्त्वा इमं मन्त्रमुदीरयेत् ॥ ३५ ॥
जलस्थं जलजञ्चैव पुष्पं कालोद्भवं शुचि ।
मम संसारमोक्षाय गृह्ण गृह्ण ममाच्युत ॥ ३६ ॥
एवंविधोपचारेण अर्चयित्वा मम प्रियम् ।
पश्चाद् धूपाश्च मे दद्यात् गन्धद्रव्यसमन्वितान्[2] ॥ ३७ ॥
धूपं गृह्य विधानेन ममोक्तं मुखवल्लभम् ।
उभयेषु कुलेष्वात्मा धूपमन्त्रमुदीरयेत् ॥ ३८ ॥
वनस्पतिरसं दिव्यं बहुद्रव्यसमन्वितम् ।
मम संसारमोक्षाय धूपोऽयं प्रतिगृह्यताम् ॥ ३९ ॥

मन्त्रः—

शान्तिर्वै सर्वदेवानां शान्तिर्मम परायणम् ।

---

१. कर्मण्येष्वपि माल्येषु शीघ्रमेव प्रदापयेदिति पाठान्तरम् ।
२. धूपञ्च मे दद्यात् सुगन्धद्रव्यसम्मितम् इति क्वचित् पाठः ।

सांख्यानां शान्तियोगेन धूपं गृह्ण नमोऽस्तु ते ।
त्राता नान्योऽस्ति मे कश्चित् त्वां विहाय जगद्गुरो ॥ ४० ॥
एवमभ्यर्चनं कृत्वा माल्यगन्धानुलेपनैः ।
पश्चाद् वस्त्रं ततो[1] दद्यात् क्षौमशुक्लं सपीतकम् ॥ ४१ ॥
एवं वस्त्र[2] समादाय कृत्वा शिरसि चाञ्जलिम् ।
दिव्ययोगं समादाय इमं मन्त्रमुदीरयेत् ॥ ४२ ॥
प्रीयतां भगवान् पुरुषोत्तमः श्रीनिवासः श्रीमानानन्दरूपः ।
गोप्ता कर्ताधिकर्ता नान्यनाथ भूतनाथ आदिरव्यक्तरूपः ।
क्षौमं वस्त्रं पीतरूपं मनोज्ञं देवाङ्गे स्वे गात्रप्रच्छादनाय[3] ॥ ४३ ॥
वस्त्रैर्विभूषणं कृत्वा मम गात्रानुसारिणम् ।
पश्चात् पुष्पं गृहीत्वा तु आसनं चोपकल्पयेत् ।
गृहीत्वा प्रणवाद्येन[4] धर्मपुण्येन संवृतः ॥ ४४ ॥
इदं परायणं परस्परप्रीतिकरं प्राणरक्षणं प्राणिनां
स्विष्टं तदनुकल्पं सत्यमुपयुक्तमात्मने तदेव गृहाण ।

एवन्तु प्रापणं कृत्वा मम मार्गानुसारकः । मुखप्रक्षालनं दत्त्वा शीघ्रमेव प्रकल्पितम् ॥
शुचिः स्तुवति देवानामेतदेव परायणम् । शौचार्थं तु जलं गृह्य कृत्वा प्रापणमुत्तमम् ॥
एवं तु भोजनं दत्त्वा व्यपनीय तु प्रापणम् । ताम्बूलं तु ततो गृह्य इमं मन्त्रमुदीरयेत् ॥

मन्त्रः—अलङ्कारं सर्वतो देवानां द्रव्योनुक्तः सर्वसौगन्धिकादिभिः गृह्य ताम्बूल लोकनाथ विशिष्टमस्माकञ्च भवनं तव प्रतिमा च ह ।

अलङ्कारं मुखे श्रेष्ठं तव प्रीत्या मया कृतम् ।
मुखप्रसादनं श्रेष्ठं देव गृह्ण मनोहरम्[5] ॥ ४८ ॥

एतेनैवोपचारेण मद्भक्तः कर्म कारयेत् । अनुमुक्तो महालोकान् पश्यतो मम नित्यशः ॥

इति वराहपुराणे भगवच्छास्त्रे देवोपचारविधिर्नाम अष्टादशाधिकशततमोऽध्यायः ।

---

# एकोनविंशत्यधिकशततमोऽध्यायः

धरण्युवाच

एवं कर्मविधिं श्रुत्वा सर्वसंसारमोक्षणम् । प्रसन्नवदनन्देवं पुनर्वाक्यमुवाच ह ॥ १ ॥
एवं महौजसं कर्म तव मार्गानुसारतः । त्वन्नस्तु प्रापणविधिस्तव प्रीत्या मया श्रुतः ।

---

१. वस्त्रञ्च वै इति क्वाचित्कः पाठः । २. एवं वस्त्रम् इति पाठान्तरम् ।
३. देव त्वं गृह्ण गात्रप्रदानाय चेति क्वचित् पुस्तके पाठः ।
४. प्रणवाद्येनेति वा पाठः । ५. मया कृतम् इति पाठान्तरम् ।

केन द्रव्येण संयुक्तं तन्ममाचक्ष्व माधव ॥ २ ॥
वसुधाया वचः श्रुत्वा वराहः परमात्मवान्[1] ।
उवाच धर्मसंयुक्तं धर्मज्ञो वाक्यकोविदः ॥ ३ ॥

वराह उवाच

येन मन्त्रेण संयुक्तो मम प्रापणं नयेत् । सप्त व्रीहीन् ततो गृह्य पयसा सह संयुतम् ॥
परमन्तस्य शाकानि मधूकोदुम्बरं तथा । एते चान्ये च बहवः शतशोऽथ सहस्रशः ।
कर्मज्ञश्च य एतेषां ते[1] मया परिकीर्तिताः ॥ ५ ॥
व्रीहीणाञ्च प्रवक्ष्यामि उपयोग्यानि माधवि ।
एकाग्रं मानसं कृत्वा[2] प्रापणं शृणु सुन्दरि ॥ ६ ॥
धर्मचिल्लिकशाकञ्च सुगन्धं रक्तसालिकौ ।
दीर्घशालिमहाशाली वरकुङ्कुममाक्षिकौ ॥ ७ ॥
आमोदाशिवसुन्दर्यौ शिरीकाकुलकालिकाः[3] । विविधं यावकान्नञ्च ज्ञेयान्येतानि कर्मणि॥
कर्मण्या मुद्गमाषा वै तिलकङ्कुकुलिक्ष्यकाः । गवेधुकं महोमोहं मकुष्ठमथवाहिजाम् ।
श्यामाकमिति चोक्तानि कर्मण्यानि वसुन्धरे[5] ॥ ९ ॥
कर्मण्यानि च शाकानि विजानीहि वसुन्धरे ।
प्रतिगृह्णाम्यहमेतां[6] यच्च भागवतं प्रियम् ॥ १० ॥
मार्गमासं वरं छागं शासं समनुयुज्यते ।
एतान् हि प्रापणे दद्यात् मम चैतत् प्रियावहम् ॥ ११ ॥
युञ्जानो वितते यज्ञे ब्राह्मणे वेदपारगे ।
भागो ममास्ति तत्रापि पशूनां छागलस्य च ॥ १२ ॥
माहिषं वर्जयेन्मह्यं क्षीरं दधि घृतं ततः । वर्जयेत् तत्र मांसानि यजुषा वैष्णवोऽश्नुते॥
परं पायसमपि वर्ज्यानि तन्मांसं चैतकः खुरे ॥ १३ ॥
पक्षिणां च प्रवक्ष्यामि ये प्रयोज्या वसुन्धरे ।
ये चैव मम क्षेत्रेषु उपयुज्यन्ति नित्यशः ॥ १४ ॥
लावकं वर्तिकञ्चैव प्रशस्तञ्च कपिञ्जलम् । एते चान्ये च बहवः शतशोऽथ सहस्रशः ।
मम कर्मणि योग्या ये ते मया परिकीर्तिताः ॥ १५ ॥
यस्त्वेतत्तु विजानीयात् कर्मकर्ता कदाचन[7] ।
नापराध्नोति स नरो मम चोक्तं[8] वचः प्रिये ॥ १६ ॥

---

१. प्रीतमानसः इति पाठान्तरम् । २. कर्मण्यश्च य एतेषां ते इति पाठान्तरम् ।
३. एकचित्तं समादायेति क्वचित् पाठः । ४. शालिकाः इति क्वचित् पठ्यते ।
५. केषुचित् पुस्तकेषु 'कर्मण्या' इत्यारभ्य 'वसुन्धरे' इत्यन्तोंऽशो नास्ति ।
६. एतानि प्रतिगृह्णामि इति पाठभेदः । ७. तथैव च इति क्वचित् पाठः ।
८. ततश्च नापराधोक्तं ममैवोक्तमिति पाठान्तरम् ।

ते च भोग्याश्च[1] मङ्गल्या मम भक्तसुखावहाः ।
ततो यष्टव्यमेवं हि य इच्छेत् सिद्धिमुत्तमाम् ॥ १७ ॥
य एतेन विधानेन यजिष्यन्ति वसुन्धरे । प्राप्नोति परमां सिद्धिं ममैव कृतकर्मणः[2]॥

इति वाराहपुराणे भगवच्छास्त्रे प्रापणद्रव्यकर्मण्यभोज्यनियम-
विधिर्नाम एकोनविंशत्यधिकशततमोऽध्यायः ।

---

## विंशत्यधिकशततमोऽध्यायः

वराह उवाच

शृणुष्व परमं गुह्यं पूर्वं पृष्टं त्वया धरे[3]। देवि सर्वं प्रवक्ष्यामि संसारतरणं महत् ॥
स्नानं कृत्वा यथान्यायं मम कर्मपरायणाः ।
उपसर्पन्ति ये भक्त्या कदन्नाशा जितेन्द्रियाः ॥ २ ॥
यश्चैवमुच्यते भद्रे मम रूपं सनातनम् ॥ ३ ॥
अहमेव वरारोहे सर्वभूतसनातनम् । अधश्चोर्ध्वं च तिर्यक् च अहमेव व्यवस्थितः ।
दिशाश्च विदिशाश्चैव उपर्युपरि भाविनि ॥ ४ ॥
सर्वथा वन्दनीयास्ते मम भक्तेन नित्यशः[4]। क्रिया समूहयुक्तेन यदीच्छेत् परमां गतिम्॥
अन्यत्ते संप्रवक्ष्यामि[5] गुह्यं लोके महद्यशः । यथा वै वन्दनीयास्ते मम मार्गानुसारिणः॥
कृत्वापि परमं कर्म बुद्धिमादाय तद्विधाम् । ततः पूर्वमुखो भूत्वा पुनर्गृह्य जलाञ्जलिं ।
मूलयोगं समादाय[6] इमं मन्त्रमुदारयेत् ॥ ७ ॥
यजामहे धर्मपरायणोद्भवं नारायणं सर्वलोकप्रधानम् ।
ईशानमाद्यं पुरुषं पुराणं संसारमोक्षाय कृपाकरं तम् ॥ ८ ॥
ततः पश्चान्मुखो भूत्वा पुनर्गृह्य जलाञ्जलिम् । द्वादशाक्षरमुच्चार्य[7] इमं मन्त्रमुदीरये॥
यथा तु देवः प्रथमादिकर्ता पुराणकल्पश्च यथा विभूतिः ।
तथा स्थितश्चादिमनन्तरूपममोघसंकल्पमनन्तमीडे ॥ १० ॥

---

१. भोज्याश्च इति क्वचित् पाठः ।

२. प्राप्नोति परमां सिद्धिं ममैव कृतकर्मण इति । प्राप्नुवन्ति परां सिद्धिं ममैव कृत कर्मिणः इति पाठान्तरम् ।

३. शृणोहि परमं गुह्यं यत्त्वया परिपृच्छितश्चिति वा पाठः ।

४. सर्वदा इति क्वचित् पठ्यते ।

५. अन्यच्च ते प्रवक्ष्यामि इति वा पाठः ।

६. ओं नमो नारायण इति वा पाठः ।

७. ओं नमो नारायणेत्युक्त्वेति वा पठ्यते ।

ततस्तेनैव कालेन[3] पुनर्गृह्य जलाञ्जलिम्। तेनैव चास्य योगेन भूत्वा चैवोत्तरामुखः।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदाहरेत् ॥ ११ ॥
यजामहे दिव्यं परं पुराणमनादिमध्यान्तमनन्तरूपम्।
भवोद्भवं विश्वकरं प्रशान्तं संसारमोक्षावहमद्वितीयम् ॥ १२ ॥
ततस्तेनैव कायेन भूत्वा वै दक्षिणामुखः।
नमः पुरुषोत्तमायेत्युक्त्वा इमं मन्त्रमुदीरयेत् ॥ १३ ॥
यजामहे यज्ञमहो रूपन्तु सत्यं ऋतञ्च कालादिमरूपमाद्यम्।
अनन्यरूपञ्च महानुभावं संसारमोक्षाय कृतावतारम् ॥ १४ ॥
काष्ठकृत्यस्ततो भूत्वा कृत्वा चेन्द्रियनिग्रहम्।
अच्युते तु मनः कृत्वा इमं मन्त्रमुदाहरेत् ॥ १५ ॥
यजामहे सोमपं भवन्तं ते सोमार्कनेत्रं शतपत्रनेत्रम्।
जगत्प्रधानं ननु लोकनाथं मृत्युत्रिसंसारविमोक्षणञ्च ॥ १६ ॥
त्रिषु सन्ध्यास्वनेनैव विधिना कुर्यान्मम च कर्म तत्।
बुद्ध्या युक्त्या च मत्या च यदीच्छेत् परमां गतिम्[2] ॥ १७ ॥
योगानां परमो योगो गुह्यानां परमः पर इति[3]।
सांख्यानां परमं सांख्यं कर्मणां कर्म चोत्तमम् ॥ १८ ॥
एतन्न दद्याद् मूर्खाय पिशुनाय शठाय च। दीक्षितायैव दातव्यं सुशिष्याय दृढाय च॥
एतन्मरणकालेऽपि गुह्यं विष्णुप्रभाषितम्।
बुद्ध्या धारयितव्यं च न विस्मर्तव्यं कदाचन[3] ॥ २० ॥
य एतत् पठते नित्यं कल्पोच्छायी दृढव्रतः।
ममापि हृदये नित्यं संस्थितं त्रिगुणान्वितम्[4] ॥ २१ ॥
य एतेन विधानेन त्रिसन्ध्यं कर्म कारयेत्।
तिर्यग्योनिविनिर्मुक्तो[6] मम लोकाय गच्छति ॥ २२ ॥

इति वराहपुराणे भगवच्छास्त्रे त्रिसन्ध्यामन्त्रोपस्थापनकरणं नाम
विंशत्यधिकशततमोऽध्यायः।

---

१. अथ तस्मिंस्तु कालेऽस्मिन्निति वा पाठः।
२. एतेषां त्रिषु सन्ध्यासु कर्म चैवं समाचरेत्।
बुद्धिमान् मतिमान् भूत्वा यदीच्छेत् परमां गतिम् ॥
३. इति भिन्नः पाठः क्वचिदुपलभ्यः, गुह्यानां परमो योगो गुह्यानां परमः परः इति पाठान्तरम्।
४. बुद्धिमान् मतिमान् भूत्वा विस्मरेन्न कदाचन इति भिन्नः पाठः।
५. स तिष्ठति न संशयः इति पाठान्तरम्। ६. तिर्यग्योन्यापि संप्राप्तः इति पाठान्तरम्।

# एकविंशत्यधिकशततमोऽध्यायः

वराह उवाच

येन गर्भं न गच्छेत तन्मे शृणु हि माधवि[1]। कथयिष्यामि ते ह्येवं सर्वधर्मविनिश्चयम्॥
कृत्वापि विपुलं कर्म आत्मानं न प्रशंसति। करोति बहुकर्माणि शुद्धेनैवान्तरात्मना॥
[2]कृत्वा तु मम कर्माणि समर्थोऽनुग्रहे रतः। कार्याकार्यं विजानाति सर्वधर्मेषु निष्ठितः॥
शीतोष्णवातवर्षादिक्षुत्पिपासासहश्च यः। यो दरिद्रो निरालस्यः सत्यवागनसूयकः॥
स्वदारनिरतो नित्यं परदारविवर्जकः। सत्यवादी विशुद्धात्मा नित्यं भागवतप्रियः॥

संविभाज्यविशेषज्ञो नित्यं ब्राह्मणवत्सलः।
प्रियवादी[3] द्विजानां च मम कर्मपरायणः॥
कुयोनिं तु न गच्छेत मम लोकाय गच्छति॥ ६॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
यो वियोनिं न गच्छेत मम कर्मपरायणः॥ ७॥

जीवहिंसानिवृत्तस्तु[4] सर्वभूतहितः शुचिः। सर्वत्र समतायुक्तः समलोष्टाश्मकाञ्चनः॥

बाल्ये स्थितोऽपि वयसि क्षान्तो दान्तः शुभे रतः।
नित्यं नैव विजानाति परेणापकृतं क्वचित्॥ ९॥
कर्तव्यं संस्मरेत् सर्वमसत्यञ्च न[5] जल्पति।
व्यलीकाद् विनिवृत्तो यस्तथ्येऽतिकृतनिश्चयः॥ १०॥
नित्यं च धृतिमान् यश्च[6] परोक्षेऽपि न चाक्षिपेत्।
ऋतुकालेऽपि गच्छेद् यः अपत्यार्थे स्वकां स्त्रियम्॥ ११॥
ईदृशास्तु नरा भद्रे मम कर्मपरायणाः।
ते वियोनिं न गच्छन्ति मम गच्छन्ति सुन्दरि॥ १२॥

पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे। पुरुषाणां प्रसन्नानां यश्च धर्मः सनातनः॥

मनुनाप्यन्यथा दृष्टो ह्यन्यथाङ्गिरसेन च।
शुक्रेण चान्यथा दृष्टो गौतमेनापि चान्यथा॥ १४॥
सोमेन चान्यथा दृष्टो रुद्रेणाप्यन्यथा पुनः।
शङ्खेन चान्यथा दृष्टो लिखितेनापि चान्यथा॥ १५॥

---

१. तच्छृणुष्व वसुन्धरे इति वा पाठः।
२. नैव कुर्वत्यहंकारं क्रोधं चैव न गृह्णति।
समं पश्यति चित्तेन लाभालाभविवर्जितः।
पञ्चानामिन्द्रियाणाञ्च समर्थो निग्रहे रतः॥ इति पुस्तकान्तरेऽधिकः पाठः।
३. प्रियभाषी इति पाठान्तरम्। ४. जीवांस्तु ये न हिंसन्ति इति पाठान्तरम्।
५. सर्वं मम सत्यञ्च इति क्वचित् पठ्यते। ६. बुद्धिमान् कश्चित् इति वा पाठः।

कश्यपेनान्यथा दृष्टो धर्मेणाप्यन्यथा धरे ।
अग्निना वायुना चैव दृष्टो धर्मोऽन्यथा धरे ॥ १६ ॥

यमेन चान्यथा दृष्ट इन्द्रेण वरुणेन च ।
कुबेरेणान्यथा दृष्टः शाण्डिल्येनापि चान्यथा ॥ १७ ॥

पुलस्त्येनान्यथा दृष्ट आदित्येनापि चान्यथा ।
पितृभिश्चान्यथा दृष्टो ह्यन्यथापि स्वयम्भुवा ॥ १८ ॥

आत्मनात्मनि धर्मेण ये नरा निश्चितव्रताः ।
स्वकं पालयते धर्मं स्वमतेनैव भाषितम् ॥ १९ ॥

परवादं न कुर्वीत सर्वधर्मेषु निश्चितम् ।
न निन्देद् धर्मकार्याणि आत्मधर्मपथे स्थितः ॥ २० ॥

एभिर्गुणैः समायुक्तो मम कर्माणि कारयेत् ।
वियोनिं स न गच्छेत मम लोकाय गच्छति ॥ २१ ॥

पुनरन्यत्तु वक्ष्यामि तच्छृणुष्वेह माधवि । तरन्ति पुरुषा येन गर्भसंसारसागरम्[1] ॥

जितेन्द्रिया जितक्रोधा लोभमोहविवर्जिताः ।
आत्मोपकारका नित्यं देवातिथिगुरुप्रियाः ॥ २३ ॥

हिंसादीनि न कुर्वन्ति मधुमांसविवर्जकाः ।
मनसा ब्राह्मणीं चैव यो गच्छेन्न कदाचन ॥ २४ ॥

विप्राय कपिलां दद्याद् वृद्धं सान्त्वेन पालयेत् ।
सर्वेषां चैव पुत्राणां विशेषं यो न कुर्वति[2] ॥ २५ ॥

संक्रुद्धं ब्राह्मणं दृष्ट्वा यस्तु तत्र प्रसादयेत् ।
यः स्पृशेत् कपिलां भक्त्या कुमारीं न च दूषयेत् ॥ २६ ॥

अग्निं न च क्रमेत् पद्भ्यां न च पुत्रेण भाषयेत् ।
जले न मेहयेद् यस्तु गुरुभक्तो न जल्पकः ॥ २७ ॥

एवं धर्मेण संयुक्तो योऽनु मां प्रतिपद्यते ।
स च गर्भं न गच्छेत मम लोकाय गच्छति ॥ २८ ॥

इति वाराहपुराणे योनिगर्भमोक्षणो नाम एकविंशत्यधिकशततमोऽध्यायः ।

---

१. सागरात् इति क्वचित् पाठः ।
२. विशेषं यो न कुर्वति इति पाठान्तरम् ।

# द्वाविंशत्यधिकशततमोऽध्यायः

वराह उवाच

गुह्यानां परमं गुह्यं तच्छृणुष्व वसुन्धरे ।
तिर्यग्योनिगताश्चापि येन मुच्यन्ति किल्बिषात् ॥ १ ॥
अष्टम्यां च चतुर्दश्यां मैथुनं यो न गच्छति ।
भुक्त्वा परस्य चान्नानि यश्चैव न विकुत्सति ॥ २ ॥
बाल्ये वयस्यपि च यो[1] मम नित्यमनुव्रतः ।
येन केनापि सन्तुष्टो यो मातापितृपूजकः ॥ ३ ॥
आयासे जीवति न यः प्रविभागी गुणान्वितः[2] ।
दाता भोक्ता च कार्येषु स्वतन्त्रो नित्यसंयतः ॥ ४ ॥
विकर्म नाभिकुर्वीत कौमारव्रतसंस्थितः । सर्वभूतदयायुक्तः सत्त्वेन च समन्वितः ॥
मत्या च निस्पृहोऽत्यन्तं परार्थेष्वस्पृहः सदा[3] ।
ईदृशीं बुद्धिमादाय मम कर्माणि कुर्वति[4] ।
तिर्यग्योनिं न गच्छेत मम लोकाय गच्छति ॥ ६ ॥
इमं गुह्यं वरारोहे देवैरपि दुरासदम्[5] ।
तच्छृणुष्वानवद्याङ्गि कथ्यमानं मयानघे ॥ ७ ॥
जरायुजाण्डजोद्भिज्जस्वेदजानि कदाचन ।
ये न हिंसन्ति भूतानि शुद्धात्मानो दयापराः[6] ॥ ८ ॥
यस्तु कोकामुखे देवि भुवं प्राणान् परित्यजेत् ।
मनसा न चलत्येव मम वल्लभतां व्रजेत् ॥ ९ ॥

---

१. बाल्ये वयसि वर्तेत इति पाठान्तरम् ।

२. (ग) अत्र एवं पाठोऽस्ति—
प्रातं भुञ्जीत नित्यञ्च स्वयं न परिवेषकः ।
अलुब्धः सर्वकार्येषु स्वतन्त्रो नित्यसंयतः ।
विकर्म नाभिकुर्वीत कौमारव्रतसंस्थितः ।
सर्वभूतदयो नित्यं संविभागी गुणान्वितः ।
दाता भोक्ता च स च वै सत्त्वेन च समन्वितः ॥ इति क्वचित् पुस्तके पाठः ।

३. मतिमान्नैव तप्यन्ते परार्थेषु कदाचन । इति पाठान्तरम् ।
ईदृग् बुद्धिं समादाय मम कर्म करोति यः इति कुत्रचित् पुस्तके पाठः ।

५. देवैरतिदुरासदम् इति पाठान्तरम् ।

६. ये न हिंसन्ति भूतानि स्वेदजोद्भिज्जमण्डजान् ।
जरायुजानां शुद्धात्मा सर्वभूतदयापरः । इति पाठान्तरम् ।

ततो विष्णुवचः श्रुत्वा सा मही संशितव्रता ।
वराहरूपिणं देवं प्रत्युवाच वसुन्धरा ॥ १० ॥

धरण्युवाच

अहं शिष्या च दासी च भक्ता च त्वयि माधव ।
एवं मे परमं गुह्यं त्वद्भक्त्या वक्तुमर्हसि ॥ ११ ॥
चक्रं वाराणसीं चैव अट्टहासं च नैमिषम् ।
भद्रकर्णह्रदञ्चैव हित्वा कोकां प्रशंससि[1] ॥ १२ ॥
नगरं च हिरण्यं च कुक्कुटं[2] मण्डलेश्वरम् ।
केदारं च ततो मुक्त्वा कोकां किं नौ[3] प्रशंससि ॥ १३ ॥
देवदारुवनं मुक्त्वा तथा योगेश्वरं[4] विभुम् ।
दुर्गं महाबलं मुक्त्वा किं वै कोकां प्रशंससि ॥ १४ ॥
गोकर्णञ्च ततो गुह्यं शुद्धं जालेश्वरं[5] तथा ।
एकलिङ्गं ततो मुक्त्वा किं वा कोकां प्रशंससि ॥ १५ ॥
एवं पृष्टस्तया भक्त्या माधवश्च महाप्रभुः ।
वराहरूपी भगवान् प्रत्युवाच वसुन्धराम् ॥ १६ ॥

वराह उवाच

एवमेतन्महाभागे यन्मां त्वं भीरु भाषसे ।
कथयिष्यामि ते गुह्यं कोका येन विशिष्यते ॥ १७ ॥
एते रुद्राश्रिताः क्षेत्रा ये त्वया परिकीर्तिताः ।
एते पाशुपताश्चैषा कोका भागवतस्य ह[6] ॥ १८ ॥
तत्रान्यत्ते[7] प्रवक्ष्यामि महाख्यानं वरानने ।
कृतं कोकामुखे चैव मम क्षेत्रेषु[8] सुन्दरि ॥ १९ ॥
लुब्धो ह्यामिषमाहारं चरन् वै[9] कोकमण्डले ।
तत्राल्पेनाम्बुना युक्ते ह्रदे मत्स्यस्तु तिष्ठति[10] ॥ २० ॥
दृष्ट्वा तं लुब्धकस्तूर्णं बडिशेनाजहार ह ।
तस्य हस्तात् तु बलवान् मत्स्यस्तूर्णं विनिर्गतः ॥ २१ ॥

---

१. भद्रकर्णह्रदं नैव कोकं किं वै प्रशंससि इति वा पाठः ।
२. मुकुटम् इति पाठान्तरम् । ३. किं कोकां च इति काचित्कः पाठः ।
४. जालेश्वरम् इति पाठान्तरम् । ५. मुक्त्वा शुद्धं जाल्मेश्वरं
६. श्लोकोऽयं केषुचित् पुस्तकेषु न दृश्यते । ७. अन्यच्च ते इति पाठान्तरम् ।
८. क्षेत्रे हि इति क्वचित् पाठः । ९. कश्चिदामिषमाहारांश्चरन्तं इति पाठान्तरम् ।
१०. अल्पोदकेषु तिष्ठन्तं ततो मध्येन मत्स्यकम् इति क्वचित् पाठः ।

अथ श्येनस्तु तं हर्तुं मन्त्रयित्वा नभश्चरः ।
निपत्य तं गृहीत्वैव प्रोड्डीनस्त्वरयान्वितः ।
अशक्तस्य ततो नेतुं मत्स्यः कोकामुखेऽपतत् ॥ २२ ॥
तत्-क्षेत्रस्य प्रभावेण राजपुत्रोऽभवत् प्रभुः ।
रूपवान् गुणवान् शुद्धः कुलेन वयसान्वितः[1] ॥ २३ ॥
अथ कालेन तस्यैव मृगव्याधस्य चाङ्गना ।
गृहीत्वा चैव मांसानि गच्छन्ती याति तत्र वै ॥ २४ ॥
एका चिल्ली मांसलुब्धा तद्धस्तान्मांसगर्धिनी ।
आगत्यागत्य तरसा हर्तुं समुपचक्रमे ॥ २५ ॥
मृगव्याधा बलान्मांसं हर्तुकामान्तु चिल्लिकाम् ।
बाणेनैकेन संहृत्य सा वै निपतिता सह[2] ॥ २६ ॥
आकाशात् पतिता भद्रे कोकायां मम मण्डले[3] ।
जाता चन्द्रपुरे चैषा[4] राजपुत्री यशस्विनी ॥ २७ ॥
व्यवर्धत सा तु कन्या वयोरूपगुणान्विता ।
चतुःषष्टिकलायुक्ता पुरुषं सा जुगुप्सति ॥ २८ ॥
रूपवान् गुणवान् शूरो युद्धकार्यार्थनिश्चितः ।
सौम्यश्च पुरुषश्चैव सा च नेति जुगुप्सति[5] ॥ २९ ॥
अथ केनचित् कालेन शक आनन्दपूरके । सम्बन्धोऽजायत तयोर्मध्यमे वयसि स्थयोः[6]॥
तथा तु तौ समासाद्य परस्परमथ क्रमात्[7] ।
यथान्यायं स विप्रोक्तं विधिदृष्टेन कर्मणा ॥ ३१ ॥

---

[1] श्लोकत्रयमेतत् पुस्तकान्तरे एवं पठ्यते ।
स तेनापि प्रबुद्धेन विद्धो मत्स्यः कदाचन ।
मत्स्योऽथ बलवांस्तत्र लुब्धकस्य च पाणितः ॥
दूरे चैव धृतस्तेन स तु मत्स्यो दिगम्बरे ।
श्येनो मन्त्रयते हन्तुं निःश्वसन् खचरस्तथा ॥
सोऽपतन्मम क्षेत्रे तु कोकायां तु वसुन्धरे ।
शकस्य पुत्रो जायेत रूपवान् बलवान् शुचिः ॥
२. एकेनैव तु बाणेन सा वै निपतिता सह । इति क्वचित् पठ्यते ।
३. सन्निधौ इति पाठान्तरम् । ४. रम्ये इति पाठान्तरम् ।
५. रूपवान् गुणवान् शूरो युद्धकार्यार्थनिष्ठितः ॥
सौम्यश्च पुरुषञ्चैव सर्वानभि जुगुप्सति ॥ इत्यधिकः पाठः पुस्तकान्तरे ।
६. सम्बन्धोऽजायत तेषां ममेच्छया वरानने । इति पुस्तकान्तरे पाठः ।
७. प्राप्तौ तु ताविहान्योन्यमुभयोश्चैव सुन्दरि इति पाठान्तरम् ।

स च तया समं नित्यं सा च तेन समं शुभा ।
अन्योन्यं रममाणौ तौ मुहूर्तमपि नोज्झतः ॥ ३२ ॥
गच्छत्येवं बहुतरे काले चैवाप्यनिन्दिता[1]। समप्रेम्णा च संयुक्ता सौहृदेन च नायकम्॥
भजमाना विनीता च सौहृदाच्च विशेषतः ॥ ३३ ॥
बहुश्चैव गतः कालः समभोगेषु[2] सक्तयोः । राजपुत्रस्ततोऽप्यत्र शकानां नन्दवर्धनः॥
तस्याजायत मध्याह्ने शिरोरुगतिभीषणा[3] ॥ ३४ ॥
ये केचिद् भिषजस्तत्र गदेषु कुशलाः शुभे । ते तत्रौषधयोगञ्च चक्रुस्तेनापि वेदना[4] ॥
ननाश नैव संयातः कालो बहुतिथस्ततः ॥ ३५ ॥
न संबुध्यति चात्मानं विष्णुमायाविमोहितः[5] ।
पूर्णे हि समये तत्तु उभयोश्च तदन्तरम् ॥ ३६ ॥
तस्य कालः संवृत्तस्य योऽसौ पूर्वप्रतिस्तवः । श्रयने गत एतेषां वृत्तं कौतूहलं भुवि ॥
अन्योऽन्यप्रीतियुक्तौ तु नान्योऽन्यं जहतुः क्वचित् ।
ततः सर्वानवद्याङ्गी भर्तारमिदमब्रवीत् ॥ ३८ ॥
किमिदं तव भद्रं ते वेदना जायते शिरे ।
एतदाचक्ष्व तत्त्वेन यद्यहं च तव प्रिया ॥ ३९ ॥
बहवो भिषजश्चैव नाना शास्त्रविशारदाः ।
कुर्वन्ति तव कर्माणि वेदना च न गच्छति ॥
एवं स प्रियया प्रोक्तस्तां प्रियां पुनरब्रवीत् ॥ ४० ॥
इदं किं विस्मृता भद्रे । सर्वव्याधिसमन्वितम् ।
यल्लब्धं मानुषत्वं च सुखदुःखसमन्वितम् ॥ ४१ ॥
संसारसागरारूढं नातिप्रष्टुं त्वमर्हसि । एवं सा तेन प्रोक्ता तु[6] श्रोतुकामा वरानना॥
ततः कदाचिच्छयने सुप्तौ तौ दम्पती किल ।
गते बहुतिथे काले पुनः पप्रच्छ सा प्रियम्[7] ॥ ४३ ॥
कथयस्व तमेवार्थं यन्मया पूर्वं पृच्छितम् ।
किं मां न भाषसे नाथ साभिप्रायं वचस्तव ॥ ४४ ॥

---

१. एवं सुबहुधाकाले गच्छत्यैव अनिन्दिता इति पाठान्तरम् ।
२. एवं बहुगतः कालः कामभोगेषु इति क्वचित् पाठः ।
३. पीडिनी इति वा पाठः ।
४. ते तस्य सर्वमाचष्टे न सा तिष्ठति वेदना इति कुत्रचित् पठ्यते ।
५. प्रमोहितः इति पाठान्तरम् । ६. तेनैवं भाषिता बाला इति पाठान्तरम् ।
७. पक्षे मासे गते काले होतौ तौ शयने गतौ ।
जातकौतूहले चेत्रे पुनरेवान्वपृच्छत ॥ इति कुत्रचित् पाठः ।

गोप्यं वा किञ्चिदस्तीह किं गोपयसि मे पुरः ।
अवश्यं चैव वक्तव्यं यद्यहं तव वल्लभा ॥ ४५ ॥
इति निर्बन्धतः पृष्टः स शकाधिपतिर्नृपः ।
तां प्रियां प्रणयात् प्राह बहुमानपुरःस्सरम् ॥ ४६ ॥
मुच्यतां मानुषं भावं तां जातिं स्मर पौर्विकीम् ।
अथ कौतूहलं भद्रे श्रवणे पूर्वजन्मनः ।
मन्मातापितरौ गत्वा प्रसादाय शुचिस्मिते ॥ ४७ ॥
मानार्हौ मानयित्वा तौ ययाहं जठरे धृतः ।
तयोराज्ञां पुरस्कृत्य मानयित्वा यथार्हतः ।
अथ कोकामुखे गत्वा कथयिष्याम्यसंशयम् ॥ ४८ ॥
स्वपूर्वजन्मवृत्तं तु देवानामपि दुर्लभम् । तत्र ते कथयिष्यामि सर्ववृत्तमनिन्दिते ॥
ततः सा ह्यनवद्याङ्गी श्वश्रूश्वशुरयोः पुरः ।
गत्वा गृहीत्वा चरणौ ततस्ताविदमब्रवीत् ।
किञ्चिद् विज्ञप्तुकामास्मि तत्र वामवधीयताम् ॥ ५० ॥
भवदाज्ञां पुरस्कृत्य भवद्भ्यामनुमानितौ । पुण्ये कोकामुखे गन्तुमिच्छावस्तत्र वां गुरू॥
कार्यगौरवभावेन न निषेध्यौ कथञ्चन ॥ ५१ ॥
अद्य यावत् किमपि वां याचितं न मया क्वचित् ।
पुरस्ताद्ध्यावयोस्तन्मे याचितं दातुमर्हथः ॥ ५२ ॥
शिरोवेदनया युक्तः सदा तव सुतो ह्ययम् ।
मध्याह्ने मृतकल्पो वै जायते ह्यचिकित्सकम् ॥ ५३ ॥
सुखानि सर्वविषयान् विसृज्य परिपीडितः ।
कोकामुखं विना कष्टं न निवृत्तं भविष्यति ॥ ५४ ॥
कदाचिन्नोक्तपूर्वं ते रहस्यं परमं महत् ।
त्वरितं गन्तुमिच्छामि विष्णोस्तत् परमं पदम् ।
दम्पतीभ्यां हि मननं रोचतां सर्वथैव हि ॥ ५५ ॥
ततो वधूवचः श्रुत्वा शकानामधिपो नृपः[१] ।
करेण स्वयमादाय वधूं पुत्रमुवाच ह ॥ ५६ ॥
किमिदं चिन्तितं वत्स कोकामुखगमं प्रति ।
हस्त्यश्वरथयानानि स्त्रियश्चाप्सरसोपमाः ॥ ५७ ॥
सर्वमेतत्तु सम्प्राज्ञ कोषकोष्ठादिसंयुतम् ।
शरणं वित्तयो राज्यं सर्वं त्वयि प्रतिष्ठितम्[२] ॥ ५८ ॥

---

१. शकादिः पृथिवीपतिः इति वा पाठः । २. विवर्जितम् इति पाठान्तरम् ।

मित्रं वरासनं चैव गृह्ण पुत्र ममोत्तरम्[१] ।
त्वयि प्रतिष्ठिताः प्राणाः सन्तानं च तदुत्तरम्[२] ॥ ५९ ॥
ततः पितुर्वचः श्रुत्वा राजपुत्रो यशस्विनि ।
पितुः पादौ गृहीत्वा च प्रोवाच विनयान्वितः ॥ ६० ॥
अलं राज्येन कोशेन वाहनेन बलेन वा ।
गन्तुमिच्छामि तत्राहं तूर्णं[३] कोकामुखं महत् ॥ ६१ ॥
शिरोवेदनया युक्तो यदि जीवाम्यहं पितः ।
तदा राज्यं बलं कोषो ममैवैतन्न संशयः ॥
तत्रैव गमनात् मह्यं वेदना नाशमेष्यति ॥ ६२ ॥
पुत्रोक्तमवधार्यैवं शकानामधिपो नृपः । अनुजज्ञे ततः कोकां गच्छ पुत्र नमोस्तु ते ॥
वणिजश्चैव पौराश्च वैश्याश्चापि वराङ्गनाः ।
अनुजग्मू राजपुत्रं कोकामुखपथे स्थितम् ॥ ६४ ॥
अथ दीर्घेण कालेन प्राप्तः कोकामुखं त्विदम् ।
तत्र गत्वा वरारोहा भर्तारमिदमब्रवीत् ॥ ६५ ॥
पूर्वपृष्टं मया यत्ते वक्ष्यामीति च मां प्रति ।
कोकामुखे त्वयाप्युक्तं तदेतन्मम कथ्यताम् ॥ ६६ ॥
निशम्येति प्रियाप्रोक्तं राजपुत्रो यशस्विनि ।
प्रहस्याह प्रियां तां तु समालिङ्ग्य वसुन्धरे ॥ ६७ ॥
रजनी संप्रवृत्तेयं सुखं स्वापो विधीयताम् ।
श्वः सर्वं कथयिष्यामि यत्ते मनसि वर्तते[४] ॥ ६८ ॥
प्रभातायान्तु शर्वर्यां स्नातौ क्षौमविभूषितौ ।
प्रणम्य शिरसा विष्णुं हस्ते गृह्य ततः प्रियाम् ॥ ६९ ॥
ततः पूर्वोत्तरे पार्श्वे नित्यं यो हृदि तिष्ठति ।
अस्थीनि दर्शयामास अवशिष्टानि यानि तु ॥ ७० ॥
एतानि मम चास्थीनि पूर्वदेहोद्भवानि च ।
अहं पुराभवं मत्स्यः कोकेषु विचरं जले ।
व्याधेन निगृहीतोऽस्मि बडिशेन जलेचरः ॥ ७१ ॥
तद्धस्तान्निर्गतस्तत्र बलेन पतितो भुवि ।
श्येनेनामिषलुब्धेन नखैर्विद्धोऽस्मि सुन्दरि ॥ ७२ ॥

---

१. गृहीष्व सुतसत्तम इति पाठान्तरम् । २ तदुत्तरम् इति क्वचित् पठ्यते ।
३. शीघ्रम् इति वा पाठः । ४. सुखं स्वप वरारोहे इहैकां रजनीं प्रिये ।
कल्यं ते कथयिष्यामि यच्च स्यात्ते मनोषितम् ॥ इति केषुचित् पुस्तकेषु पठ्यते ।

नीत आकाशमार्गेण तस्माच्च पतितोऽत्र वै ।
तेन तस्य प्रहारेण जाता शिरसि वेदना ।
अहमेव विजानामि नान्यो जानाति मां विना[1] ॥ ७३ ॥
एतत्ते कथितं भद्रे यत्त्वया पूर्वपृच्छितम्[2] ।
गच्छ सुन्दरि भद्रं ते यत्र ते वर्तते मनः ॥ ७४ ॥
ततः साप्यनवद्याङ्गी रक्तपद्मशुभानना । करुणं स्वरमादाय भर्तारं पुनरब्रवीत् ॥
एतदर्थं मया भद्र गुह्यं नोक्तं तथा स्वकम् ।
अहं च यादृशी पूर्वमभवं तच्छृणुष्व मे ॥ ७६ ॥
क्षुत्पिपासापरिश्रान्ता चिल्ली गगनगामिनी ।
वृक्षोपरि समासीना भक्ष्यं चैव विचिन्वती[3] ॥ ७७ ॥
अथ कश्चिद् मृगव्याधो हत्वा वनचरान् बहून् ।
संगृह्य मांसभारान् वै तेन मार्गेण संगतः ॥ ७८ ॥
स्थापयित्वा मांसभारान् प्रियायाः सविधे[4] स्वयम् ।
काष्ठान्यानयितुं यातः क्षुधितो मांसपाचने ॥ ७९ ॥
प्रवृत्तोऽग्निमुपादाय तावदुड्डीय सत्वरम् ।
मांसपिण्डो मया विद्धो दृढैर्वज्रमयैर्नखैः[4] ॥ ८० ॥
न च शक्तास्मि संहर्तुं मांसभारप्रपीडिता ।
न दूरं गमिता तत्र तत्र स्थाने व्यवस्थिता[5] ।
अशक्ता दूरगमने सविधे हि व्यवस्थिता ॥ ८१ ॥
भक्षयित्वा ततो मांसं प्रहृष्टेनान्तरात्मना[6] ।

---

१. न कश्चान्यो विजानाति इति पाठान्तरम् । २. यत्त्वया पूर्वपृच्छितम् इति क्वचित् पठ्यते ।
३. न दृश्यतेऽयं श्लोकः केषुचित् पुस्तकेषु ।
४. स्थापयित्वा मांसभारं क्वचित् काष्ठं समाहरेत् ।
अहं चरामि चाकाशे मार्गमादाय चामिषम् ॥
क्षुत्पिपासापरिश्रान्ता किञ्चिन्मांसानि छिन्दती ।
तात आधार्य काष्ठानि प्रज्वाल्य च हुताशनम् ॥
पचतस्तत्र मांसानि क्षुत्पिपासापरिष्कृता ।
ततो वृक्षं समासाद्य पश्यती मांसगृद्धिनी ॥
पतितास्मि ततस्तत्र यत्रासौ पच्यते मिषम् ।
अप्रमाणं मया मांसं विद्धं चन्द्रमयैर्नखैः ॥ इति पाठान्तरम् ।
५. अशक्ता दूरगमने सविधे हि व्यवस्थिता इति वा पाठः ।
६. व्याधः संहृष्टमानसः इति क्वचित् पठ्यते ।

अपश्यद् मांसपिण्डं तु मृगयामास पार्श्वतः।
तावद् ददर्श मां तत्र खादन्तीं मांसपिण्डकाम्॥ ८२॥
ततः स धनुरुद्यम्य सशरञ्च व्यकर्षत। ततोऽहं पातिता तेन चयन्ती मांसपिण्डिकाम्।
विद्धा बाणेन मां तत्र भक्षयन्तीमपातयत्[1]॥ ८३॥
ततोऽहं भ्रममाणा वै निश्चेष्टा गतजीविता[2]। पतितास्म्यवशा भद्र कालतन्त्रे दुरासदे॥
एतत्क्षेत्रप्रभावेण अकामापि नृपात्मजा।
जाताऽस्मि त्वत्प्रिया चापि स्मरन्ती पूर्वजन्म तत्॥ ८५॥
एतानि पश्य चास्थीनि शेषाणि बहुकालतः। गलितान्यल्पशेषाणि प्राणनाथ समीपतः॥
एवं सा दर्शयित्वा तु भर्तारं पुनरब्रवीत्।
आनीतोऽसि मया भद्र स्थानं कोकामुखं प्रति॥ ८७॥
एतत्तत्क्षेत्रप्रभावेण तिर्यग्योनिगता अपि।
उत्तमे तु कुले जाता मानुषीं जातिमाश्रिता[3]॥ ८८॥
यं यं प्रवक्ष्यसे[4] धर्मं विष्णुप्रोक्तं यशोधन।
तं तमेव करिष्यामि विष्णुलोके सुखावहे[5]॥ ८९॥
ततस्तस्या वचः श्रुत्वा लब्धपूर्वस्मृतिर्नृपः।
विस्मयं परमं गत्वा साधु साध्विति सोऽब्रवीत्[6]॥ ९०॥
तस्मिन् क्षेत्रे च यत्कर्म कर्तव्यं धर्मसंहितम्।
तच्छ्रुत्वा कानिचिद् देवी स्वयं चक्रे पतिव्रता॥ ९१॥
अन्येऽपि सर्वे तच्छ्रुत्वा यस्य यद्रोचते प्रियम्।
तत्तत् सर्वेऽपि कुर्वन्ति विधिदृष्टेन कर्मणा[7]॥ ९२॥
तत्र तौ दम्पती द्रव्यमन्नं रत्नं द्विजेषु च। ददतुः परमप्रीतौ पात्रेभ्यश्च यथार्हतः॥
येऽन्ये तत्सार्थमासाद्य यातास्तेऽपि वसुन्धरे।
ब्राह्मणेभ्यो ददुः स्वानि विष्णुभक्त्या महाव्रताः॥ ९४॥
तत्र स्थित्वा वरारोहे मम कर्म व्यवस्थिताः। तत्क्षेत्रस्य प्रभावेण मम लोकमुपागताः[8]॥

---

१. विद्धा बाणेन मां तत्र भक्षयन्तीमपातयत् इति क्वचित् पठ्यते।
२. गतजीविता इति पाठान्तरम्।
३. यस्य क्षेत्रप्रभावेण तिर्यग्योनिगता वयम्।
जाता वै मानुषीं संज्ञामुत्तमेषु कुलेषु च॥ इति पाठान्तरम्।
४. प्रवक्ष्यसि इति वा पाठः। ५. सुखावहम् इति वा पठ्यते।
६. साध्वित्यपूजयत् इति पाठान्तरम्।
७. श्रुत्वा वै क्षेत्रकर्माणि स तस्या वचनं महत्।
तेऽपि कुर्वन्ति कर्माणि यस्य यच्चाथ रोचते॥ इति कुत्रचित् पुस्तके पठ्यते।
८. श्वेतद्वीपमुपागतः इति पाठान्तरम्।

एवं स राजपुत्रोऽपि मम कर्मव्यवस्थितः । मुक्त्वा तु मानुषं भावं श्वेतद्वीपमुपागतः[1]॥
सर्वे च पुरुषास्तत्र आत्मनात्मानु दर्शनात् । शुक्लाम्बरधरा दिव्यभूषणैश्च विभूषिताः ॥
दीप्तिमन्तो महाकायाः सर्वे च शुभदर्शनाः ॥ ९७ ॥
स्त्रियोऽपि दिव्या यत्रत्या दिव्यभूषणभूषिताः ।
तेजसा दीप्तिमत्यश्च शुद्धसत्त्वविभूषिताः ।
मयि शुद्धं परं भावमारूढाः सत्यवर्चसः ॥ ९८ ॥
एतत्ते कथितं देवि कोकामुखमनुत्तमम् । यत्र मत्स्यश्च चिल्ली च सकामा ये समागताः[2]॥
प्रसादान्मम सुश्रोणि श्वेतद्वीपमुपागताः । एष धर्मश्च कीर्तिश्च शक्तिश्चैव महद्यशः ।
कर्मणां परमं कर्म तपसाञ्च महत्तपः ॥ १०० ॥
आख्यानानाञ्च परमं कृतीनां परमा कृतिः[3] ।
धर्माणाञ्च परो धर्मस्तवार्थे कीर्तितो मया ॥ १०१ ॥
क्रोधनाय न तं दद्यान्मूर्खाय पिशुनाय च । अभक्ताय न तं दद्यादश्रद्धाय शठाय च ॥
दीक्षिताय च[4] दातव्यमुपपन्नाय साधवे[5]। पण्डिताय च दातव्यं यश्च शास्त्रविशारदः॥

---

१. एवं मत्स्यश्च चिल्ली च सकामा ये समागताः ।
प्रसादान्मम सुश्रोणि श्वेतद्वीपमुपागतः ॥ इत्यपि पाठान्तरम् ।
२. केचिच्चान्द्रायणं कुर्युः केचिच्चैव जलाशनम् ।
ते च विष्णुमयान् धर्मांस्तांस्तान्द्विजः समाचरेत् ॥
बहुधान्यवरं रत्नं दम्पत्योऽथ यशस्विनि ।
तेऽपि कुर्वन्ति कर्माणि मम भक्ता व्यवस्थिताः ॥
तेऽपि दीर्घेण कालेन अटमाना मतिः कृता ।
कुर्वन्ती मम कर्माणि भाव्यं पञ्चत्वमागताः ॥
ततः क्षेत्रप्रभावेण मम कर्मप्रभावतः ।
मम चैव प्रसादेन श्वेतद्वीपमुपागतः ॥
एवं स राजपुत्रोऽथ सर्वभूतगुणान्वितः ।
मुक्त्वा तु मानुषं भावमूर्ध्वशाखोपतिष्ठति ॥
योऽसौ परिजनस्तस्य मम कर्म व्यवस्थितः ।
मानुषं भावमुत्सृज्य मम लोकमुपागतः ॥
सर्वशो द्युतिमांस्तत्र आत्मनात्मदर्शनात् ।
याश्च तत्र स्त्रियः काश्चित् सर्वाश्चोत्पलगन्धिनी ॥
मायया मतिमान् मुक्ताः सर्वाश्चैव प्रियाव्रताः ।
इति महान् पाठभेदः पुस्तकान्तरे दृश्यते ।
३. आख्यानं महदाख्यानं द्युतीनाञ्च महाद्युतिः । इति पाठान्तरम् ।
४. दीक्षितायैव इति वा पाठः । ५. व्यं सुप्रपन्नाय नित्यशः इति वा पाठः ।

एतन्मरणकालेऽपि धारयेद् यः समाहितः ।
सोऽपि मुच्येत पूतात्मा गर्भाद् योनिभवाद् भयात् ॥ १०४ ॥
एतत्ते कथितं भद्रे महाख्यानं महौजसम् । य एतेन विधानेन गत्वा कोकामुखं महत् ।
तेऽपि यान्ति परां सिद्धिं चिल्लीमत्स्यौ यथा पुरा ॥ १०५ ॥

इति वाराहपुराणे कोकामुखमाहात्म्ये द्वाविंशत्यधिकशततमोऽध्यायः ।

---

## त्रयोविंशत्यधिकशततमोऽध्यायः

सूत उवाच

श्रुत्वा तु कोकामाहात्म्यं पृथिवी धर्मसंहितम्[1] ।
विस्मयं परमं याता श्रुत्वा धर्मं महौजसम् ॥ १ ॥

धरण्युवाच

अहो प्रभावः कोकाया माहात्म्यं क्रोडरूपिणः ।
तिर्यग्योनिगतो वापि प्राप्तो यत्परमां गतिम् ॥ २ ॥
तव देव प्रसादेन किञ्चिदिच्छामि वेदितुम् ।
यन्मया पूर्वपृष्टोऽसि केन धर्मेण मानवाः ।
तपसा कर्मणा वापि पश्यन्ति त्वां हि माधव ।
प्रसादसुमुखो भूत्वा निखिलं वक्तुमर्हसि ॥ ३ ॥
एवं पृष्टस्तदा देव्या माधव्या स तु माधवः ।
प्रहस्य पुनरेवेदं वक्तुं समुपचक्रमे ॥ ४ ॥

वराह उवाच

एवमेतन्महाभागे यथा त्वं भीरु भाषसे ।
कथयिष्यामि ते धर्मं गुह्यं[2] संसारमोक्षणम् ॥ ५ ॥
गते मेघागमे काले प्रसन्नशरदाशये । अम्बरे विमले जाते विमले शशिमण्डले ॥६॥
नातिशीते न चात्युष्णे काले हंसविराविणि । कुमुदोत्पल कह्लारपद्मसौरभनिर्भरे॥७॥
कुमुदस्य च मासस्य भवेद्या द्वादशी शुभा ।
तस्यां मामर्चयेद् यस्तु तत्प्रभावं शृणु प्रिये[3] ॥ ८ ॥

---

१. ध ``हिता इति पाठान्तरम् ।
२. सर्वं धर्मं इति पाठान्तरम् । ३. शृणुष्व मे इति वा पाठः ।

यावल्लोकाश्च धार्यन्ते तावत्कालं वसुन्धरे ।
मद्भक्तो जायते धन्यो नान्यभक्तः कदाचन ॥ ९ ॥
कृत्वा ममैव कार्याणि द्वादश्यां तत्र माधवि ।
ममैवाराधनार्थाय इमं मन्त्रमुदीरयेत् ॥ १० ॥

मन्त्रः—ब्रह्मणा च रुद्रेण यः स्तूयमानो भवानृषिवन्दितो वन्दनीयश्च प्राप्ता द्वादशीयंते प्रबुध्यस्व जागृष्व मेघा गताः पूर्णश्चन्द्रः शारदानि पुष्पाणि लोकनाथ तुभ्यमहं ददानीति धर्महेतोस्तव प्रीतये प्रबुद्धं जाग्रन्तं लोकनाथ त्वां भजमाना यज्ञेन यजन्ते सत्रेण सत्रिणो वेदैः पठन्ति भगवन्तः शुद्धाः प्रबुद्धां जाग्रतो लोकनाथ

एवं कर्माणि कुर्वन्ते द्वादश्यां वै यशस्विनि ।
मम भक्ता व्रतं श्रेष्ठं ते यान्ति परमां गतिम् ॥ ११ ॥
एवं वै शारदः कर्म निखिलं कथितं मया ।
देवि संसारमोक्षार्थं मम भक्तसुखावहम् ॥ १२ ॥

इति प्रबोधिनी कर्म

अन्यच्च ते प्रवक्ष्यामि शैशिरं कर्म शोभनम् ।
यानि कर्माणि कुर्वन्ति पुंसो यान्ति परां गतिम् ॥ १३ ॥
शीतवाताभिसन्तप्ता मम भक्त्या व्यवस्थिताः ।
अनन्यमानसो भुत्वा योगाय कृतनिश्चयाः ॥
शिशिरे यानि कर्माणि पुष्पिताश्च वनस्पतीः ॥ १४ ॥
तैरेव चार्चनं कृत्वा जानुभ्यां पतितः क्षितौ ।
कराभ्यामञ्जलिं कृत्वा इमं मन्त्रमुदीरयेत् ॥ १५ ॥

मन्त्रः—शिशिरो भवान् धातरिमं लोकनाथ हिमम् दुस्तरं दुष्प्रवेशं कालं संसारान्मां तारयेमं धर्ता त्रिलोकनाथ ।

यस्त्वथैतेन मन्त्रेण शिशिरे कर्म कारयेत् ।
स गच्छेत् परमां सिद्धिं मम भक्त्या व्यवस्थितः ॥ १६ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
मासं मार्गशिरश्चैव वैशाखञ्च मम प्रियम् ॥ १७ ॥
अहं तत्र प्रवक्ष्यामि पुष्पादीनां च[1] यत्फलम् ।
नववर्षसहस्राणि नववर्षशतानि च ॥
तिष्ठते विष्णुलोकेऽस्मिन् यो ददाति स्म निश्चलम् ॥ १८ ॥
एकैकं गन्धपत्रञ्च दानमेतन्महत्फलम् ।
मतिमान् धृतिमान् भूत्वा गन्धपुष्पाणि दापयेत् ॥ १९ ॥

---

१. गन्धपत्रस्य इति वा पाठः ।

पुनरन्यत्प्रवक्ष्यामि गन्धपत्रस्य यत्फलम् ।
द्वादश्याञ्चैव यो दद्यात् त्रीन् मासांश्च समाहितः ॥ २० ॥
कौमुदस्य तु मासस्य मार्गशीर्षस्य वै तथा ।
वैशाखस्य तु मासस्य वनमालां सुपुष्पिताम् ॥ २१ ॥
एक चित्तं समाधाय गन्धपुष्पाणि यो न्यसेत् ।
वर्षाणि द्वादशैवेह तेन पूजा कृता भवेत् ॥ २२ ॥
शालपुष्पेण मिश्रेण कौमुद्यां गन्धकेन च । मासि मार्गशिरे भद्रे दद्यादुत्पलमिश्रितम् ।
एवं महत्फलं भद्रे गन्धपत्रस्य च स्मृतम् ॥ २३ ॥
श्रुत्वेति वचनं तस्य प्रश्रयेण तु माधवी । प्रहस्य प्रणयाद् वाक्यमित्युवाच वसुन्धरा ॥
प्रभो द्वादशमासाश्च षष्ट्युत्तरशतत्रयम । तत्र द्वावेव किं मह्यं भगवन् किं प्रशंससि ॥
द्वादशीं चापि देवेश प्रशंससि सदा मम ॥ २५ ॥
इति दृष्टस्तदा देव्या धरण्या स तु माधवः । प्रहस्य तामुवाचेदं वचनं धर्मसंश्रितम् ॥
शृणु तत्त्वेन मे देवि येनेमौ च मम प्रियौ । तिथीनां द्वादशी चापि सर्वयज्ञफलाधिका॥
त्वया द्विजसहस्रेभ्यो यत्फलं प्राप्नुयान्नरः । तदेकं सम्प्रदायैव द्वादश्यामभिविन्दति ॥
कौमुद्याञ्च प्रबुद्धोऽस्मि वैशाख्याञ्च समुद्धृतः। महानाधिहरो योगस्तेनैतत् प्रभवो धरे॥
अतः कौमुदिकायां तु वैशाख्यां यतमानसः । गन्धपत्रं करे गृह्य इमं मन्त्रमुदीरयेत् ॥
मन्त्रः—भगवन्नाज्ञापय ।
इमं बहुतरं नित्यं वैशाखं चैव कार्तिकम् । गृहाण गन्धपत्राणि धर्ममेवं प्रवर्धय ।
नमो नारायणेत्युक्त्वा गन्धपत्रं प्रदापयेत् ॥ ३१ ॥
पुष्पाणाञ्च प्रवक्ष्यामि यो गुणो यच्च वै फलम् ।
दत्त्वा वै गन्धपत्राणि पुष्पहस्तः शुचिर्नरः ।
ओं नमो वासुदेवायेत्युक्त्वा मन्त्रमुदीरयेत्[1] ॥ ३२ ॥
मन्त्रः—भगवन्नाज्ञापय सुमनांसीमानि अर्चयितुं
मां सुमनसं कुरु गृह्णीष्व सुमनस्कं देव सुगन्धेन ते नमः[2] ।
प्राप्नोति ददमानस्तु मम कर्मपरायणः । न जन्म मरणञ्चैव न ग्लानिं च वै क्षुधाम् ।
दिव्यं वर्षसहस्रं वै मम लोकेषु तिष्ठति ॥ ३३ ॥
एकैकस्य तु पुष्पस्य पुण्यमेतन्महत्फलम । सुमनो गन्धसम्भूतं यत्त्वया पूर्वपृच्छितम् ॥

इति वाराहपुराणे सुमनोगन्धादिमाहात्म्यं नाम
त्रयोविंशत्यधिकशततमोऽध्यायः ।

---

१. किञ्चिकं सुमनो गृह्य इमं मन्त्रमुदीरयेत् इति पाठान्तरम् ।
२. भगवन्नाज्ञापय यतिसुमनो भगवन्नर्चा विशुद्धात्मा ।
विनिश्चिताः गृह्णीष्व सुमनस्केन देव देव सुगन्धकाः इति वा पाठः ।

# चतुर्विंशत्यधिकशततमोऽध्यायः

वराह उवाच

फाल्गुनस्य तु मासस्य शुक्लपक्षस्य द्वादशीम् ।
गृह्य वासन्तिकान् पुष्पान् सुगन्धा ये क्रमागताः ॥ १ ॥
श्वेतं पाण्डुरकञ्चैव सुगन्धं शोभनं बहु । विधिना मन्त्रयुक्तेन सुप्रीतेनान्तरात्मना ॥२॥
तत एवं विधिं कृत्वा सर्वं भागवतः शुचिः ।
यस्तु जानाति कर्माणि विधिदृष्टेन कर्मणा ॥ ३ ॥
विधिना मन्त्रपूतेन कुर्याच्छान्तमनोमलः । नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ॥
मन्त्रः—ओं नमोऽस्तु देवदेवेश शङ्खचक्रगदाधर ।
नमोऽस्तु ते लोकनाथ प्रवीराय नमोऽस्तु ते ॥ ५ ॥
संपुष्पितस्येह वसन्तकाले वनस्पतेर्गन्धरसप्रयुक्ताः ।
पश्यंश्च मां[1] पुष्पितपादपेन्द्रं वसन्तकाले समुपागते च ॥ ६ ॥
यश्चैतेन विधानेन कुर्यान्मासे तु फाल्गुने ।
न स गच्छति संसारं मम लोकाय गच्छति ॥ ७ ॥
यत्तु पृच्छसि सुश्रोणि मासे वैशाख उत्तमे ।
शुक्लपक्षे तु द्वादश्यां यत्फलं तच्छृणुष्व मे ॥ ८ ॥
पुष्पितेषु च शालेषु तथाऽन्येषु द्रुमेषु च ।
गृहीत्वा शाल[1]पुष्पाणि मम कर्मणि संस्थितः ॥ ९ ॥
कृत्वा तु मम कर्माणि शुभानि तरुणानि च ।
पूज्य भागवतान् सर्वान् स्थापयित्वा ततोऽग्रतः ॥ १० ॥
ऋषयः स्तुवन्ति मन्त्रेण वेदोक्तेन च माधवि । गन्धर्वाप्सरसश्चैव गीतनृत्यैः सवादितैः॥
स्तुवन्ति देवलोकाय पुराणं पुरुषोत्तमम् । सिद्धविद्याधरा यक्षाः पिशाचोरगराक्षसाः ॥
स्तुवन्ति देवं भूतानां सर्वलोकस्य चेश्वरम् ।
आदित्यवसवो रुद्रा अश्विनौ च मरुद्गणाः ॥ १३ ॥
स्तुवन्ति देवदेवेशं युगानां संक्षयेऽक्षयम् ।
ततो वायुश्च विश्वे च अश्विनौ च समन्विताः ॥ १४ ॥
स्तुवन्ति केशवं देवमादिकालमयं प्रभुम् । ततो ब्रह्मा च सोमश्च शक्रश्चाग्निसमन्वितः॥
स्तुवन्ति नाथं भूतानां सर्वलोकमहेश्वरम् ॥ १५ ॥
नारदः पर्वतश्चैव असितो देवलस्तथा । पुलहश्च पुलस्त्यश्च भृगुश्चाङ्गिर एव च ॥
एते चान्ये च बहवो मित्रावसुपरावसू । स्तुवन्ति नाथं भूतानां योगिनां योगमुत्तमम्॥

---

१. पश्येदिदं इति वा पाठः ।        १. बाण० इति वा पाठः ।

श्रुत्वा तु प्रतिनिर्घोषं देवानां तु महौजसाम्।
ततो नारायणो देवः प्रत्युवाच वसुन्धराम् ॥ १८ ॥

किमयं श्रूयते शब्दो ब्रह्मघोषेण चोदितः[1]। देवानाञ्च महाभागे महाशब्दोऽत्र श्रूयते ॥
ततः कमलपत्राक्षी सर्वरूपगुणान्विता। वराहरूपिणं देवं प्रत्युवाच वसुन्धरा ॥ २० ॥
देवाः काङ्क्षन्ति ते देव वाराहीं रूपसंस्थितिम्। तन्नियोगनियुक्ताश्च तदर्थं लोकभावन ॥

ततो नारायणो देवः पृथिवीं प्रत्युवाच ह।
अहं जानामि तां देवि मार्गमाणानुपस्थितान् ॥ २२ ॥

दिव्यं वर्षसहस्रं वै धारितासि वसुन्धरे। मया लीलायमानेन एकदंष्ट्राग्रकेण[2] वै ॥२३॥

इहागच्छामि भद्रं ते द्रष्टुकामा दिवौकसः।
आदित्या वसवो रुद्राः स्कन्देन्द्रः सपितामहाः ॥ २४ ॥
एवं तस्य वचः श्रुत्वा माधवस्य वसुन्धरा।
शिरसा चाञ्जलिं कृत्वा ततस्तच्चरणे[3]ऽपतत्।
वाराहं पुरुषं देवं विज्ञाप्यति वसुन्धरा ॥ २५ ॥
उद्धृतास्मि त्वया देव रसातलगता ह्यहम्।
शरणं त्वां प्रपन्नाहं त्वद्भक्ता[4] त्वं गतिः प्रभुः ॥ २६ ॥
किं कर्म कर्मणा केन किं वा जन्मपराथणम्।
कथं वा तुष्यसे देव पूज्यः केनासि[5] कर्मणा ॥ २७ ॥
तदहं कारयिष्यामि कर्म स्मार्त[6] सुखावहम्।
न च मेऽस्ति व्यथा काचित् तव कर्मणि नित्यशः ॥ २८ ॥

न ग्लानिर्न जरा काचिन्न जन्ममरणे तथा। सर्वे सुरासुरा लोकाः सरुद्रेन्द्रपितामहाः

क्व ते[7] निवासं कुर्वन्ति एकैकञ्च यशोधर[8] ॥ २९ ॥
कानि कर्माणि कुर्वन्ति ये त्वां पश्यन्ति माधव।
किमाहाराः किमाचारास्त्वां पश्यन्तीह माधव ॥ ३० ॥
ब्राह्मणस्य च किं कर्म क्षत्रियस्य च किं भवेत्।
वैश्यः किं कुरुते कर्म शूद्रः किं कर्म कारयेत् ॥ ३१ ॥

---

१. संयुतः इति पाठान्तरम्। २. क्रमेण इति वा पाठः।
३. शिरस्यञ्जलिमाधाय ततस्तु चरणे इति क्वचित् पाठः।
४. शरणं त्वामवाप्ता वै तद्भक्ता इति वा पाठः।
५. पूज्यसे केन इति पाठान्तरम्।
६. तवाहं कर्तुमिच्छामि मुख्यं इति पाठान्तरम्।
७. क्वेष्टं इति वा पाठः। ८. ते वा कस्य किमात्मका इति पाठान्तरम्।

योगो वै प्राप्यते केन तपो वा केन निश्चितम् ।
किञ्चात्र फलमाप्नोति तव कर्मपरायणः ॥ ३२ ॥

किञ्च दुःखनिवासं वा भोजनं पानकं तथा ।
किञ्च कर्म प्रयोक्तव्यं तव भक्तैश्च माधव ।
प्रापणं कीदृशञ्चापि दिशासु विदिशासु च[१] ॥ ३३ ॥

कथं योनिं न गच्छेत वियोनिं न च गच्छति ।
तिर्यग्योनिं न गच्छेत कर्मणा केन केशव ॥
तन्ममाचक्ष्व सकलं येन चैव सुखं भवेत् ॥ ३४ ॥

जरा वा केन गच्छेत जन्म वा केन गच्छति ।
गर्भवासं न गच्छेत कर्मणा केन वाच्युत ।
संसारस्य न गच्छेत कस्य[२] कर्मप्रभावतः ॥ ३५ ॥

इत्युक्तो भगवांस्तत्र प्रत्युवाच वसुन्धराम् ।
शृण्वन्तु मे भागवता ये च मोक्षे व्यवस्थिताः ।
तान् मन्त्रान् कीर्तयिष्यामि यैस्तोषयामि नित्यशः ॥ ३६ ॥

मन्त्रः—मासेषु सर्वेषु च मुख्यभूतस्त्वं[३] माधवो माधवमास एव ।
पश्येद्देवं तं तु वसन्तकाले उपागतं गन्धरसप्रयुक्त्या ।
नित्यञ्च यज्ञेषु तथेज्यते यो नारायणः सप्तलोकेषु वीरः ॥ ३७ ॥

एवं ग्रीष्मे विधिञ्चैव कुर्यात् सर्वं विधानतः[४] ।
इममुच्चारयेन्मन्त्रं सर्वभागवतप्रियम् ॥ ३८ ॥

मासेषु सर्वेष्वपि मुख्यभूतो मासो भवान् ग्रीष्म एकः प्रपन्नः ।
पश्येत भवन्तं त्वनुग्रीष्मकाले[५] तेनैव सर्वं दुःखमेतु प्रशान्तिम् ॥ ३९ ॥

एतेनैव विधानेन[६] मम चैवार्चनं कुरु । न जन्म मरणं तस्य मम लोके गतिर्भवेत् ॥
यावन्तः पुष्पिताः शालाः पृथ्व्वा यावत् सुगन्धकाः ।
अर्चितः स भवेत् सर्वैः कृतो येन ह्ययं विधिः ॥ ४१ ॥
एवं वर्षास्वपि धरे[७] मम कर्म च कारयेत् ।
निष्कला भवते बुद्धिः संसारे च न जायते ॥ ४२ ॥
अन्यच्च ते प्रवक्ष्यामि कर्म संसारमोक्षणम् ।

---

१. कासु दिक्षु तथा प्रभो । २. केन ।
३. मास ।
४. ममोक्तितः । ५. वर्तनमानं ग्रीष्मे ।
६. एवं ग्रीष्मे वरारोहे । ७. एवं माधवमासे च ।

कदम्बकुटजाश्चैव[1] [2]सरलार्जुनपादपाः ।
एतेषां सुमनोभिश्च पूजनीयो महादरात् ॥ ४३ ॥
मम संस्थापनं कृत्वा विधिदृष्टेन कर्मणा ।
नमो नारायणायेति इमं मन्त्रमुदाहरेत् ॥ ४४ ॥
पश्यन्ति ये ध्यानपरा घनाभं त्वामाश्रिता पूज्यमानं महिम्ना ।
निद्रां भवान् भजतां लोकनाथ वर्षास्विमं पश्यतु मेघवर्णम्[3] ॥ ४५ ॥
आषाढमासे द्वादश्यां सर्वशान्तिकरं शुभम् ।
य एतेन विधानेन मम कर्म तु कारयेत् ।
स मर्त्यो न प्रणश्येत संसारेऽस्मिन् युगे युगे ॥ ४६ ॥
एतत्ते कथितं देवि ऋतूनां कर्म चोत्तमम् ।
तरन्ति येन संसारं नराः कर्मपरायणाः ॥ ४७ ॥
एतद्गुह्यं महाभागे देवाः केऽपि न जानते ।
मुक्त्वा नारायणं देवं वराहं रूपमास्थितम् ॥ ४८ ॥
नादीक्षिताय दातव्यं मूर्खाय पिशुनाय च ।
कुशिष्याय न दातव्यं ये च शास्त्रार्थदूषकाः ॥ ४९ ॥
न पठेद् गोघ्नमध्ये वै न पठेच्छठमध्यतः ।
धनधर्मक्षयस्तेषां पठनादाशु जायते ।
पठेद् भागवतां[4] मध्ये ये च धर्मेण दीक्षिताः ॥ ५० ॥
एतत्ते कथितं भद्रे पूर्वं यत् पृष्टवानसि[5] ।
कार्त्स्न्येन कथितं ह्येतत् किमन्यत् परिपृच्छसि ॥ ५१ ॥

इति वाराहपुराणे भगवच्छास्त्रे ऋतूपकरणं नाम
चतुर्विंशत्यधिकशततमोऽध्यायः ।

---

१. मुकुला ।
२. शल्लका० ।
३. एभिरेवार्चनं कुर्याद्विधिदृष्टेन कर्मणा ।
४. भागवतानाम् ।
५. एतेन कर्मणा भद्रे यत्त्वया परिपृच्छितम् ।

# पञ्चविंशत्यधिकशततमोऽध्यायः

सूत उवाच

श्रुत्वा षड्ऋतुकर्माणि पृथिवी शंसितव्रता। ततो नारायणं भूयः प्रत्युवाच वसुन्धरा ॥

मङ्गल्याश्च पवित्राश्च ये त्वया समुदाहृताः।
मम लोकेषु विख्याता मनः प्रह्लादयन्ति ते ॥ २ ॥
श्रुत्वा त्वेतानि कर्माणि त्वन्मुखोक्तानि माधव।
जातास्मि निर्मला देव शशाङ्क इव शारदः ॥ ३ ॥

एतन्मे परमं गुह्यं परं कौतूहलं तथा। मम चैव हितार्थाय त्वं विष्णो वक्तुमर्हसि ॥

यामेनां भाषसे देव मम मायेति नित्यशः।
का माया कीदृशी विष्णो किंवा मायेति चोच्यते।
ज्ञातुमिच्छामि मायार्थं रहस्यं परमुत्तमम् ॥ ५ ॥
ततस्तस्या वचः श्रुत्वा विष्णुर्मायाकरण्डकः।
प्रत्युवाच तदा वाक्यं प्रहस्य तु वसुन्धराम्[1] ॥ ६ ॥
भूमे मा पृच्छ मायां मे यन्मां पृच्छसि सादरम्[2]।
वृथा क्लेशं किमर्थं त्वं प्राप्स्यसे यद्विलोकनात्[3] ॥ ७ ॥
अद्यापि मां न जानन्ति रुद्रेन्द्राः सपितामहाः।
मम मायां विशालाक्षि किं पुनस्त्वं वसुन्धरे ॥ ८ ॥

पर्जन्यो वर्षते यत्र तज्जलेन प्रपूर्यते[4]। देशो निर्जलतां याति एषा माया मम प्रिये ॥

सोमो यत्क्षीयते पक्षे पक्षे वापि च वर्धते।
अमायां न स दृश्येत मायेयं मम तत्त्वतः[5] ॥ १० ॥

हेमन्ते सलिलं कूपे उष्णं भवति सुन्दरि[6]। भवेच्च शीतलं ग्रीष्मे मायेयं मम तत्त्वतः ॥

पश्चिमां दिशिमास्थाय यदस्तं याति भास्करः।
उदेति पूर्वतः प्रातर्मायेयं मम सुन्दरि[7] ॥ १२ ॥
शोणितश्चैव शुक्रश्च उभे ते प्राणिसंस्थिते।
गर्भे च जायते जन्तुर्मायेयं मम सुन्दरि ॥ १३ ॥
जीवः प्रविश्य गर्भं तु सुख-दुःखे च विन्दति।
जातश्च विस्मरेत् सर्वमेषा माया ममोत्तमा ॥ १४ ॥

---

१. प्रहस्य मधुरं वाचं प्रत्युवाच वसुन्धराम्।
२. इयं का भूमि ते माया यन्मां त्वं परिपृच्छसि।
३. किञ्च मां क्लिश्यते भूमिर्न मायां ज्ञातुमर्हसि।
४. प्रपूरयेत्।
५. सुन्दरि।
६. तत्त्वतः।
७. मम मायेत्यनुत्तमा।

आत्मकर्माश्रितो जीवो नष्टसंज्ञो गतस्पृहः ।
कर्मणा नीयतेऽन्यत्र मयैषा मम चोत्तमा ॥ १५ ॥
शुक्रशोणितसंयोगाज्जायते मम जन्तवः ।
अङ्गुल्यश्चरणौ चैव भुजौ शीर्षं कटिस्तथा ॥ १६ ॥
पृष्ठं तथोदरं चैव दन्तौष्ठपुटनासिकाः ।
कर्णौ नेत्रे कपोलौ च ललाटं जिह्वया सह ॥ १७ ॥
एतया मायया युक्ता जायन्ते यदि जन्तवः । तस्यैव जीर्यते भुक्तमग्निना पीतमेव च ।
अधश्च श्रवते जन्तुरेषा माया ममोत्तमा ॥ १८ ॥
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः ।
अन्नात् प्रवर्तते जन्तुरेषा माया मम प्रिया ॥ १९ ॥
सर्वर्तुषु निजाकारः स्थावरे जङ्गमे तथा । तत्त्वं न ज्ञायसे तस्य मयैषा मम सुन्दरि ॥
आपो दिव्यास्तथा भौमा आपो येषु प्रतिष्ठिताः ।
नद्यो वृद्धिं[1] प्रयान्त्यत्र मयैषा मम सुन्दरि[2] ॥ २१ ॥
वृष्टौ बहूदकाः सर्वे[3] पल्वलानि सरांसि च ।
ग्रीष्मे सर्वाणि शुष्यन्ति एतन्मायाबलं मम ॥ २२ ॥
हिमवच्छिखरान्मुक्ता नाम्ना मन्दाकिनी नदी ।
गां गता सा भवेद् गङ्गा मायैषा मम कीर्तिता ॥ २३ ॥
मेघा वहन्ति[4] सलिलमुद्धृत्य लवणार्णवात्[5] ।
वर्षन्ति मधुरं लोके एतन्मायाबलं मम ॥ २४ ॥
रोगार्ता जन्तवः केचिद् भक्षयन्ति महौषधम् ।
तस्य वीर्यं समाश्रित्य मायां तु विसृजाम्यहम् ॥ २५ ॥
औषधे दीयमानेऽपि जन्तुः पञ्चत्वमेति यत् ।
निर्वीर्यमौषधं कृत्वा कालो भूत्वा हराम्यहम् ॥ २६ ॥
प्रथमं जायते गर्भः पश्चादुज्जायते पुमान् ।
जायते मध्यमं रूपं ततोऽपि जरया युवः[6] ।
तत इन्द्रियनाशश्च एतन्मायाबलं मम ॥ २७ ॥
यद्भूमौ निहितं बीजं तस्मात् तज्जायतेऽङ्कुरम् । पुनश्च पत्रादियुतमेतन्मायाबलं मम ॥
एकबीजात् प्रकीर्णाद् वै जायन्ते तानि भूरिशः ।
तत्रामृतं विसृजामि[7] मायायोगेन भूरिशः[8] ॥ २९ ॥

---

१. न च वृद्धिम् ।
२. मायैषा परमा मम ।
३. अत्र पुंस्त्वमार्षम् ।
४. वर्षन्ति ।
५. लवणं सलिलार्णवे ।
६. मध्यमस्तत्र ततोऽपि जरसा पुनः ।
७. वै सृजामि ।
८. माधवि ।

लोक एवं विजानाति गरुडो वहतेऽच्युतम्।
भूत्वा वेगेन गरुडो वहाम्यात्मानमात्मना ॥ ३० ॥
या एता देवताः सर्वा यज्ञभागेन तोषिताः।
मायामेतामहं कृत्वा तोषयामि दिवौकसः[1] ॥ ३१ ॥
लोकाः सर्वे विजानन्ति देवा नित्यं मखाशिनः।
मायामेतामहं कृत्वा यक्ष्यामि त्रिदिवौकसः ॥ ३२ ॥
सर्वोऽपि भजते लोको यष्टारञ्च बृहस्पतिम्।
मायामाङ्गिरसीं कृत्वा याजयामि दिवौकसः[2] ॥ ३३ ॥
सर्वे लोकाः विजानन्ति वरुणः पतिः सागरम्।
मायां तु वरुणीं कृत्वा रक्षामि च महार्णवम्[3] ॥ ३४ ॥
सर्वे लोका विजानन्ति कुवेरोऽयं धनेश्वरः।
कुवेरमायामादाय अहं रक्षामि तद्धनम् ॥ ३५ ॥
एवं लोका विजानन्ति वृत्र शक्रेण सूदितः।
शाक्रीमायां समास्थाय मया वृत्रो निषूदितः ॥ ३६ ॥
एवं लोका विजानन्ति आदित्यश्च ध्रुवो महान्।
मेरुं मायामयं कृत्वा वहाम्यादित्यमेव च ॥ ३७ ॥
एवमाभाषते लोको जलं वा[4] नश्यतेऽखिलम्।
बडवामुखमास्थाय पिबामि तदहं जलम् ॥ ३८ ॥
वायुं मायामयं कृत्वा मेघेषु विसृजाम्यहम्।
यदेदं भाषते लोकः कुत्रैतत्तिष्ठते जलम् ॥ ३९ ॥
देवा अपि न जानन्ति अमृतं कुत्र तिष्ठति।
मम मायानियोगेन तिष्ठति ह्यौषधं वने ॥ ४० ॥
लोको ह्येवं विजानाति राजा पालयते प्रजाः।
राजामायामहं कृत्वा पालयामि वसुन्धराम् ॥ ४१ ॥
ये तु वै द्वादशादित्या उदेष्यन्ति युगक्षये।
प्रविश्य तमहं भूमे मायां लोके सृजाम्यहम् ॥ ४२ ॥
सूर्यस्य चांशुना भूमे[5] लौकेषु पत्यते सदा।
मायामंशुमयीं कृत्वा पूरयाम्यखिलं जगत् ॥ ४३ ॥
वर्षन्ते यत्र संवर्ता घनैर्मुशलसन्निभैः।
मायां सांवर्तकीं गृह्य पूरयाम्यखिलं जगत् ॥ ४४ ॥

---

१. पृच्छामि त्रिदिशान् सदा।
२. दिवौकसाम्।
३. मोहयामि महोदधिम्।
४. जले किम्।
५. भूमि।

यत् स्वपामि वरारोहे शेषस्योपरि धारिणि ।
अनन्तमायया चाहं धारयामि[1] स्वपामि च ॥ ४५ ॥
वराहमायामादाय भूमे जनासि किं न वै ।
देवा यत्र निलीयन्ते सा माया मम कीर्तिता ॥ ४६ ॥
त्वञ्चापि वैष्णवीं मायां कृत्वा जानासि किं न तत्[2] ।
धारितासि च सुश्रोणि वारान् सप्तदशैव तु ॥ ४७ ॥
माया तु मम देवीयां कृत्वा ह्येकार्णवां महीम् ।
मम मायाबलं ह्येतद् येन तिष्ठाम्यहं जले[3] ॥ ४८ ॥
प्रजापतिश्च रुद्रश्च सृजामि च वहामि च[4] ।
तेऽपि मायां न जानन्ति मम मायाविमोहिताः ॥ ४९ ॥
अथो पितृगणाश्चापि य एते सूर्यवर्चसः[5] ।
मायां पितृमयीं ह्येतां गृह्णामीति च तत्त्वतः ॥ ५० ॥
किन्तु त्वयैव सुश्रोणि अन्यच्च शृणु सुन्दरि ।
ऋषिर्मायानुसारेण स्त्रीयोनिं च प्रवेशितः ॥ ५१ ॥
ततो विष्णोर्वचः श्रुत्वा श्रोतुकामा वसुन्धरा ।
कराभ्यामञ्जलिं कृत्वा वाक्यमेतदब्रवीत् ॥ ५२ ॥
किं तेन ऋषिमुख्येन कृतं कर्म सुदुष्करम् ।
स्त्रीत्वञ्चैव पुनः प्राप्तं स्त्रीयोनिञ्चैव प्रापितः[6] ॥ ५३ ॥
एतन्मे सर्वमाख्याहि परं कौतूहलं मम ।
तस्य ब्राह्मणमुख्यस्य स्त्रीत्वे यत् कर्म पापकम् ॥ ५४ ॥
ततो मह्या वचः श्रुत्वा हृष्टतुष्टमना[7] हरिः ।
मधुरं वाक्यमादाय प्रत्युवाच वसुन्धराम् ॥ ५५ ॥
शृणु तत्त्वेन मे देवि धर्माख्याने च सुन्दरि[8] ।
माया मम विशालाक्षि रोहिणी लोमहर्षिणी ॥ ५६ ॥
मायाया मम योगेन सोमशर्मा च कर्शितः[9] ।
गतो गतीरनेकाश्च उत्तमाधममध्यमाः ।
ब्राह्मणत्वं पुनः प्राप्तो मम मायाप्रणोदितः ॥ ५७ ॥
यथा ब्राह्मणमुख्येन प्राप्ता स्त्रीयोनिरेव च[10] ।
न तस्य विकृतं कर्म अपराधो न विद्यते ॥ ५८ ॥

---

१. तां वहामि स्वपामि च । २. कस्माज्जानासि नैव च ।
३. जलम् । ४. हरामि च । ५. सूर्यतेजसः ।
६. प्रजापतिः । ७. हृष्टपुष्टमना । ८. महामते ।
९. क्लेशितः । १०. स्त्रीयोनिश्च प्रापिता ।

ममैवाराधनपरो मम कर्मपरायणः । नित्यं चिन्तयते भूमे मम मूर्तिं मनोरमाम् ॥
अथ दीर्घेन कालेन तस्य तुष्टोऽस्मि सुन्दरि ।
तपसा कर्मणा भक्त्या अनन्यमनसा स्तुतः ॥ ६० ॥
ततस्तस्य मया देवि दत्त्वा दर्शनमुत्तमम् ।
वरेण छन्दितो विप्रस्तूपस्तुष्टोऽस्मि[1] ते द्विज ॥ ६१ ॥
वरं वरय भद्र ते तव यद् हृदि वर्तते ।
रत्नानि काञ्चनं गावस्तथा राज्यमकण्टकम् ॥ ६२ ॥
अथ वेच्छसि तं स्वर्गं यत्र सौख्यं वराङ्गनाः[2] ।
धनरत्नं समृद्धं हि हेमभाण्डविभूषितम् ॥ ६३ ॥
यत्र सर्वा दिव्यरूपा भवन्त्यप्सरसः पराः ।
ददामि ते वरं विप्र यावत्ते चित्तचिन्तित्[3] ॥ ६४ ॥
ततो मम वचः श्रुत्वा स च ब्राह्मणपुङ्गवः ।
शिरसा पतितो भूमौ मामुवाच प्रियं वचः[4] ॥ ६५ ॥
अथ नो कुप्यसे देव वरं समनुयाचते ।
यत्त्वया भाषितं देव मम देयं यदृच्छया ॥ ६६ ॥
न चाहं काञ्चनं गावो न च स्त्रीराज्यमेव च ।
स्वर्गं वाप्सरसो वापि[5] ऐश्वर्यं न मनोहरम् ॥ ६७ ॥
तथा स्वर्गसहस्राणामेकञ्चापि न रोचते ।
ज्ञातुमिच्छामि ते मायां यया क्रीडसि माधव ॥ ६८ ॥
ततस्तस्य वचः श्रुत्वा स माया तत्र भाषितः ।
किं मायया ते विप्रेन्द्र अकार्यं पृच्छसे द्विज ।
देवा अपि न जानन्ति विष्णुमायाविमोहिताः ॥ ६९ ॥
ततो मम वचः श्रुत्वा स च ब्राह्मणपुङ्गवः ।
उवाच मधुरं वाक्यं मायया च प्रणोदितः ॥ ७० ॥
यदि तुष्टोऽसि मे देव कर्मणा तपसाऽथवा ।

---

१. साधुतुष्टोऽस्मि । २. स्वर्गं वा यत्र ते चाप्सरोगणाः ।
३. अत्र चेच्छसि विप्रेन्द्र ऋषीणां चोत्तम ऋषिः ।
भविता भारतश्चैव मम कर्मपरायणः ।
अथ चेच्छसि कल्पानां सहस्रं दिव्यमुत्तमम् ॥
धनरत्नसमृद्धानां हेमभाण्डविभूषितम् ।
सर्वासां दिव्यरूपाणां भवन्त्यप्सरसोगणाः ।
ददामि ते वरं चैव विप्र यत्ते विचिन्तितम् ॥ इति ।
४. भूम्यामुवाच मधुरां गिरम् । ५. नाप्सरो नैव च स्वर्गमिति ।

तव देव प्रसादेन ममैवं दीयतां वरम् ॥ ७१ ॥
ततस्तु स मया प्रोक्तस्तपस्वी ब्राह्मणस्तथा ।
गच्छ कुब्जाम्रके गङ्गास्नातो मायान्तु गच्छसि ॥ ७२ ॥

ममैवं वचनं श्रुत्वा कृत्वा चैव प्रदक्षिणम् ।
कुब्जाम्रके देवि विप्रो मम मायाभिलाषुकः[1] ॥ ७३ ॥
ततः कुण्डी त्रिदण्डी च मात्राभाण्डञ्च यत्नतः ।
स्थापयित्वा यथान्यायं तीर्थमाराधयद्यथा[2] ॥ ७४ ॥

ततो ह्यवतरद् गङ्गां विधिदृष्टेन[3] कर्मणा । अवगाह्य ततो गङ्गां सर्वगात्रे च क्लेदिते[4]
तावन्निषादसदने तत्क्षागर्भे गतोऽभवत्[5] ॥ ७५ ॥
हृदयेऽचिन्तयत् तत्र गर्भक्लेशेन पीडितः ।
अहो कष्टं मया किं स्वित् कर्म[6] वा दुष्कृतं कृतम् ।
योऽहं निषादगर्भेऽस्मिन् वसामि नरकेषु च ॥ ७६ ॥
धिक् तयोर्धिक् च मे कर्म धिक् फल धिक् च जीवितम् ।
योऽहं निषादगर्भेऽस्मिन् पीडामि मलसङ्कुले[7] ॥ ७७ ॥
अस्थ्नां त्रिशतसङ्कीर्णे[8] नवद्वाराभिसंवृते । पुरीषमूत्रसङ्कीर्णे मांसशोणितकर्दमे ॥७८॥
दुर्गन्धे दुःसहे चैव वातिकश्लेष्मपैत्तिके । बहुरोगसमाकीर्णे बहुदुःखसमाकुले ।
अलं किं तेन चोक्तेन दुःखान्यनुभवामि च ॥ ७९ ॥
कुतो विष्णुः कुतो वाहं कुतो गङ्गा जलानि च ।
गर्भसंसारनिष्क्रान्तः पश्चादाप्स्यामि तां क्रियाम् ॥ ८० ॥
एवं चिन्तयमानस्तु शीघ्रं गर्भाद् विनिःसृतः ।
भूम्यां तु पततस्तस्य नष्टं यत् पूर्वचिन्तितम्[9] ॥ ८१ ॥
अजायत[10] ततः कन्या निषादस्य गृहे तदा ।
धन-धान्य-समृद्धस्य वर्तते स च ब्राह्मणः ॥ ८२ ॥
न च संज्ञायते किञ्चिद् विष्णु[11] माया प्रमोहिता ।
अथ दीर्घस्य कालस्य कृतोद्वाहा यशस्विनी ।
पुत्रान् दुहितरश्चैव जनयामास मायया ॥ ८३ ॥

---

१. मायाभिकाङ्क्षय । २. तीर्थान्याराधयद्यथा ।
३. विधिश्रेष्ठेन । ४. सर्वगात्राणि क्लेदिता ।
५. निषादस्य गृहे गर्भस्तिष्ठते स च ब्राह्मणः ।
६. किञ्चित् । ७. घनसङ्कुले ।
८. त्रिभिश्चा हि ह्येतैः पूर्वो इति (ग) अस्मात: परं षट् पादा न सन्ति ।
९. नष्टं तद्धि विचिन्तितम् । १०. प्रजाता सा । ११. विष्णोः ।

भक्षाभक्षञ्च खादेत पेयापेयञ्च तत्पिबेत् ।
जीवानि चैव सततं घातितानि ततस्ततः ॥ ८४ ॥
कार्याकार्यं न जानीते वाच्यावाच्यं तथेति च ।
गम्या गम्यं न जानाति मायाजालेन मोहितः[1] ॥ ८५ ॥
पञ्चाशद्वर्षके काले मया ख्यातः स ब्राह्मणः ।
घटं गृहीत्वा विड्लिप्तवस्त्रक्षालनकारणात् ॥ ८६ ॥
तीरे निक्षिप्य वस्त्रं स घटञ्च विनिधाय हि ।
स्नातुं गङ्गाजले स्थित्वा विगाहयति जाह्नवीम् ॥ ८७ ॥
प्रस्वेदघर्मसन्तप्तः स शिरःस्नानमीहते[2] । जातस्तपोधनस्तत्र दण्डी कुण्डीधरः पुनः ॥
यत्र[3] पश्यति विप्रोऽसौ मात्रां कुण्डीन् त्रिदण्डकम् ।
वस्त्रादि दर्शितञ्चैव यत्र संस्थापितं पुरा ॥ ८९ ॥
तत्तेन सर्वं सन्दृष्टं जाते ज्ञाने तु पूर्ववत्[4] ।
विप्रेण ज्ञातुकामेन विष्णुमायां यथा पुरा[5] ॥ ९० ॥
तत उत्तरतस्तत्र गङ्गायां तु तपोधनः । सव्रीडो गृह्णते[6] वासो योगञ्च परिचिन्तयन् ॥
उपविश्य च[7] गङ्गायाः पुलिने समवालुके ।
ततो विन्दति चात्मानं तपसा यत्तदा कृतम्[8] ॥ ९२ ॥
मया किं कर्म पापेन कृतं निन्द्यं सुदुष्करम् ।
एवं निन्दति चात्मानं धिक्कुर्वन् साधुदूषितम्[9] ।
आचारो वा परिभ्रष्टो येनाहं प्रापितस्त्विमाम् ॥ ९३ ॥
निषादस्य कुले जातो भक्ष्याभक्ष्याश्च भक्षिताः[10] ।
जीवाश्च घातिताः सर्वे जलस्थलदिवौकसः[11] ॥ ९४ ॥
पेयापेयञ्च मे पीतं विक्रीतांश्चाप्यविक्रयाः ।
अगम्यागमनञ्चैव वाच्यावाच्यं न रक्षितम् ॥ ९५ ॥
वेश्मन्यभोज्यभोज्यञ्च भुक्तं चैव न संशयः ।
पुत्रा दुहितरश्चैव निषादाज्जनिता मया ॥ ९६ ॥
ततः किञ्चापराधं वा केन वा तद्विचिन्तये ।
येनाहं प्रापितो ह्येनां नैषादीमीदृशीं दशाम् ॥ ९७ ॥

---

१. मायया मम मोहितः । आत्मविक्रयमेव च ।
२. सशिरश्चायमीहते । ३. ततः ।
४. एतद (ग) नास्ति । ५. जातज्ञानेन विष्णुमायाभिकाङ्क्षिणा ।
६. गृह्णाति । ७. उपविश्यात्र ।
८. तद् विगर्हितम् । ९. एतदर्धं (ग) नास्ति ।
१०. भक्ष्याभक्ष्यञ्च भक्षितम् । ११. जलजाः स्थलजाश्च ये ।

एतस्मिन्नन्तरे भूमे निषादः क्रोधमूर्च्छितः । पुत्रैः परिवृतस्तत्र मायातीर्थमुपागतः ॥९८॥

ततो मृगयते भार्यां भक्तियुक्तां शुभेक्षणाम्[1] ।
परिपृच्छति चैकैकं तप्यमानं तपोधनम्[2] ॥ ९९ ॥

किं नु पश्यथ भार्या मे गङ्गातीरमुपागता । घटमादाय हस्तेन आगता जलकारणात् ॥

तत्रैव च नराः सर्वे मायातीर्थमुपागताः ।
पश्यन्तेऽत्र परिव्राजं कुम्भञ्चैव यथास्थितम् ॥ १०१ ॥
ततो दुःखेन सन्तप्तः अपश्यंश्च स्वकां प्रियाम् ।
दृष्ट्वा पटञ्च कुम्भञ्च करुणं पर्यवेदयत् ॥ १०२ ॥
इदं वासश्च कुम्भञ्च नदीकूले च तिष्ठति ।
न चापि दृश्यते भार्या मम गङ्गामुपागता ॥ १०३ ॥
अथ केनापि ग्राहेण स्नायमाना तपस्विनी ।
गृहीता तोयमध्यं तु जिह्वालोडेन चाबला ॥ १०४ ॥
न चाप्रियं मयाऽप्युक्ता कदाचिदपि वाचकम् ।
स्वप्नेऽपि नोक्तपूर्वासि कदाचिदपि चाप्रियम् ॥ १०५ ॥
अथवापि पिशाचेन भक्षिता भूतराक्षसैः ।
आकृष्टा किं नु रोगेण गङ्गातीरं समाश्रिता ॥ १०६ ॥
किं कृतं दुष्कृतं पूर्वं मया कर्म सुसङ्कटम् ।
येन मत्पुरतो भार्याऽप्यदृष्टा विगतिं गता ॥ १०७ ॥
एहि मे सुभगे कान्ते मम चित्तानुवर्तिनि ।
पश्यैतान् बालकान् भीतान् क्लिश्यमानानितस्ततः ॥ १०८ ॥
मां पश्यस्व[3] वरारोहे त्रीन् पुत्रानतिबालकान् ।
दुहितॄः पश्य चत्वारि स्रवन्तु मम मानदे ॥ १०९ ॥
मम पुत्रा रुदन्त्येते बालकास्तव लालसाः ।
नित्यञ्च दारिका रक्ष मम दुष्कृतकारिणः ॥ ११० ॥
कामं मां क्षुधितञ्चैव ज्ञास्यसे त्वं पिपासितम् ।
एवमुक्ता च कल्याणि मम भक्त्या व्यवस्थिता ॥ १११ ॥
एवं विलपमानस्य निषादस्य इतस्ततः[4] ।
सव्रीडं[5] भाषते विप्रो निषादं गच्छनास्ति सा ।

---

१. भक्तिमान् शुभलक्षणाम् । २. अतः परं (ग) पुस्तके—
क्व गतासि प्रियेऽस्माकं त्यक्त्वा पुत्रान् गृहे च माम् ।
बाल[illegible]हृता रोदिति क्षुधार्ता स्तनपायिनी ॥
[३]. पश्य इति । किं मां पश्य । ४. यतस्ततः । ५. सव्रीड ।

सुखं योगञ्च ते नीत्वा स गता ह्यनिवृत्तये[1] ॥ ११२ ॥
तं रुदन्तं तथा दृष्ट्वा कारुण्येन परिप्लुतः ।
निषादं भाषते तत्र गच्छ किं परिक्लिश्यसे[2] ॥ ११३ ॥
बालान् तान् परिरक्षस्व अहारैर्विविधैरपि । एते न त्यजनीयस्ते कदाचिदपि पुत्रकाः ॥
परिव्राजवचः श्रुत्वा निषादस्तस्य सन्निधौ ।
उवाच मधुरं वाक्यं दुःखशोकपरिप्लुतः[3] ॥ ११५ ॥
अहो मुनिवरश्रेष्ठ अहो धर्मभृतां वर[4] ।
सान्त्वितोऽस्मि त्वया विप्र वचनैर्मधुराक्षरैः[5] ॥ ११६ ॥
निषादस्य वचः श्रुत्वा स मुनिः संशितव्रतः ।
उवाच मधुरं वाक्यं दुःखशोकपरिप्लुतः[5] ॥ ११७ ॥
मारोदीर्वच्मि[6] भद्र ते तवाहं सा प्रियाऽभवम्[7] ।
गङ्गातीरं समासाद्य मुनिर्जातोऽस्म्यह तथा[8] ॥ ११८ ॥
परिव्राजवचः श्रुत्वा निषादो विगतज्वरः ।
श्लक्ष्णं वचनमादाय प्रत्युवाच द्विजोत्तमम् ॥ ११९ ॥
किमिदं भाषसे विप्र अव्यक्तं यत्कदाचन ।
न भाव वा यद्घटितं स्त्रियः पुंस्त्वं सदैव हि ॥ १२० ॥
निषादस्य वचः श्रुत्वा ब्राह्मणो दुःखमूर्च्छितः ।
उवाच मधुरं वाक्यं गङ्गातीरे च धीवरम् ॥ १२१ ॥
शीघ्रं गच्छ स्वकं देशमेतान् गृह्य स्वबालकान् ।
सर्वेषाञ्च यथासंख्यं स्नेहः कर्तव्य एव च ॥ १२२ ॥
स तेन चोदितो ह्येवं निषादो नावगच्छति ।
मधुरं स्वरमादाय प्रत्युवाच द्विजोत्तमम्[9] ॥ १२३ ॥
किं त्वया दुष्कृतं कर्म कृतं पूर्वं पुरातनम् ।
मम यद्भाषसे चैव स्त्रीत्वं प्राप्तोऽसि तत्कथम्[10] ॥ १२४ ॥
केन दोषेण प्राप्तस्त्वं स्त्रीत्वं भूत्वा पुमान् पुनः ।
पुंस्त्वं चैव कथं प्राप्त एतदाचक्ष्व पृच्छतः[11] ॥ १२५ ॥

---

१. सुखं योगं समाख्यातं पुत्रभार्यागतो हि यः । २. परिक्लिश्यसि ।
३. परिप्लुतम् । ४. धर्मविदां वर ।
५. एतदर्धं (ग) नास्ति । ६. वत्स ।
७. प्रवरस्त्रियः । ८. जातोऽस्मि च तत्र स्त्रिया ।
९. स ब्राह्मणम् । १०. अहं तेऽद्य वरस्त्रियः ।
११. केन दोषेण प्राप्तस्त्वं स्त्रीयत्वं च ऋषिपुङ्गव ।
मुनित्वं च कथं प्राप्तं एतदाचक्ष्व पृच्छतः ॥

एवं तस्य वचः श्रुत्वा स ऋषिः संशितव्रतः।
उवाच मधुरं वाक्यं मायातीर्थजलेचरम् ॥ १२६ ॥
निषाद शृणु तत्त्वेन मत्कथाञ्च प्रजल्पतः[1]।
न मया दुष्कृतं किञ्चित् कृतं कुत्रापि तत्त्वतः[2] ॥ १२७ ॥
एकभक्तं समाचारे अभक्ष्यञ्चैव वर्जितम्।
स मयाराधितो देवो लोकनाथो जनार्दनः।
कर्मभिर्बहुभिश्चैव मायादर्शनकाङ्क्षिणा ॥ २८ ॥
अथ दीर्घेण कालेन माया दृष्टो जनार्दनः।
वरेण छन्दयामास बहुधा मायया ततः[3] ॥ १२९ ॥
मया नाभीप्सितस्तस्माद् दीयमानो वरस्ततः[4]।
मायां मे दर्शय विभो विष्णो प्रणतवत्सल[5] ॥ १३० ॥
ततो मां भाषते विष्णुर्मायां दृष्ट्वा ह्यलं द्विज[6]।
माया पुनः पुनश्चोक्तो मम प्रीत्या प्रदर्शय[7] ॥ १३१ ॥
ततोऽहं तेन चाप्युक्तस्तर्हि द्रक्षत्यलं भवान्।
गच्छ कुब्जाम्रके गङ्गां स्नात्वेत्यन्तर्हितोऽभवत्[8] ॥ १३२ ॥
अहं मायाप्रलोभेन गङ्गातीरमुपागतः। दण्डं कुण्डीञ्च वस्त्रञ्च तीरं संस्थाप्य यत्नतः।
ततः स्नानविधानेन निमग्नस्तज्जलेऽमले[9] ॥ १३३ ॥
न तत्र किञ्चिज्जानामि किमिदं किं प्रवर्तते।
नीषादीगर्भसम्भूतस्तव पत्न्यभवं ततः[10] ॥ १३४ ॥
केनचित् कारणेनात्र प्रविष्टो जाह्नवीजले।
स्नात्वाऽपश्यं पूर्ववच्च तावज्जातो ऋषिस्त्वहम्[11] ॥ १३५ ॥

---

१. यां कथां मम तत्त्वतः। २ कृतमेव हि केनचित्।
३. तदनन्तरम्। ४. न मया चेप्सितस्तत्र दीयमानो वरस्तदा।
५. ईप्सिता च मया तत्र विष्णुमाया महालया। ६. किं ते मायेन ब्राह्मणः।
७. एतदर्धं, परश्लोकपूर्वार्धञ्च (ग) पुस्तके न स्तः।
८. गच्छ कुब्जाम्रकं श्रेष्ठं स्नानं कुरु च जाह्नवीम्।
एवं ततो वरं चोक्त्वा विष्णुश्चान्तरधीयत ॥
९. स्थापितं दण्डकुण्डे च पात्रं वस्त्रञ्च निःक्षिपेत्।
उचितेनोपचारेण निमज्य सलिलाम्भसि ॥
१०. सर्वमेव विजानामि यो निषादगृहेऽवसम्।
११. लोभमोहार्थकामार्थक्रोधेन च परिप्लुतः।
ततः केनापि कर्मेण बलकृत्यमुपागतः।
निमज्य सलिले चात्र जातोऽस्मि ब्राह्मणो ह्यहम् ॥

निषाद पश्य कुण्डीञ्च मात्रां वस्त्रं यथा पुरा[1] ।
पञ्चाशद्वर्षदेशीयो जातोऽस्मि त्वद्गृहे वसन्[2] ।
दण्डवस्त्रादि यत्किञ्चिन्न जीर्णं गंगया हृतम्[3] ॥ १३६ ॥
एवं तेन ततश्चोक्तो निषादोऽदृश्यतां गतः ।
ये च ते बालकास्तत्र तेषां कश्चिन्न दृश्यते ॥ १३७ ॥
स ततो ब्राह्मणो देवि तपस्तपति निश्चितः ।
ऊर्ध्वश्वासोर्ध्वबाहुश्च वायुभक्षपरायणः ॥ १३८ ॥
तस्य वै तिष्ठमानस्य अपराह्णं तु[4] जायते ।
ततः प्रमुच्यते तोयं देवि कृत्वा यथोचितम् ॥ १३९ ॥
कर्मण्यानि च पुष्पाणि आहृत्य श्रद्धयान्वित.[5] ।
अर्चयित्वा यथान्यायं वीरासनमुपागतः ॥ १४० ॥
वृतस्तु ब्राह्मणैर्मुख्यैर्गंगास्नानेषु वै द्विजः ।
ऊचुस्ततो द्विजास्तत्र तपस्विनमनन्दितम् ॥ १४१ ॥
पूर्वाह्णे स्थापयित्वात्र मत्रां कुण्डीं त्रिदण्डकम् ।
इतो गतोऽसि ब्रह्मेन्द्र स्थापयित्वा तु धीवरान् ॥
विस्मृतं किं त्वाया स्थानं कथं शीघ्रं न चागतः ॥ १४२ ॥
ततो विप्रवचः श्रुत्वा तूष्णीमासीन्मुनिस्तदा । ब्राह्मणानुगतं,स्थानमात्मनात्मानुसंस्थितः॥
एतस्मिन्नन्तरे देवि स च ब्राह्मणपुंगवः ।
अद्य पञ्चाशद् वर्षाणि अमावास्याद्य चैव हि[6] ॥ १४४ ॥
कथमेतावतं कालं मामूचुर्ब्राह्मणाश्च किम् ।
पूर्वाह्णे स्थापयित्वा त्वं स्वां मात्राञ्चापराह्णिके ।
कथं कालेऽनुसम्प्राप्तः किमेतदिति भाषते ॥ १४५ ॥
एतस्मिन्नतरे देवि ब्राह्मणाय ततो मया ।
दर्शयित्वा निजं रूपं तमवोचदिमं धरे[7] ॥ १४६ ॥
किमिदं भ्रान्तरूपोऽसि किं वा त्वं दृष्टवानसि ।
पश्यामि त्वां व्यग्रमिव सावधानोऽभयं स्वयम् ॥ १४७ ॥

---

१. सचीवरम् ।
२. पञ्चाशद्वर्षवासोऽपि ततस्तत्र न नश्यति ।
३. न जीर्णाश्चाम्बराः सर्वे जाह्नव्या नैव ते हृता ।
४. अपराह्णञ्च ।
५. अकर्मण्येषु पुष्पेषु समार्चनरतः सदा । ६. अमावास्या नु एष वै ।
७. दर्शितं तस्य चात्मानं दिव्यरूपेण वर्चसा ।

एवमुक्तः स तु मया भूमौ कृत्वा शिरः स्वकम् ।
उवाच दुःखितो दीनो निःश्वस्य च मुहुर्मुहुः ॥ १४८ ॥
अहो देव द्विजा एते मां वन्दन्ति[1] जगद्गुरो ।
पूर्वाह्णे स्थापयित्वा स्वं वस्त्रं दण्डकमण्डलू ।
आगतोऽस्म्यपराह्णे किं स्थलं विस्मृतवानसि ॥ १४९ ॥
अहं व्याधस्य वै भूत्वा भार्या च व्याधयोनिजा ।
पञ्चशद्वर्षपर्यन्तं तत्र स्थित्वा ततः किल ॥ १५० ॥
तस्माच्चैव त्रयः पुत्रास्तिस्रश्चापि च कन्यकाः ।
जातान्येवमपत्यानि दुष्टकर्मकृतस्तथा ॥ १५१ ॥
स्नातुं कदाचिद् गंगायां गतोऽहं तीरभूमिगः ।
स्थापयित्वाद्य स्वं वस्त्रं मग्नः स्नास्यञ्जलेऽमले ॥
उन्मज्य स्वयं पुनश्चैव प्राप्तो रूपं मुनिस्तुमम् ॥ १५२ ॥
किं मया विकृतं कर्म सेवमानेन माधव ।
तपश्च तप्यमानेन किं मया विकृतं कृतम् ॥ १५३ ॥
भक्षितं किमकर्मण्यं सेवमानेन चाच्युत ।
व्यभिचारश्च मे तत्र को जातस्तु तवार्चने ॥ १५४ ॥
एताचक्ष्व तत्त्वेन येनाहं नरकं गतः ।
एतच्चिन्ताव्याकुलोऽहं निबोध भगवन् मम ॥ १५५ ॥
मया लुब्धेन हि मया पूर्वं विज्ञापितो ह्यसि ।
नान्यत् स्मरामि पापञ्च नरके येन पातितः ॥ १५६ ॥
ततस्तस्य वचः श्रुत्वा कारुण्यं परिदेवितम् ।
उक्तवानस्मि तं विप्रं दुःखसन्तप्तमानसम् ॥ १५७ ॥
मा दुःखं कुरु विप्रेन्द्र आत्मदोषसमुद्भवम् । विकर्म न कृतं किञ्चिदपि मे विप्रपूजने ।
येन दुःखमनुप्राप्तं तिर्यग्योनिञ्च वै गतः ॥ १५८ ॥
उक्तमेव मया पूर्वं शृणु ब्राह्मणपुङ्गव । वरान् वरय भो ब्रह्मन् त्वं मायां वृतवानसि ॥
ददामि दिव्यभोगान् वै भौमान् वापि तवेप्सितम् ।
तांस्तु नेच्छसि मायाया दर्शनं वृतवानसि ॥ १६० ॥
दृष्टा तु वैष्णवी माया या त्वया ब्राह्मणेप्सिता ।
न गतो दिवसश्चेह ना पराह्णोऽपि कुत्रचित् ।
वर्षाणि चैव पञ्चाशन्निषादस्य गृहेऽपि न ॥ १६१ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व द्विजोत्तम ।
या एषा वैष्णवी माया त्वया ब्राह्मण ईप्सिता ॥ १६२ ॥

---

१. वन्दते ।

त्वया न तत्कृतं किञ्चिच्छुभं वाशुभमेव वा ।
सर्वं मायामयं तत्र विस्मयात् परितप्यसे ॥ १६३ ॥
यत्त्वया दुष्कृतं कर्म व्यभिचारश्च तत्र वै ।
अर्चनञ्च न ते भ्रष्टं तपश्चैव न नाशितम् ॥ १६४ ॥
भवान्तरे कृतं यच्च येनेदं प्राप्तवान् महत् ।
दुःखं तच्च तवाख्यास्ये श्रृणु ब्राह्मण सत्तम[1] ॥ १६५ ॥
मम भक्ता द्विजाः शुद्धा यत्त्वया नाभिवादिताः ।
तत्पापादीदृशो भोगस्तव जातो हि दुःखदः ॥ १६६ ॥
ये च भागवताः शुद्धास्ते नूनं मम मूर्तयः ।
तान् विप्रान् ये नमस्यन्ति ते मामेव नमस्यते ।
विदितोऽस्मीह विप्रेन्द्र तैरहं नात्र संशयः ॥ १६७ ॥
मम दर्शनकामा ये ते मे भक्ता द्विजास्तथा ।
शुद्धा भागवताः पूज्या द्रष्टव्याः सर्वदा नृभिः ॥ १६८ ॥
विशेषेण कलौ ब्रह्मन् द्विजरूपो ह्यवस्थितः ।
तस्माद् ब्राह्मणभक्ता ये ते मद्भक्ता न संशयः ॥ १६९ ॥
यो मां प्राप्तुमिहेच्छेत यस्यावाच्यं न विद्यते ।
अनन्यमानसो भूत्वा मद्भक्तेषु नियोजयेत् ॥ १७० ॥
गच्छ ब्राह्मणसिद्धोऽसि यदा प्राणान् विमोक्ष्यसि[2] ।
तदा गतोऽसि मत्स्थानं श्वेतद्वीपं न संशयः[3] ॥ १७१ ॥
एवमुक्त्वा वरारोहे तत्रैवान्तर्हितोऽभवम् ।
सोऽपि द्विजस्तनुं त्यक्त्वा मायातीर्थे यशस्विनि ।

---

१. (ग) पाठो यथा—

पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व द्विजोत्तम ।
यस्य चैवापराधेन स्वयं कृत्वा भवान्तरे ॥
शुद्धा भागवता विप्र मद्भक्ता नाभिवादिताः ।
तस्या दोषापराधस्य कालं प्राप्तं ततो द्विज ॥
सर्वथा वन्दनीया वै भक्ता भागवताः शुचिः ।
ये मां वदन्ति विप्रेन्द्र भक्ता भागवता मम ॥
वन्दितोऽस्मि हि विप्रेन्द्र सत्यमेतन्न संशयः ।
यो मां पृच्छति चैवेह यस्य वाच्यं न विद्यते ॥ इति ।

२. प्राणांश्चात्रैव मन्यते ।

३. गच्छ मे परमं स्थानं श्वेतद्वीपं मया सह ।

कृत्वा सुदुष्करं कर्म श्वेतद्वीपमुपागतः[1] ॥ १७२ ॥
धन्वी तूणी शरी खडगी मायाबलपराक्रमः ।
माञ्च पश्यति वै नित्यं मायाबलसुसंस्थितम् ॥ १७३ ॥
मायया किं तव धरे न मायां ज्ञातुमर्हसि ।
मम मायां न जानन्ति देवदानवराक्षसाः ॥ १७४ ॥
एतत्ते कथितं भूमे मायाख्यानं महौजसम् ।
मायाचक्रमिति ख्यातं सर्वपुण्यसुखावहम्[2] ॥ १७५ ॥
आख्यानानां महाख्यानं तपसाञ्च परन्तपः ।
पुण्यानां परमं पुण्यं गतीनाञ्च परा गतिः ॥ १७६ ॥

पठेद् यो नित्यं भक्तेषु अभक्तेषु न कीर्तयेत् । मा पठेन्नीचमध्येषु मा पठेच्छास्त्रदूषके ॥
अग्रतः पृच्छता शूद्रमद्भक्तेषु तथाग्रतः । पठते शोभते विप्रो न तु ये शास्त्रदूषकाः ॥
कल्यमुत्थाय यो भूमे पठते च दृढव्रतः । तेन द्वादशवर्षाणि ममाग्रे पठितं भवेत् ॥

अथ पूर्णेन कालेन पुमान् पञ्चत्वमागतः ।
मद्भक्तो जायते देवि वियोनिं न च गच्छति ॥ १८० ॥
य एवं शृणुयान्नित्यं महाख्यानं वसुन्धरे ।
न स जायेत मन्दात्मा वियोनिं नैव गच्छति ॥ १८१ ॥
एतत्ते कथितं भद्रे त्वया यत्पूर्वमीप्सितम् ।
मुच्यमाना वरारोहे किमन्यत् परिपृच्छसि[3] ॥ १८२ ॥

इति वराहपुराणे भगवच्छास्त्रे मायाचक्रं नाम
पञ्चविंशत्यधिकशततमोऽध्यायः ।

---

१. अत्र (ग) पाठभेदो यथा--
एवमुक्तो मया भूमि स च ब्राह्मणपुङ्गवः ।
दत्त्वा वरं महाभागे तत्रैवान्तरधीयत ।
ब्राह्मं देहं स सन्यस्य मायातीर्थे यशस्विनि ॥ इति ।
२. सर्वस्य स्वसुखावहम् ।
३. एतत्ते कथितं देवि त्वया वचनमीरितम् ।
अधुना च वरारोहे किमन्यत् परिपृच्छसि ॥

## षड्विंशत्यधिकशततमोऽध्यायः

श्रुत्वा मायाबलं ह्येतद् धरणी शंसितव्रता । वराहरूपिणं देवं प्रत्युवाच वसुन्धरा ॥१॥

धरण्युवाच

यत् तत् कुब्जाम्रके देव भाषसे तदनन्तकम् ।
न तत्राहं विजानामि पूर्वमुक्तञ्च यत्त्वया[1] ॥ २ ॥

यच्च कुब्जाम्रके पुण्यं पुष्टिस्तस्य सनातनी[2] । एतन्मे परमं गुह्यं भगवन् वक्तुमर्हसि ॥

वराह उवाच

सर्वं एतत् कथयिष्यामि सर्वलोकसुखावहम् ।
यच्च कुब्जाम्रके पुष्टिर्यच्च तीर्थमनिन्दिते ॥
तच्च कार्त्स्न्येन मे देवि शृणु तत्त्वेन सुन्दरि ॥ ४ ॥
यथा कुब्जाम्रको जातस्ततस्तीर्थं यथाक्रमम् ।
यच्च कर्म यतो भूमे स्नातो याति मृतोऽपि च ॥ ५ ॥
युगे सप्तदशे भूमे कृत्वा चैकां वसुन्धराम् ।
मधुकैटभौ तथा हत्वा ब्रह्मणो वचनात् तदा ।
जलसंहरणं कृत्वा समाधारमुपागतः ॥ ६ ॥
पश्यामि तं नतं भूमे रैभ्यं नाम महामुनिम् ।
ममैवाराधने युक्तं सर्वकर्मसु निष्ठितम् ।
युक्तिमन्तं गुणज्ञञ्च शुचिं दक्षं जितेन्द्रियम् ॥ ७ ॥

दशवर्ष सहस्राणि ऊर्ध्वबाहुः स तिष्ठति । सहस्रञ्चाम्बुभक्षेण तथा शैवालभक्षणम् ।

वर्षाणाञ्च शतं पञ्च तिष्ठते स महामुनिः ॥ ८ ॥
ततः प्रीतोऽस्म्यहं देवि रैभ्यस्य च महात्मनः ।
भक्त्या च परया चैव तेन चाराधितो ह्यहम्[3] ॥ ९ ॥

---

१. त्वमिह त्ववजानामि यत्त्वया पूर्व-पृच्छितम् ।

२. यच्च कुब्जाम्रके देव पुण्यपुष्टिः सनातनी ।

३. ममैवाराधने युक्तो धर्मकर्मसु निष्ठितः ।
मधुञ्च कैटभं हत्वा प्रसन्नेन च चोदितः ॥
संहारं तु ततः कृत्वा गङ्गाद्वारमुपागतः ।
पश्यामि तत्र भूमे भुक्तिमुक्तिमतामकम् ॥
गुणज्ञञ्च शुचिं दक्षं जितात्मानं जितेन्द्रियम् ।
दशवर्षसहस्राणि ऊर्ध्वबाहुः सहस्रकम् ॥
सहस्रं वायुभक्षयञ्च पुनः शैवालभक्षणम् ।
वर्षाणाञ्च शतं पञ्च तिष्ठते स महामुनिः ॥

ततो वै तप्यमानं तं[1] गङ्गाद्वारमुपागतम् ।
आम्रवृक्षं समासाद्य दृष्टः स मुनिपुङ्गवः ॥ १० ॥
दर्शितोऽयं मया चात्मा हेतुमात्रेण केनचित् ।
मया यदाश्रितश्चाम्रस्तेन कुब्जत्वमागतः ॥ ११ ॥
एवं कुब्जाम्रकं ख्यातं स्थानमेतन्मनस्विनि[2] ।
मृतापि तत्र गच्छन्ति मम लोकाय केवलम् ॥ १२ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
दृष्ट्वा स मामृषिश्चैव यानि वाक्यानि भाषते ॥ १३ ॥
एवं तत्र मया दृष्टः कुब्जरूपं समाश्रितः ।
जानुभ्यामवनिं गत्वा किञ्चिदेव प्रभाषते ॥ १४ ॥
नमस्कृत्य स्थितं तं तु मुनिं वै शंसितव्रतम् । वरेणच्छन्दयामास अहं प्रीतमना धरे[3]॥
ममैव वचनं श्रुत्वा स मुनिस्तपसान्वितः ।
उवाच मधुरं वाक्यं प्रसादार्थी[4] महायशाः ॥ १६ ॥
यदि प्रसन्नो भगवांल्लोकनाथो जनार्दनः ।
तव चात्र[5] निवासं वै देव इच्छामि नित्यशः ॥ १७ ॥
यावल्लोका धरिष्यन्ति तावच्चैव[6] महाप्रभो ।
स्थानं तव हृषीकेश इच्छामि मधुसूदन[7] ॥ १८ ॥
त्वयि भक्तिः सदा भूयाद् यावत्स्थानं जनार्दन[8] ।
अन्यभक्तिर्मम विभो[9] रोचते न कदाचन ॥ १९ ॥
एतदेव परं चित्तं मया चैव विधार्यते[10]। उपेन्द्र यदि तुष्टोऽसि ममायं दीयतां वरः ॥
ततस्तस्य वचः श्रुत्वा रैभ्यस्यर्षेरहं पुनः ।
बाढमित्येव ब्रह्मर्षे[11] एवमेतद् भविष्यति ॥ २१ ॥

---

१. तप्यमानं तु । २. यशस्विनि ।
३. जानुभ्यां पतितं दृष्ट्वा तं मुनिं शंसितव्रतः ।
वरेण छन्दितस्तस्य यत्तस्यैव च रोचते ॥
(ग) एवं पठितः ।
४. प्रसादार्थम् । ५. तवैवात्र ।
६. तावत्तवेति ।
७. स्थानं तव प्रसादाद्धि वाञ्छेयं तव संस्थितिम् ।
८. सा मे भक्तिर्भवेद्देव्ये तव चर्चा जनार्दन ।
९. अन्यभक्तिर्भवेद् विष्णोः । १०. एतच्च परमं वृत्तं यन्मया हृदि वर्तते ।
११. ब्रह्मेन्द्र ।

ममैवं वचनं श्रुत्वा ब्राह्मणः स वसुन्धरे।
मुहूर्तं ध्यानमास्थाय मामुवाच मुदान्वितः[1] ॥ २२॥
एतस्य तीर्थवर्यस्य महिमानं त्वया प्रभो। श्रृणु वै[2] कथ्यमानं तु वद लोकोपकारकम् ॥
अन्यानि यानि तीर्थानि एतत्क्षेत्राश्रितानि तु।
तान्यपि श्रोतुमिच्छामि कथ्यमानानि च त्वया[3] ॥ २४॥
श्रृणु तत्त्वेन मे ब्रह्मन् यन्मां त्वं परिपृच्छसि।
तीर्थं कुब्जाम्रके पुण्ये मम लोके सुखावहे ॥ २५॥
तीर्थं तु कुमुदाकारं तस्मिन् कुब्जाम्रके स्थितम्।
स्नानमात्रेण सुश्रोणि स्वर्गं प्राप्नोति मानवः ॥ २६॥
कौमुदस्य तु मासस्य तथा मार्गशिरस्य च।
वैशाखस्यैव मासस्य कृत्वा कर्म सुदुष्करम् ॥ २७॥
यो वै परित्यजेत् प्राणान् स्त्री पुमान् वा नपुंसकः।
निष्कलां लभते सिद्धिं मम लोकं स गच्छति ॥ २८॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
तीर्थं मानसमित्येव विख्यातं मम सुन्दरि[4] ॥ २९॥
यस्मिन् स्नात्वा विशालाक्षि गच्छते नन्दनं वनम्।
दिव्यं वर्षसहस्रं वै मोदते चाप्सरैः सह ॥ ३०॥
पूर्णे वर्षसहस्रे तु जायते विपुले कुले।
द्रव्यवान् गुणवांश्चैव जायते तत्र मानवः ॥ ३१॥
तत्राथ मुञ्चते प्राणान् कौमुदस्य तु द्वादशी।
पुष्कलां लभते सिद्धिं मम लोकञ्च गच्छति ॥ ३२॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
मायातीर्थमिदं ख्यातं येन मायां विजानते ॥ ३३॥
तस्मिन् कृतोदको ब्रह्मन् मायातीर्थे महायशाः।
दशवर्षसहस्राणि मद्भक्तो जायते नरः ॥ ३४॥
लभते परमां पुष्टिं कुबेरभवनं यथा[5]। एकं सहस्रं वर्षाणां स्वच्छन्दगमनात् त्रयम् ॥
अथवा म्रियते तत्र मायातीर्थे यशस्विनी।
मायायोगी ततो भूत्वा मम लोकाय गच्छति ॥ ३६॥
अन्यच्च ते[6] प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।

---

१. प्रत्युवाच द्विजोत्तम। २. श्रृणवनि।
३. (ग) पुस्तके २३।२४ श्लोकौ न स्तः। ४. यत्तु तत्र विधीयते।
५. तथा। ६. पुनरन्यत्।

तीर्थं सर्वात्मकं नाम सर्वतीर्थगुणान्वितम्[१] ॥ ३७ ॥
यस्तत्र स्नायते कश्चिद् वैशाखस्य तु द्वादशीम् ।
निष्कलं लभते स्वर्गं सहस्रं दश पञ्च च ॥ ३८ ॥

अथात्र मुञ्चते प्राणान् तीर्थे सर्षपके तथा ।
सर्वसङ्गं परित्यज्य मम लोकञ्च[२] गच्छति ॥ ३९ ॥
पुनरन्यत्प्रवक्ष्यामि शृणुष्व[३] शुभलोचने ।
तीर्थं पूर्णमुखं नाम तन्न जानाति कश्चन[४] ॥ ४० ॥

तत्र सर्वा भवेद् गङ्गा शीतलं जायते जलम् ।
यत्र चोष्णं भवत्यम्बु[५] ज्ञेयं पूर्णमुखं तथा ॥ ४१ ॥

स्नातो[६] गच्छति सुश्रोणि सोमलोके महीयते ।
पश्यते तु तदा सोमं सहस्रं दश पञ्च च ॥ ४२ ॥

ततः स्वर्गात् परिभ्रष्टो ब्राह्मणश्चैव जायते ।
मद्भक्तः शुचिमान् दक्षः सर्वकर्मगुणान्वितः ॥ ४३ ॥

अथवा म्रियते तत्र मासि मार्गशिरे तथा ।
शुक्लपक्षे च द्वादश्यां मम लोकञ्च गच्छति ॥ ४४ ॥
तत्र मां पश्यते नित्यं दीप्तिमन्तं चतुर्भुजम् ।
न जन्म विद्यते तस्य मरणञ्च कदाचन ॥ ४५ ॥
पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
अनन्यमानसो भूत्वा भक्तो भागवतो मम ॥ ४६ ॥
तस्मिंस्तीर्थे तु यः स्नाति[७] कदाचिदपि मानवः ।
दशवर्षसहस्राणि मोदते ह्यमरालये ॥ ४७ ॥
ततः स्वर्गात् परिभ्रष्टस्तीर्थस्य प्रभावतः[८] । द्रव्यवान् गुणवांश्चैव मद्भक्तश्चैव जायते ॥
वैशाखस्य तु मासस्य शुक्लपक्षस्य द्वादशी ।
यदि मुञ्चेत् स्वकं देहं कृत्वा कर्म सुदुष्करम् ॥ ४९ ॥
न जन्म मरणं तस्य न ग्लानिर्न च वै भयम् ।
सर्वसङ्गविनिर्मुक्तो मम लोकाय गच्छति ॥ ५० ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।

---

१. सर्वधर्मगुणान्वितम् । २. लोकाय ।
३. शृणु मे । ४. तत् कश्च न जानते ।
५. तपत्यम्बु । ६. स्नात्वा ।
७. यस्तु स्नाति तत्र तीर्थे । ८. तस्य तीर्थस्य यत् फलम् ।

तीर्थं करवीरकं नाम सर्वलोक[1]सुखावहम् ॥ ५१ ॥
तस्य चिह्नं प्रवक्ष्यामि येन ज्ञापयते शुभे ।
पुरुषो ज्ञानवांस्तावन्मम भक्तिविनिश्चितः[2] ॥ ५२ ॥
माघमासे तु सुश्रोणि शुक्लपक्षे तु द्वादशी ।
पुष्पिते करवीरे वै मध्याह्ने तु न संशयः ॥ ५३ ॥
तस्मिन् कृतोदकस्तीर्थे स्वच्छन्दगमनालयः ।
भ्रमेद् विमानमारूढो सहस्रानरीनर्तितः ॥ ५४ ॥
तत्राथ म्रियते भूमे माघमासस्य[3] द्वादशीम् ।
ब्राह्मणं माञ्च पश्येत पश्यते च वृषध्वजम् ॥ ५५ ॥
पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तस्य ब्राह्मणमुख्यस्य पूर्वं यत्कथितं मया ।
तस्मिन् कुब्जाम्रके भद्रे स्थानं तु मम रोचते ॥ ५६ ॥
पुण्डरीक इति ख्यातं तीर्थञ्चैव महत्फलम् ।
तस्य चिह्नं प्रवक्ष्यामि तच्छृणुष्व शुचिस्मिते[4] ॥ ५७ ॥
तस्य तीर्थस्य सुश्रोणि मध्याह्ने द्वादशीदिने ।
रथचक्रप्रमाणो वै चरते तत्र कच्छपः[5] ॥ ५८ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
स्नात्वा प्राप्नोति सुश्रोणि फलं तत्र महागुणम् ॥ ५९ ॥
पुण्डरीकस्य यज्ञस्य यजमानस्य यत्फम् ।
प्राप्नोति वसुधे तत्र एवमेव न संशयः[6] ॥ ६० ॥
अथवा म्रियते तत्र लब्धसंज्ञो महायशाः ।
दशानां पुण्डरीकाणां फलं प्राप्नोति मानवः ॥ ६१ ॥
भुक्त्वा यज्ञफलं तत्र जातिशुद्धो महातपाः ।
सिद्धश्च लभते नित्यं मम लोकाय गच्छति ॥ ६२ ॥
अन्यच्च ते प्रवक्ष्यामि प्रिये तद्वै शृणुष्व[7] मे ।
अग्नितीर्थमिति ख्यातं सिद्धं कुब्जाम्रके स्थितम् ।
यद्वै प्रज्ञायते[8] देवि द्वादश्यां पापवर्जितैः ॥ ६३ ॥
कौमुदस्य तु मासस्य मासो मार्गशिरस्य च ।

---

१. मम लोक । २. एष श्लोकः (ग) नास्ति ।
३. माघमासे तु । ४. वसुन्धरे ।
५. (ग) एष श्लोकः नास्ति । ६. एवमेतन्न संशयः ।
७. शृणोहि मे । ८. पुनः प्रज्ञायते चैव द्वादशीः पश्य माधवि ।

आषाढस्य च मासस्य शुक्लपक्षस्य द्वादशीम् ॥ ६४ ॥
यश्चैव माधवे मासि समये हृदि वर्तते ।
तस्यां तु शुक्लद्वादश्यां तीर्थं तिष्ठति यत्नतः ॥ ६५ ॥
तस्य चिह्नं प्रवक्ष्यामि शृणुष्व हि वसुन्धरे[1] ।
येन चिह्नेन विज्ञेयं तीर्थं तच्चैव मामकम् ।
एकाग्रन्तु मनः कृत्वा तच्छृणुष्व वसुन्धरे ॥ ६६ ॥
मुक्त्वा भागवताञ्छुद्धान् मम संहितापाठकान्[2] ।
न हि कश्चिद् विजानाति शास्त्रं मम न यश्चवै[3] ॥ ६७ ॥
फलं तस्य प्रवक्ष्यामि मृतोऽपि स्नानकोऽपि वा
एकचित्तं समाधाय तच्छृणुष्व वसुन्धरे[4] ॥ ६८ ॥
अग्नितीर्थेषु स्नातो वै तस्मिन् कुब्जाम्रकेषु च ।
अग्नितीर्थे महाभागे दीप्तिमन्तं सवैष्णवम् ॥ ६९ ॥
सप्तकृत्वाग्निमेधानां यत्फलं भवति प्रिये ।
प्राप्नोति तन्महाभागे स्नानमात्रान्न संशयः ॥ ७० ॥
अथवा म्रियते तत्र एकैकान् द्वादशीकृतान् ।
स्थित्वा विंशत्यहोरात्रान् मम लोकाय गच्छति ॥ ७१ ॥
तीर्थस्य तस्य वक्ष्यामि चिह्नानि शृणु सुन्दरि ।
येन विज्ञायते प्राज्ञैर्मम[5] भक्तं सुखावहम् ॥ ७२ ॥
उष्णं भवति हेमन्ते वसुधे तज्जलं तथा ।
उष्णकाले भवेच्छीतमेवं चिह्नं तु तद् भवेत् ॥ ७३ ॥
एष वह्निर्महाभागे[6] तीर्थमाग्नेयमुत्तरे ।
तरन्ति मानवा येन घोरं संसारसागरम् ॥ ७४ ॥
अन्यच्च ते प्रवक्ष्यामि देवि कुब्जाम्रके महत्[7] ।
वायव्यमिति विख्यातं तीर्थं धर्माद् विनिःसृतम् ॥ ७५ ॥
तस्मिंस्तीर्थे तु यः स्नातः कृतनित्योदकक्रियः[8] ।
वाजपेयस्य यज्ञस्य फलं प्राप्नोति निष्कलम् ॥ ७६ ॥
अथवा म्रियते तत्र वायुतीर्थे महाह्रदे ।
दिनानि दश पञ्चैतत् कृतमेव हि मामकम् ॥ ७७ ॥

---

१. देवि तत्त्वेन ज्ञायताम् । २. मम सद्विजयाजकान् ।
३. यस्तु शास्त्रं न जानाति । ४. तच्छृणोहि वसुन्धरे ।
५. विद्वान् । ६. एवं चिह्नं महाभागे ।
७. ह्यहम् । ८. कृतोदककृताग्निकः ।

जन्म वा मरणं वापि भूमौ नैव पुनर्भवेत्[1] ।
जायते च चतुर्बाहुर्मम लोकप्रतिष्ठितः ॥ ७८ ॥
तस्य चिह्नं प्रवक्ष्यामि वायुतीर्थस्य सुन्दरि ।
येन चिह्नेन विज्ञेयं तीर्थं तच्च महत्तरम्[2] ॥ ७९ ॥
अश्वत्थवृक्षपत्राणि चलन्ति नित्यशो वने ।
चतुर्विंशतिद्वादश्यां येन विज्ञायते खलु[3] ॥ ८० ॥
पुनरन्यत्प्रवक्ष्यामि तीर्थं कुब्जाम्रके धरे[4] ।
शक्रतीर्थमिति ख्यातं सर्वसंसारमोक्षणम्[5] ॥ ८१ ॥
तस्मिंस्तीर्थे वरारोहे शक्रतीर्थे वसुन्धरे[6] ।
शक्रस्य वसने लोके वज्रहस्तो न संशयः ॥ ८२ ॥
अथवा म्रियते तत्र[7] शक्रतीर्थे महातपे ।
उपोष्य दशरात्राणि मम लोकाय गच्छति ॥ ८३ ॥
तस्य चिह्नं प्रवक्ष्यामि येन विज्ञायते ततः[8] ।
एकचित्तं समाधाय शृणु सुन्दरि तत्त्वतः ॥ ८४ ॥
पञ्च वृक्षास्तु तिष्ठन्ति तद्दक्षिणदिशि क्षिते ।
शक्रतीर्थस्य चिह्नं ते वसुधे परिकीर्तितम्[9] ॥ ८५ ॥
अन्यच्च तीर्थं वक्ष्यामि तस्मिन् कुब्जाम्रके परम्[10]।
वरुणेन तपस्तप्तं सहस्रं पञ्च सप्त च ॥ ८६ ॥
तत्र स्नातस्य वक्ष्यामि जायते तत्र यत्फलम् ।
यत्प्राप्नोति मृतो वाऽपि पुरुषः शंसितव्रतः ॥ ८७ ॥
अष्टवर्षसहस्राणि गत्वा वै वरुणालयम् ।
स्वच्छन्दगमनो भूत्वा एवमेव न संशयः ॥ ८८ ॥
अथ वै म्रियते तत्र विंशवर्षोषितो नरः[11] ।
सर्वसङ्गं परित्यज्य मम लोकाय गच्छति ॥ ८९ ॥

---

१. न तस्य मरणं भूमे जन्म तस्य न विद्यते ।
२. शुभैर्भागवतैस्तथा । ३. विभो ।
४. भुवि । ५. मोचनम् ।
६. महायशा । ७. देवि ।
८. नरः ।
९. पञ्च वृक्षास्ततस्तस्य तीर्थस्य दक्षिणे स्थिताः ।
भूमे येन स विज्ञेयं शक्रतीर्थमिति स्मृतम् ॥
१०. पुनरन्यत् प्रवक्ष्यामि तीर्थमेव वसुन्धरे । ११. चिरवर्षोषितो नरः ।

तस्य चिह्नं प्रवक्ष्यामि तच्छृणुष्व[1] वसुन्धरे।
तत्र धारा पतत्येका एकरूपा सदा भवेत्।
न वर्धते च वर्षासु धर्मे न ह्रसते पुनः॥ ९० ॥
सप्तसामुद्रिकं नाम तस्मिन् कुब्जाम्रके परम्[2]।
तस्मिन् कृतोदको भूमे नरो धर्मपरायणः।
त्रयाणामश्वमेधानां फलं प्राप्नोति मानवः॥ ९१ ॥
शीघ्रं गच्छति वै स्वर्गं सहस्रं दश पञ्च च।
ततः स्वर्गात् परिभ्रष्टः कुब्जाञ्जायते द्विजः।
वेदवेदाङ्गकुशलः सोमपश्चैव जायते॥ ९२ ॥
अथात्र मुञ्चते प्राणान् मुक्तसङ्गो जितेन्द्रियः।
उषित्वा सप्तरात्रं वै मम लोकाय गच्छति॥ ९३ ॥
तस्य चिह्नं प्रवक्ष्यामि तीर्थस्य शृणु सुन्दरि।
वैशाखशुक्लद्वादश्यां विभूतिस्तत्र या भवेत्।
विमला गां गता यत्र गङ्गाजलविमिश्रितम्॥ ९४ ॥
तस्मिंस्तीर्थे तदेवैतत् क्षीरवर्णं पुनर्भवेत्।
पुनश्च पीतवर्णाभं पुना रक्तं कदा भवेत्॥ ९५ ॥
पुनर्मरकताभासं पुनर्मुक्तासमप्रभम्[3]। एतैश्चिह्नैस्तु विज्ञेयं तत्तीर्थं विदितात्मभिः॥
अन्यच्च ते प्रवक्ष्यामि तीर्थं कुब्जाम्रके महत्[4]।
तीर्थं मानसरो नाम सर्वभागवतप्रियम्[5]॥ ९७ ॥
तस्मिन् स्नातो वरारोहे गच्छते मानसं सरः[6]।
देवान् पश्यति वै सर्वान् रुद्रेन्द्रसमरुद्गणान्॥ ९८ ॥
अथ तत्र मृतो भूमे त्रिषड् रात्रोषितो नरः।
सर्वसङ्गविनिर्मुक्तो मम लोकाय गच्छति॥ ९९ ॥
तस्य चिह्नं प्रवक्ष्यामि येन तज्ज्ञायते[7] नरैः।
पञ्चाशत्क्रोशविततं मानुषाणां दुरासदम्॥ १०० ॥
एतत्त भूमे विज्ञेयं यथैतन्मानसं सरः।
[8]शुद्धैर्भागवतैर्ज्ञेयं मम कर्मसु निष्ठितैः॥ १०१ ॥
एतत्तीर्थं महाभागे तस्मिन् कुब्जाम्रके स्मृतम्।

---

१. तच्छृणोहि। २. स्थितम्।
३. वर्णो मरकतो भाति पुनारक्तसमप्रभः। ४. तस्मिन् कुब्जाम्रके भुवि।
५. सर्ववैष्णवकं शुभम्। ६. तस्मिंस्तीर्थे वरारोहे गच्छेन्मानससुन्दरे।
७. विज्ञायते। ८. शुभैः।

सिद्धिकामस्य विप्रस्य रैभ्यस्य[1] परिकीर्तितम् ॥ १०२ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तत्र कुब्जाम्रके वृत्तं पुराश्चर्यं महाद्भुतम्[2] ॥ १०३ ॥
मम निर्माल्यपार्श्वे वै व्याली तिष्ठति निर्भया[3]
गन्धमाल्योपहार्याणि भक्षयन्ती यदृच्छया ॥ १०४ ॥
कस्यचित् त्वथ कालस्य नकुलस्तत्र चागतः ।
पश्यते च ततस्तत्र रममाणां यदृच्छया ॥ १०५ ॥
नकुलेन सह व्याल्या तदा युद्धमभूच्च तत्[4] ।
सम्पूर्णे ते तु मध्याह्ने माघमासे तु द्वादशीम् ॥ १०६ ॥
तया स दृष्टो नकुलो नाशाय मम मन्दिरे ।
तेनापि विषदिग्धेन व्याली शीघ्रं निपातिता ॥ १०७ ॥
उभौ चान्योऽन्ययुद्धेन तदा पञ्चत्वमागतौ ।
व्याली प्राग्ज्योतिषे जाता राजपुत्री यशस्विनी ॥ १०८ ॥
नकुलोऽजायत तदा कोशलेषु जनाधिपः ।
रूपवान् गुणवान् देवि सर्वशास्त्रकलान्वितः ॥ १०९ ॥
तौ तु दीर्घेण कालेन सौख्येन परिरक्षितौ ।
अवर्धतां यथाकालं शुक्लपक्षे यथा शशी ॥ ११० ॥
स कन्या नकुलं दृष्ट्वा सद्यो हन्तुं तथेच्छति ।
व्यालीं दृष्ट्वा राजपुत्रः सहसा हन्तुमिच्छति ॥ १११ ॥
अथ तस्यास्तु कालेन कोशलाधिपतिस्तथा ।
पाणिं जग्राह विधिवन्मत्प्रसादाद् वसुन्धरे[5] ॥ ११२ ॥
कोशलाधिपतेश्चापि राज्ञः प्राग्ज्योतिषस्य च ।
महोत्सवेन संवृत्तः सम्बन्धो मत्प्रसादतः ॥ ११३ ॥
दृढप्रीतिस्तयोर्जाता यथा च जतुकाष्ठयोः ।
रमतो धूमकेतोश्च वह्नेश्चैव यथा तथा ॥ ११४ ॥
यथा शची च शक्रस्य रमन्तौ नन्दने वने ।
एवं च दीर्घकालं हि तयोः प्रीतिर्न हीयते ॥ ११५ ॥
एवं तौ विहरन्तौ तु तस्मिन्नुपवने ततः ।
वसेते च यथान्यायं वेलामिव महोदधिः ॥ ११६ ॥

---

१. भक्तस्य । २. महोत्सवम् ।
३. वसति निर्भया । ४. प्रावर्तत ।
५ मत्प्रसादेन वै देवि सम्बन्धश्चैव जायते ।

एवं तयोर्गतः कालो वर्षाणां सप्तसप्ततिः ।
न बुध्यतो तथात्मानं मम मायाविमोहितौ ॥ ११७ ॥
एवं तौ विहरन्तौ तु तस्मिन्नुपवने ततः ।
दृष्ट्वा व्याली राजपुत्रस्ततो हन्तुं व्यवस्थितः ॥ ११८ ॥
स तया वार्यमाणोऽपि व्यालीं हन्तुमिहोद्यतः ।
गरुडो हन्ति नागान् वै दृष्ट्वैव विनतात्मजः ॥ ११९ ॥
एवं स वार्यमाणोऽपि व्यालीं हन्ति स्म दारुणम् ।
तदा सा रुषिता देवी न किञ्चिदपि भाषते[1] ॥ १२० ॥
ततस्तस्यां तु वेलायां राजपुत्र्यग्रतो बिलात्[2] ।
नकुलस्तु विनिर्गत्य[3] आहारार्थं समुद्यतः ॥ १२१ ॥
दृष्ट्वा तु राजपुत्री सा नकुलं सर्पकाङ्क्षिणम् ।
दृष्टं चङ्क्रममाणं सा नकुलं शुभदर्शनम् ॥ १२२ ॥
क्रोधात् तं नकुलञ्चापि विनिहन्तुं प्रचक्रमे[4] ।
वारिता राजपुत्रेण सुता प्राग्ज्योतिषस्य वै ॥ १२३ ॥
नकुलं घातितं दृष्ट्वा मङ्गल्यं शुभदर्शनम् ।
कुपितो राजपुत्रो वै राजपुत्रीमभाषत ॥ १२४ ॥
स्त्रीणां भर्ता सदा मान्यस्त्वं मामुल्लङ्घ्य निष्ठुरम्[5] ।
दर्शनीयः प्रियो राज्ञां मङ्गल्यः शुभदर्शनः ।
घातितो नकुलः कस्मान्मया वै वार्यमाणया ॥ १२५ ॥
इति भर्तृवचः श्रुत्वा प्राग्ज्योतिषसुता तदा ।
प्रत्युवाच ततः क्रोधात् कोशलाधिपतेः सुतम् ॥ १२६ ॥
असकृद्वार्यमाणोऽपि व्यालीं घातितवान् यतः ।
तस्मान्मयापि नकुलो घातितः सर्पघातकः[6] ॥ १२७ ॥
राजपुत्र्या वचः श्रुत्वा राजपुत्रस्ततोऽब्रवीत् ।

---

१. सा तथा धृष्यमाणा च शीघ्रमेव निपातिता ।
रुषिता राजपुत्री सा न किञ्चिदपि भाषते ॥
२. राजपुत्र्याः समग्रतः । ३. बिलान्निष्क्रम्य नकुलः ।
४. क्रोधो वै जायते तस्या नकुलं हन्तुमुद्यता ।
५. स्त्रीणां भर्ता चैव मान्यः सदैव तु विधीयते ।
६. मया वै वार्यमाणेन त्वया व्यालिनिपातिता ।
किं तेऽपराद्धं राजेन्द्र अहिना बिलवासिना ।
यत्त्वया वार्यमाणेन शीघ्रमेव निपातिता ॥

वाग्भिः स कटुकाभिश्च तर्जयन्निव[1] तां धरे ॥ १२८ ॥
सर्पस्तीव्रविषो भद्रे तीक्ष्णदंष्ट्रो दुरासदः[2] ।
दशते मानुषं दुष्टो येनासौ म्रियते जनः[3] ।
तस्मान्मया हतो भद्रेऽहितकारी विषोद्धतः ॥ १२९ ॥
प्रजापाला वयं भद्रे येऽपि चैवापथे[4] स्थिताः ।
सर्वांस्तान् दण्डयामो हि तीव्रदण्डैर्यथोचितम्[5] ॥ १३० ॥
साधून् ये चापि हिंसन्ति ह्यपराधविवर्जितान् ।
स्त्रियश्चैवापि हिंसन्ति कामकाराश्च ये नराः ॥ १३१ ॥
ते दण्ड्याश्चैव वध्याश्च राजधर्माद्यथार्हतः[6] ।
मयापि राजधर्मो वै कर्त्तव्यो राजकर्मणि ॥ १३२ ॥
नकुलेनापराद्धं किं तद् वद त्वं ममापि हि[7] ।
दर्शनीयः सुरूपश्च राज्ञां योग्यो गृहेषु च ।
मङ्गल्यश्च पवित्रश्च नकुलः किं हतस्त्वया[8] ॥ १३३ ॥
वार्यमाणोऽपि हि मया घातितो नकुलस्ततः[9] ।
ततो मम न भार्यासि न चाहं ते पतिः स्थितः ।
किन्तु तेन न हन्मि त्वां स्त्रियोऽवध्याः सदैव यत् ॥ १३४ ॥
इत्युक्त्वा राजपुत्रस्तां निवृत्य नगरं प्रति ।
एवं क्रोधं समादाय नष्टस्नेहौ परस्परम् ॥ १३५ ॥
एवं गच्छति काले वै कोशलायां जनाधिपः ।
श्रृणोति तां कथां सर्वां वधं नकुलसर्पयोः ॥ १३६ ॥
एवं श्रुत्वा यथान्यायं सक्रोधौ तावुभावपि ।
ततः कञ्चुकिनश्चैव स्वामात्यानग्रतः स्थितान् ।
पुत्रं मम वधूञ्चैव समानयत सत्वरम् ॥ १३७ ॥
ततो वै राजभृत्यास्तु राज्ञो वै प्रियकारिणः ।
राजाज्ञां तां पुरस्कृत्य वधूं पुत्रञ्च सादरम् ।
आनीय दर्शयामासुर्यत्र राजा स्वयं स्थितः ॥ १३८ ॥

---

१. स कटुकं प्रोक्तं मम पूर्वं कदाचन । २. महावने ।
३. दशते मानुषं शीघ्रं तेन सर्पो मया हतः । ४. ये के चित्पथे ।
५. सर्वास्ते रक्षितव्या वै राजशास्त्रे यथा श्रुतिः ।
६. श्वापदं ये तु हिंसन्ति मानुषांस्तेऽपि कामतः ।
सर्पश्च येऽपि हिंसन्ति तेऽपि वध्या न संशयः ।
७. ते आख्याहि यदि किं कृतम् ।
८. नकुलश्चापि पातितः । ९. मम चापि न भार्यासि अहञ्चास्मि पतिर्न च ।

वधूपुत्रौ ततो दृष्ट्वा राजा वचनमब्रवीत्[1] ।
पुत्र कुत्र गतं प्रेम युवयोस्तत् समाहितम् ।
स्नेहश्च क्व गतः पूर्वो विरुद्धाचरणौ कथम् ॥ १३९ ॥

आसीद् या युवयोः प्रीतिरन्योन्यं जतुकाष्ठवत् ।
दर्पणे प्रतिबिम्बञ्च दृश्यते यद्वदात्मनः ।
सम्मुखत्वेन च सदा तद्वद् वां याऽभवत् पुरा[2] ॥ १४० ॥

दक्षा सुशीला धर्मिष्ठा नैनां त्युक्तं त्वमर्हसि[3] ।
अप्रियं नोक्तपूर्वं तु यया परिजनेऽपि च[4] ।
मिष्टान्नसाधने दक्षा त्वया त्यक्तुं न युज्यते ॥ १४१ ॥

धनसर्वस्तु ते धर्मः स च योषित्कृतः खलु[5] ।
अहो सत्यं जनानाञ्च स तु स्त्रीभ्यः सुतः कुलम् ॥ १४२ ॥

ततः पितुर्वचः श्रुत्वा राजपुत्रो यशस्विनी । उभौ तच्चरणौ गृह्य पितरं प्रत्यभाषत ॥

दोषो न विद्यते तात स्नुषायां कोऽपि कुत्रचित् ।
किं मे तु वार्यमाणापि नकुलं मेऽग्रतोऽहनत्[6] ॥ १४४ ॥
ततोऽभवन् मम क्रोधो दृष्ट्वा पातितमग्रतः[7] ।
क्रोधासक्तेन तु मया यथेयं परिभाषिता ॥ १४५ ॥
मम भार्या न भवती न चाहं तव वै पतिः ।
एतच्च कारणं नान्यत् किञ्चिद् राजन् न संशयः ॥ १४६ ॥

ततः पतिवचः श्रुत्वा प्राग्ज्योतिषकुलोद्भवा ।
शिरसा प्रणतिं कृत्वा इदं वचनमब्रवीत्[8] ॥ १४७ ॥
अपराधविहीनश्च भीतश्च[9] भुजगस्तथा ।
शतशो वार्यमाणेन शीघ्रमेव निपातितः ॥ १४८ ॥

---

१. वधूपुत्रौ समानीय राजा वचनमब्रवीत् ।
२. कुतः पुत्र गतं प्रेम वध्वर्थे क्व गतं तव ।
वधु नु मे कष्टं पुत्रप्रीतिस्तव कुतो गता ॥
दर्पणेष्विव पश्यामि प्रतिबिम्बं यथात्मनि ।
निष्कषा वै सापराधेन कदाचिदपि पुत्रक ॥
३. न च वै त्युक्तुमर्हसि । ४. परिजने जने ।
५. धर्मो यो भिन्नसंशयः । ६. वार्यमाणा मया राजन्नकुलश्चाग्रतो हतः ।
७. ततो मे जायते मन्युर्दृष्ट्वा नकुलपातनम् । ८. वाक्यञ्चेदमुवाच ।
९. अनपराधो भीतश्च वृद्धश्च ।

ततः सर्पवधं दृष्ट्वा क्रोधसन्तप्तमानसा[1]।
नाभाषितः किमपि नो मयैतदवधेहि वै[2] ॥ १४९ ॥
वधूपुत्रवचः श्रुत्वा कोशलानां जनेश्वरः।
उवाच मधुरं वाक्यमुभयोर्जनसंसदि[3] ॥ १५० ॥
अनेन निहतः सर्पस्त्वया च नकुलो हतः।
कथं वा क्रियते क्रोधस्तन्मे वक्तुमिहार्हथ[4] ॥ १५१ ॥

हते तु नकुले पुत्र किं ते क्रोधस्य कारणम्[5]।
राजपुत्रि हते सर्पे किं वा ते मन्युकारणम्[6] ॥ २ ॥
ततः पितुर्वचः श्रुत्वा कोशलेश्वरनन्दनः। उवाच मधुरं वाक्यं राजपुत्रो महायशाः ॥
एतेन किं वा प्रश्नेन नैतत् प्रष्टुं त्वमर्हसि।
एनां पृच्छ महाराज ज्ञास्यते कार्यचेष्टितम् ॥ १५४ ॥
पुत्रस्य वचनं श्रुत्वा कोशलानां जनेश्वरः।
उवाच मधुरं वाक्यं धर्मसंयोग्यसाधनम् ॥ १५५ ॥
ब्रूहि पुत्र यथान्यायं यत्ते मनसि वर्तते।
प्रीतिविच्छेदकारणमुभयोरिह कथ्यताम् ॥ १५६ ॥
जाताः सम्बन्धिताः पुत्राः सर्वकामेषु निष्ठिताः।
पितृपृष्टं तु यद् गुह्यं गोपयन्ति सुताधमाः[7] ॥ १५७ ॥
सत्यं वा यदि वाऽसत्यं[8] न ब्रुवन्ति कदाचन।
पतन्ति नरके घोरे रौरवे तप्तबालुके ॥ १५८ ॥
पित्रा पृष्टं तु ये ब्रूयुः शुभं वाऽशुभमेव वा[9]।
दिव्याश्च ते गतिं यान्ति या गतिः सत्यवादिनाम् ॥ १५९ ॥
अवश्यमेव तद्वाक्यं वक्तव्यं मम सन्निधौ।
यस्य दोषेण ते पुत्र नष्टा प्रीतिर्गुणाकरा ॥ १६० ॥
ततः पितुर्वचः श्रुत्वा कोशलानन्दवर्धनः।
उवाच श्लक्ष्णया वाचा तत्रैव जनसंसदि ॥ १६१ ॥

---

१. क्रोधसन्तप्तदर्शन।
२. अनेन चाहं संवादं किञ्चिदेव प्रभाषितम्। ३. यदितं शुभम्।
४. नकुलं हतमित्याह यदि सर्पो निपातितः।
किमिदं क्रियते क्रोधमेतन्मे वक्तुमर्हसि ॥
५. कस्ते मन्युर्भवेत् ततः। ६. कस्ते मन्युर्भवेदिह।
७. गोपयन्ति नराधमाः। ८. सत्यञ्च यदसत्यञ्च।
९. पित्रा पृष्टन्तु ये सत्यं वदन्ते वा शुभाशुभम्।

गच्छत्वेष[1] जनः सर्वो यथान्यायं गृहाणि वै।
प्रातस्त्वां कथयिष्यामि यद्वक्तव्यमवश्यकम्[2] ॥ १६२ ॥
प्रभातायां तु शर्वर्यां दुन्दुभीनां निनादनैः।
विबुद्धः कोशलश्रेष्ठः सूतमागधवन्दिभिः ॥ १६३ ॥
तदा[3] कमलपत्राक्षो राजपुत्रो महायशाः।
स्नात्वा च मङ्गलैर्युक्तो राजद्वारमुपागतः[4] ॥ १६४ ॥
ततस्तु कञ्चुकी गत्वा राज्ञे चैव न्यवेदयत्।
द्वारि तिष्ठति पुत्रस्ते तव दर्शनकाङ्क्षया ॥ १६५ ॥
कञ्चुकिस्तु[5] वचः श्रुत्वा कोशलानां जनेश्वरः[6]।
शीघ्रं प्रवेशय सुतं कञ्चुके[7] साधुवादिनम्।
इत्युक्तो राजपुत्रं तु प्रावेशयदनुज्ञया ॥ १६६ ॥
राजपुत्रः पितुर्वेश्म प्रविश्य नियतः शुचिः।
ववन्दे चरणौ मूर्ध्ना निषीदेति सुतं ततः।
तमब्रवीत् पिता जीव जयेत्युक्त्वा मुदान्वितः ॥ १६७ ॥
पितृपुत्रौ तु विज्ञेयौ जनैस्त्वेकत्र संस्थितौ।
हर्षितस्वान्तरौ बाढ्यः कृतकौतुकमङ्गलः ॥ १६८ ॥
ततः पुत्रं प्रहस्याह कुमारं स जनाधिपः।
वद पुत्र महाभाग पूर्वं पृष्टं मया हि यत् ॥
युवयोः प्रीतिविच्छेदे कारणं गोपितं हि यत् ॥ १६९ ॥

ततो राजकुमारस्तं पितरं प्रत्यभाषत। अवश्यमेव वक्तव्यं त्वया पृष्टेन निष्फलम्।
तद्गुह्यं हि महाराज प्रीतिविच्छेदकारकम् ॥ १७० ॥
यदीच्छसि महाराज श्रोतुं गुह्यमिदं महत्।
आगच्छ तात कुब्जाम्रे मया सह महीपते[8] ॥ १७१ ॥
तत्र ते कथयिष्यामि कोशलाधिपते त्वरन्[9]।
यत्त्वया पृच्छितं ह्येतद् गुह्यं पूर्वमनिन्दितम् ॥ १७२ ॥
ततस्तस्य वचः श्रुत्वा राजपुत्रस्य वै नृपः।
बाढमित्येव तत्राह पुत्रप्रेम्णा समन्वितः ॥ १७३ ॥

---

१. गच्छत्वेव। २. कल्यं ते कथयिष्यामि एवं यदि च रोचते।
३. ततः। ४. राजधानीमुपागतः।
५. कञ्चुकिनः। ६. नरेश्वरः।
७. कञ्चुकिन्।
८. गच्छ कुब्जाम्रकं शीघ्रं तात एवं मया सह। ९. नृप।

राजपुत्रे गते सुभ्रु अमात्यानाञ्च सन्निधौ ।
उवाच मधुरं वाक्यं ये वै तत्र समागताः[1] ॥ १७४ ॥
अमात्याः शृणुतेदं मे वचनं कृतनिश्चयम् ।
कुब्जाम्रकं प्रति वयं गच्छामस्तस्य साधनम् ॥ १७५ ॥
शीघ्रं सम्पाद्यताञ्चैव युज्यन्तां गजवाजिनः ।
राज्ञो वचस्ते संश्रुत्य समूचुः कृतमेव तत् ॥ १७६ ॥
इत्युक्त्वा सप्तरात्रेण सर्वं सम्भाव्य साधनम् । गजाश्वपशुयानादि-कार्षापणकधेनुकम् ॥
सुवर्णरत्नवस्त्राणि अन्नञ्चान्यदपेक्षितम् । राजानं ते समागत्य सिद्धमित्यूचुरीश्वरम्[2] ॥
ततः स राजशार्दूलः पुत्रमाह वसुन्धरे ।
राज्यं शून्यं कथं त्यक्त्वा गमिष्यामो वयं सुत ॥ १७९ ॥
ततः पितुर्वचः श्रुत्वा राजपुत्रो महायशाः ।
उवाच मधुरं वाक्यं गृहीत्वा[3] चरणौ पितुः ॥ १८० ॥
कनीयानेष मे भ्राता एकोदरसमुद्भवः[4] ।
एतस्य दीयतां राज्यं यथान्यायेन चागतम् ॥ १८१ ॥
पुत्रस्य वचनं श्रुत्वा कोशलानां कुलोद्वहः[5] ।
वर्तमानेऽपि च ज्येष्ठे कनीयान् कथमर्हति ॥ १८२ ॥
ततः पितुर्वचः श्रुत्वा कोशलायाः कुलोद्भवः ।
उवाच मधुरं वाक्यं पितरं धर्मकारणात् ॥ १८३ ॥
अनुजानामि ते तात दीयमानां वसुन्धराम् ।
नास्य धर्मविलोपस्तु भुञ्जमानस्य[6] मेदिनीम् ॥ १८४ ॥
नाहं कुब्जाम्रकं गत्वा निवर्तिष्ये कदाचन ।
एतत् सत्यञ्च धर्मञ्च तात ते कथितं मया[7] ॥ १८५ ॥
पुत्रेण चाभ्यनुज्ञातः कनीयानभिषेचितः ।
स मुख्येनाभ्यनुज्ञातो भूमे भूपतिसत्तमः[8] ॥ १८६ ॥

---

१. ये वै तत्र गताः स्थिताः ।
२. अथ ते सप्तरात्रेण राजानं तमुवाच ह ।
सज्जानि सर्वद्रव्याणि किमाज्ञाप्यते भवान् ॥
अमात्यानां वचः श्रुत्वा कोशलानामथाधिपः ।
साधु साध्विति चोक्त्वा वै अमात्यजनसंसदि ॥ इति ।
३. निपत्य चरणौ ।
४. एकोदरविनिःसृतः ।
५. स राजा धर्मनिष्ठितः ।
६. भुञ्जत इति साधु ।
७. ततः ।
८. भूपतिसत्तमः ।

ततो दीर्घेण कालेन स्थानं कुब्जाम्रकं गतः ।
अन्तःपुरेण सहितः[१] सर्वद्रव्यसमन्वितः ॥ १८७ ॥
ततस्तीर्थविधिं कृत्वा दत्त्वा दानानि भूरिशः ।
अन्नवस्त्रसुवर्णानि गोहस्त्यश्वभुवस्तथा ॥ १८८ ॥
ततो बहुतिथे काले व्यतीते सति धीमताम् ।
ततः कदाचिद् भूपालो राजपुत्रमुपस्थितम् ।
दम्पत्योः प्रीतिविच्छेदं गुह्यं तत्समपृच्छत ॥ १८९ ॥
स्थानं पावनकं वत्स विष्णोः पदसमाश्रयम् ।
दत्तानि धनरत्नानि जातस्तस्य विधिः परः ॥ १९० ॥
इदानीं ब्रूहि सत्यं तद् यत्कृते सुन्दरी स्नुषा ।
अदुष्टकारिणी युक्ता कुलशीलगुणान्विता ।
त्वया मिथ्यैव किं त्यक्ता तद् गुह्यं वद पुत्रक ॥ १९१ ॥
ततः स पितरं प्राह रात्रिर्गच्छतु सुप्यताम् ।
श्वः प्रभाते बतः सर्वं कथयिष्यामि तत्पुनः ॥ १९२ ॥
ततो रात्र्यां व्यतीतायामुदिते[२] च दिवाकरे ।
कृतोदकस्तु गङ्गायां क्षौमवस्त्रविभूषितः ॥ १९३ ॥
अर्चयित्वा यथान्यायं माञ्चैव गुरुवत्सलः ।
पितुः प्रदक्षिणं कृत्वा वाक्यमेतदुदाहरत्[३] ॥ १९४ ॥
एह्येहि तात गच्छामो यस्त्वं गुह्यानि पृच्छसि[४] ।
शृणु तत्त्वेन मे राजन् यत्त्वया पूर्वपृच्छितम् ॥ १९५ ॥
राजपुत्रश्च वै राजा सा च पङ्कजलोचना ।
गत्वा निर्माल्यकूटन्ते यत्तद् वृत्तं पुरातनम् ॥ १९६ ॥
निर्माल्यं तु समासाद्य राजपुत्रो महातपाः ।
उभौ तौ चरणौ गृह्य पितरं प्रत्यभाषत ॥ १९७ ॥
नकुलोऽहं महाराज वसामि कदलीतले ।
ततोऽहं कालसंयुक्तः प्राप्तो निर्माल्यकूटकम् ॥ १९८ ॥
ततस्त्वाशीविषा सर्पी सपतेऽत्र जनाधिप ।
भक्षयन्ती सुगन्धानि पुष्पाणि विविधानि च ॥ १९९ ॥
दृष्ट्वा तु तां महाकालीं क्रोधसंरक्तलोचनः ।
अचिरेणैव कालेन तस्याङ्कं सहसा गतः[५] ॥ २०० ॥

---

१. अन्तःपुरसमायुक्तः । २. ततो रजन्यां व्युष्टायाम् ।
३. वाक्यमेतदुवाच ह । ४. त्वं गुह्यानि यदीच्छसि ।
५. ( ग ) ( १९९–२०० ) श्लोकौ न स्तः ।

तया सह महाराज घोरं युद्धमवर्तत ।
माघमासस्य द्वादश्यां तत्र कश्चिन्न पश्यति ॥ २०१ ॥
युद्धयमानस्य मे तत्र गात्रञ्चैव निगूहितम् ।
नासावंशे तया दष्टो भुजङ्गया च तदन्तरे ॥ २०२ ॥
मयापि विषदिग्धेन निहता च भुजङ्गमा[1] ।
उभौ प्राणान् परित्यज्य उभौ पञ्चत्वमागतौ ॥ २०३ ॥
मृतौ स्वकाले राजेन्द्र क्रोधमोहपरिच्युतौ[2] ।
जातोऽहं तव पुत्रस्तु कोशलाधिपते प्रियः ॥ २०४ ॥
एवं मे घातितः सर्पस्तत्क्रोधवशनिश्चयात् ।
एतद् गुह्यं मया राजन् यत्त्वया पूर्वपृच्छितम् ॥ २०५ ॥
राजपुत्रवचः श्रुत्वा वधूर्वचनमब्रवीत् ।
अहं सर्पी महाराज पुरा निर्माल्यकूटके ॥ २०६ ॥
युद्धयमाना तु तेनैव नकुलेन निपातिता[3] ।
प्राग्ज्योतिषकुले जाता जाता तव वधूस्ततः[4] ॥ २०७ ॥
तेन क्रोधेन नृपते मूर्च्छिता मरणं प्रति ।
घातितो नकुलश्चैतद् गुह्यं प्रोक्तं तव प्रभो ॥ २०८ ॥
वधूपुत्रवचः श्रुत्वा स राजा शंसितव्रतः ।
मायातीर्थं समासाद्य ततः पञ्चत्वमागतः ॥ २०९ ॥
राजपुत्रो विशालाक्षी राजपुत्री यशस्विनी ।
पौण्डरीके ततस्तीर्थे तेऽपि पञ्चत्वमागताः ।
गतास्ते परमं स्थानं यत्र देवो जनार्दनः ॥ २१० ॥
राजा वा राजपुत्रश्च राजपुत्री यशस्विनी ।
मम चैव प्रसादेन तपसश्च बलेन च ।
कृत्वा सुदुष्करं कर्म श्वेतद्वीपमुपागताः ॥ २११ ॥
योऽसौ परिजनो देवि कृत्वा तु सुकृतं महत्[5] ।
सोऽपि सिद्धिं परां प्राप्तः श्वेतद्वीपमुपागतः[6] ॥ २१२ ॥
एष ते कथिता देवि पुष्टिः कुब्जाम्रकस्य च ।
तस्य ब्राह्मणमुख्यस्य रैभ्यस्य कथिता मया ॥ २१३ ॥

---

१. भुजङ्गमीति । २. क्रोधदोषपरिच्युतौ ।
३. अहं सर्पी महाराज नकुलेन निपातिता ।
४. वधूस्तव उपागता ।
५. तव । ६. तेऽपि सिद्धिं परां प्राप्ताः श्वेतद्वीपमुपागताः ।

एतत्पुण्यं परं जप्यं चातुर्वर्ण्येन सर्वदा[1] ।
सर्वकर्मस्सु मुख्यञ्च एतदेव विशिष्यते[2] ।
तेजसाञ्च महातेजस्तपसाञ्च महत्तपः ॥ २१४ ॥

एतन्न मूर्खमध्ये तु पठेच्चापि कदाचन । न पठेद् गोघ्नमध्ये तु वेदवेदाङ्गनिन्दके ॥

न पठेद् गुरुविद्विष्टे न पठेच्छास्त्रदूषके ।
पठेद् भागवतानाञ्च मध्ये दीक्षावतां तथा ॥ २१६ ॥

य एतत् पठते भूमे कल्यमुत्थाय मानवः ।
तारयेच्च स्वकुलजान्[3] दश पूर्वान् दशापरान् ॥ २१७ ॥

एतत्तु पठमानो वै यस्तु प्राणान् विमुञ्चति ।
चतुर्भुजश्च जायेत मल्लोकेषु प्रतिष्ठितः ॥ २१८ ॥

एतत्ते कथितं भूमे स्थानं कुब्जाम्रके तथा ।
मम भक्तसुखार्थाय किमन्यत् परिपृच्छसि ॥ २१९ ॥

इति वाराहपुराणे भगवच्छास्त्रे कुब्जाम्रकमाहात्म्ये रैभ्यानुग्रहणं
नाम षड्विंशत्यधिकशततमोऽध्यायः ।

---

१. एष जप्यश्च मुख्यश्च चातुर्वर्ण्यव्यवस्थितैः ।

२ कार्याणाञ्च महाकार्यं क्रियाणाञ्च महाक्रिया ।

३. पठंस्तारयते देवि ।

# सप्तविंशत्यधिकशततमोऽध्यायः

सूत उवाच

एवं धर्मास्ततः श्रुत्वा बहुमोक्षार्थकारणात् ।
प्रत्युवाच ततो भूमिर्लोकनाथं जनार्दनम् ॥ १ ॥
अहो प्रभावः क्षेत्रस्य[1] कथ्यमानोऽतिपुष्कलम् ।
अहं भारभराक्रान्ता लघुर्जातास्मि धावती[2] ॥ २ ॥
विमोहा च विशुद्धा च शृण्वाना च त्विमां प्रभो ।
अहं लोकेषु विख्याता मु त्रात् तव विनिःसृता ॥ ३ ॥
पुनः पृच्छामि ते देवि संशयं धर्मसंहितम् ।
येन धर्मविधानेन दीक्षा प्राप्येत पुष्कला ॥ ४ ॥
एतन्मे परमं गुह्यं परं कौतूहलञ्च मे । धर्मसंग्रहणार्थाय तद् भवान् वक्तुमर्हसि[3] ॥५॥
ततो महीवचः श्रुत्वा मेघदुन्दुभिनिःस्वनः ।
वराहरूपो भगवान् प्रत्युवाच वसुन्धराम् ॥ ६ ॥

वराह उवाच

शृणु तत्त्वेन मे देवि मम धर्मं सनातनम् ।
देवा एतन्न जानन्ति[4] ये च योगव्रते स्थिता ॥ ७ ॥
एतं[5] धर्मं वरारोहे माङ्गल्यमुखनिःसृतम्[6] ।
अहमेको विजानामि मद्भक्ता ये जना भुवि ॥ ८ ॥
यच्च पृच्छसि मे भद्रे दीक्षां भागवतीं कथाम् ।
तच्छृणुष्व वरारोहे कर्मसंसारमोक्षणम्[7] ॥ ९ ॥
मयोक्तां लभते कश्चिद् दीक्षाञ्चैव सुखावहाम्[8] ।
चातुर्वर्ण्यविधानेन तां दीक्षां शृणु सुन्दरि[9] ॥ १० ॥
मयि शान्तं मनः कृत्वा तदुत्कृष्टं च सुन्दरि ।
अभिगच्छेद् गुरुं देवि शाधि शिष्योऽस्मि मां गुरो[10] ॥११॥

---

१. धर्मस्य ।　　२. माधवि ।
३. (ग) श्लोकद्वयं नास्ति ।
४. मम देवा न जानन्ति ।　　५. इमम् ।
६. ममांगविधिनिःसृतम् ।　　७. कर्मसंसारसागरात् ।
८. मयोक्तां तु वरारोहे सर्ववर्णसुखावहाम् ।
९. चातुर्वर्ण्यं प्रवक्ष्यामि दीक्षामेव तु शाश्वतीम् इति (ग) ।
अत्र 'हरन्ति मनुजा येन गर्भसंसारसागरात् ।' इत्यधिकः ।
१०. शिष्यः अहं तव ।

तदाज्ञां तु पुरस्कृत्य दीक्षाद्रव्यानथाहरेत् ।
लाजा मधु कुशांश्चैव घृतञ्चामृतसन्निभम् ॥ १२ ॥
गन्धं सुमनसो धूपं दीपं प्रापणकादिकम्[1] ।
कृष्णाजिनञ्च पालाशं दण्डञ्चैव कमण्डलुम्[2] ॥ १३ ॥
घटं वासः पादुकाञ्च[3] शुक्लयज्ञोपवीतकम् ।
यन्त्रिकामर्थपात्रांञ्च चरुस्थालीं सदर्विकाम् ।
तिलव्रीहियवांश्चैव विविधांश्च फलोदकम्[4] ॥ १४ ॥
भक्ष्यं भोज्यान्नपानञ्च कर्मण्यांश्चैव सञ्चयान् ।
दीक्षिता यदि भुञ्जन्ति मम कर्मपरायणाः ॥ १५ ॥
यानि कानि च बीजानि[5] रत्नानि विविधानि च ।
काचकादीनि[6] सुश्रोणि तानि शीघ्रमुपाहरेत् ॥ १६ ॥
एतान्येवोपहार्याणि गुरुमूले ततः परम् । स्नात्वा मङ्गलसंरक्तो दीक्षाकामश्च ब्राह्मणः ।
गुरोश्चरणौ संगृह्य ब्रूहि किं करवाणि ते ॥ १७ ॥
ततस्तु गुर्वनुज्ञातो वेदीं कुर्याच्च पुष्कलाम् ।
ब्राह्मणो दीक्षमाणस्तु चतुरस्त्रान्तु षोडश ।
हस्तान् कृत्वा तत्र च[7] कलशोपरि युञ्जयेत् ॥ १८ ॥
प्रतिष्ठाप्य विधानेन धान्योपरि दृढं नवम् । जलेन पूरितं मन्त्रैः पुष्पपल्लवशोभितम्
तस्योपरि तिलैः पूर्णपात्रं स्थाप्य विधानतः ।
पूजयेन्मां गुरुं द्रव्यैः शिष्येणैवोपकल्पितैः ॥ २० ॥
तत्रार्चनविधिं कृत्वा गुरुधर्मविनिश्चयः ।
[8]पूर्वोक्तानि च द्रव्याणि वेदीमध्यमुपाहरेत् ॥ २१ ॥
चतुरः कलशान् दद्याच्चतुष्पार्श्वेषु सुन्दरि ।
वारिपूर्णान् द्विजाव्य शुद्धान् सहकारविभूषितान् ॥ २२ ॥
सर्वतः शुक्लसूत्रेण वेष्टयेत तथानघे ।
पूर्णपात्राणि चत्वारि चतुष्पार्श्वेषु स्थापयेत् ॥ २३ ॥
एवं मन्त्रं ततः कृत्वा दद्याद्दीक्षाप्रयोजकः ।
स च मन्त्रो यथान्यायं येन वा तुष्यते गुरुः ॥ २४ ॥

---

१. धूपगन्धाश्च माल्याक्ष पालाशो दण्डयष्टिकम् ।
२. चर्मकं चाजिनञ्चैव दण्डञ्चैव कमण्डलुम् ।
३. वासांसि पादुके चैव । ४. फलांस्तथा ।
५. तानि कानि च । ६. कनकादीनि ।
७. छन्दो भङ्गः । ८. यानि कानि च ।

यथान्यायेन संगृह्य गुरुकर्मविनिश्चितः । प्रपद्यावसथं विष्णोर्दीक्षाणां परिकाङ्क्षिणः ॥

उपस्पृश्य यथान्यायं भूत्वा पूर्वमुखस्ततः ।
सर्वांस्तु श्रावयेच्छिष्यान् दीक्षणार्थं न संशयः[1] ॥ २६ ॥
यस्तु भागवतान् दृष्ट्वा स्वयं भागवतः शुचिः[2] ।
अभ्युत्थानं न कुर्वीत तेनाहन्तु विहिंसितः[3] ॥ २७ ॥

कन्यां दत्त्वा पुनस्तां तु कर्मणा नोपपादयेत् ।
अष्टौ पितृगणास्तेन हिंसिता नात्र संशयः ॥ २८ ॥
भार्यां प्रियसखीं यस्तु साध्वीं हिंसति निर्घृणः ।
न तेन तां प्राप्नुवन्ति हिंसका दुष्टयोनिजाः[4] ॥ २९ ॥
ब्रह्मघ्नश्च कृतघ्नश्च गोघ्नश्च कृतपातकः ।
एतांच्छिष्यान् विवर्जेत[5] ब्रह्मा ये चान्यपातकाः ॥ ३० ॥

बिल्ववृक्षोदुम्बरश्च तथा चान्ये कदाचन । कर्मण्याश्चैव ये वृक्षा न छेतव्याः कदाचन ॥

यदिच्छेत् परमां सिद्धिं मोक्षधर्मं सनातनम् ।
भक्ष्याभक्ष्यञ्च तं शिष्यं वेदितव्य तदन्तर ॥ ३२ ॥
करीरस्य वधः शस्तः फलान्यौदुम्बरस्य च ।
सद्योभक्षी भवत्तेन अभक्ष्या पूतिबालिका ॥ ३३ ॥
न भक्षणीयं वाराहं मांसं मत्स्याश्च सर्वशः[6] ।
अभक्ष्या ब्राह्मणैरेते दीक्षितैश्च[7] न संशयः ॥ ३४ ॥
परीवादं न कुर्वीत न हिंसां वा कदाचन ।
पैशुन्यं च न कर्तव्यं स्तैन्यं वापि कदाचन[8] ॥ ३५ ॥

अतिथिश्चागतं दृष्ट्वा दूराध्वानं गतं क्वचित्[9] ।
संविभागस्तु कर्तव्यो येन केनापि पुत्रक ॥ ३६ ॥
गुरुपत्नी राजपत्नी ब्राह्मणस्त्री[10] कदाचन ।
मनसापि न गन्तव्या एवं विष्णुः प्रभाषते ॥ ३७ ॥
कनकादीनि रत्नानि यौवनस्था च कामिनी ।

---

१. सर्वेषां श्रावयेद् विद्यां रक्षणार्थं न संशयः ।
२. भूत्वा भागवतः ।  ३. अहं तेनापि हिंसितः ।
४. न तेषां पुनरावृत्ति हिंसितस्याथ सुन्दरि ।
५. विवर्जयेत् ।
६. भुक्त्वा मांसं वराहस्य मत्स्यस्य सकलेश्वरि ।
७. दीक्षितैव ।  ८. पिशुनः स्तेनो वा क्वचित् ।
९. दूरस्थानागतं क्वचित् ।  १०. ब्राह्मणी वा ।

तत्र चित्तं न कर्तव्यमेवं विष्णुः प्रभाषते ॥ ३८ ॥
दृष्ट्वा परस्य भाग्यानि आत्मनो व्यसनं तथा ।
तत्र मन्युर्न कर्तव्य एवं धर्मः सनातनः ॥ ३९ ॥
एवं ततः श्रावयीत[1] दीक्षाकामं वसुन्धरे ।
छत्रञ्चोपानहञ्चैव मनसा चोपकल्पयेत् ॥ ४० ॥
द्वे द्वे औदुम्बरस्य पत्रे वेदीमध्ये तु स्थापयेत् ।
क्षुरञ्चैव वरारोहे[2] जलपूर्णञ्च भाजनम् ।
ममावाहनपूर्वं तु मन्त्रेण विधिनार्चयेत् ॥ ४१ ॥

ओं मन्त्रः—सप्त द्वीपानि सप्त सागराश्च सप्त पर्वताश्च दश स्वर्गसहस्राश्च[3] समस्ताश्च नमोऽस्तु सर्वास्ते हृदये वसन्ति । यश्चैतद् वर्षति पुनरुन्नमति । ओं भगवन् वासुदेव ममैतत् सारय युक्तं वराहरूपसृष्टेन[4] पृथिव्यां तु मन्त्रानुस्मरणञ्च य आज्ञापयानुभावनास्माकमाज्ञप्तमनुचिन्तयित्वा भगवन्नागच्छ दीक्षाकामविप्रस्त्वत्-प्रसादात्तु दीक्षति । एतन्मन्त्रमुदाहरित्वा[5] शिरसा जानुभ्यामवनिं गतेन भवितव्यम् । ओं स्वागतं स्वागतवानिति ।

तत एतेन मन्त्रेण आनयित्वा वसुन्धरे ।
अर्घ्यं पाद्यञ्च दातव्यं मन्त्रेण विधिनिश्चयात् ॥ ४२ ॥

मन्त्रः—अकृतघ्ने देवानसुराकृतघ्नरुद्रेण ब्राह्मणाय च लब्धं सर्वमिमां भववते-ऽस्तु दत्तं प्रतिगृह्णीष्व च लोकनाथ ।

एवं भूमे ततो दत्त्वा अर्घ्यं पाद्यञ्च कर्मणा ।
क्षुरं गृहीत्वा[6] यथान्यायमिमं मन्त्रमुदीरयेत् ॥ ४३ ॥

मन्त्रः—एवं वरुणः पातु शिष्य ते वपतः शिरः ।
जलेन विष्णुयुक्तेन दीक्षा संसारमोक्षणम् ॥ ४४ ॥

एकस्य कलशं दद्यात् कर्मकारस्य सुन्दरि ।
निष्कलं तु शिरः कृत्वा शोणितेन विवर्जितम् ।
पुनः स्नानं ततः कृत्वा शीघ्रमेव न संशयः ॥ ४५ ॥

एतस्य विधिवत् कृत्वा दीक्षाकामस्य सुन्दरि ।
दत्त्वा संसारमोक्षाय सर्वकामविनिश्चितः ।
जानुभ्यामवनीं गत्वा इमं मन्त्रमुदीरयेत् ॥ ४६ ॥

---

१. श्रावयित्वा । २. उदुम्बरं वरारोहे ।
३. सप्त स्वर्गसहस्राश्च । ४. वराहरूपतुष्टेन ।
५. उदाहृत्य । ६ क्षीरं गृह्य ।

ओं मन्त्रः--वेदाम्यहं[1] भागवतांश्च सर्वान्[2] सुदीक्षिता ये गुरवश्च सर्वे ।
विष्णुप्रसादेन च लब्धदीक्षा मम प्रसीदन्तु नमामि सर्वान् ॥ ४७ ॥
नत्वा तु भगवद्-भक्तान् प्रज्वाल्य च हुताशनम् ।
घृतेन मधुमिश्रेण लाजाकृष्णतिलैस्तथा[3] ॥ ४८ ॥
सप्तवारांस्ततो दत्त्वा विंशतिश्च तिलौदनम्[4] ।
जानुभ्यामवनिं गत्वा इमं मन्त्रमुदाहरेत् ॥ ४९ ॥
मन्त्रः—अश्विनौ दिशः सोमसूर्यौ साक्षिमात्रं[5],
वयं प्रसन्नाः शृण्वन्तु मे सत्यवाक्यं वदामि ।
सत्येन धार्यते भूमिः सत्येन तिष्ठति भूमिः ।
सत्येन गच्छते सूर्यो वायुः सत्येन वाति च[6] ॥ ५० ॥
एवं सत्यं ततः कृत्वा ब्राह्मणो वीक्षिणं पुनः ।
गुरुं प्रसादयेत् तत्र मन्त्रेण विधिनाचर्चयन् ॥ ५१ ॥
तिस्रः प्रदक्षिणाः कृत्वा देवं भागवतं गुरुम् ।
गुरुपादौ तु संगृह्य[7] इमं मन्त्रमुदीरयेत् ॥ ५२ ॥
मन्त्रः--गुरुदेवप्रसादेन लब्धा दीक्षा यदृच्छया ।
यच्चैवापकृतं[8] किञ्चिद् गुरुर्मर्षयतां मम ॥ ५३ ॥
एवं प्रसादयित्वा तु शिष्यो मन्त्रेण सुन्दरि ।
वेदीमध्ये स्थापयित्वा भूत्वा पूर्वमुखस्ततः ।
शिष्यमेव ततो दृष्ट्वा गृहीत्वा च कमण्डलुम् ।
शुक्लयज्ञोपवीतञ्च इमं मन्त्रमुदाहरेत् ॥ ५४ ॥
मन्त्रः—विष्णुप्रसादेन गतोऽसि सिद्धिं प्राप्ता च दीक्षा सकमण्डलुश्च ।
गृहीत्वा तु कराभ्यां युक्तोऽसि कर्मणा क्रियायाञ्चैव[9] ॥ ५५ ॥
मुखपद्मं ततः कृत्वा दीक्षितो गुरुणा तथा ।
सर्वप्रदक्षिणं कृत्वा इमं मन्त्रमुदाहरेत् ॥ ५६ ॥
अधोऽधो भूत्वा यद्यहं भ्राम्यंल्लब्धो गुरुर्विष्णुदीक्षा च लब्धा ।
तव प्रसादाच्च गुरो यथा च ॥ ५७ ॥

---

१. वेद्मि इति साधु । २. वन्दामि भो भागवतांश्च सर्वान् ।
३. कृष्णतिलेन च ।
४. विंशत्येवं प्रमोदनम् । ५. साक्षिपात्रम् ।
६. भूमिः सत्येन वर्धते । ७. गुरवे चरणौ गृह्य ।
८. यत्ते पापं कृतम् ।
९. आगृह्य राज्यकराभ्यां युक्ते सिद्धिं कर्मणा क्रियायाञ्चैव ।

एतेन मन्त्रेण मुखं पदं कारयेत् । शौचसेके वै कुर्याद्देवान् तन्तुवाससम् ।

एवं वै वास आदत्ते गृह्य वत्स कमण्डलुम् ।
इमं लोकेषु विख्यात शोधनं सर्वकर्मसु ॥ ५८ ॥

मन्त्रः—

गृह्णीष्व[1] गन्धपात्राणि सर्वगन्धं सुखोचितम् । सर्ववैष्णवकं शुद्धं सर्वसंसारमोक्षणम् ।
मधुपर्कं गृहीत्वा तु इमं मन्त्रमुदीरयेत्[2] ॥ ५९ ॥

मन्त्रः—

गृहाण[3] मधुपर्कञ्च प्रार्थकाय विशोधनम् ।
ततो गृहीत्वा चरणौ गुरुर्यत्नात् सुतोपयेत्[4] ॥ ६० ॥
शिरसा[5] चाञ्जलिं कृत्वा मनश्चैव सुसंयतम् ।
गुरूपदिष्टं सन्धार्य[6] इमं मन्त्रमुदीरयेत्[7] ॥ ६१ ॥

मन्त्रः—

शृण्वन्तु मे भागवतास्तु सर्वे गुरुश्च मे सर्वकामक्षयं चकार ।
अहं शिष्यो दासभूतस्तथैव[8] देवसमो गुरुश्च मे तथोपपन्नम्[9] ॥ ६२ ॥

एषागमे ब्राह्मणस्य दीक्षा भूमे ह्युदाहृता[10] ।
त्रयाणामथ वर्णानां मम दीक्षाविधीन् शृणु ॥ ६३ ॥

एतेनैव विधानेन दीक्षयेत वसुन्धरे । उभौ च प्राप्नुतां सिद्धिमाचार्यः शिष्य एव च ।

इति वाराहपुराणे ब्राह्मणदीक्षासूत्रं नाम
सप्तविंशत्यधिकशततमोऽध्यायः ।

---

१. गृह्य त्वं गन्धपात्राणि ।
२. एतदर्धं (ग) नास्ति । ३. गृह्य त्वम् ।
४. उभौ तु चरणौ गृह्य उपाध्यायोपकल्पयेत् ५. मनसा
६. अथ गृह्य यथान्यायम् । ७. उदाहरेत् ।
८. तव । ९. दासभूतस्तव देव समयश्च मे यथोपपन्नः ।
१०. एषागमेषु वर्णेषु दीक्षा भूमि विजानता ।

# अष्टात्रिंशत्यधिकशततमोऽध्यायः ।

वराह उवाच

क्षत्रियस्य प्रवक्ष्यामि तच्छृणुष्व[1] वसुन्धरे ।
त्यक्त्वा प्रहरणान् सर्वान् यत्किञ्चित् पूर्वशिक्षितम् ।
पूर्वमन्त्रेण[2] मे भूमे तस्य दीक्षाञ्च कारयेत् ॥ १ ॥
मया च पूर्वमुक्तानि यानि संसारकाणि च ।
तानि सर्वाणि चानीय एकं वर्ज्यं यशस्विनि ॥ २ ॥
न दद्यात् कृष्णसारस्य चर्म तत्र कदाचन ।
पालाशं दण्डकाष्ठञ्च दीक्षायान्न तु कारयेत् ॥ ३ ॥
छागस्य चैव कृष्णस्य चर्म तत्र प्रदापयेत् ।
आश्वत्थं दण्डकाष्ठं तु दीक्षायां तदनन्तरम् ॥ ४ ॥
कृत्वा द्वादशहस्तां तु वेदीं तत्रोपवेपयेत् ।
सर्वं ममोक्तं कर्त्तव्यं यच्च मे[3] पूर्वभाषितम् ॥ ५ ॥
एवं क्षत्रियदीक्षायां सर्वं सम्पाद्य यत्नतः[4] ।
चरणौ मम सङ्गृह्य[5] इमं मन्त्रमुदाहरेत् ॥ ६ ॥

मन्त्रः – व्यक्तानि विष्णो शस्त्राणि त्यक्तं सर्वं क्षत्रियकर्मं सर्वं त्यक्त्वा देवं विष्णुं प्रपन्नोऽथ संसाराद्धि जन्मनान्तरायस्व ।

एवं ततो वचश्चोक्त्वा क्षत्रियो मम पार्श्वतः ।
उभौ च चरणौ गृह्य इमं मन्त्रमुदीरयेत्[6] ॥ ७ ॥

मन्त्रः—

नाहं शस्त्रं देवदेव स्पृशामि परापवादं न च देव ब्रवीमि ।
कर्म करोमि संसारमोक्षणं त्वया चोक्तमेव वराहसंस्थान[7] ॥ ८ ॥

तत एवं वचो ब्रूते सर्वञ्चैवात्र पूजयेत्[8] ।
विविधैर्गन्धपत्रैश्च धूपैश्चैव यथोदितम् ॥ ९ ॥
यथोक्तेनैव तान् भूमे भोजयेत् तदनन्तरम्[9] ।
शुद्धान् भागवतांश्चैव[10] एवमेतन्न संशयः ॥ १० ॥
एषा वै क्षत्रिये दीक्षा देवि संसारमोक्षणम् ।
मत्-प्रसादेन कर्तव्यं यदीच्छेत् सिद्धिमुत्तमाम् ॥ ११ ॥

---

१. शृणोहि । २. पूर्वक्रमेण ।
३. यन्मया । ४. एवं कृत्वा ततः सर्वं क्षत्रिये दीक्षाकारिणोति ।
५. ममैव चरणं गत्वा । ६ मन्त्रमुदाहरेत् ।
७. संस्थितम् । ८. योजयेत् ।
९. गोपयेत्तदनन्तरम् । १०. शुभैर्भागवतैश्च ।

वैश्यस्य चैव वक्ष्यामि[1] शृणु तत्त्वेन सुन्दरि ।
दीक्षा च यादृशी तस्य[2] यथा भवति सुन्दरि ॥ १२ ॥
त्यक्त्वा तु वैश्यकर्माणि मम कर्मपरायणः ।
यथा च लभते सिद्धिं तृतीया वर्णसंस्थितिः ॥ १३ ॥
सर्वं तत्र समानांय यन्मया पूर्वभाषितम् ।
दशहस्तां ततः कृत्वा वेदीं वेदविचेतितः [3] ॥ १४ ॥
लेपयेद् गोमयेनादौ पूर्वन्यायेन तत्र वै ।
चर्मणापि तु छागस्य स्वगात्रं परिवेष्टयेत् ॥ १५ ॥
उदुम्बरं दन्तकाष्ठं गृहीत्वा दक्षिणे करे[4] । शुद्धभागवतानाञ्च कृत्वा त्रिः परिवर्तनम्[5]
जानुभ्यामवनीं गत्वा इमं मन्त्रमुदीरयेत्[6] ॥ १६ ॥

मन्त्रः—
अहं वैश्यो भवन्तमुपागतः प्रमुच्य कर्माणि च वैश्ययोगम् ।
दीक्षा च लब्धा भगवत्प्रसादात् प्रसीदतां[7] मे भवबन्धमोक्षणम् ॥ १७ ॥
ममैवं सोऽपि चोक्त्वा वै मम कर्मप्रसादवान्[8] ।
गुरोश्च चरणौ गृह्य इमं मन्त्रमुदाहरेत् ॥ १८ ॥
त्यक्त्वा वै कृषिगोरक्षा-वाणिज्य-क्रयविक्रयम् ।
लब्धा च त्वत्प्रसादेन विष्णुदीक्षा मयाऽधुना[9] ॥ १९ ॥
देवाभिवादनं कृत्वा पुरो भागवतेषु च । पश्चात्तु भोजनं दद्यादपराधबहिष्कृतम् ॥
एवं दीक्षा तु वैश्यानां मम मार्गानुसारिणाम् ।
येन मुच्यन्ति[10] सुश्रोणि घोरसंसारसागरात् ॥ २१ ॥
शूद्रस्यापि प्रवक्ष्यामि मद्भक्तस्य वराङ्गने[11] ।
यस्तु दीक्षां समासाद्य मुच्यते सर्वकिल्बिषैः ॥ २२ ॥
सर्वसंस्कार-द्रव्याणि मया पूर्वोदितानि च ।
दीक्षाकामस्य शूद्रस्य शीघ्रं तानि प्रकल्पयेत् ॥ २३ ॥

---

१. वैश्यस्यैव प्रवक्ष्यामि । २. तत्र ।
३. विशुद्धस्तां समालिप्य पूर्वन्यायेन कारयेत् ।
(ग) तत्र परश्लोकस्य पूर्वार्धं नास्ति ।
४. गृह्य हस्ते च दक्षिणे ।
५. कुर्याद् भागवतान् शुद्धान् त्रीणि वारान् प्रदक्षिणम् ।
६. मन्त्रमुदाहरेत् ।
७. प्रसीद । ८. मम त्वेवं ततश्चोक्त्वा ममकर्मप्रसादनात् ।
९. विष्णुदीक्षाऽहं कामये । १०. मुच्येत । (ग)
११. वसुन्धरे (ग)

अष्टहस्तां ततो देवि संलिप्य नीयतां ततः।
चर्म नीलस्य छागस्य कल्पयेच्छूद्रयोनये।
दण्डञ्च वैणवं दद्यान्नीलं वस्त्रञ्च तस्य वै[1] ॥ २४ ॥
एवं गृहीत्वा शूद्रोऽपि दीक्षायाः कारणं परम्[2]।
ममैव शरणं गत्वा इमं मन्त्रमुदाहरेत् ॥ २५ ॥

मन्त्रः—

शूद्रोऽहं शूद्रकर्माणि मुक्त्वा भक्ष्यञ्च सर्वशः।
भक्ष्याभक्ष्यं ततस्त्यक्त्वा त्यक्त्वा च शूद्रकर्म च ॥ २६ ॥
विमुक्तः सर्वपापेभ्यो लब्धसंज्ञो गतस्पृहः ॥ २७ ॥

एवं वदेत् ततो देवं[3] शूद्रो दीक्षाभिकाङ्क्षिणम्।
उभौ ता चरणौ गृह्य गुरोर्वै तदनन्तरम्। गुरोः प्रसादनार्थाय इमं मन्त्रमुदाहरेत् ॥

मन्त्रः-'विष्णुप्रसादे गुह्यं प्रसन्नात् पूर्ववच्च
लब्धा चैव संसारमोक्षणाय करोमि कर्म प्रसीद'।
एतन्मन्त्रं समुच्चार्य कुर्यात्तत्र प्रदक्षिणम्।
चतुरश्च यथान्यायं पुनश्चैवाभिवादयेत् ॥ २९ ॥

अनन्तरं तत कुर्याद् गन्धमाल्येन चार्चनम्।
भोजयेच्च[4] यथान्यायमपराधविवर्जितः ॥ ३० ॥
दीक्षा एषा च शूद्राणामुपचारश्च ईदृशः।
चतुर्णामपि वर्णानां दुःखसंसारमोक्षणम् ॥ ३१ ॥

अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व[5] वसुन्धरे।
चतुर्णामपि वर्णानां यथा छत्र[6] प्रदीयते ॥ ३२ ॥
ब्राह्मणे पाण्डुरच्छत्रं क्षत्रिये रक्तमेव च।
वैश्याय पीतं वै दद्यान्नीलं शूद्राय दापयेत् ॥ ३३ ॥

सूत उवाच

चातुर्वर्ण्यस्य श्रुत्वा वै सा मही शंसितव्रता।
वराहं पुनरप्याह नत्वा सा धरणी तदा[7] ॥ ३४ ॥

---

१. उपलिप्य समहस्त स्थण्डिलं तदनन्तरम्।
चर्मणा कृष्णछागस्य तस्य गात्राणि वेष्टते ॥
२. एवं गृह्य यथान्या शूद्रो दीक्षाय कारणम्।
३. देवि !
४. भोजयेत। ५. शृणोहि।
६. छत्रम्। ७. वराहरूपिणं वन्द्यं प्रत्युवाच वसुन्धरा।

धरोवाच[1]

श्रुता दीक्षा यथान्यायं चातुर्वर्ण्यस्य केशव ।
दीक्षितैः किं न कर्तव्यं तव कर्मपरायणैः ॥ ३५ ॥
ततो महीवचः श्रुत्वा मेघदुन्दुभिनिःस्वनः ।
वराहरूपी भगवानुवाच स महाद्युतिः ॥ ३६ ॥

वराह उवाच

शृणु तत्त्वेन कल्याणि यन्मां त्वं परिपृच्छसि ।
सर्वत्र चिन्तनीयोऽहं गुह्यमेव गणान्तिकम् ॥ ३७ ॥
नारायणवचः श्रुत्वा धरणी शंसितव्रता । हृष्टतुष्टमनास्तत्र श्रुत्वा तच्च महौजसम्
शुचिर्भागवत-श्रेष्ठा तव कर्माणि नित्यशः ॥ ३८ ॥
ततः कमलपत्राक्षी भक्ताभक्तेषु वत्सला । कराभ्यामञ्जलिं कृत्वा नारायणमथाब्रवीत् ॥

धरण्युवाच

त्वद्भक्तेन महाभाग विधिना दीक्षितेन च ।
तव चिन्तापरेणात्र किं कर्तव्यञ्च माधव ॥ ४० ॥
केन चिन्तयितव्यस्त्वमचिन्त्यो[2] मानुषैः परः ।
किञ्च भागवतैः कार्यं यथावित्तं न शक्यते ॥ ४१ ॥
ततो भूम्या वचः श्रुत्वा आदिरव्यक्तसम्भवः ।
मधुरं स्वरमादाय प्रत्युवाच वसुन्धराम् ॥ ४२ ॥

वराह उवाच

देवि तत्त्वेन वक्ष्यामि यन्मां त्वं परिपृच्छसि ।
येन चिन्तयसे चिन्तां मम कर्मपरायणा[3] ॥ ४३ ॥
एषा गणान्तिका नाम दीक्षाङ्गबीजनिःसृता ।
एतद् गुह्यं महाभागे मम चिन्तां विचिन्तयेत् ॥ ४४ ॥
दीक्षितेन तु शुद्धेन मम निश्चितकर्मणा[4] ।
ग्रहीतव्यं[5] विशालाक्षि मन्त्रेण विधिनात्र वै ॥ ४५ ॥
यस्तु भागवतो भूत्वा तद् गृह्णाति गणान्तिकाम् ।
जनस्य दर्शनस्पर्शसंयुक्तां वामसंयुताम् ।
तस्य धर्मो न विद्येत दीक्षा तस्य महाफला[6] ॥ ४६ ॥

---

१. धरण्युवाच । २. चिन्तयसे देव ।
३. चिन्ता चिन्तयते मम कर्मपरायणः ।
४. दीक्षितेन विशुद्धेन विधिदृष्टेन कर्मणा ।
५. मद्धितार्थम् । ६. न स दीक्षित उच्यते ।

यस्तु गृह्णाति सुश्रोणि मन्त्रपूतां गणान्तिकाम् ।
आसुरो नाम सा दीक्षा यया धर्मः प्रवर्तते ॥ ४७ ॥
यस्माद् गणान्तिकां गुह्यां चिन्तयेच्छुद्धमानसः ।
गुह्यां गणान्तिकां यो मां चिन्तयेत् स बुधोत्तम[1] ।
जन्मान्तरसहस्राणि चिन्तिता तेन तेन सः ॥ ४८ ॥
प्रश्नस्य प्रवक्ष्यामि यथा शिष्याय दीयते ।
मन्त्रं लोकसुखार्थाय तच्छृणुष्व वसुन्धरे[2] ॥ ४९ ॥
कौमुदस्य तु मासस्य मार्गशीर्षस्य वाप्यथ[3] ।
वैशाखस्यापि मासस्य शुक्लपक्षे तु द्वादशी ॥ ५० ॥
कुर्यान्निरामिषं तत्र दिनानि त्रीणि निश्चितः ।
तस्मिन् गणान्तिकं ग्राह्यं मम धर्मविनिश्चयात्[4] ॥ १ ॥
ममाग्रतो वरारोहे प्रज्वाल्य च हुताशनम् ।
कुशैरास्तरणं कृत्वा[5] स्थापयित्वा गणान्तिकम् ॥ ५२ ॥
ततः शिष्यो गुरुश्चैव दीक्षितः शुचिरुत्तमः ।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ॥ ५३ ॥

मन्त्रः—या धारिता पूर्वपितामहेन[6] ब्रह्मण्यदेवेन भवोद्भवेन ।
नारायणाद् दक्षिणगात्रजातां हे शिष्य गृह्णीष्व स वै त्वमेव ॥ ५४ ॥
तत एतेन मन्त्रेण गुरुर्गृह्य[7] गणान्तिकम् ।
शिष्याय दत्त्वा स्निग्धाय इमं मन्त्रमुदीरयेत्[8] ॥ ५५ ॥

मन्त्रः—नारायणस्य दक्षिणगात्रजातां स्वशिष्य गृह्णीष्व समयेन देवीम् ।
एतद् विचिन्त्यापर एव भूत्वा भवे पुनर्भावनमेति नैव ॥ ५६ ॥

धरण्युवाच

स्नानोपकल्पनान्तेषु किं कर्तव्यं तु माधव ।
प्रसाधनविधिञ्चैव केन मन्त्रेण कल्पयेत्[9] ।
अकर्मण्येन मुच्येत तव कर्मपरायणः ॥ ५७ ॥

१. गुह्यं गणान्तिकां देवी यो मां चिन्तयते बुधः ।
२. मन्त्रं लोकसुखार्थं च तच्छृणोहि वसुन्धरे ।
३. मार्गशीर्षस्य वा तथा ।
४. तस्मिन् गणान्तिकां प्राप्य मम धर्मविनिश्चयात् ।
५. संस्तरणं कृत्वा ।
६. पाद्यादिना पूजिता पितामहेन ।
७. पुनर्गृह्य गणान्तिकाम् ।
८. शिष्याय प्रददौ तत्र पुनर्मन्त्रमुदाहरेत् ।
९. कारयेत् ।

ततो भूम्या वचः श्रुत्वा लोकनाथो जनार्दनः ।
धर्मसंयुक्तवाक्येन प्रत्युवाच वसुन्धराम् ॥ ५८ ॥

वराह उवाच

देवि तत्त्वेन वक्ष्यामि यन्मां त्वं परिपृच्छसि ।
स्नानस्यैवोपचाराणि यानि कुर्वन्ति कर्मिणः ॥ ५९ ॥

वृत्तेष्वेवोपचारेषु जलप्राधानिकेषु च । कङ्कतीश्चाञ्जनश्चैव दर्पणश्चैव सुन्दरि ॥
यथा मन्त्रेण दातव्यं तच्छृणुष्व वसुन्धरे[1] ॥ ६० ॥
स्पृष्ट्वा तु मम गात्राणि क्षौमवस्त्रेण संवृतः ।
अञ्जनं कङ्कतीञ्चैव शीघ्रमेव प्रसादयेत्[2] ॥ ६ ॥
ततो जानुस्थितो भूत्वा मम कर्मपरायणः ।
अञ्जलौ कङ्कतीं[3] गृह्य इमं मन्त्रमुदाहरेत् ॥ ६२ ॥

मन्त्रः—एतां कङ्कतीमञ्जलिस्थां प्रगृह्य[4] प्रसीद नारायण शिरः प्रसाधि हि ।
महानुभाव विश्वनेत्रे स्वनेत्रे याभ्यां पश्यसे त्वं त्रिलोकीम् ।
लोकप्रभो सर्वलोकप्रधान एषो जनमञ्जनं लोकनाथ ॥ ६३ ॥

ततः संस्नापयेद् देवं मन्त्रेणानेन सुव्रतम् ॥ ६४ ॥

मन्त्रः—देवदेव स्नानीयमिदं मम कल्पितं सुवर्णकलसं गृहाण प्रसीद एषोऽञ्जलिर्मया परिकल्पितः स्नाहि स्नाहीति[5] ।

नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ॥ ६५ ॥

मन्त्रः—एषा माया माधव त्वत्प्रसादाद् गुरुप्रसादाच्च हि मन्त्रपूजा ।
प्राप्ता ममैषा च गणान्तिका वै भवेद्धर्मो न च मे कदाचित् ॥ ६६ ॥

य एतेन विधानेन मम कर्माणि दीक्षितः ।
गुरोर्गृहीत्वा महतो मम लोकाय गच्छति ।
कुशिष्याय न दातव्या पिशुनाय शठाय च ॥ ६७ ॥
एषा चैव वरारोहे गृहीत्वा गणनान्तिका ।
सुशिष्याय च दातव्या हस्ते चैव गणान्तिका ॥ ६८ ॥
उत्तमाष्टाधिकशतं पञ्चाशत्तु मध्यमा ।
तदर्धं कन्यसी चापि परिमाणेन सुन्दरि[6] ॥ ६९ ॥

---

१. कङ्कतीश्चाञ्जनञ्चैव शीघ्रमेव प्रकल्पयेत् ।
दर्पणञ्च वरारोहे येन मन्त्रेण दीयते ॥
२. प्रकल्पयेत् । ३. अञ्जलिकणकम् ।
४. एषोऽञ्जलि कणकं देव । ५. एष पाठः (ग) नास्ति ।
६. परिमाणं विधीयते ।

रुद्राक्षैरुत्तमा सा तु मध्यमा पुत्रजीवकैः[1]।
पद्माक्षैः कन्यसी ज्ञेया देवि ते कथिता मया ॥ ७० ॥
एतत् कथं न जानाति[2] जन्मान्तरशतैरपि।
सर्वलोकहितां शुद्धां मोक्षकामां गणान्तिकाम् ॥ ७१ ॥
नोच्छिष्टः संस्पृशेत् तां तु[3] स्त्रीणां हस्ते न कारयेत्।
आकाशे स्थापनं कुर्यान्न च वामेन संस्पृशेत् ॥ ७२ ॥
न दर्शयेच्च कस्यापि चिन्तयित्वा तु पूजयेत्[4]।
एतत्ते परमं गुह्यमाख्यातं मोक्षदायकम् ॥ ७३ ॥
एवं हि विधिपूर्वेण पालयेत गणान्तिकाम्[5]।
विशुद्धो मम भक्तश्च मम लोकाय गच्छति ॥ ७४ ॥
एवं विष्णोर्वचः श्रुत्वा धरणी शंसितव्रता[6]।
प्रत्युवाच परं श्रेष्ठं लोकनाथं महौजसम् ॥ ७५ ॥
दर्पणं ते कथं देया[7] तन्ममाख्याहि माधव।
येन तुष्टो निजं रूपं पश्यसे चिन्तितः प्रभोः ॥ ७६ ॥
धरण्यास्तद्वचः श्रुत्वा वराहः पुनरब्रवीत्।
शृणु मे दर्पणविधिं यथावद् देवि सुव्रते।
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ॥ ७७ ॥

मन्त्रः—श्रुतिर्भागवती श्रेष्ठा श्रुती अग्निर्द्विजश्च तव मुखं नासेऽश्विनौ नयने चन्द्रसूर्यौ मुखञ्च चन्द्र इव गात्राणि जगत्प्रधानानामञ्च दर्पणं पश्य पश्य रूपम्[8]।

य एतेन विधानेन मम कर्मपरायणः।
करोति मम कर्माणि तारित कुलसप्तकम्[9] ॥ ७८ ॥
एतेन मन्त्रेण वै भूमे उपचारस्तु[10] ईदृशः।
हृष्टतुष्टेन कर्तव्यो यदीच्छेत् परमां गतिम् ॥ ७९ ॥

इति वाराहपुराणे कङ्कताञ्जनदर्पणं नाम अष्टाविंशत्यधिकशततमोऽध्यायः।

---

१. रुद्राक्षा उत्तमा चैव पुत्रजीवकमध्यमा। २. एतन्न जानते कश्चित्।
३. नोच्छिष्टेन तु स्प्रष्टव्या। ४. यदिच्छेत् परमां गतिम्।
५. गुह्यात्तु परमं गुह्यं सन्ध्योपासनमेव च।
एष मन्त्रश्च जापश्च पूज्या वै गणनान्तिका ॥
६. रत्नभूषिता। ७. दद्यात्।
८. शुचिर्भागवता: श्रेष्ठा: तव कर्म विनिश्चितम्
गात्राणि यत् प्रयत्नानि मुखं चन्द्रो यमता नेत्रे दर्पणं
च मे दर्पणलोकनाथस्य: स्वरूपजगत्सर्वतः। इति (ग)
९. मम कर्माणि कुर्वीत तारितान् सप्त वै कुलान्। १०. भूमि उपचारश्च।

# ऊनत्रिंशदधिकशततमोऽध्यायः

वराह उवाच

भूषितालङ्कृतं कृत्वा मम कर्मपरायणः ।
शुक्लं यज्ञोपवीतं च देयं नवगुणं तथा[1] ।
अन्यच्च ते प्रवक्ष्यामि कर्म लोकसुखावहम् ।
येन मन्त्रेण दातव्यं ललाटे तिलकं मम[2] ॥ २ ॥

---

१. दद्यान्नवगुणं तथा ।
अस्माच्छ्लोकादनन्तरं (ग) अधिकः पाठो वर्तते यथा —
शिरसा चाऽञ्जलिं कृत्वा वसुधा पुनरब्रवीत् ।

धरण्युवाच

एतन्मां परमं गुह्यं तद्भक्तां वक्तुमर्हसि । सन्ध्यां वैकेन मन्त्रेण तव कर्मपरायणाम् ।
वद भागवतां शुद्धां तव कर्मविनिश्चितम् । ततो भूमिवचः श्रुत्वा भूतानां प्रभवोऽव्ययः ।
वराहरूपो भगवान् प्रत्युवाच वसुन्धराम् ॥

वराह उवाच

शृणु माधवि तत्त्वेन यन्मां त्वं परिपृच्छसि । कथयिष्यामि ते भद्रे प्रवरं गुह्यमुत्तमम् ।
यया वन्दितसुभूपैः पुण्या भागवताः शुभाः । कृत्वा तु मम कर्माणि शुचिः संसारमोक्षणीम् ॥
कुर्वीतैव वरां संध्यां यथावद्विधिनिश्चितम् । जलाञ्जलिं ततो गृह्य मम भक्त्या व्यवस्थितः ।
मुहूर्तं ध्यानमास्थाय इमं मन्त्रमुदाहरेत् ॥

मन्त्रः— भवोद्भवमादव्यक्तरूपमात्र सर्वे देवा ब्रह्मा रुद्रस्त्वादक् सममासीत् ध्यानयोग स्थिता ते सन्ध्यासंस्था वासुदेवं नमति वयं देवमादिव्यक्तरूपमात्मसत्तदिवसं तथापि संसारार्थं कर्म तत्करणमेव सन्ध्यासंस्था वासुदेव नमोऽस्तु ते ।

मन्त्राणां परमो मन्त्रस्तपसां परमं तपः । आचारं कुरुते ह्येवं मम लोकाय गच्छति ॥
गुह्यानां परमं गुह्यं रहस्यं परमुत्तमम् । य एवं पठते नित्यं न स पापेन लिप्यते ॥
नादीक्षिताय दातव्यं नोपवीते कथञ्चन । दीक्षितायैव दातव्यं उपपन्ने तथैव च ॥
पुनरन्यत्प्रवक्ष्यामि देवि तत्त्वेन मे शृणु । न दीपमपि गृह्णाति दत्तं भागवतैः शुभैः ॥
कृत्वा तु मम कर्माणि गृह्य दीपकमुत्तमम् । जानुसंस्था ततः कृत्वा इमं मन्त्रमुदीरयेत् ॥

मन्त्रः—ओं नमो भगवतेऽनुग्रहतेजसे विष्णो सर्वदेवा त्वाग्निसंस्था प्रविष्टा एषा चाग्निसंस्थां प्रविष्टा । एवं चाग्निस्तव तेजसा भविष्यति स्वतेजसा मामाशु । मन्त्रस्य तेजसा संसारार्थं देव गृह्यं दीपकं निमन्त्र्य मूर्तिमन्त्रं इवभूत्वा इमं कर्म निष्फलम् ।
तत्करोति यथान्यायं दीपकं ददते नरः । तारिताः पितरस्तेन निष्फलाश्च पितामहाः ॥इति ।

२. समन्त्रकम् ।

मन्त्रः---मुखं मण्डनं चिन्तया[1] वासुदेव त्वया प्रयुक्तञ्च मयोपनीतम् ।
एतेन चित्रं कुरु वासुदेव मम चैवं कुरु संसारमोक्षम्[2] ।
एतेन मन्त्रेण चित्रकं मे दद्याल्ललाटे तिलकं धरित्रि[3] ॥ ३ ॥
ततः सुमनसो गृह्य इमं मन्त्रमुदाहरेत् ॥ ४ ॥

मन्त्रः—इमाः सुमनसः सौमनस्याव भागवन् ! सर्वं । सुमनसं कुरु त्वयं ते सौमनस्याय निर्मिता गृहीता स्वाहा ।

एवं सुमनसो दत्त्वा धूपञ्चैव निवेदयेत् । ततो गृहीत्वा धूपन्तु
नमो नारायणेत्युक्त्वा इमं मन्त्रमुदीरयेत् ॥ ५ ॥

मन्त्रः—

सुगन्धानि तवाङ्गानि स्वभावेनैव केशव ।
अमुना चैव धूपेन धूपितानि तवाऽनघ ॥ ६ ॥
तवाङ्गानां सुगन्धेन सर्वं सौगन्धिकं कुरु ।
गृहाणेमञ्च मे धूपं सर्वसंसारमोक्षणम् ॥ ७ ॥
पुनरन्यत् प्रवक्ष्यामि यथा दीपं निवेदयेत् ।
यथा दत्तः तु गृह्णामि मम भक्तैः सुखावहम्[4] ॥ ८ ॥
कृत्वा तु मम कर्माणि गृह्य दीपमनुत्तमम् ।
जानुसंस्थं ततः कृत्वा इमं मन्त्रमुदीरयेत् ॥ ९ ॥

मन्त्रः—नमो भगवते तेजसे विष्णो सर्वं देवास्त्वग्निसंस्थाः प्रतिष्ठाः ।
त्वञ्चाग्निस्तव तेजस्मा प्रतिष्ठितस्तेजश्चात्मा स्वयमेव मन्त्रश्च ॥ १० ॥
तेजः संसारान्मोचयितुं देव गृह्णीष्व दीपं द्युतिमन्तञ्च
मूर्तिश्च भूत्वा इदं कर्म निष्कल्मम् ॥ ११ ॥
मां करोति यथान्यायं दीपकं ददते नरः ।
तारिताः पितरस्तेन निष्कल्पाश्च पितामहाः ॥ १२ ॥
नारायणवचः श्रुत्वा विस्मिता च[5] वसुन्धरा ।
वराहरूपिणं देवं प्रत्युवाच वसुन्धरा[6] ॥ १३ ॥

श्रुता मया भागवतास्तव कर्मपरायणाः । शेषसंश्रवणार्थाय मनो धावति सत्पथे[7] ॥१४॥
तव प्रापणकं कृत्यं केषु पात्रेषु कारयेत् । एतदाचक्ष्व तत्त्वेन येन तुष्यति माधव ॥
ततो भूमेर्वचः[8] श्रुत्वा लोकनाथोऽब्रवीदिदम् ।

---

१. मुखमण्डलं विद्यति । २. एतेन चित्रं ते देवगृहं ममैव संसारकारामोक्षम् ।
३. एतेन मन्त्रेण चित्रकं दातव्यम् ।
४. (ग) ( ४–७ ) श्लोकाः न सन्ति ।
५. प्रत्युवाच । ६. प्रत्युवाच पुनर्वचः ।
७. कृत्वा च तव कर्माणि शेषे च तपसे वने । ८ भूम्या वचः ।

शृणु तत्त्वेन मे देवि पात्राणि यानि रोचते[१] ।
तानि ते कथयिष्यामि त्वया मे पूर्वपृच्छितम् ॥ १६ ॥
सौवर्णं राजतं कांस्यं येषु दद्यात् प्रपाणकम् ।
सर्वाणि तानि त्यक्त्वेह ताम्रश्च मम रोचते ॥ १७ ॥
एतन्नारायणाच्छ्रुत्वा धर्मकामा[२] वसुन्धरा ।
उवाच मधुरं वाक्यं लोकनाथं जनार्दनम् ।
एतन्मे परमं गुह्यं ताम्रं ते रोचते कथम् ॥ १८ ॥
ततो भूमेर्वचः[3] श्रुत्वा अनादिरपराजितः ।
लोकानां प्रवरः श्रेष्ठः प्रत्युवाच वसुन्धराम् ॥ १९ ॥
शृणु तत्त्वेन मे भूमे[४] कथ्यमानं मयाऽनघे ।
एकाग्रं चित्तमाधाय येन ताम्रं मम प्रियम् ॥ २० ॥
सप्तयुगसहस्राणि आदिकालेऽथ माधवि ।
यथा ताम्रं समुत्पन्नं यथैव प्रियदर्शनम्[५] ॥ २१ ॥
सर्वं[६] कमलपत्राक्षि गुडाकेशो महासुरः । ताम्ररूपं समादाय ममैवाराधने रतः[६] ॥
तत आराधितस्तेन वर्षाणां तु चतुर्दश[७] ।
सहस्राणि विशालाक्षि धर्मकामेन निश्चलम्[८] ॥ २३ ॥
अहं तु तपसा तुष्टस्तीव्रेण कृतनिश्चयात्[९] ।
ततस्ताम्रमये रम्ये यत्र ताम्रसमुद्भवः ॥ २४ ॥
दृष्ट्वाश्रमं महादेवि किञ्चिदेव सुभाषितम् ।
ततो जानुस्थितो भूत्वा[१०] मम एष विचिन्तयत्[११] ॥ २५ ॥
चतुर्बाहुश्च मां दृष्ट्वा मम कर्मपरायणः[१२] ।
प्रणतः प्राञ्जलिः प्राह शिरो भूमौ निधाप्य सः ।
तञ्च दृष्ट्वा मया प्रोक्तं प्रसन्नेनान्तरात्मना[13] ॥ २६ ॥

---

१. ये च पात्रा मम प्रिया । २. धर्मकामेति (क) (ख) ।
३. भूमिवचः । ४ भूमि । ५. ममैव प्रियदर्शनम् ।
६. स्थितः । ७. सहस्राणि च षोडश ।
८. मम भक्तो विशालाक्षि धर्मकामे तु निश्चये ।
९. ततः प्रीतोऽस्मि सुश्रोणि तस्य सन्ताप नश्चयात् ।
१०. जानुस्थितो भूय । ११. विचिन्त्य वत् ।
१२. ऊर्ध्वबाहुस्ततो दृष्ट्वा मम चिन्तापरायणः ।
१३. गुडाकेशो महाभाग मम कर्मविधौ स्थितः ।
एवं तत्तु मया प्रोक्तं प्रसन्नेनान्तरात्मना ॥

गुडाकेश महाभाग ब्रूहि किं करवाणि ते।
तोषितोऽस्म्यनया भक्त्या दुराराध्योऽथ सुव्रत[1] ॥ २७ ॥
यत्त्वया चिन्तितं सौम्य कर्मणा मनसा गिरा[2]।
वरं ब्रूहि महाभाग तव यद् रोचतेऽनघ[3] ॥ २८ ॥
एवं मम वचः श्रुत्वा गुडाकेशोऽब्रवीदिदम्[4]।
कराभ्यामञ्जलिं कृत्वा विशुद्धेनान्तरात्मना ॥ २९ ॥
यदि तुष्टोऽसि मे देव समस्तेनान्तरात्मना।
जन्मनां तु सहस्राणि त्वयि मुक्तेन केशव[5] ॥ ३० ॥
चक्रेण पातितस्यैतद् बमामांसानि किञ्चन[6]।
ताम्रं नाम भवेद् देव पवित्रीकरणं शुभम् ॥ ३१ ॥
तेन पात्रं ततः कृत्वा शुद्धधर्मविनिश्चितम्।
तस्मिन् प्रापणकं कृत्वा शुद्धे वै ताम्रभाजने।
निवेदिते परा प्रीतिर्भवत्वेतन्मनोगतम् ॥ ३२ ॥
प्रसन्नो यदि मे देव ह्येष मे दीयतां वरः।
यच्चिन्तितोऽसि देवेश उग्रे तपसि तिष्ठता[7] ॥ ३३ ॥
बाढमित्येव सोऽप्युक्तो यावल्लोकस्थितिर्मया।
तावत् ताम्रास्थितो भूत्वा मम संस्थो भविष्यसि[8] ॥ ३४ ॥
ततः प्रभृति ताम्रात्मा गुडाकेशो व्यवस्थितः।
तत्ताम्रभाजने मह्यं दीयते यत् सुपुष्कलम् ॥ ३५ ॥
अतुला तेन मे प्रीतिर्भूमे[9] जानीहि सुव्रते।
मङ्गल्यञ्च पवित्रञ्च ताम्रं तेन प्रियं मम ॥ ३६ ॥
त्वञ्च द्रक्ष्यसि तच्चक्रं मध्यसंस्थे दिवाकरे।
वैशाखस्य तु मासस्य शुक्लपक्षे तु द्वादशी ॥ ३७ ॥
मम तेजोमयं चक्रं त्वां वधिष्यत्यसंशयम्।
एष्यसे मम लोकाय एवमेतन्न संशयः ॥ ३८ ॥

---

१. तोषितोऽहं महाभाग्य त्वया भक्तेन केवलम्।
२. च वै। ३. हृदि।
४. वचोऽब्रवीत्। ५. सर्वशः।
६. स एष मम मांसौघस्त्वया चक्रेण पातितः।
७. तत् त्वया चिन्तितं देव उग्रं तप इदं महत्।
८. बाढमित्येव सोऽप्युक्त एवमेतद् भविष्यति।
यावल्लोका धरिष्यन्ति यावच्चैव महीधराः ॥
तावत्ताम्रस्थितः। ९. भूमि।

एवमुक्त्वा गुडाकेशस्तत्रैवान्तर्हितोऽभवत् ।
चक्राद् वधमभीप्सन् वै सोऽपि मत्कर्मणि स्थितः ॥ ३९ ॥
दिने दिने विशिष्टं तु शुभं कुर्वंस्तपस्यति ।
विष्णुसंस्थो भविष्यामि कदाहमिति चिन्तयन् ॥ ४० ॥
एवं स्थितस्य तस्याथ वैशाखस्य तु द्वादशी ।
शुक्लपक्षस्य सम्प्राप्ता तस्यां धर्मविनिश्चितः ॥
विष्णुपूजां ततः कृत्वा प्रार्थयामास मां प्रति ॥ ४१ ॥
मुञ्च मुञ्च प्रभो चक्रमपि वह्निसमप्रभम् ।
आत्मा मे नीयतां शीघ्रं निकृत्याङ्गानि सर्वशः ॥ ४२ ॥
तदैव चक्रेण विपाटितोऽसौ प्राप्तोऽपि मां भागवतप्रधानः ।
ताम्रं तु तन्मांसमसृक् सुवर्ण-मस्थीनि रूप्यं बहुधातवश्च ।
रङ्गञ्च सीसं त्रपुधातुसंस्थं, कांस्यञ्च रीतिञ्च मलस्तु तेषाम् ॥ ४३ ॥
ताम्रपात्रेण वै भूमे प्रापणं यत्प्रदीयते ।
सिक्थेऽसिक्थे[१] फलं तस्य शृणुष्व गदतो मम ॥ ४४ ॥
एतद् भागवतैः कार्यं मम प्रियकरैः सदा ।
एवं ताम्रं समुत्पन्नमिति मे रोचते हि तत् ।
दीक्षितैर्वै भागवतैः पाद्यार्घादौ च दीयते ॥ ४५ ॥
एव दीक्षाविधिः प्रोक्त एवं ताम्रसमुद्भवः ।
देवि तत्त्वेन कथितः किमन्यत्परिपृच्छसि ॥ ४६ ॥

भूमिरुवाच

देव देव कथं सन्ध्यां दीक्षितः कुरुते वद ।
केन मन्त्रेण वा भक्तस्तव कर्मपरायणः ॥ ४७ ॥

वराह उवाच

शृणु माधवि तत्त्वेन सन्ध्यामन्त्रमनुत्तमम् ।
यथा वदन्ति वै सूर्यं सन्ध्यां पूर्वापरांस्तथा ॥ ४८ ॥
जलाञ्जलिं गृहीत्वा तु मम भक्त्या व्यवस्थितः ।
मुहूर्तं ध्यानमास्थाय इमं मन्त्रमुदीरयेत् ॥ ४९ ॥
सिक्थानि[२] मन्त्र यावन्ति ताम्रप्रापणके धरे ।
तावद् वर्षसहस्राणि मम लोके स मोदते ॥ ५० ॥

मन्त्रः—

भवोद्भवमादिव्यक्तरूपमादित्यं, सर्वे देवा ब्रह्मरुद्रेन्द्रास्त्वाञ्च ।

---

१. सिद्धेऽसिद्धे । २. सिद्धानि ।

कृष्णे यथासीद् ध्यानयोगस्थितास्ते संध्यासंस्था वासुदेवं नमन्ति ॥ ५१ ॥
वयं देवमादिमव्यक्तरूपं, कृत्वा चात्मनि देव संस्थास्तथापि ।
संसारार्थं कर्म तत्करणमेव सन्ध्यासंस्था वासुदेव नमो नमः ॥ ५२ ॥
अनेनैव[1] हि मन्त्रेण सन्ध्यां कुर्यात् तु दीक्षितः ॥ ५३ ॥

इति वाराहपुराणे चतुर्वर्णदीक्षा नाम ऊनत्रिंशदधिकशततमोऽध्यायः ।

---

## त्रिंशदधिकशततमोऽध्यायः

सूत उवाच

एवं दीक्षां ततः श्रुत्वा नारायणमुखान्महो । विशुद्धमानसा देवो नारायणमथाब्रवीत्॥

धरण्युवाच

अहो मे दीक्षामाहात्म्यं यस्य वै व्युष्टिरुत्तमा ।
श्रुत्वाहं तु महाभाग जातास्मि विमला विभो ॥ २ ॥
अहो देवस्य माहात्म्यं लोकनाथस्य तत्त्वतः ।
येन सा कारिता दीक्षा चातुर्वर्ण्यसुखावहा ॥ ३ ॥
एकं मे परमं गुह्यं यदीश हृदि वर्त्तते ।
भव भक्तसुखार्थाय तत्त्वं मे वक्तुमर्हसि ॥ ४ ॥
देव पूर्वापराधास्ते द्वात्रिंशदपि कीर्तिताः[2] ।
एवं कृत्वाऽपराधानि[3] मनुजा अल्पचेतसः ॥ ५ ॥
कर्मणा केन शुद्ध्यन्ति अपराधस्य कारिणः ।
तन्ममाचक्ष्व तत्त्वेन मम प्रीत्या च माधव ॥ ६ ॥
तद्वै भूम्या वचः श्रुत्वा हृषीकेशो महामनाः ।
दिव्यं ध्यानं समादाय प्रत्युवाच वसुन्धराम् ॥ ७ ॥

वराह उवाच

शुद्धा भागवता भूत्वा मम कर्मपरायणा ।
ये तु भुञ्जन्ति राजान्नं लोभेन च भयेन वा ॥ ८ ॥
आपद्गता हि भुञ्जन्ति राजान्नं तु वसुन्धरे ।
दशवर्षसहस्राणि पच्यन्ते[4] नरके नराः ॥ ९ ॥
भगवद्वचनं श्रुत्वा कम्पिता च वसुन्धरा ।
दिनानि सप्त दश च भयं तीव्रमजायत ॥ १० ॥

---

१. अनेनैव तु । २. द्वात्रिंशद् परिकीर्तिताः ।
३. अपराधान् । ४. पचन्ते ( क, ख )

ततो दीनमना भूत्वा सा मही शंसितव्रता।
उवाच मधुरं वाक्यं सर्वलोकसुखावहम् ॥ ११ ॥

धरण्युवाच

शृणु तत्त्वेन मे देव हृदये हि व्यवस्थितम्।
को नु दोषोऽस्ति राज्ञां हि तन्मे त्वं वक्तुमर्हति ॥ १२ ॥
ततो भूम्या वचः श्रुत्वा सर्वधर्मविदां वरः।
प्राह नारायणो वाक्यं धर्मकामां वसुन्धराम् ॥ १३ ॥

वराह उवाच

शृणु सुन्दरि तत्त्वेन गुह्यमेतदनिन्दिते।
राजान्नं तु न भोक्तव्यं शुभैर्भागवतैः सदा ॥ १४ ॥
यद्यप्येष समत्वेन राजा लोके प्रवर्तते।
राजसं तामसं वापि कुर्वन् कर्म सुदारुणम् ॥ १५ ॥
अपि वा गर्हितं तेन राजान्नं तु वसुन्धरे।
धर्मसन्धारणार्थाय न तु मे रोचते भुवि ॥ १६ ॥
ततो यद्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
यथा राज्ञां तु भोज्यं वै शुद्धैर्भागवतैर्नरैः ॥ १७ ॥
स्थापयित्वा तु मां देवि विधिदृष्टेन कर्मणा।
धनधान्यसमृद्धानि दत्त्वा भागवतैरपि ॥ १८ ॥
सिद्धं भागवतैश्चान्नं मम प्रापणशेषकम्।
भुञ्जानस्तु वरारोहे न स पापेन लिप्यते ॥ १९ ॥
एवं विष्णुवचः श्रुत्वा धरणी शंसितव्रता।
वराहरूपिणं देवं प्रत्युवाच वरानना ॥ २० ॥

धरण्युवाच

राजान्नं तु नरो भुक्त्वा शुद्धो भागवतः शुचिः।
कर्मणा केन शुद्ध्येत तन्मे ब्रूहि जनार्दन ॥ २१ ॥

वराह उवाच

शृणु तत्त्वेन मे देवि यन्मां त्वं भीरु भाषसे।
तरन्ति पुरुषा येन राजान्नस्योपभुञ्जकाः ॥ २२ ॥
एकं चान्द्रायणं कृत्वा तप्तकृच्छ्रञ्च पुष्कलम्।
कुर्यात् सान्तपनञ्चैकं शीघ्रं मुच्यति किल्बिषात् ॥
न तस्य चापराधोऽस्ति वसुधे वै वचो मम ॥ २३ ॥
एवमेव न भोक्तव्यं राजान्नं वै कदाचन।
ममात्र पूजाकामेन यदीच्छेत् परमां गतिम् ॥ २४ ॥

इति वाराहपुराणे भगवच्छास्त्रे राजान्नप्रायश्चित्तं नाम त्रिंशदधिकशततमोऽध्यायः।

# एकत्रिंशदधिकशततमोऽध्यायः

वराह उवाच

दन्तकाष्ठमखादित्वा यो हि मामुपसर्पति[1]।
पूर्वकालकृतं कर्म तेन चैकेन नश्यति ॥ १ ॥

नारायणवचः श्रुत्वा पृथिवी धर्मसंश्रिता । विष्णुभक्तसुखार्थाय हृषीकेश मुवच ह ॥

धरण्युवाच

सर्वकालकृतं कर्म क्लेशेन महताऽनघ । कथमेकापराधेन सर्वमेव प्रणश्यति ॥ ३

वराह उवाच

शृणु सुन्दरि तत्त्वेन कथ्यमानं मयाऽनघे । येन चैकापराधेन पूर्वकर्म प्रणश्यति ॥४॥

मनुष्यः किल्विषो भद्रे कफपित्तसमन्वितः । पूयशोणितसम्पूर्णं दुर्गन्धिमुखमस्य तत् ॥

तत् सर्वबीजं नश्येत[2] दन्तकाष्ठस्य भक्षणात् ।
शुद्धिर्भागवती चैव आचारेण विवर्जिता ॥ ६ ॥

धरण्युवाच

दन्तकाष्ठमखादित्वा यः कर्माणि करोति ते ।
प्रायश्चित्तञ्च मे ब्रूहि येन धर्मो न नश्यति ॥ ७ ॥

वराह उवाच

एवमेतन्महाभागे यन्मां त्वं परिपृच्छसि ।
कथयिष्यामि हीदं ते यथा शुध्यन्ति मानवाः ॥ ८ ॥

आकाशशयनं कृत्वा दिनानि द्वे च पञ्च च ।
अभुक्तदन्तकाष्ठाश्च एवं शुद्धयन्ति मानवाः ॥ ९ ॥

एवं ते कथितं भद्रे दन्तकाष्ठस्य भक्षणम् ।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
कुतस्तस्यापराधोऽस्ति एवमेव न संशयः ॥ १० ॥

इति वाराहपुराणे दन्तकाष्टभक्षणप्रायश्चित्तं नामैकत्रिंशदधिकशततमोऽध्यायः ।

---

१. अतः परं (ग) श्लोक एको नास्ति ।

२. न सद्देदुचितं देवि ।

# द्वात्रिंशदधिकशततमोऽध्यायः

वराह उवाच

गत्वा तु मैथुनं भद्रे अस्नातो यः स मां स्पृशेत् ।
रेतः पिबति दुर्बुद्धिः सहस्रं नव पञ्च च ॥ १ ॥
एतान्नारायणाच्छ्रुत्वा सा मही शंसितव्रता ।
ततो दीनमना भूत्वा प्रोवाच मधुसूदनम् ॥ २ ॥

धरण्युवाच

किमिदं भाषसे देव धर्मं भीषणसङ्कटम् ।
कथमेवं पुमान् वै स रेतःपानपरो भवेत् ॥
एतन्मे परमं दुःखं तद्भगवन् वक्तुमर्हसि ॥ ३ ॥

वराह उवाच

शृणु तत्त्वेन मे देवि इदं गुह्यमनुत्तमम् । चिह्नमेतद् वरारोहे आधिचारविनिश्चयः॥४॥
पुरुषः स्त्रीषु कर्माणि यो विकुर्वीत निर्घृणः ।
दृष्टं तस्यापराधस्य फलं प्राप्नोति मानवः ॥ ५ ।
एवमेतद् वरारोहे यन्मां त्वं परिपृच्छसि । अपराधस्य दोषेण विशुद्धिश्च न जायते ॥
प्रायश्चित्तं प्रवक्ष्यामि रागदोषेण दोषितम् । गृहस्थाः पुरुषा भद्रे मम कर्मपरायणाः ॥
यावकेन त्र्यं क्षिप्त्वा पिण्याकेन दिनत्रयम् ।
वायुभक्षं दिनं त्वेकं ततो मुच्येत किल्बिषात् ॥ ८ ॥
य एवं कुरुते भूमे विधिदृष्टेन कर्मणा ।
ज्ञात्वा कर्मापराधं तु न स पापेन लिप्यते ॥ ९ ॥
एतत्ते कथितं भद्रे मिथुनं योऽभिगच्छति ।
प्रायश्चित्तं महाभागे मम लोकसुखावहम् ॥ १० ॥
स्पृष्ट्वा तु मृतकं भद्रे नरं पञ्चत्वमागतम् ।
मम शास्त्रं बहिष्कृत्वा यः श्मशानं प्रपद्यते ॥ ११ ॥
पितरस्तस्य सुश्रोणि आत्मनश्च पितामहाः ।
श्मशाने जम्बूका भूत्वा भक्षयन्ति शवांस्तथा ॥ १२ ॥
ततो हरेर्वचः श्रुत्वा धर्मकामा वसुन्धरा ।
उवाच मधुरं वाक्यं सर्वलोकहिताय वै ॥ १३ ॥

धरण्युवाच

तव नाथ प्रपन्नानां क्व पापं विद्यते प्रभो ।
प्रायश्चित्तं च मे ब्रूहि येन मुच्यन्ति किल्बिषात् ॥ १४ ॥

वराह उवाच

शृणु सुन्दरि तत्वेन यन्मां त्वं परिपृच्छसि।
कथयिष्यामि ते हीदं शोभनं पापनाशनम् ॥ १५ ॥
एकाहारो दिनान् सप्त त्रिरात्र चाप्युपोषितः।
पञ्चगव्यं ततः पीत्वा ततो मुच्यति किल्बिषात् ॥ १६ ॥
शवे स्पृष्टेऽपराधस्य एष ते कथितो विधिः। सर्वथा वर्जनीयं वै सर्वभागवतेन तु ॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत्।
विमुक्तः सर्वपापेभ्यो नापराधोऽस्ति तस्य वै[1] ॥ १८ ॥
नारीं रजस्वलां स्पृष्ट्वा यो मां स्पृशति निर्भयः।
रागमोहेन संयुक्त कामेन च वशीकृतः ॥ १९ ॥
वर्षाणां तु सहस्रैकं रजः पिबति निर्घृणः।
अन्धश्च जायते देवि दरिद्रो ज्ञानमूर्खवान् ॥ २० ॥
न च विन्दति चात्मानं पतितो नरके यथा।
अपराधमिमं कृत्वा तत्रैवं नास्ति संशयः ॥ २१ ॥

धरण्युवाच

तव देव प्रपन्नानां मोक्षं संसारसागरात्। अपराधसमायुक्तस्तव कर्मपरायणः ॥
कर्मणा येन शुद्धयेत तन्मे ब्रूहि जनार्दन ॥ २२ ॥

वराह उवाच

स्पृष्ट्वा रजस्वलां नारीं नरो मद्भक्तितत्परः।
तपः कृत्वा त्रिरात्रं तु आकाशशयने वसेत् ॥ २३ ॥
शुद्धो भागवतो भूत्वा मम कर्मपरायणः।
एवं कृत्वा महाभागे प्रायश्चित्तं मम प्रियम् ॥ २४ ॥
मुच्यते किल्बिषाद् देवि आचारेण बहिष्कृतः।
एतत्ते कथितं भद्रे यत्स्पृष्ट्वा तु रजस्वलाम् ॥ २५ ॥
स्पृष्ट्वा तु मृतकं देवि यो मत्क्षेत्रेषु तिष्ठति।
शतं वर्षसहस्राणि गर्भेषु परिवर्तते ॥ २६ ॥
दशवर्षसहस्राणि चाण्डालश्चैव जायते। अन्धः सप्तसहस्राणि मण्डूकश्च[2] शतं समाः
मक्षिका त्रीणि वर्षाणि टिट्टिकभैकादश[3] समाः।
दंशो वै सप्त चान्यानि कृकलासो भवेत् समाः ॥ २८ ॥
हस्ती वर्षशतञ्चैव खरो द्वात्रिंशकं भवेत्।
मार्जारो नव वर्षाणि वानरो दश पञ्च च ॥ २९ ॥

---

१. अपराधो न विद्यते।
२. कन्दूकश्च। ३. डिण्डिभेकाख्यम्।

एवं स चात्मदोषेण मम कर्मपरायणः ।
प्राप्नोति सुमहद् दुःखं देवि चैवं न संशयः ॥ ३० ॥
ततो हरेर्वचः श्रुत्वा दुःखेन परिपृच्छतो । सर्वसंसारमोक्षाय प्रत्युवाच वसुन्धरा॥३१॥

धरण्युवाच[1]

किमिदं भाषसे देव मानुषाणां दुरासदम् ।
वाक्यं भीषणमत्यन्तं[2] मम मर्मप्रभेदकम् ॥ ३२ ॥
आचाराच्च परिभ्रष्टस्तव कर्मपरायणः ।
यथा तरति[3] दुर्गाणि प्रायश्चित्तं तथा वद ॥ ३३ ॥
श्रुत्वा पृथ्व्यास्तथा वाक्यं[4] लोकनाथो जनार्दनः ।
धर्मसंरक्षणार्थाय प्रत्युवाच वसुन्धराम् ॥ ३४ ॥

वराह उवाच

स्पृष्ट्वा तु मृतकं भूमे मम कर्मपरायणः ।
एकाहारः ततः तिष्ठेद् दिनानि दश पञ्च च ॥ ३५ ॥
तत एवं विधं कृत्वा पञ्चगव्यं प्राशयेत् ।
शुद्धभावं विशुद्धात्मा कर्मणा च न लिप्यते ॥ ३६ ॥
एतत्ते कथितं देवि स्पृष्ट्वा मृतकमेव च ।
दोषञ्चैव विशुद्ध्यर्थं यत्त्वया पूर्वमिच्छितम्[5] ॥ ३७ ॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
अपराधविमुक्तो वै मम लोकं स गच्छति ॥ ३८ ॥

इति वाराहपुराणे मृतकस्य स्पर्शनप्रायश्चित्तं नाम द्वात्रिंशदधिकशततमोऽध्यायः ।

---

## त्रयस्त्रिंशदधिकशततमोऽध्यायः ।

वराह उवाच

स्पृशमानेन मां भूमे वातकर्म प्रमुच्यते[6] । एवञ्च पुरुषो युक्तो वायुपीडितमानसः ॥१॥
मक्षिका पञ्च वर्षाणि त्रीणि वर्षाणि मूषकः ।
श्वा चैव त्रीणि वर्षाणि कूर्मो वै जायते नव ॥ २ ॥
एष वै तापनं देवि मोहनं मम साम्प्रतम्[7] ।

---

१. (ग) एष पाठो नास्ति ।
२. भीषणकञ्चैव ।
३. तरन्ति येन ।
४. ततो वाक्यम् ।
५. पूर्वपृच्छितम् ।
६. स्पृश्यमानोऽथ मां देवि वातकर्म प्रमुञ्चति ।
७. शंसति । (क, ख )

योऽवै शास्त्रं विजानाति मम कर्मपरायणः।
श्रुत्वा वाक्यं हृषीकेशं प्रत्युवाच वसुन्धरा ॥ ३ ॥

धरण्युवाच

अतुलं लभते पापं तव कर्मपरायणः। तस्य देव सुखार्थाय विशुद्धिं वक्तुमर्हसि ॥ ४ ॥

वराह उवाच

शृणु कार्त्स्न्येन मे देवि[1] कथ्यमानं मयाऽनघे।
अपराधमिमं कृत्वा सन्तरेद् येन कर्मणा ॥ ५ ॥
पावकेन दिनं त्रीणि नक्तानि च पुनस्त्रयः[2]।

कर्म चैवं ततः कृत्वा स च मे नापराध्यति। सर्वसङ्गं परित्यज्य मम लोकाय गच्छति॥
एतत्ते कथितं भद्रे महत् कर्मापराधिनः। दोषश्चैव गुणश्चैव यत्त्वया परिपृच्छितम्[3] ॥
शृणु तत्त्वेन मे भूमे कथ्यमानं मयाऽनघे। पुरीषं मुच्यते यस्तु मम कर्म समाचरन् ॥
दिव्यवर्षसहस्रं तु रौरवे नरके वसेत्। पुरीषं भक्षयेत्तत्र मम कर्मपरायणः ॥ ९ ॥
प्रायश्चित्तं वदाम्यत्र येन मुच्येत किल्बिषात्। मम कर्मपरिभ्रष्टो विह्वलेनान्तरात्मना

एकां जलमयीं शय्यामेकामाकाशशायिनीम्।
एवं कृत्वा विधानं तु सोऽपराधात् प्रमुच्यते ॥ ११ ॥
एतत्ते कथितं भद्रे पुरीषं यः समुत्सृजेत्।
मद्भक्तेषु विशालाक्षि अपराधविनिश्चयः ॥ १२ ॥

इति वाराहपुराणे मरुत्कर्म-पुरीषोत्सर्ग-प्रायश्चित्तं नाम
त्रयस्त्रिंशदधिकशततमोऽध्यायः।

---

## चतुस्त्रिंशदधिकशततमोऽध्यायः

वराह उवाच

मुक्त्वा तु मम कर्माणि मम कर्मपरायणः।
प्रायश्चित्तविधिं देवि यस्तु वाक्यं प्रभाषते।
मूर्खो भवति सुश्रोणि मम कर्मपरायणः ॥ १ ॥
प्रायश्चित्तविधिं देवि येन मुच्येत किल्बिषात्।
आकाशशयनं कृत्वा दिनानि दश पञ्च च।
मुच्यते किल्बिषात् तत्र देवि चैवं न संशयः ॥ २ ॥

इति मौनत्यागप्रायश्चित्तम्।

---

१. शृणु क्रमेण मे देवि।
२. नक्तेन च पुनस्त्रयः (म)। ३. परिपृष्टम्।

वराह उवाच

भूषितो नीलवस्त्रेण यो हि मामुपपद्यते । वर्षाणां हि शतं पञ्च कृमिर्भूत्वा स तिष्ठति॥

तस्य वक्ष्यामि सुश्रोणि अपराधविशोधनम् ।
प्रायश्चित्तं विशालाक्षि येन मुच्येत किल्बिषात् ॥ ४ ॥
व्रतं चान्द्रायणं कृत्वा विधिदृष्टेन कर्मणा ।
मुच्यते किल्बिषाद् भूमे एवमेतन्न संशयः[१] ॥ ५ ॥
अविधानेन संस्पृश्य यो हि मामुपसर्पति ।
स मूर्खः पापकर्मा च मम विप्रियकारकः ॥ ६ ॥
तेन दत्तं वरारोहे गन्धमाल्यसुगन्धितम् ।
प्रापणञ्च न गृह्णामि मृष्टञ्चापि कदाचन ॥ ७ ॥
ततो नारायणवचः श्रुत्वा सा संशितव्रता ।
उवाच मधुरं वाक्यं धर्मकामा वसुन्धरा ॥ ८ ॥

वराह उवाच

यन्मां त्वं भाषसे नाथ आचारस्य व्यतिक्रमम् ।
उपस्पृश्य समाचारं रहस्यं वक्तुमर्हसि ॥ ९ ॥

केन कर्मविधानेन भूत्वा भागवता भुवि । उपस्पृश्योपसर्पन्ति तव कर्मपरायणाः ॥१०
एतन्मे संशयं देव परं कौतूहलं हि मे । तव भक्तसुखार्थाय निष्कलं वक्तुमर्हसि ॥

वराह उवाच

शृणु तत्त्वेन मे देवि यन्मां त्वं भीरु भाषसे ।
कथितं मम तत्त्वेन गुह्यमेतत् परं महत् ॥ १२ ॥
विमुच्य सर्वकर्माणि यो हि मामुपसर्पति ।
तस्य वै शृणु सुश्रोणि उपस्पृश्य च या क्रिया ॥ १३ ॥
भूत्वा पूर्वमुखस्तत्र पादौ प्रक्षाल्य चाम्बुभिः ।
उपस्पृश्य यथान्यायं तिस्रो वै गृह्य मृत्तिकाः ॥ १४ ॥

ततः प्रक्षालितं हस्तं जलेन तदनन्तरम् । सप्तकोशं ततो गृह्य जलेन क्षालयेत्ततः[२] ॥

पादमेकैकशस्तद्वत् पञ्च पञ्च वदेत् ततः ।
कोशौ सम्मृज्यतां[३] तत्र यदीक्षेत[४] मम प्रियम् ॥ १६ ॥
त्रीणि कोशान् पिबेत् तत्र सर्वपापविशोधनम्[५] ।
कराभ्यां मुखं मार्ज्येत[६] सर्वमिन्द्रियनिग्रहम् ॥ १७ ॥

---

१. अतः परम् (ग) इति नीलवस्त्रप्रायश्चित्तमित्यधिकः पाठः ।
२. मुखं प्रक्षालयेत्तथा ।
३. संसृज्यतो तत्र ।
४. यदीच्छेत मम प्रियम् ।
५. सर्वकर्मविशोधनम् ।
६. मुखमित्यत्र छन्दोभङ्गः आर्षः, मार्ज्येत इति आर्षम् ।

प्राणायामं ततः कृत्वा मम चिन्तापरायणः ।
कर्मणा विधिदृष्टेन कुर्यात् संसारमोक्षणम् ॥ १८ ॥
त्रीणि[1] वारान् स्पृशेत् तत्र शिरो ब्रह्मणि संस्थितः ।
त्रीणि वारान् पुनस्तत्र उभे ते कर्णनासिके ॥ १९ ॥
स्पृशेत[2] निष्कलस्तत्र यो हि यत्र प्रतिष्ठितः ।
विक्षिपेत् त्रीणि वाराणि[3] सलिलं प्रवरं त्रयम् ॥ २० ॥
एवमुक्तस्य कर्तव्यं ममाभिगमनेषु च । उपस्पृश्य ततुं वामे[4] यदीक्षेत प्रियं मम ॥२१॥
एवञ्च कुर्वतस्तस्य मम कर्म व्यवस्थितः । अपराधं न विन्देत एवं देवि न संशयः ॥
ततो नारायणवचः श्रुत्वा देवी वसुन्धरा ।
उवाच मधुरं वाक्यं सर्वभागवत-प्रियम् ॥ २३ ॥

धरण्युवाच

उपस्पृश्य विधानेन यस्तु कर्माणि चाप्नुयात् ।
तापनं शोधनञ्चैव तद्भवान् वक्तुमर्हति ॥ २४ ॥

वराह उवाच

शृणु तत्त्वेन मे भूमे इमं गुह्यमनिन्दिते । यां गतिञ्च प्रपद्यन्ते मम कर्मबहिष्कृताः ॥
व्यभिचारञ्च मे कृत्वा यश्च मामुपसर्पति । दशवर्षसहस्राणि दशवर्षशतानि च ।
कृमिर्भूत्वा यथान्यायं तिष्ठते[5] नात्र संशयः ॥ २६ ॥
प्रायश्चित्तं प्रवक्ष्यामि तस्य मूर्खस्य माधवि ।
येन कृत्वा महाभागे कृतकृत्यः पुनर्भवेत् ॥ २७ ॥
महासान्तपनं कृत्वा तप्तकृच्छ्रञ्च निष्कलम् ।
ब्राह्मणः क्षत्रियो वैश्यो मम ये च मते स्थिताः ॥ २८ ॥
अनेन विधिना कृत्वा प्रायश्चित्तं यशस्विनि ।
किल्बिषात्तु प्रमुक्तास्ते गच्छन्ति[6] परमां गतिम् ॥ २९ ॥
यस्तु क्रोधसमाविष्टो मम भक्तिपरायणः[7] ।
स्पृशेत मम गात्राणि चित्तं कृत्वा चलाचलम् ॥ ३० ॥
न चाहं रागमिच्छामि क्रुद्धमेव यशस्विनि ।
इच्छामि च सदा दान्तं शुभं भागवतं शुचिम् ॥ ३१ ॥
पञ्चेन्द्रियसमायुक्तं लाभालाभविवर्जितम् । अहङ्कारविनिर्मुक्तं कर्मण्यभिरतं मम ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वरानने ।
मां यदा लभते क्रुद्धः शुद्धो भागवतः शुचिः ॥ ३३ ॥

---

१. त्रीन् । २. स्पृशेत् । ३. त्रीन् वारान्, इति साधु ।
४. वान्ते । ५. तिष्ठति इति साधु ।
६. विप्रयुक्तास्तु गच्छेत । ७. मम कर्मपरायणः ।

चिल्लो जातो वर्षशतं श्येनो वर्षशतं पुनः ।
भेकस्त्रिशतवर्षाणि[1] यातुधानः पुनर्दश ॥ ३४ ॥
अपुमान् षट् च वर्षाणि[2] रेतोभक्षस्तु जायते ।
अन्धो जायेत सुश्रोणि पञ्च सप्त तथा नव ॥ ३५ ॥
गृध्रो द्वात्रिंशवर्षाणि चक्रवाको दशैव तु[3] । शैवालभक्षिता चैव ह्याकाशगमनं तथा ॥
ब्राह्मणो जायते भूमे क्रोधस्य च पथे स्थितः[4] ।
आत्मकर्मापराधेन प्राप्तः संसारसागरे ॥ ३७ ॥

धरण्युवाच

अहो वै परमं गुह्यं यत्त्वया पूर्वभाषितम् ।
जातं मे विह्वलं चित्तं न स्थिरं जायते क्वचित् ॥ ३८ ॥
यत्त्वया भाषितं ह्येदं भक्तानाञ्च दुरासदम् ।
श्रुत्वा सुदुस्तरं सारं भातास्मि परिदेविता ॥ ३६ ॥
नाहमाज्ञापयामि त्वां देवदेव जगत्पते । मम चैव प्रियार्थाय सर्वलोकसुखावहम् ॥
येन मुच्यन्ति संशुद्धा बुधाः कर्मपरायणाः ।
अल्पसत्त्वा गतभया लोभमोहसमन्विताः ।
तरन्ति येन दुर्गाणि प्रायश्चित्तञ्च मे वद ॥ ४१ ॥
ततः कमलपत्राक्षो वराहः सम्मुखे स्थितः[5] ।
सनत्कुमारो मे भक्तो पुनर्नारायणोऽब्रवीत् ॥ ४२ ॥
ततो भूम्या वचः श्रुत्वा ब्रह्मणश्च सुतो मुनिः ।
सनत्कुमारो योगज्ञः प्रत्युवाच वसुन्धराम् ॥ ४३ ॥
धन्या चैव सुभाग्या च यत्त्वया परिपृच्छितम् ।
वराहरूपी भगवान् सर्वमायाकरण्डकः ॥ ४४ ॥
किं त्वया भाषितो देवि सर्वयोगाङ्गयोगवित् । देवो नारायणस्तत्र सर्वधर्मविदांवरः ॥
कुमारवचनं श्रुत्वा स महीं प्रत्यभाषत ।
शृणु तत्त्वेन मे ब्रह्मन् यन्मया परिपृच्छितम् ।
कार्यं क्रियाञ्च योगञ्च आध्यात्म्यं पार्थिवस्थितम् ॥ ४६ ॥
एतन्मे पृच्छते ब्रह्मन् देवो नारायणः प्रभुः ।
ततो मां भाषते ब्रह्मन् विष्णुर्मायाकरण्डकः ॥ ४७ ॥
कृत्वा भागवता ब्रह्मन् येन शुद्ध्यन्ति किल्बिषात् ।
कृत्वा तेन व्रतञ्चैव मम कर्मपरायणः ॥ ४८ ॥

---

१. मण्डूको विंशवर्षाणि । २. षष्टिवर्षाणि ।
३. दशैव च । ४. मण्डूकस्य पथे स्थितः ।
५. अत्र संस्थितः ।

षष्ठे काले तु भुञ्जीत गृहभिक्षामनिन्दिताम् ।
अष्टौ भिक्षा यथान्यायं शुद्धभागवतां[1] गृहे ॥ ४९ ॥
य एतेन विधानेन ब्रह्मकर्माणि कारयेत् ।
मुच्यते किल्बिषात्तस्मादेवमाह जनार्दनः ॥ ५० ॥
यदीच्छसि परां सिद्धिं विष्णुलोकं जनार्दनात्[2] ।
शीघ्रमाराधयेद् विष्णुं द्विजमुख्यो न संशयः ॥ ५१ ॥
ततो भूमेर्वचः श्रुत्वा ब्रह्मणश्च सुतो मुनिः ।
प्रत्युवाच विशालाक्षीं धर्मकामो वसुन्धराम् ॥ ५२ ॥
अहो गुह्यं रहस्यं च यत्त्वया देवि भाषितम् ।
तस्य ये मुखनिष्क्रान्ता धर्मास्तान् वक्तुमर्हसि ॥ ५३ ॥

धरण्युवाच

ततः स पुण्डरीकाक्षः शङ्खचक्रगदाधरः । वराहरूपी भगवाँल्लोकनाथो जनार्दनः ।
उवाच मधुरं वाक्यं मेघदुन्दुभिनिःस्वनः ॥ ५४ ॥
भक्तकर्मसुखार्थाय गुणवित्तसमन्विताम् । अनेनैव विधानेन आचारेण समन्वितः ।
देवि कारयेत[3] कर्म मम लोकाय गच्छति ॥ ५५ ॥
क्रुद्धेन न च कर्तव्यं लोभेन त्वरया न च ।
मत्पूजनं विधानेन यदीच्छेत् परमां गतिम् ॥ ५६ ॥
ये मां देवि यजिष्यन्ति क्रोधं त्यक्त्वा जितेन्द्रियाः ।
संसारं ते न गच्छन्ति अपराधविवर्जिताः[4] ॥ ५७ ॥

वराह उवाच

अकर्मण्येन पुष्पेण यो मामर्चयते भुवि । पातनं तस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे॥
नाहं तत्प्रतिगृह्णामि न च ते वै मम प्रियाः ।
मूर्खा भागवता देवि मम विप्रियकारिणः ॥ ५९ ॥
पतन्ति नरके घोरे रौरवे तदनन्तरम् । अज्ञानस्य च दोषेण दुःखान्यनुभवन्ति च ॥
वानरो दश वर्षाणि मार्जारश्च त्रयोदश । मूकः पञ्च च वर्षाणि बलीवर्दश्च द्वादश ॥
छागश्चैवाष्टवर्षाणि मासं वै[5] ग्रामकुक्कुटः ।
त्रीणि वर्षाणि महिषो भवत्येव न संशयः ॥ ६२ ॥
एतत्ते कथितं भद्रे पुष्पं यन्मे न रोचते ।
अकर्मण्यं विशालाक्षि पुष्पं ये च ददन्ति वै ॥ ६३ ॥

---

१. भागवतामिति आर्षम् । भागवतानामिति साधु ।  २. द्विजोत्तमः ।
३. कारयेत् ।  ४. अतः परम् (ग) इति क्रुद्धप्रायश्चित्तमित्यधिकः पाठः ।
५. मासौ द्वौ ।

धरण्युवाच

भगवन् यदि तुष्टोऽसि विशुद्धेनान्तरात्मना ।
येन शुद्ध्यन्ति ते भक्तास्तव कर्मपरायणाः ॥ ६४ ॥

वराह उवाच

शृणु तत्त्वेन मे देवि यन्मां त्वं परिपृच्छसि ।
प्रायश्चित्तं महाभागो येन शुध्यन्ति मानवाः ॥ ६५ ॥
एकाहारं ततः कृत्वा मासमेकं वरानने[1] ।
वीरासनविधींश्चैव कारयेत् सप्त सप्त च ॥ ६६ ॥
चतुर्थम्भक्ष्यमेकेन मासेन घृतपायसम् ।
यावकान्नं[2] दिनत्रीणि वायुभक्षो दिनत्रयम् ॥ ६७ ॥
य एतेन विधानेन देवि कर्माणि कारयेत् ।
सर्वपापप्रमुक्तश्च मम लोकं स गच्छति ॥ ६८ ॥

इति वाराहपुराणे अकर्मण्यप्रायश्चित्तं नाम चतुस्त्रिंशदधिकशततमोऽध्यायः ।

---

## पञ्चत्रिंशदधिकशततमोऽध्यायः

वराह उवाच

रक्तवस्त्रेण संयुक्तो यो हि मामुपसर्पति ।
तस्यापि शृणु सुश्रोणि कर्म संसारमोक्षणम् ॥ १ ॥
रजस्वलासु नारीषु रजो यत्तत् प्रवर्तते । तेनासौ रजसा पुष्टो कर्मदोषेण जानतः[3] ॥२॥
वर्षाणि दश पञ्चैव वसते तत्र निश्चयः । रजो भूत्वा महाभागे रक्तवस्त्रपरायणः ॥३॥
प्रायश्चित्तं प्रवक्ष्यामि तस्य कायविशोधनम् ।
येन शुध्यन्ति ते भूमे पुरुषाः शास्त्रनिश्चिताः ॥ ४ ॥
एकाहारं ततः कृत्वा दिनानि दश सप्त च ।
वायुभक्षो दिनत्रीणि दिनमेकं जलाशनः ॥ ५ ॥
एवं स मुच्यते भूमे मम विप्रियकारकः । प्रायश्चित्तं ततः कृत्वा ममासौ रोचते सह ॥
एतत्ते कथितं भूमे रक्तवस्त्रविभूषिते । प्रायश्चित्तं महाभागे सर्वसंसारमोक्षणम्[4] ॥७॥
यस्तु मामन्धकारेषु विना दीपेन सुन्दरि ।
स्पृशते च विना शास्त्रं त्वरमाणो विमोहितः ॥ ८ ॥

---

१. वसुन्धरे (ग) ।    २ श्यामाकान्नम् ।
३. जानन्निति साधु ।
४. अत्र (ग) रक्तवस्त्रपरिधान प्रायश्चित्तमित्यधिकः पाठो वर्तते । ततः परं वराह उवाच इत्यपि ।

पतनं तस्य वक्ष्यामि शृणुष्व त्वं वसुन्धरे।
तेन क्लेशं समासाद्य क्लिश्यते च नराधमः॥ ८-९॥
अन्धो भूत्वा महाभागे एकं जन्म तमोमयः।
सर्वाशी सर्वभक्षश्च मानवः सोऽभिजायते।
अनन्यमानसो भूत्वा भूमे ह्येतत् प्रसाधयेत्॥ १०॥
प्रायश्चित्तं प्रवक्ष्यामि अन्धकारे तु यः पुरा।
संस्पृशेत् सोऽपि धर्मात्मा येन लोकं मम व्रजेत्॥ ११॥
अक्ष्णो[1] राच्छादनं कृत्वा दिनानि दश पञ्च च।
एकाहारं ततः कृत्वा दिनविंशसमाहितः॥ १२॥
यस्य कस्यापि मासस्य एकामेव च द्वादशीम्।
एकाहारस्ततो भूत्वा निषीदेच्च जलाशनः॥ १३॥
ततो यवान्नं भुञ्जीत गोमूत्रेण तु पाचितम्।
प्रायश्चित्तेन चैतेन मुच्यते पातकात् ततः[2]॥ १४॥
यः पुनः कृष्णवस्त्रेण मम कर्मपरायणः।
देवि कर्माणि कुर्वीत तस्य वै पातनं शृणु॥ १५॥
घुणो वै पञ्चवर्षाणि आजवास्तुसमाश्रयः। पञ्च वर्षाणि नकुलो दशवर्षाणि कच्छपः॥
एवं भ्रमति संसारे मम कर्मपरायणः। पारावतेषु जायेत नव वर्षाणि पञ्च च॥१७॥
जातो ममापराधेन स्थितः पारावतो भुवि।
तिष्ठते मम पार्श्वेषु यत्रैवाहं प्रतिष्ठितः॥ १८॥
प्रायश्चित्तं प्रवक्ष्यामि तस्य संसारमोक्षणे।
येनासौ लभते सिद्धिं कृष्णवस्त्रापराधतः॥ १९॥
सप्ताहं यावकं भुक्त्वा त्रिरात्रं सक्तुपिण्डिकाम्।
त्रींश्च पिण्डांस्त्रिरात्रं तु एवं मुच्येत किल्बिषात्॥ २०॥
य एतेन विधानेन देवि कर्माणि कारयेत्। शुचिर्भागवतो भूत्वा मम मार्गानुसारतः[3]
न स गच्छति संसारं मम लोकाय गच्छति[4]॥ २१॥
वाससा चाविधौतेन यो मे कर्माणि कारयेत्।
शुचिर्भागवतो भूत्वा मम मार्गानुसारकः॥ २२॥
तस्य दोषं प्रवक्ष्यामि अपराधं वसुन्धरे। पतन्ति येन संसारे वाससोच्छिष्टकारिणः
देवि भूत्वा गजो मत्तस्तिष्ठत्येकं नरो भुवि।
उष्ट्रश्चैकं भवेज्जन्म जन्म चैकं वृकस्तथा॥ २४॥

---

१. अक्ष्णाम्। २. अत्र (ग) अन्धकारप्रायश्चित्तं ततः वराह उवाच इत्यधिकः।
३. सारगः (ग)।
४. अतः परं (ग) इति कृष्णवस्त्रापराधप्रायश्चित्तम्। वराह उवाच इत्यधिकः।

गोमायुरेकं जन्मापि जन्म चैकं हयस्तथा।
सारङ्गस्त्वेकजन्मा वै मृगो भवति वै ततः॥ २५॥
सप्तजन्मान्तरं पश्चात् ततो भवति मानुषः।
मद्भक्तश्च गुणज्ञश्च मम कर्मपरायणः।
निरपराधो दक्षश्च अहङ्कारविवर्जितः॥ २६॥

धरण्युवाच

श्रुतमेतन्मया देव यत्त्वया समुदाहृतम्। संसारं वाससोच्छिष्टा येन गच्छन्ति मानुषाः
प्रायश्चित्तं चेन्मे ब्रूहि सर्वकर्मसुखावहम्।
किल्बिषाद्येन मुच्यन्ते तव कर्मपरायणाः॥ २८॥

वराह उवाच

शृणु तत्त्वेन मे देवि कथ्यमानं मयाऽनघे।
प्रायश्चित्तं प्रवक्ष्यामि मम कर्मपरायणः॥ २९॥
यावकेन दिनत्रीणि पिण्याकेन दिनत्रयम्। पर्णभक्षो दिनत्रीणि पयोभक्षो दिनत्रयम्॥
पायसेन त्रिरात्रं तु वायुभक्षो दिनत्रयम्।
एवं कृत्वा महाभागे वाससोच्छिष्टकारिणः।
अपराधं न विन्देरन् संसारं न प्रयान्ति च[1]॥ ३१॥
श्वानोच्छिष्टं तु[2] यो दद्यान्मम कर्मपरायणः।
पापं तस्य प्रवक्ष्यामि संसारे च महद् भयम्॥ ३२॥
श्वानो वै सप्त जन्मानि गोमायुः सप्त वै तथा।
उलूकः सप्त वर्षाणि[3] पश्चाज्जायेत मानुषः॥ ३३॥
विशुद्धात्मा श्रुतिज्ञश्च मद्भक्तश्चैव जायते। गृहे भागवतोत्कृष्टे अपराधविवर्जितः
शृणु तत्त्वेन वसुधे प्रायश्चित्तं महौजसम्[4]।
तरन्ति मानुषा येन त्यक्त्वा संसारसागरम्॥ ३५॥
मूलभक्षो दिनत्रीणि फलाहारो दिनत्रयम्। शाकभक्षो दिनत्रीणि पयोभक्षो दिनत्रयम्
दध्याहारो दिनत्रीणि पायसेन दिनत्रयम्।
वाह्याहारो दिनत्रीणि स्नानं कृत्वा दृढव्रतः॥ ३७॥
एवं दिनान्येकविंशत् कृत्वा वै शुभलक्षणम्।
अपराधं न विन्देत मम लोकाय गच्छति॥ ३८॥
भुक्त्वा वराहमांसं तु यश्च मामिह सर्पति।

---

१. (ग) अतः परमधौतवासःप्रायश्चित्तम्। वराह उवाच इत्यधिकः।
२. शुनोच्छिष्टमिति साधु। ३. सप्त जन्मानि (ग)। ४. मयोजसम्।

पातनं तस्य वक्ष्यामि यथा भवति सुन्दरि ॥ ३९ ॥
वराहो दश वर्षाणि कृत्वानुचरते वने । व्याघ्रो भूत्वा महाभागे समाः पञ्च सप्त च[1]॥
ततश्च मूषको भूत्वा वर्षाणि च चतुर्दश ।
एकोनविंशति वर्षाणि[2] यातुधानश्च जायते ॥ ४१ ॥
शल्लकी चाष्टवर्षाणि जायते भवने बहु ।
व्याघ्रस्त्रिंशच्च वर्षाणि जायते पिशिताशनः ॥ ४२ ॥
एवं संसारितां गत्वा वराहामिषभक्षकः । जायते विपुले सिद्धे कुले भागवते तथा ॥
हृषीकेशवचः श्रुत्वा सर्वं सम्पूर्णलक्षणम् ।
शिरसा चाञ्जलिं कृत्वा वाक्यं चेदमुवाच ह ॥ ४४ ॥
एतन्मे परमं गुह्यं तव भक्तसुखावहम् । वराहमांसभक्षस्तु येन मुच्येत किल्बिषात् ॥
तरन्ति मानुषा येन तिर्यक् संसारसागरात् ।
गोमयेन दिनं पञ्च कणाहारेण सप्त वै ॥ ४६ ॥
पानीयं तु ततो भुक्त्वा तिष्ठेत् सप्तदिनं ततः ।
अक्षारलवणं सप्त सक्तुभिश्च तथा त्रयः ॥ ४७ ॥
तिलभक्षो दिनान् सप्त पाषाणस्य च भक्षकः ।
पयो भुक्त्वा दिनं सप्त कारयेद् बुद्धिमान् मनः ॥ ४८ ॥
क्षान्तं दान्तं तथा कृत्वा अहङ्कारविवर्जितः। दिनान्येकोनपञ्चाशच्चरेत् कृतविनिश्चयः॥
विमुक्तः सर्वपापेभ्यः ससंज्ञो विगतज्वरः ।
कृत्वा मम च कर्माणि मम लोकाय गच्छति[3] ॥ ५० ॥
जालपादं भक्षयित्वा यस्तु मामुपसर्पति । जालपादस्ततो भूत्वा वर्षाणि दश पञ्च च
कुम्भीरो दश वर्षाणि पञ्च वर्षाणि शूकरः । तावद् भ्रमति संसारे मम चैवापराधतः
कृत्वा तु दुष्करं कर्म जायते विपुले कुले । शुद्धो भागवतश्रेष्ठो ह्यपराधविवर्जितः ।
सर्वकर्माण्यतिक्रम्य मम लोकाय गच्छति ॥ ५३ ॥
प्रायश्चित्तं प्रवक्ष्यामि जालपादस्य भक्षणे । तरन्ति मनुजा येन घोरसंसारसागरात् ॥
यावकान्नं दिनत्रीणि वायुभक्षो दिनत्रयम् । फलभक्षो दिनत्रीणि तिलभक्षो दिनत्रयम्
अक्षारलवणान्नाशी पुनस्तत्र दिनत्रयम् । पञ्चदश दिनान्येवं प्रायश्चित्तं समाचरेत् ॥
जालपादापराधस्य एवं कुर्वीत शोधनम् ।
विनीतात्मा शुचिर्भूत्वा य इच्छेत् सुन्दरां गतिम् ॥ ५७ ॥

इति वाराहपुराणे जालपादभक्षणापराधप्रायश्चित्तं
नाम पञ्चत्रिंशदधिकशततमोऽध्यायः ।

---

१. अतः परम् (ग) पुस्तके—
'भूत्वा समाः सप्त सप्त तिष्ठते तत्र पुष्कले' इत्यधिकः ।

२. अत्रैकाक्षराधिकाच्छन्दोदोषः ।

३. (ग) पुस्तके—'इति वाराहमांसभक्षणप्रायश्चित्तम् । वराह उवाच' इत्यधिकः ।

# षट्त्रिंशदधिकशततमोऽध्यायः ।

वराह उवाच

दीपं स्पृष्ट्वा तु यो देवि मम कर्माणि कारयेत् ।
तस्यापराधाद् वै भूमे[1] पातं प्राप्नोति मानवः ॥
तच्छृणुष्व महाभागे कथ्यमानं मयाऽनघे ॥ १ ॥
जायते षष्टिवर्षाणि कुष्ठी गात्रपरिप्लुतः ।
चाण्डालस्य गृहे तत्र एवमेतन्न संशयः ॥ २ ॥
एवं भुक्त्वा तु तत्कर्म मम क्षेत्रे मृतो यदि ।
मद्भक्तश्चैव जायेत शुद्धे भागवते गृहे ॥ ३ ॥
प्रायश्चित्तं प्रवक्ष्यामि दीपस्य स्पर्शनाद् भुवि ।
तरन्ति मनुजा येन कष्टं चाण्डालयोनिषु ॥ ४ ॥
यस्य कस्यापि मासस्य शुक्लपक्षे च द्वादशी ।
चतुर्थभक्तमाहारमाकाशशयने स्वपेत् ॥ ५ ॥
दीपं दत्त्वापराधाद् वै तरन्ति मनुजा भुवि ।
शुचिर्भूत्वा यथान्यायं मम कर्मपथे स्थितः ॥ ६ ॥
एतत्ते कथितं भद्रे स्पर्शने दीपकस्य तु । संसारशोधनञ्चैव यत्कृत्वा लभते शुभम्[2]॥
श्मशानं यो नरो गत्वा अस्नात्वव तु मां स्पृशेत् ।
मम दोषापराधस्य शृणु तत्त्वेन यत्फलम् ॥ ८ ॥
जम्बूको जायते भूमौ वर्षाणां नव पञ्च च ।
गृध्रस्तु सप्त वर्षाणि जायते खचरेश्वरः ॥ ९ ॥
चरन्तौ मानुषं मांसमुभौ[3]तौ गृध्रजम्बुकौ । पिशाचो जायते तत्र वर्षाणि नव पञ्च च।
ततस्तु कुणपोच्छिष्टं त्रिंशद्वर्षाणि खादति ॥ १० ॥
ततो नारायणाच्छ्रुत्वा धरणी वाक्यमब्रवीत् । एतन्मे परमं गुह्यं लोकनाथ जनार्दन
परं कौतूहलं देव निखिलं वक्तुमर्हसि ॥ ११ ॥
श्मशानं पुण्डरीकाक्ष ईश्वरेण प्रशंसितम् । किं त्वत्र त्रिगुणं देव पवित्रे शिवभाषिते
स तत्र रमते नित्यं भगवांस्तु महामतिः[4]। कपालं गृह्य[5] देवोऽत्र दीप्तिमन्तं महौजसम्
प्रशंसितञ्च रुद्रेण भवता किं विनिन्दितम् ।
श्मशानं पद्मपत्राक्ष रुद्रस्य च निशि प्रियम् ॥ १४ ॥

---

१. तस्यापराधेन भूमं । ( क, ख )
२. अतः परं (ख) 'दीपस्पर्शापराधप्रायश्चित्तम् । वराह उवाच' अधिकः ।
३. मांसं भूमौ । ४. महाद्युतिः ।
५. गृहीत्वा इति साधु ।

वराह उवाच

शृणु तत्त्वेन मे देवि इदमाख्यानमुत्तमम् ।
अद्यापि ते न जानन्ति अनघे शंसितव्रताः ॥ १५ ॥
कृत्वा सुदुष्करं कर्म सर्वभूतपतिं हरिम् ।
हत्वा च बालान् वृद्धांश्च त्रिपुरे रूपिणीः स्त्रियः ॥ १६ ॥
तेन पापेन संबद्धो न शक्नोति विचेष्टितुम् ।
प्रनष्टमासैश्वर्यो नष्टा माया च योगिनः ॥ १७ ॥
विवर्णवदनो भूत्वा तिष्ठते च महेश्वरः ।
तत्र स्थाने शिवो भूमे गणैः सर्वैः समावृतः ॥ १८ ॥

नष्टमायं ततो देवि चिन्तयामि वसुन्धरे । ततो ध्यातो मया देवि शङ्करः पुनरेष्यति

यावत्पश्यति तं देवं देवि दिव्येन चक्षुषा ।
नष्टं मायाबलं[1] रुद्रं सर्वभूतमहेश्वरम् ॥ २० ॥
ततोऽहं तत्र गत्वा तु यष्टुकामं त्रियम्बकम् ।
नष्टसंज्ञो हतज्ञानो नष्टयोगबलोऽबलः ॥ २१ ॥

तत ईशो मया चोक्तो वाक्यमेवं सुखावहम् । किमिदं तिष्ठसे रुद्र कल्मषेण समावृतः॥

त्वं कर्ता च विकर्ता च विकाराकार एव च ।
त्वं वैशाख्यं[2] वियोगश्च त्वं योनिस्त्वं परायणम् ॥ २३ ॥
त्वमुग्रदेवदेवादिस्त्वं साम त्वं तथा दिशः ।
किन्न बुध्यसि चात्मानं गणैः परिवृतो भवान् ॥ २४ ॥
किमिदं देवदेवेश विवर्णः पृथुलोचनः ।
तन्समाचक्ष्व तत्त्वेन यत्पृष्टोऽसि मया भवान् ॥ २५ ॥
स्मर योगञ्च मायाञ्च पश्य विष्णोर्महात्मनः ।
तव चैव प्रियार्थाय येनाहमिह चागतः ॥ २६ ॥

ततो मम वचः श्रुत्वा लब्धसंज्ञो महेश्वरः । उवाच मधुरं वाक्यं पापसन्तप्तलोचनः ॥
शृणु तत्त्वेन मे देव कोऽन्योऽप्येवं करिष्यति । देवं नारायणञ्चैकं सर्वलोकमहेश्वरम् ॥

हे विष्णो त्वत्प्रसादेन देवत्वञ्चैव माधव ।
लब्धयोगश्च साङ्ख्यश्च जातोऽस्मि विगतज्वरः ॥ २९ ॥
त्वत्प्रसादेन जातोऽस्मि पूर्णाम्बुरिव सागरः ।
अहं त्वां तु विजानामि मां त्वं जानासि माधव ॥ ३० ॥

आवयोरन्तरं कोऽपि न पश्यति जनार्दन । ब्रह्माणं तु विजानाति वाक्ययोरन्तरेण हि ॥

साधु विष्णो महाभाग सर्वमायाकरण्डक ॥ ३१ ॥

---

१. नष्टमायाबलम् । २. त्वं वै साङ्ख्यञ्च योगञ्च ।

एवं गुह्यं हरो वाक्यमुक्त्वा भूतमहेश्वरः ।
मुहूर्तं ध्यानमास्थाय पुनः प्रोवाच माधवि ॥ ३२ ॥
तव विष्णोः प्रसादेन मया तत् त्रिपुरं हतम् ।
निहता दानवास्तत्र गर्भिण्यश्च निपातिताः ॥ ३३ ॥
बालवृद्धा हतास्तत्र विस्फुरन्तो दिशो दश ।
तस्य पापस्य दोषेण[1] न शक्नोमि विचेष्टितुम् ॥ ३४ ॥
प्रनष्टयोगमायश्च नष्टैश्वर्यश्च माधव । किं कर्तव्यं मया विष्णो पापावस्थेन सम्प्रति ॥
विष्णो तत्त्वेन मे ब्रूहि शोधनं पापनाशनम् ।
येन वै कृतमात्रेण शुद्धो मुच्येत किल्बिषात् ॥ ३६ ॥
एवं चिन्तात्मनस्तस्य मया रुद्रस्य भाषितम् ।
कपालमालां गृहीत्वा समलं[2] गच्छ शंकर ॥ ३७ ॥
ममैवं वचनं श्रुत्वा भगवान् परमेश्वरः । उवाच मां पुनर्व्यक्तं मां बोधय जगत्पते ।
कीदृशः समलो विष्णो यत्र गच्छामहे वयम् ॥ ३८ ॥
ततस्तस्य वचः श्रुत्वा शंकरस्य महेश्वरि । तत्पापशोधनार्थाय मया वाक्यं प्रभाषितम् ॥
श्मशानं समलं रुद्र पूतिको[3] व्रणगन्धिकः। स्वयं तिष्ठन्ति वै तत्र मनुजा विगतस्पृहाः॥
तत्र गृह्य[4] कपालानि रम तत्रैव शंकर । तत्र वर्षसहस्राणि दिव्यान्येव दृढव्रतः ॥
ततो भक्षय मांसानि पापक्षयचिकीर्षुकः ।
हतानां चैव मांसानि ये च भोज्यास्तव प्रियाः ॥ ४२ ॥
एवं सर्वगणैः सार्धं वस तत्र सुनिश्चितः ।
पूर्णे वर्षसहस्रे तु स्थित्वा त्वं समले[5] पुनः ।
गच्छाश्रमपदं पश्चाद् गौतमस्य महामुनेः ॥ ४३ ॥
तत्र ज्ञास्यसि चात्मानं गौतमाश्रमसंस्थितः ।
प्रसादाद् गौतममुनेर्भविता[6] गतकिल्बिषः ॥ ४४ ॥
सततं पापसम्पन्नं कपालं शिरसि स्थितम् । ऋषिःपातयितुं शक्तस्त्वत्प्रसादान्न संशयः॥
एवं रुद्रं वरं दत्त्वा तत्रैवान्तर्हितोऽभवम् । रुद्रोऽपि भ्रमते तत्र श्मशाने पापसंवृते ॥
अतो न रोचते भूमे श्मशानं मे कदाचन ।
यत्र रुद्रकृतं पापं स्थितं किल भयावहम् ॥ ४७ ॥
एतत्ते कथितं भद्रे श्मशानं मे जुगुप्सितम् । विना तु कृतसंस्कारो मम कर्मपरायणः ।
प्रायश्चित्तं प्रवक्ष्यामि येन शुध्यति किल्बिषात् ॥ ४८ ॥
कृत्वा चतुर्थभक्तं तु दिनानि दश पञ्च च । आकाशशयनं कुर्यादेकवस्त्रः कुशासने ॥

---

१. तस्य पापेन दोषस्य । २. तं समलम् । ३. समलम् ।
४. गृहीत्वेति साधु । ५. समले । ६. भवता ।

प्रभाते पञ्चगव्यञ्च पातव्यं कर्मशोधनम् । विमुक्तः सर्वपापेभ्यो मम लोकाय गच्छति[1]
पिण्याकं भक्षयित्वा तु यो देवमुपसर्पति । तस्य वै शृणु सुश्रोणि प्रायश्चित्तं सुशोधनम्
उलूको दश वर्षाणि कच्छपस्तु समास्त्रयः । जायते मानवस्तत्र मम कर्मपरायणः ॥

यांस्तु दोषान् प्रपश्यन्ते संसारेऽस्मिन् वसुन्धरे ।
तस्य वक्ष्यामि सुश्रोणि प्रायश्चित्तं महौजसम् ॥ ५३ ॥

किल्बिषाद्येन मुच्येत संसारान्तं च गच्छति । यावकेन दिनैकं तु गोमूत्रेण च कारयेत्॥

रात्रौ वीरासनं कुर्यादाकाशशयने[2] वसेत् ।
स न गच्छति संसारं मम लोकाय गच्छति[3] ॥ ५५ ॥

वराहमांसेन तु यो मम कुर्वीत प्रापणम् । मूर्खः स पापकर्मा च मम कर्मपरायणः ।

यांस्तु दोषान् प्रपद्येत संसारञ्च वसुन्धरे ॥ ५६ ॥
यावद् रोम वराहस्य मम गात्रेषु संस्थितम् ।
तावद्वर्षसहस्राणि नरके पच्यते भुवि ॥ ५७ ॥

अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे । वाराहेण तु मांसेन यत्तु कुर्वीत प्रापणम्

यावत् तत्तनुसंस्थं तु भाजने तु प्रतिष्ठितम् ।
तावत् स पतते देवि सौकरीं योनिमास्थितः ॥ ५९ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
मां गतिं संप्रपद्येत मम कर्मपरायणः ॥ ६० ॥
अन्धो भूत्वा ततो देवि जन्म चैवं प्रतिष्ठितम् ।
एवं गत्वा तु संसारं वराहमांसप्रापणात् ।
जायते विपुले सिद्धे कुले भागवते शुचिः ॥ ६१ ॥
विनीतः कृतसंस्कारो मम कर्मपरायणः ।
द्रव्यवान् गुणवांश्चैव रूपवान् शीलवान् शुचिः ॥ ६२ ॥
प्रायश्चित्तम्प्रवक्ष्यामि तस्य कायविशोधनम् ।
किल्वषाद्येन मुच्येत मम कर्मपरायणः ॥ ६३ ॥
फलाहारो दिनान् सप्त सप्त मूलाशनस्तथा ।
दिनानि सप्त तिष्ठेत सप्त वै पायसेन च ॥ ६४ ॥
तक्रेण सप्त दिवसान् सप्त यावकभोजनः ।
प्रायश्चित्तान् महाभागे मम लोकाय गच्छति[4] ॥ ६५ ॥

---

१. अतः परं (ग) श्मशानप्रवेशापराधप्रायश्चित्तम् । वराह उवाच इत्यधिकः ।
२. कुर्याद् वाकाशशयने ।
३. अतः परम् (ग) पिण्याकभक्षणप्रायश्चित्तम् । 'वराह उवाच' इत्यधिकः ।
४. (ग) 'वराहमांसप्रापणापराधप्रायश्चित्तम् । वराह उवाच' अधिकः ।

मद्यं पीत्वा वरारोहे यस्तु मामुपसर्पति ।
तत्र दोषं प्रवक्ष्यामि शृणु सुन्दरि तत्त्वतः ॥ ६६ ॥
दशवर्षसहस्राणि दरिद्रो जायते पुनः ।
ततो भवेत् सुपूतात्मा मद्भक्तः स न संशयः ॥ ६७ ॥
यस्तु भागवतो भूत्वा कामरागेण मोहितः ।
दीक्षितः पिबते मद्यम्प्रायश्चित्तं न विद्यते ॥ ६८ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
अग्निवर्णां सुरां पीत्वा तेन मुच्येत किल्बषात् ॥ ६९ ॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
न स लिप्यति पापेन संसारञ्च न गच्छति[1] ॥ ७० ॥
कौसुम्भञ्चैव यः शाकं भक्षयेन्मम पूजकः ।
नरके पच्यते घोरे दश पञ्च च सूकरः[2] ॥ ७१ ॥
ततो गच्छेच्छ्वयोनौ च त्रीणि वर्षाणि जम्बुकः ।
वर्षमेकं ततः शुध्येन्मत्कर्मणि रतः शुचिः[3] ॥ ७२ ॥
मम लोकमवाप्नोति शुद्धो भूत्वा वसुन्धरे ।
ततो भूमिर्वचः श्रुत्वा प्रत्युवाच पुनर्हरिम् ॥ ७३ ॥
कुसुम्भशाकनैवेद्यप्रापणेन च किल्बषात् । कथं मुच्येत देवेश प्रायश्चित्तं वद प्रभो ॥

वराह उवाच

यो मे कुसुम्भशाकेन प्रापणं कुरुते नरः । दशवर्षसहस्राणि नरके परिपच्यते ॥७५ ॥
प्रायश्चित्तं प्रवक्ष्यामि तच्च मे वदतः शृणु । भक्षणे तु कृते कुर्याच्चान्द्रायणमतन्द्रितः ।
प्रापणे तु कृते कुर्याद् द्वादशाहं पयोव्रतम् ॥ ७६ ॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
न स लिप्येत पापेन मम लोकञ्च गच्छति[4] ॥ ७७ ॥
यः पारक्येण वस्त्रेण न धूतेन च माधवि ।
प्रायश्चित्ती भवेन्मूर्खो[5] मम कर्मपरायणः ॥ ७८ ॥
करोति मम कर्माणि स्पृशते मां तदा स्थितः ।
मृगो वै जायते देवि वर्षाणि त्रीणि सप्त च ॥ ७९ ॥

---

१. (ग) 'मद्यपानप्रायश्चित्तम् । वराह उवाच' अधिकः ।
२. शूकरः । ३. मत्कर्मनिरतः शुचिः ।
४. कुसुम्भशाकभक्षणप्रापणकयोः प्रायश्चित्तम् । वराह उवाच अधिकः (ग) ।
५. प्रायश्चित्ताद् भवेन्मूर्खः ।

हीनपादेन जायेत चैकजन्म वसुन्धरे ।
मूर्खश्च क्रोधनश्चैव मद्भक्तश्चैव जायते ॥ ८० ॥
तस्य वक्ष्यामि सुश्रोणि प्रायश्चित्तं महौजसम् ।
येन गच्छति संसारं मम भक्तौ व्यवस्थितः ॥ ८१ ॥
अष्टभक्तं ततः कृत्वा मम भक्तिपरायणः ।
माघस्यव तु मासस्य शुक्लपक्षस्य द्वादशीम् ॥ ८२ ॥
तिष्ठेज्जलाशये गत्वा शान्तो दान्तो यतव्रतः ।
अनन्यमानसो भूत्वा मम चिन्तापरायणः ॥ ८३ ॥
प्रभातायां तु शर्वर्यामुदिते तु दिवाकरः ।
पञ्चगव्यं ततः पीत्वा मम कर्माणि कारयेत् ॥ ८४ ॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
सर्वपापविनिर्मुक्तो मम लोकाय गच्छति[1] ॥ ८५ ॥
अकृत्वा वो नवान्नानि मम कर्मपरायणः ।
ततो भागवतो भूत्वा नवान्नं यो न कारयेत् ।
पितरस्तस्य नाशन्ति वर्षाणि दश पञ्च च ॥ ८६ ॥
अदत्त्वा यस्तु भुञ्जीत नवान्नानि कदाचन ।
न तस्य धर्मो विद्येत एवमेतन्न संशयः ॥ ८७ ॥
अन्यच्च ते प्रवक्ष्यामि येन तस्मात् प्रमुच्यते ।
प्रायश्चित्तं महाभागे मम भक्तसुखावहम् ॥ ८८ ॥
उपवासं त्रिरात्रं तु तत एकेन वा पुनः ।
आकाशशयनं कृत्वा चतुर्थेऽहनि शुद्ध्यति ॥ ८९ ॥
एवं तत्र विधिं कृत्वा उदिते च दिवाकरे ।
पञ्चगव्यं ततः पीत्वा शीघ्रं मुच्येत किल्विषात् ॥ ९० ॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
सर्वसङ्गं परित्यज्य मम लोकाय गच्छति[2] ॥ ९१ ॥
अदत्त्वा गन्धमाल्यानि यो मे धूपं प्रयच्छति ।
कुणपो जायते भूमे यातुधानो न संशयः ॥ ९२ ॥
वर्षाणि चैकविंशानि अयस्कारनिवासकः ।
तिष्ठतेऽत्र महाभागे एवमेतन्न संशयः ॥ ९३ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
प्रायश्चित्तं प्रवक्ष्यामि येन मुच्येत किल्विषात् ॥ ९४ ॥

---

१. 'परकीयवस्त्रापराधप्रायश्चित्तम् । वराह उवाच' इत्यधिकः (ग) ।
२. 'नवान्नभक्षणप्रायश्चित्तम् । वराह उवाच' अधिकः (ग) ।

यस्य कस्यचिन्मासस्य शुक्लपक्षस्य द्वादशीम् ।
उपोष्य चाष्टभक्तं तु दशैकादशमेव च ॥ ९५ ॥
प्रभातायां तु शर्वर्यामुदिते रविमण्डले ।
पञ्चगव्यं ततः पीत्वा शीघ्रं मुच्यति किल्बिषात् ॥ ९६ ॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
तानि तानि तरन्त्येनं[1] सर्व एव पितामहाः[2] ॥ ९७ ॥
वहन्नुपानहौ पद्भ्यां यस्तु मामुपचङ्क्रमेत् ।
चर्मकारस्तु जायेत वर्षाणां तु त्रयोदश ॥ ९८ ॥
तज्जन्मनः परिभ्रष्टः सूकरो जायते पुनः ।
सूकरत्वात्[3] परिभ्रष्टः श्वा भवेच्च जुगुप्सितः ॥ ९९ ॥
ततः श्वत्वात् परिभ्रष्टो मानुषेषूपजायते । मद्भक्तश्च विनीतश्च अपराधविवर्जितः
मुक्तस्तु सर्वसंसारान्मम लोकाय गच्छति ॥ १०० ॥
य एतेन विधानेन वसुधे कर्म कारयेत् ।
न स लिप्येत पापेन एवमेतन्न संशयः[4] ॥ १०१ ॥
भेरीशब्दमकृत्वा तु यस्तु मां प्रतिबोधयेत् ।
बधिरो जायते भूमे एकं जन्म न संशयः ॥ १०२ ॥
तस्य वक्ष्यामि सुश्रोणि प्रायश्चित्तं मम प्रियम् ।
किल्बिषाद्येन मुच्येत भेरीताडनमोहितः ॥ १०३ ॥
यस्य कस्यचिन्मासस्य शुक्लपक्षे तु द्वादशी ।
आकाशशयनं कृत्वा शीघ्रं मुच्येत किल्बिषात् ॥ १०४ ॥
य एतेन विधानेन वसुधे कर्म कारयेत् ।
अपराधं न प्राप्नोति मम लोकाय गच्छति[5] ॥ १०५ ॥
अन्नं भुक्त्वा बहुतरमजीर्णेन परिप्लुतः ।
उद्गारेण समायुक्तः अस्नात उपसर्पति ॥ १०६ ॥
एकजन्मनि श्वा चैव वानरश्चैव जायते ।
एकस्मिन् जन्मनि च्छागः शृगालश्चैकजन्मनि ॥ १०७ ॥
एकजन्म भवेदन्धो मूषिको जायते पुनः ।

---

१. तरन्त्येव ।
२. 'गन्धमाल्यदानं विना धूपदाने प्रायश्चित्तम् । वराह उवाच' अधिकः (ग) ।
३. शूकरत्वात् । ४. उपानहापराधप्रायश्चित्तम् । वराह उवाच । (ग) ।
५. 'भेरीताडनापराधप्रायश्चित्तम् । वराह उवाच' अधिकः ।

तारितो ह्येष संसाराज्जायते विपुले कुले ॥ १०८ ॥
शुद्धो भागवतः श्रेष्ठस्त्वपराधविवर्जितः ।
प्रायश्चित्तं प्रवक्ष्यामि मम भक्तसुखावहम् ॥ १०९ ॥
किल्बिषाद्येन मुच्येत मम भक्तिपरायणः ।
त्रिदिनं यावकाहारो मूलाहारो दिनत्रयम् ॥ ११० ॥
पायसेन दिनत्रीणि त्रिदिनं शक्तुना तथा ।
त्रिदिनं वायुभक्षोऽपि आकाशशयनस्त्रिकम् ॥ १११ ॥
उत्थायापररात्रे तु कृत्वा वै दन्तधावनम् ।
पञ्चगव्यं पिबेच्चैव शरीरपरिशोधनम् ॥ ११२ ॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
न स लिप्येत पापेन मम लोकाय गच्छति ॥ ११३ ॥
आख्यानानां महाख्यानं तपसाञ्च परं तपः ।
अत्राहं कीर्तयिष्यामि ब्राह्मणेभ्यो महेश्वरि ॥ ११४ ॥
एष धर्मश्च कीर्तिश्च आचाराणां महौजसाम् ।
गुणानाञ्च परं श्रेष्ठ क्रतीनां च महाक्रतिः[1] ॥ ११५ ॥
य एतत् पठते नित्यं कल्यमुत्थाय मानवः ।
स पितॄंस्तारयेज्जन्तुर्दशपूर्वान् दशापरान् ॥ ११६ ॥
आरोग्याणां महारोग्यं मङ्गलानां तु मङ्गलम् ।
रत्नानां परमं रत्नं सर्वपापप्रणाशनम् ॥ ११७ ॥
यस्तु भागवतो नित्यं पठते च दृढव्रतः ।
कृत्वा सर्वापराधानि न स पापेन लिप्यते ॥ ११८ ॥
एष जप्यः प्रमाणञ्च सन्ध्योपासनमेव च ।
कल्यमुत्थाय पठते मम लोकाय गच्छति ॥ ११९ ॥
न पठेन्मूर्खमध्ये तु कुशिष्याणां तथैव च ।
दद्याद् भागवते श्रेष्ठे मम कर्मपरायणे ॥ १२० ॥
एतत्ते कथितो देवि आचारस्य विनिश्चयः ।
पूर्वं त्वया यत् पृष्टं तु किमन्यच्छ्रोतुमिच्छसि ॥ १२१ ॥

इति वाराहपुराणे भगवच्छास्त्रे प्रायश्चित्तकर्मसूत्रं नाम
षट्त्रिंशदधिकशततमोऽध्यायः ।

---

१. तृतीयाञ्च महाद्युतिः ।

# सप्तत्रिंशदधिकशततमोऽध्यायः

सूत उवाच

श्रुत्वा तु विपलं ह्येतदपराधविशोधनम् । कर्म भागवतं श्रेष्ठं सर्वभागवतप्रियम् ॥१॥

अहो कर्म महाश्रेष्ठं भगवंस्तव भाषितम् ।
मम चैव प्रियार्थाय तव भक्तसुखावहम्[1] ॥ २ ॥

श्रुतं ह्येव महाबाहो सर्वधर्मार्थसाधकम् । तव भक्तसुखार्थाय तद् भवान् वक्तुमर्हति

किमुच्यते व्रतञ्चैव शुभं कुब्जाम्रके महत्[2] ।
कतरच्चापि तच्छ्रेष्ठं क्षेत्रं भक्तसुखावहम् ॥ ४ ॥

वराह उवाच

शृणु मे परमं गुह्यं यत्त्वया पृच्छितं मम ।
मम क्षेत्रं परञ्चैव शुद्धं भागवतप्रियम् ॥ ५ ॥
परं कोकामुखं स्थानं तथा कुब्जाम्रकं परम् ।
परं सौकरवं स्थानं सर्वसंसारमोक्षणम् ॥ ६ ॥
यत्र संस्था च मे देवि ह्युद्धृतासि रसातलात् ।
यत्र भागीरथी गङ्गा मम सौकरवे स्थिता ॥ ७ ॥

धरोवाच

केषु लोकेषु यान्तीश सौकरे ये मृताः प्रभो ।
किं वा पुण्यं भवेत्तत्र स्नातस्य पिबतस्तथा ॥ ८ ॥
कति तीर्थानि पद्माक्ष क्षेत्रे सौकरवे तव[3] ।
धर्मसंस्थापनार्थाय तद् विष्णो वक्तुमर्हसि ॥ ९ ॥

वराह उवाच

शृणु तत्त्वेन मे देवि यत्त्वं मां परिपृच्छसि ।
यां गतिं ते प्रपद्यन्ते नराः सौकरवे मृताः ॥ १० ॥
यत्र स्नातस्य यत्पुण्यं गतस्य च मृतस्य च ।
यत्र च मानि तीर्थानि मम संस्थानसंस्थिताः ॥ ११ ॥
शृणु पुण्यं महाभागे मम क्षेत्रेषु सुन्दरि ।
प्राप्नुवन्ति महाभागे गत्वा सौकरवं प्रति ॥ १२ ॥
दश पूर्वापराश्चापि अपरे सप्त पञ्च च ।
स्वर्गं गच्छन्ति पुरुषास्तेषां ये तत्र वै मृताः[4] ॥ १३ ॥

---

१. एष श्लोकः कखयोः नास्ति ।
२. कुब्जाम्रकं महत् ।
३. तथा ।
४. स्मृता ।

गमनादेव सुश्रोणि मुखस्य मम दर्शनात् । सप्तजन्मान्तरे भद्रे जायते विपुले कुले ॥
धनधान्यसमृद्धेषु रूपवान् गुणवान्‌ शुचिः । मद्भक्तश्चैव जायेत मम कर्मपरायणः ॥
एवं व मानुषो भूत्वा अपराधविवर्जितः । गमनं तस्य क्षेत्रस्य मरणं तत्र कारणम् ॥
ये मृतास्तस्य क्षेत्रस्य सौकरस्य प्रभावतः । शङ्खचक्रगदापद्मधनुर्हस्ताश्चतुर्भुजाः ।
त्यक्त्वा कलेवरं तूर्णं श्वेतद्वीपाय यान्ति ते ॥ १७ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तीर्थेषु तेषु स्नातश्च यां प्राप्नोति परां गतिम्[1] ॥ १८ ॥
चक्रतीर्थं महाभागे यत्र चक्रं प्रतिष्ठते[2] ।
शृणु पुण्यं तत्र भद्रे प्राप्नोति परमं नरः ॥ १९ ॥
चक्रतीर्थे नरो गत्वा नियतो नियताशनः ।
वैशाखद्वादशीं प्राप्य स्नायाद् यो विधिपूर्वकम् ॥ २० ॥
दशवर्षसहस्राणि दश वर्षशतानि च । धनधान्यसमृद्धो हि जायते विपुले कुले ॥२१॥
मद्भक्तश्चापि जायेत मम कर्मपरायणः ।
अपराधं वर्जयति दीक्षितश्चैव जायते ॥ २२ ॥
भूत्वा वै मानुषस्तत्र तीर्थे संसारसागरम् । तीर्त्वा चक्रगदापद्मशङ्खपाणिश्चतुर्भुजः ॥
मम रूपधरः श्रीमान् मम लोके महीयते ।
चक्रतीर्थे विशालाक्षि मरणे कृतकृत्यतः ॥ २४ ॥
एतच्छ्रुत्वा वचस्तस्य श्रोतुकामा वसुन्धरा । शिरस्यञ्जलिमाधाय श्लक्ष्णमेतदुवाच ह॥
तत्र सौकरवे तीर्थे चन्द्रमास्त्वामतोषयत् ।
एतदाचक्ष्व तत्त्वेन परं कौतूहलं हि मे ॥ २६ ॥
वसुधाया वचः श्रुत्वा विष्णुर्मायाकरण्डकः ।
उवाच वाक्यं मेदिन्या मेघदुन्दुभिनिःस्वनः ॥ २७ ॥
शृणु भूमे प्रयत्नेन कथ्यमानं ममानघे ।
तस्य वै कारणं येन तेन चाराधितोऽस्म्यहम् ॥ २८ ॥
तस्य प्रीतोऽस्म्यहं देवि विशुद्धेनान्तरात्मना ।
दर्शितश्च मया ह्यात्मा यो हि देवेषु दुर्लभः ॥ २९ ॥
रूपं सोमेन तद् दृष्ट्वा विसंज्ञस्तदनन्तरम् ।
मह्यं द्रष्टुं न शक्नोति मम तेजःप्रमोहितः ॥ ३० ॥
ततो निमीलिताक्षेण कृत्वा शिरसि चाञ्जलिम् ।
न शक्नोति तथा वक्तुं भीरुः संत्रस्तलोचनः ॥ ३१ ॥
एवमेतद् विचेष्टन्तं ब्राह्मणानामपीश्वरम् ।
वाणीं सूक्ष्मां समादाय स सोमो नोदितो मया ॥ ३२ ॥

---

१. तीर्थेषु स्नातश्च यां प्राप्नोति परमां गतिम् । २. प्रतिष्ठितम् ।

किं वा फलं समुद्दिश्य तप्यसे सुमहत्तपः ।
ब्रूहि तत्त्वेन मे सोम यत्ते मनसि वर्तते ।
सर्वं सम्पादयिष्यामि त्वत्प्रसादान्न संशयः ॥ ३३ ॥

मम वाक्यं ततः श्रुत्वा ग्रहाणां प्रवरेश्वरः ।
उवाच मधुरं वाक्यं सोमतीर्थमवस्थितः ॥ ३४ ॥
भगवन् यदि तुष्टोऽसि मम चात्र ततः प्रभो ।
योगनाथो जगच्छ्रेष्ठः सर्वयोगीश्वरेश्वरः ॥ ३५ ॥

यावल्लोका धरिष्यन्ति तावत् त्वयि जनार्दन ।
अतुला त्वयि मे भक्तिर्भवेन्नित्यं सुनिश्चला ॥ ३६ ॥

यच्चापि मम तद्रूपं त्वया संस्थापितं प्रभो ।
सप्तद्वीपेषु दृश्येत तत्र तत्रैव संस्थितम् ॥ ३७ ॥
सोम इत्येव यज्ञेषु पिबन्तु मम ब्राह्मणाः ।
गतिः परमिका तेषां दिव्या विष्णो भवेद् यथा ॥ ३८ ॥
क्षीणस्तत्र त्वमावस्यां तत्र पिण्डपितृक्रिया ।
प्रवर्तन्ते यथान्यायं भवेयं सौम्यदर्शनः ॥ ३९ ॥
अधर्मे च न मे बुद्धिर्भवेद् विष्णो कदाचन ।
पतितत्वञ्चाथ गच्छेयमोषधीनां तथा कुरु ॥ ४० ॥
यदि तुष्टो महादेव आदिमध्यान्तवर्जितः ।
मम चैव प्रियार्थाय एतन्मे दीयतां वरः ॥ ४१ ॥
ततः सोमवचः श्रुत्वा तत्रैवान्तर्हितोऽभवम् ॥ ४२ ॥
एवं तप्तं महाभागे तपः सोमेन निश्चयात् ।
प्राप्ता च परमा सिद्धिः सोमतीर्थेऽन्यदुर्लभा ॥ ४३ ॥
स्नायाद् यः सोमतीर्थे तु मम कर्मपरायणः ।
अष्टमेन तु भक्तेन मम कर्मविधौ स्थितः ।
फलं तस्य प्रवक्ष्यामि सोमतीर्थे नरस्य यत् ॥ ४४ ॥
यत्र तप्तं तपस्तेन सोमेन सुमहात्मना ।
पञ्चवर्षसहस्राणि एकपादेन तिष्ठता ॥
पञ्च वर्षसहस्राणि तथैवोर्ध्वमुखः स्थितः ॥ ४५ ॥
एवमुग्रं तपः कृत्वा कान्तिमानभवच्च सः ।
ममापराधान्मुक्तश्च ब्राह्मणानां पतिस्तथा ॥ ४६ ॥
एवमेव महाभागे सोमतीर्थे कृतोदकः । त्रिंशद्वर्षसहस्राणि त्रिंशद्वर्षशतानि च ।

१. शुभे ।

जायते ब्राह्मणः सुभ्रु[1] वेदवेदाङ्गपारगः ॥ ४७ ॥
द्रव्यवान् गुणवांश्चैव संविभागी यशस्विनि ।
मद्भक्तश्चैव जायेत अपराधविवर्जितः ॥ ४८ ॥
स एव ब्राह्मणो भूत्वा संसाराद् विप्रमुच्यते ।
तस्य चिह्नं प्रवक्ष्यामि सोमतीर्थस्य सुन्दरि ।
तत्तीर्थं येन विज्ञेयं मम मार्गानुसारिणा ॥ ४९ ॥
वैशाखस्य तु मासस्य शुक्लपक्षस्य द्वादशी ।
प्रवृत्ते चान्धकारे तु यत्र कश्चिन्न दृश्यते ॥ ५० ॥
सोमेन च विना भूमिर्दृश्यते चन्द्रसप्रभा ।
आलोकश्चैव दृश्येत सोमस्तत्र न दृश्यते ॥ ५१ ॥
एवं त्वां वच्मि हे भद्रे एष वै विस्मयः परः ।
एतच्चिह्नं महाभागे पुण्ये सौकरवे मम ।
सोमतीर्थे विशालाक्षि येन मुच्यन्ति जन्तवः ॥ ५२ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
प्रभावमस्य क्षेत्रस्य विस्मयं परमं महत् ॥ ५३ ॥
अकामा तु मृता तीर्थे आत्मनः कर्मनिश्चयात् ।
मम क्षेत्रप्रभावेण शृगाली मानुषी भवेत् ॥ ५४ ॥
राजपुत्री विशालाक्षी श्यामा सर्वाङ्गसुन्दरी ।
गुणवद् - रूपसम्पन्ना चतुष्षष्टिकलान्विता ॥ ५५ ॥
तस्य पूर्वेण पार्श्वेन तीर्थं गृध्रवटं[2] स्मृतम् ।
यत्राकामो मृतो गृध्रो मानुषत्वमुपागतः ॥ ५६ ॥
वाक्यं नारायणाच्छ्रुत्वा धरणी शुभलक्षणा ।
उवाच मधुरं वाक्यं विष्णुभक्तसुखावहम् ॥ ५७ ॥
अहो तीर्थप्रभावो वै त्वया प्रोक्तो महान् मम ।
यस्य देव प्रभावेण तिर्यग्योनित्वमागतौ ।
गृध्रश्चैव शृगाली च प्राप्तौ वै मानुषीं तनुम् ॥ ५८ ॥
स्नानेन तत्र तीर्थे च मरणाद् वा जनार्दन ।
कां गतिं वै प्रपद्यन्ते तन्ममाचक्ष्व केशव ॥ ५९ ॥
चिह्नञ्च कीदृशं तेषां ज्ञायते येन ते तथा ।
अकामावपि तौ क्षेत्रे प्राप्तौ तु परमां गतिम् ॥ ६० ॥
ततो महीवचः श्रुत्वा विष्णुर्धर्मविदां वरः ।
उवाच मधुरं वाक्यं धर्मकामो वसुन्धराम् ॥ ६१ ॥

---

१. शुभे । २. गृध्रवटम् ।

शृणु तत्त्वेन मे भूमे यन्मां त्वं परिपृच्छसि ।
उभौ तौ[1] कारणाद् यस्मात् प्राप्तौ वै मानुषीं गतिम् ।। ६२ ।।
तस्मिन्काले ह्यतिक्रान्ते मम कर्म विनिश्चयात् ।
त्रेतायुगे ह्युपक्रान्ते ज्ञाते च युगसंस्थितौ ।। ६३ ।।
तत्र राजा महाभागः स्वधर्मकृतनिश्चयः ।
ब्रह्मदत्तेति[2] विख्यातः पुरं काम्पिल्लमास्थितः ।। ६४ ।।
तस्य पुत्रो महाभागः सर्वधर्मेषु निष्ठितः ।
सोमदत्तेति विख्यातः कुमारः शुभलक्षणः ।
पित्रर्थे मृगयां यातो मृगलिप्सुर्वने तदा ।। ६५ ।।
अरण्ये स तदा गत्वा व्याघ्रसिंहनिषेविते ।
न तत्र लभते किंचित् पितृकार्ये नराधिपः ।। ६६ ।।
एवं च भ्रमतस्तस्य[3] शृगाली दक्षिणे तथा ।
अङ्गमध्ये तु विद्धा सा स्फुरन्ती सर्वमङ्गला ।। ६७ ।।
तथा सा बाणसन्तप्ता व्यथया च परिप्लुता ।
पीत्वा सा सलिलं तत्र वृक्षं शाकोटकं गता ।। ६८ ।।
आतपेन परिक्लान्ता बाणविद्धातुरा भृशम् ।
अकामा मुञ्चती प्राणांस्तीर्थे सोमात्मकं प्रति ।। ६९ ।।
एतस्मिन्नन्तरे भद्रे राजपुत्रः क्षुधार्दितः ।
प्राप्तो गृध्रवटं तीर्थे विश्रामं तत्र चाकरोत् ।। ७० ।।
अथ पश्यति गृध्रं स वटशाखां समाश्रितम् ।
एकेन स तु बाणेन तथा गृध्रो निपातितः ।। ७१ ।।
स तत्र पतितो गृध्रो वटमूलो यशस्विनि ।
गतासुर्नष्टसंज्ञो वै बाणभिन्नस्तथा हृदि ।। ७२ ।।
तं दृष्ट्वा पतितं गृध्रं राजपुत्रस्तुतोष ह ।
तस्य छित्त्वा ततः पक्षौ गृहीत्वा राजनन्दनः[4] ।
बाणपक्षात् विधातुश्च सोमदत्तो गृहान् ययौ ।। ७३ ।।
सोऽपि दीर्घेण कालेन अकामोऽपि मृतः खगः ।
जातः कलिङ्गराजस्य सुतो गुणविभूषितः ।। ७४ ।।
रूपवान् पण्डितश्चैव प्रजानन्दकरः सदा ।
तस्मिन् राजनि नायासं कोऽपि कुत्रापि विन्दति ।। ७५ ।।
या सा शृगाली सञ्जज्ञे काञ्चीराज्ञो[5] गृहे सुता ।

---

१. उभौ तु । २. सोमदत्त इति पाठान्तरम् । ३. एवं संभ्रमतस्तस्य ।
४. राजसत्तमः । ५. कान्तीराज्ञः ।

रूपयुक्ता गुणवती दक्षा सर्वांगसुन्दरी ।
चतुःषष्टिकलायुक्ता कोकिलेव सुखस्वरा ॥ ७६ ॥
एवं प्रवर्त्तिते तत्र कांचीराज्ये कलिङ्गके ।
हार्दिक्यात्सौहृदात्प्रीतिरन्योऽन्यकुलनिश्चयात् ।
भूमे मम प्रसादेन सम्बन्धोऽजायत स्वतः ॥ ७७ ॥
अथ दीर्घेण कालेन कांचीराजसुता तथा ।
कलिङ्गराजपुत्रेण विधिना तु विवाहिता ।
कांचीराजस्तयोः प्रीत्या नाना रत्नानि चाददत् ॥ ७८ ॥
भूषणानि च दिव्यानि गजाश्वमहिषीः स्त्रियः ।
ततः कलिङ्गराजोऽपि सवधूकं निजं सुतम् ।
आदाय स्वगृहं यातस्तेन राज्ञातिमानितः ॥ ७९ ॥
एवं गच्छति काले वै दम्पत्योस्तुष्यमाणयोः ।
अव्युच्छिन्नाऽभवत्प्रीती रोहिणीचन्द्रयोरिव ।
रेमतुस्तौ विहारेषु देवतायतनेषु च ॥ ८० ॥
वने चोपवने चैव ये केचिन्नन्दनोपमाः ।
भर्त्तारं सा न पश्येच्चेत्कदाचिदपि पार्श्वतः ।
नष्टं मन्येत चात्मानं राजपुत्री यशस्विनी ॥ ८१ ॥
न चेत्पश्यति भार्यां स्वां सोऽपि राजन्यनन्दनः ।
आत्मानं मन्यते प्रीत्या नष्टप्रायं वसुन्धरे ।
दिने दिने तयोरेवं वर्द्धते प्रीतिरुत्तमा ॥ ८२ ॥
नान्तरं पश्यते कश्चित् पुरुषः पुण्यकर्मणोः ।
सोऽपि बुद्ध्या सुशीलेन कृते च हे वसुन्धरे ॥ ८३ ॥
कलिंगस्तोषयामास पौरान् जानपदांस्तथा ।
अन्तःपुरे तु या नार्यः कलिंगेषु घरे तयोः ॥ ८४ ॥
ताभ्यां सन्तोषिताः सर्वाः शीलेन स्वगुणैस्तथा ।
एवं प्रवर्द्धिता ताभ्यां प्रीतिः पूर्वं यशस्विनी ॥ ८५ ॥
रमते तत्र चान्योन्यं शचीवासवयोरिव ।
अथ प्रणयपूर्वं सा कांतं सर्वांगसुन्दरी ॥ ८६ ॥
व्यजिज्ञपद्राजसुतं सौहृदेन यशस्विनी ।
किंचिदिच्छामि ते वक्तुं राजपुत्र यशोधन ॥ ८७ ॥
मम स्नेहात्प्रियं चैव तद्भवान्वक्तुमर्हति ।
ततो भार्यावचः श्रुत्वा कलिंगस्य सुतः प्रभुः ॥ ८८ ॥
उवाच मधुरं वाक्यं पद्मपत्रनिभेक्षणः ।

यद्वदिष्यसि भद्रे त्वं यच्च तेऽस्ति मनीषितम् ॥ ८९ ॥
सर्वं ते कथयिष्यामि शपे सत्येन सुन्दरि ।
सत्यं मूलं ब्राह्मणानां विष्णुः सत्ये प्रतिष्ठितः ॥ ९० ॥
तस्य मूलं तपो राज्ञि राज्यं सत्ये प्रतिष्ठितम् ।
नाहं मिथ्या प्रवक्ष्यामि कदाचिदपि सुन्दरि ॥ ९१ ॥
न मिथ्या पूर्वमुक्तं मे ब्रुहि किं करवाणि ते ।
हस्त्यश्वरथरत्नानि यानानि च धनानि च ॥ ९२ ॥
अथवा परमग्र्यं तु पट्टबन्धं करोमि ते ।
सा भर्तृवचनं श्रुत्वा कांचीराजस्य चात्मजा ॥ ९३ ॥
संगृह्य चोभौ चरणौ भर्त्तारमिदमब्रवीत् ।
न चैव रत्नानीच्छामि हस्त्यश्वरथमेव च ॥ ९४ ॥
पट्टबन्धेन कार्यं च यावद्ध्रियति मे गुरुः ।
एका स्वपितुमिच्छामि मध्याह्ने तु तथाविधे ॥ ९५ ॥
न चिरं बाल्यकालं तु यथा कश्चिन्न पश्यति ।
श्वशुरो यदि वा श्वश्रूर्यथैवान्यो नराधिप ॥ ९६ ॥
सुप्ता नैव च द्रष्टव्या व्रतमेतन्मुहूर्त्तकम् ।
आत्मनो वै गृहजना ये केचित्स्वजने जनाः ॥ ९७ ॥
ते मां प्रसुप्तां पश्येयुः कदाचिदपि संस्थिताम् ।
ततो भार्यावचः श्रुत्वा कलिङ्गैश्वर्यवर्द्धनः ॥ ९८ ॥
बाढमित्येव तां वाक्यं प्रत्युवाच वसुन्धरे ।
विस्रब्धा भव सुश्रोणि कल्याणेन यशस्विनि ॥ ९९ ॥
न त्वां वै द्रक्ष्यते कश्चिच्छयनीये महाव्रताम् ।
एवं गच्छति काले तु तयोस्तु तदनन्तरे ॥ १०० ॥
कलिङ्गो जरया युक्तो पुत्रं राज्येऽभ्यषेचयत् ।
राज्यं दत्त्वा वरारोहे यथान्यायं कुलोद्भवम् ॥ १०१ ॥
कृत्वा निष्कण्टकं राज्यं दत्त्वा पंचत्वमागतः ।
एवं प्रभुस्ततो राज्यं पितुर्दत्तं यथोचितम् ॥ १०२ ॥
एकाकी स्वपते तत्र यत्र कश्चिन्न पश्यति ।
स तु दीर्घेण कालेन कलिङ्गकुलवर्द्धनः ॥ १०३ ॥
सुतानजनयत्पंच आदित्यसमतेजसः ।
एवं तु मानुषं लोकं मम माया प्रमोहितम् ॥ १०४ ॥
आत्मकर्मसु संयुक्तं चक्रवत्परिवर्तते ।
जातो जन्तुर्भवेद्बालो बालस्तु तरुणो भवेत् ॥ १०५ ॥

तरुणो मध्यमं याति पश्चाद्याति जरां ततः ।
बालो वै यानि कर्माणि करोत्यज्ञानतः स्वयम् ॥ १०६ ॥
न स लिप्यति पापेन एवमेतन्न संशयः ।
ततः करिष्यतो राज्यं निष्कण्टकमनामयम् ॥ १०७ ॥
सप्तसप्तति वर्षाणि ह्यतीतानि यशस्विनि ।
अष्टसप्ततिके वर्षे एकान्ते तु नराधिपः ॥ १०८ ॥
तमेव चिन्तयन्नर्थं मध्यसंस्थे दिवाकरे ।
माधवस्य तु मासस्य शुक्लपक्षे तु द्वादशी ॥ १०९ ॥
बुद्धिः सम्पद्यते तस्य प्रियादर्शनलालसा ।
कोऽन्व्यर्यस्तत्किं व्रतं चास्या एषा स्वपिति निर्जने ॥ ११० ॥
न सुप्ताया व्रतं किंचिद् दृश्यते धर्मसंचयः ।
न च विष्णुकृतं कर्म न चैवेश्वरचोदितम् ॥ १११ ॥
मनुना वै कृतो धर्म एष नैव न दृश्यते ।
न काप्यपकृतो धर्मो महानपि न योगिनाम् ॥ ११२ ॥
न तत्र एष विद्येते यश्चरेद् व्रतमीदृशम् ।
बार्हस्पत्येषु धर्मेषु याम्येषु च न विद्यते ॥ ११३ ॥
न एष विद्यते तत्र सुप्ता चरति यद्व्रतम् ।
भुक्त्वा तु कामभोगानि भुक्त्वा तु पिशितौदनम् ॥११४॥
ताम्बूलं रक्तवस्त्रं तु सुसूक्ष्मे पट्टवाससी ।
सुगन्धैर्भूषिता गात्रे सर्वरत्नसमायुता ॥ ११५ ॥
मम कान्ता विशालाक्षी किमत्र चरते व्रतम् ।
कुप्येतापि तु सन्दृष्टा प्रिया मे कमलेक्षणा ॥ ११६ ॥
अवश्यमेव द्रष्टव्या कीदृशं चरति व्रतम् ।
किन्नरैः सुप्रलक्ष्येत वशीकरणमुत्तमम् ॥ ११७ ॥
अथ योगीश्वरी भूत्वा यत्र गच्छति रोचते ।
अथवा चान्यसंसृष्टा काकरोगेण चावृता ॥ ११८ ॥
एवं चिन्तयतस्तस्य अस्तं प्राप्तो दिवाकरः ।
संवृत्ता रजनी भूयः सर्वसार्थसुखावहा ॥ ११९ ॥
ततो रात्र्यां व्यतीतायां प्रभातसमये शुभे ।
पठन्ति मागधा वन्दिसूता वैतालिकास्तथा ॥ १२० ॥
शङ्खदुन्दुभिनादैश्च बोधितो वसुधाधिपः ।
सर्वलोकहितार्थाय उदिते च दिवाकरे ॥ १२१ ॥
यत्तदा चिन्तितं पूर्वं द्रष्टुकामेन तां प्रियाम् ।

सर्वचिन्तां परित्यज्य सा चिन्ता हृदि वर्त्तते ॥ १२२ ॥
स्नातस्तु विधिना सोऽथ क्षौमाभ्यामुपसंवृतः ।
भूत्वा चोत्सारयामास आज्ञां दत्त्वा यथोचितम् ॥ १२३ ॥
व्रतस्थं यः स्पृशेन्मां तु नारी पुरुष एव च ।
धर्मयुक्तेन दण्डेन मम बध्यो भवेत्तु सः ॥ १२४ ॥

एवमाज्ञापयित्वा तु कालिङ्गो नृपतिः किल ।
गतश्च त्वरया धीमान् प्रविष्टस्तत्र सुव्रते ॥ १२५ ॥
पर्यङ्कस्य तले तत्र राजा दर्शनलालसः ।
विलोक्य तां वरारोहां ततश्चिन्तापरायणाम् ॥ १२६ ॥

ततः कमलपत्राक्षी वेदनायासपीडिता ।
रुजार्ता रुरुदे तत्र शिरोवेदनताडिता ॥ १२७ ॥
किं मया तु कृतं कर्म पूर्वमेव सुदुष्करम् ।
येनाहमीदृशीं प्राप्ता दशां पुण्यपरिक्षयात् ॥ १२८ ॥
भर्त्ता च मां न जानाति क्लिश्यमानामनाथवत् ।
अथ मां किं कथं भर्त्ता मन्यते स्वजनोऽपि वा ॥ १२९ ॥
कथये किं शयाना तु सखीनां शयने स्थिता ।
एवमत्र न युज्येत यन्मया परिचिन्तितम् ॥ १३० ॥

किंच वात्मनि दुःखस्य सर्वमेतच्च युज्यते ।
किंच मां वक्ष्यते भर्त्ता किं च मामितरे जनाः ॥ १३१ ॥
अन्यायेन व्रतं चीर्णं सर्वतो विकृतं भवेत् ।
कदाचिदपि काले तु गच्छेत्सौकरवं प्रति ॥ १३२ ॥
ततो ब्रूयामिदं वाक्यं यन्मे हृद्यवतिष्ठते ।
ततः प्रियावचः श्रुत्वा समुत्थाय ततो नृपः ॥ १३३ ॥
दोर्भ्यामालिङ्ग्य वै भार्यां वाक्यमेतदुवाच ह ।
किमिदं भाषसे भद्रे आत्मानं न प्रशंससि ॥ १३४ ॥
अशोच्या शोचिता या तु यच्च निन्दसि चात्मनि ।
भिषजः किं न विद्यन्ते अष्टकर्मसमाहिताः ॥ १३५ ॥

ये तु संस्थापयेयुस्ते शिरसो वेदनां पराम् ।
त्वया पूर्वं व्रतमिषाद् वेदनां यदि गोपिता ॥ १३६ ॥
येन वै क्लिश्यसे भद्रे शिरस्य सुखपीडिता ।
वायुना कफपित्तेन शोणितेन कफेन वा ॥ १३७ ॥
सन्निपातस्य दोषेण येनेदं पीड्यते शिरः ।
काले विकाले कृत्वा वै पित्तोद्रेकं यशस्विनि ॥ १३८ ॥

अश्नासि पिशितं चान्नं तेनेदं दूष्यते शिरः।
क्रियतेऽत्र शिरावेधो रुधिरस्राव एव च ॥ १३९ ॥
दीयते चेच्छिरोऽभ्यङ्गः कथं तिष्ठति वेदना।
किमेतद्गोपितं भद्रे मयि तन्न निवेदितम् ॥ १४० ॥
त्वया व्रतमिषेणायमात्मा संक्लिश्यते वृथा।
या त्वं वै भाषसे वाक्यं सौकरे गमनं प्रति ॥ १४१ ॥
तत्र गोप्यं किमस्तीति येन ते परिवेदना।
ततः कमलपत्राक्षी सव्रीडा दुःखपीडिता ॥ १४२ ॥
भर्तुर्गृहीत्वा चरणौ सा पतिं प्रत्यभाषत।
प्रसीद मे महाराज नेदं प्रष्टुं त्वमर्हसि ॥ १४३ ॥
मम पूर्वकथां वीर दुष्टकर्मानुसारिणीम्।
ततो भार्यावचः श्रुत्वा कलिङ्गानां जनाधिपः ॥ १४४ ॥
उवाच मधुरं वाक्यं सुहितेनान्तरात्मना।
किमिदं गोप्यते देवि ममाग्रे वरवर्णिनि ॥ १४५ ॥
तथ्यमेव महाभागे पृच्छ्यमाना यशस्विनि।
ततो भर्तृवचः श्रुत्वा विस्मयोत्फुल्ललोचना ॥ १४६ ॥
उवाच मधुरं वाक्यं कलिङ्गानां महाधिपम्।
भर्त्ता धर्मो यशो भर्त्ता भर्त्तैव प्रियमात्मनः ॥ १४७ ॥
अवश्यमेव तद्वाच्यं यन्मां त्वां परिपृच्छसि।
तथापि नोत्सहे वक्तुं हृदि यत्परिवर्त्तते ॥ १४८ ॥
तव पीडाकरमिति तन्मां न प्रष्टुमर्हसि।
एतद्दुःखं महाभाग हृदि मे परिवर्त्तते ॥ १४९ ॥
सुखे हि वर्त्तसे नित्यं महाराजोऽसि सुन्दरः।
बह्वयो मत्सदृशा भार्यास्तिष्ठन्त्यन्तःपुरे तव ॥ १५० ॥
प्राश्नासि पिशितान्नं च प्रावारान्भूषणानि च।
आच्छादयसि यानैश्च हस्त्यश्वरथपृष्ठगः ॥ १५१ ॥
गच्छत्यनारतं राजन् किं स्थितं च मया विना।
आज्ञा च तेऽप्रतिहता गन्धान्भोगांश्च सर्वशः ॥ १५२ ॥
बिभर्षि स्वेच्छया राजन्न मां संप्रष्टुमर्हसि।
त्वं मे देवो गुरुः साक्षाद्भर्ता यज्ञः सनातनः ॥ १५३ ॥
धर्मश्चार्थश्च कामश्च: यशः स्वर्गश्च मानद।
पृष्टया मे सदा वाच्यं सर्वं सत्यं प्रियं तव ॥ १५४ ॥
पतिव्रतानां सर्वासामेष धर्मः सनातनः।

न संशये नियोक्तव्यः सुखस्थो हि पतिः स्त्रिया ॥ १५५ ॥
एतन्निश्चित्य मे पीडां न प्रष्टुं त्वमिहार्हसि ।
ततो भार्यावचः श्रुत्वा कलिङ्गानां जनाधिपः ॥ १५६ ॥
उवाच मधुरं वाक्यं भार्यापीडाभिपीडितः ।
श्रुणु तत्त्वेन मे भद्रे शुभं वा यदि वाऽशुभम् ॥ १५७ ॥
अवश्यमेव वक्तव्यं पृष्टया पतिना ध्रुवम् ।
यानि गुह्यान्यगुह्यानि स्त्रियो धर्मपथे स्थिताः ॥ १५८ ॥
भर्त्तारं च समासाद्य रहस्तां गोपयन्ति न ।
कृत्वा सुदुष्करं कर्म रागलोभप्रमोहिता ॥ १५९ ॥
या सुगोपायते गुह्यं सती सा नोच्यते बुधैः ।
एवं चिन्त्य महाभागे ब्रूहि सत्यं यशस्विनि ॥ १६० ॥
अधर्मस्ते न भविता गुह्यार्थकथने मम ।
ततो भर्तृवचः श्रुत्वा सा देवी परमप्रिया ॥ १६१ ॥
प्रत्युवाच प्रियं वाक्यं राजानं धर्मवादिनम् ।
देवो राजा गुरू राजा सोमो राजेति पठ्यते ॥ १६२ ॥
अवश्यमेव वक्तव्यमेष धर्मः सनातनः ।
यदि गुह्यं न मे कार्यं श्रूयतां राजसत्तम ॥ १६३ ॥
अभिषिंचस्व राज्ये स्वे ज्येष्ठं पुत्रं कुलोचितम् ।
एहि नाथ मया सार्द्धं क्षेत्रं सौकरवं प्रति ॥ १६४ ॥
ततो भार्यावचः श्रुत्वा कलिंगानां जनाधिपः ।
बाढमित्येव वाक्येन छन्दयामास तां प्रियाम् ॥ १६५ ॥
दास्यामि राज्यं पुत्राय वचनात्तव सुन्दरि ।
यथा पूर्वं मया लब्धं स्वपितुर्यद्यथाक्रमम् ॥ १६६ ॥
इत्युक्त्वा तौ महाभागौ युक्तं चैव परस्परम् ।
राजा च राजपुत्री च निष्क्रान्तौ तद्गृहात्ततः ॥ १६७ ॥
ततः कंचुकिनं दृष्ट्वा प्रोवाचोच्चस्वरेण च ।
अपसारय सर्वं वै जनमावृत्य तिष्ठति ॥ १६८ ॥
ज्ञानकौतूहलो योऽत्र शीघ्रं गच्छत्वितो वहिः ।
ततो हलहलाशब्दः प्रवृत्तोऽन्तःपुरे महान् ॥ १६९ ॥
किमिदं करणं वृत्तं येन चोत्सारिता वयम् ।
नाज्ञास्ति चिन्तालोलानामागतानां स्वकार्यतः ॥ १७० ॥
अश्रोतव्यं भवेन्नूनं येन चोत्सारिता वयम् ।
ततो भोज्यान्नपानादि भुक्त्वा रुच्या नृपः प्रियान् ॥ १७१ ॥

समं महिष्या चाचम्य क्षणं विश्रम्य पार्थिवः ।
अमात्यानानयामास ह्यभिषेक्तुं निजं सुतम् ॥ १७२ ॥
सम्प्राप्तान्सचिवांस्तत्र राजा वचनमब्रवीत् ।
राजधानीं संस्क्रियतां मङ्गलाचारपूर्वकम् ॥ १७३ ॥
वृद्धामात्यमुपास्याय कलिङ्गो धर्मसंहितम् ।
नीतिशास्त्रार्थतत्त्वज्ञमुवाचाविक्लवं वचः ॥ १७४ ॥
काल्यमिच्छाम्यहं तात पुत्रं राज्येऽभिषेचितुम् ।
शीघ्रं सज्जं प्रकुर्वन्तु अभिषेचनिकं विधिम् ॥ १७५ ॥
भूतमित्येव तं प्राहुः सचिवास्तं नाराधिपम् ।
अस्माकमपि तच्चैव रोचते यत्प्रभाषसे ॥ १७६ ॥
पुत्रस्ते राजशार्दूल सर्वलोकहिते रतः ।
प्रजानुरागवाञ्छूरो नीतिज्ञस्तु विचारकः ॥ १७७ ॥
मनीषितं तव विभो सम्यङ् नो मनसः प्रियम् ।
एवमुक्त्वा गतामात्याः सूर्यश्चास्तमुपागतः ॥ १७८ ॥
सुखेन सा गता रात्रिर्गीतगान्धर्ववादितैः ।
बोधितः स च राजा तु सूतमागधवन्दिभिः ॥ १७९ ॥
वैतालिकैश्च सुश्रोणि सर्वमंगलपाठकैः ।
प्रभातायां तु शर्वर्यामुदिते च दिवाकरे ॥ १८० ॥
मुहूर्त्तं शुभमासाद्य ह्यभिषिक्तः सुतः शुचिः ।
एवं दत्त्वा तदा राज्यं मूर्ध्नि चाघ्राय धर्मवित् ॥ १८१ ॥
उवाच मधुरं वाक्यं पुत्रं पुत्रवतां वरः ।
राज्यस्थेनापि ते पुत्र कर्त्तव्यं शृणु तन्मम ॥ १८२ ॥
यदीच्छेः परमं धर्मं पितॄणां तारणं तथा ।
दातव्यं न च हंतव्यं हंतव्याः पारदारिकाः ॥ १८३ ॥
बालघाताश्च हंतव्याः हंतव्याः स्त्रीविघातकाः ।
न लोभः परभार्यासु ब्राह्मणीषु विशेषतः ॥ १८४ ॥
सुरूपां परनारीं तु दृष्ट्वा चक्षुर्निमीलयेः ।
परद्रव्येषु मा लोभः अन्यायोपार्ज्जितेषु च ॥ १८५ ॥
न चिरं तिष्ठसि क्वापि कथंचन न पश्यसि ।
रक्षणीयश्च ते देशः कुशलन्यायसज्जितः ॥ १८६ ॥
नित्योद्युक्तेन स्थातव्यममात्यवचनं कुरु ।
अमात्यो यद्वचो ब्रूयात्तस्य कार्यं विमर्शयन् ॥ १८७ ॥
अवश्यमेव कर्त्तव्यं शरीरपरिरक्षणम् ।

प्रजा येन प्रमोदंति येन तुष्यंति ब्राह्मणाः ॥ १८८ ॥
एवं ते पुत्र कर्त्तव्यं मम प्रियहितैषणा ।
सप्त व्यसनवर्गोत्र दोषो राज्ञां महान्भवेत् ॥ १८९ ॥
अर्थदूषणकं चैव न कर्त्तव्यं कदाचन ।
अमात्यं नाप्रियं ब्रूया यमिच्छे राजकर्मणि ॥ १९० ॥
नाहं निवारणीयस्ते गमनाय पथे स्थितः ।
एतन्मे क्रियतां शीघ्रं यदीच्छसि मम प्रियम् ॥ १९१ ॥
ततः पितुर्वचः श्रुत्वा राजपुत्रो यशस्विनि ।
पितुः पादौ तु संगृह्य करुणं प्रत्युवाच तम् ॥ १९२ ॥
मम किं तात राज्येन कोशेन च बलेन च ।
यस्त्वया रहितस्तात न शक्नोमि विचेष्टितुम् ॥ १९३ ॥
अभिषेकं राजशब्दं मम संज्ञापितं त्वया ।
एतन्न बहुमन्येऽहं विना तात त्वया ह्यहम् ॥ १९४ ॥
क्रीडामेवाऽत्र जानामि येन क्रीडन्ति बालकाः ।
राज्यचिन्तां न जानामि राजानो यान्तु कुर्वते[१] ॥ १९५ ॥
ततः पुत्रवचः[२] श्रुत्वा कलिङ्गानां महीपतिः ।
उवाच मधुरं वाक्यं सामपूर्वं यशस्विनि ॥ १९६ ॥
यच्चेदं भाषसे पुत्र नाहं जानामि तद्वचः ।
पुत्र शिक्षापयिष्यन्ति पौरजानपदास्तव ॥ १९७ ॥
एवं सन्दिश्य त तत्र स राजा धर्मशास्त्रतः ।
गमनाय मतिं चक्रे क्षेत्रं सौकरवं प्रति ॥ १९८ ॥
तं प्रयान्तं ततो दृष्ट्वा पौरजानपदास्तदा ।
सकलत्रसुताः सर्वेऽप्यनुयान्ति नराधिपम् ॥ १९९ ॥
हस्त्यश्वरथयानानि स्त्रियश्चान्तःपुरस्थिताः ।
संहृष्टमनसः सर्वे अनुयान्ति नराधिपम्[३] ॥ २०० ॥
अथ दीर्घेण कालेन प्राप्ता सौकरवं प्रति ।
धनधान्यसमृध्यादि प्रददौ तत्र माधवि ॥ २०१ ॥
एवं गच्छति काले तु तयोस्तत्र वसुन्धरे ।
प्रवर्तमानयोर्नित्यं धर्म्ये कर्मणि शुद्धयोः ॥ २०२ ॥
ततः स पद्मपत्राक्षः कलिङ्गानां जनाधिपः ।
उवाच मधुरं वाक्यं काञ्चीराजसुतां तदा ॥ २०३ ॥
पूर्णं वर्षसहस्रं वै जीवितं मम सुन्दरि ।

१. येन कुर्वते । २. तत्तु पुत्रवचः । ३. (ग) एष श्लोकः परश्लोकस्य च पूर्वार्धं न स्त ।

ब्रूहि तत्परमं गुह्यं यन्मया पूर्वपृच्छितम् ॥ २०४ ॥
ततो भर्तुर्वचः श्रुत्वा प्रहस्य रुचिरेक्षणा ।
उभौ तौ चरणौ गृह्य राजानं वाक्यमब्रवीत् ॥ २०५ ॥
एवमेतन्महाभाग यन्मां त्वं परिपृच्छसि ।
उपोष्य तु त्रिरात्रं त्वं पश्चाच्छ्रोष्यसि मानद ॥ २०६ ॥
वाढमित्येव तां राजा प्रत्युवाच यशस्विनीम् ।
पद्मपत्रविशालाक्षि पूर्णचन्द्रनिभानने ।
यथा वदसि सुश्रोणि तथैव मम रोचते ॥ २०७ ॥
दन्तकाष्ठं समादाय द्वादशाङ्गुलमायतम् ।
स्नात्वा सङ्कल्पयामास त्रिरात्रं नियमान्वितः ॥ २०८ ॥
उपोष्य तौ[1] त्रिरात्रं तु विधिना नियमान्वितौ ।
ततः स्नातौ शुची क्षौमे परिधाय तु वाससी ।
प्रणम्य भूषितौ विष्णुं दम्पती तदनन्तरम् ॥ २०९ ॥
ततः सा सुन्दरी भूषां समुत्तार्य शुभेक्षणा ।
मह्यं निवेदयामास प्रोवाच च जनेश्वरम्[2] ।
एह्येहि नाथ गच्छावः पश्य गोप्यं मनीषितम्[3] ॥ २१० ॥
ततो हस्ते पतिं गृह्य उद्वाहे इव सुन्दरी ।
उवाच मधुरं वाक्यं कलिङ्गाधिपतिं तथा ॥ २११ ॥
शृगाली पूर्वमेवाहं तिर्यग्योनिव्यवस्थिता ।
विद्धास्मि सोमदत्तेन बाणेन मृगलिप्सुना ॥ २१२ ॥
एतं शिरसि मे राजन् पश्य बाणं सुसंस्कृतम् ।
यस्य दोषेण मेऽप्येष रुजा शिरसि संस्थिता ॥ २१३ ॥
काञ्चीराजकुले जन्म पित्रा दत्ता तव प्रिया ।
क्षेत्रप्रभावान्मे सैषा[4] जाता सिद्धिर्नमोऽस्तु ते ॥ २१४ ॥
स ततः पद्मपत्राक्षः कलिङ्गानां जनाधिपः ।
श्रुत्वा राजा प्रियां वाक्यं प्रत्युवाच स्मृतिङ्गतः ॥ २१५ ॥
अहं गृध्रो महाभागे तेनैव वनचारिणा ।
सोमदत्तेन बाणेन एकेनैव निपातितः ॥ २१६ ॥
ततो जातोऽस्म्यहं भद्रे कलिङ्गानां जनाधिपः ।
जातोऽस्मि परमा व्युष्टिः प्राप्तं राज्यं मया महत् ॥ २१७ ॥
सिद्धिर्लब्धा[5] वरारोहे मया सर्वाङ्गसुन्दरि ।
अकामपतितेनापि पश्य क्षेत्रस्य वै फलम् ॥ २१८ ॥

---

१. अपोष्य तु । २. जनेश्वरि । ३. मनीषिभिः । ४. क्षेत्रप्रभावान्मयैषा । ५. सिद्धिर्वधेति ।

ये च भागवतश्रेष्ठा ये च नारायणप्रियाः ।
पौरजानपदाः सर्वे श्रुत्वा तु तदनन्तरम् ।
लाभालाभौ परित्यज्य सर्वकर्माण्यकारयन् ॥ २१९ ॥
तत्रैव मरणं प्रापुः[1] सर्वसङ्गविवर्जिताः ।
श्वेतद्वीपं ततः प्राप्ताः सर्व एव चतुर्भुजाः ।
सर्वे शङ्खधराश्चैव सर्वे चायुधसंयुताः ॥ २२० ॥
ताः स्त्रियश्च वरारोहे स्तुतिमान्या महौजसः ।
श्वेतद्वीपे प्रमोदन्ते सर्वभोगसमन्विताः ॥ २२१ ॥
एवं ते कथितं भूमे व्युष्टिः सौकरवे महत् ।
अकामपतिताश्चैव श्वेतद्वीपमुपागताः ॥ २२२ ॥
य एतेन विधानेन वासं तीर्थे तु कारयेत् ।
मरणञ्च विशालाक्षि श्वेतद्वीपं स गच्छति ॥ २२३ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
स्नानादाखोटके तीर्थे यत्फलं समुपाश्नुते ॥ २२४ ॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
नन्दनं समवाश्रित्य मोदन्ते चैव सर्वदा ॥ २२५ ॥
ततः स्वर्गात् परिभ्रष्टो जायते विपुले कुले ।
मद्भक्तश्चैव जायेत एवमेतन्न संशयः ॥ २२६ ॥
पुनरन्यत्प्रवक्ष्यामि स्नातो गृध्रवटे नरः ।
यत्फलं समवाप्नोति स्नानमात्रकृतोदकः ॥ २२७ ॥
नववर्षसहस्राणि नववर्षशतानि च ।
इन्द्रलोकं समासाद्य मोदते दैवतैः सह ॥ २२८ ॥
इन्द्रलोकात् परिभ्रष्टो मम तीर्थप्रभावतः ।
सर्वसङ्गं परित्यज्य मद्भक्तश्चैव जायते ॥ २२९ ॥
एतत् ते कथितं भद्रे स्नानमात्रस्य यत्फलम् ।
यत्त्वया पृच्छितं पूर्वं सर्वसंसारमोक्षणम् ॥ २३० ॥
ततो नारायणाच्छ्रुत्वा पृथिवी शंसितव्रता ।
उवाच मधुरं वाक्यं लोकनाथं जनार्दनम् ॥ २३१ ॥
केन कर्मविपाकेन तीर्थं पुनरवाप्यते ।
स्नानं वा मरणं देव यथावद् वक्तुमर्हसि ॥ २३२ ॥

वराह उवाच

शृणु देवि महाभागे पूर्वधर्मकृताः नराः ।

---

१. एष श्लोकः ( ग ) नास्ति ।

केनचित् कर्मदोषेण तिर्यग्योनिमवाप्य हि ॥ २३३ ॥
जन्मान्तरार्जितैः पुण्यैस्तीर्थस्नानजपादिभिः ।
महादानैश्च लभ्येत[1] तीर्थे पञ्चत्वमर्चकैः ॥ २३४ ॥
जन्मान्तरकृतं कर्म यत्स्वल्पमपि वा बहु ।
तत्कदाचित्फलत्येव न तस्य परिसङ्क्षयः ॥ २३५ ॥
कदाचिद् वा सहायो वै पुण्यतीर्थादिदर्शनात् ।
दुर्बलं प्रबलं भूत्वा प्रबलं दुर्बलं भवेत् ॥ २३६ ॥
पापान्तरं समासाद्य गहना कर्मणो गतिः ।
यदल्पमिव दृश्येत तन्महत्त्वाय कल्पते ॥ २३७ ॥
अत एव मनुष्यत्वं प्राप्तो राजत्वमेव च ।
शृगाली चैव गृध्रश्च तीर्थस्यैव प्रभावतः ॥ २३८ ॥
मरणादेव संप्राप्य क्षीणपापौ स्मृतिं पुनः ।
श्वेतद्वीपं ततः प्राप्तौ जानीहि त्वं वसुन्धरे ॥ २३९ ॥
पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तीर्थं वैवस्वतं नाम यत्रार्कस्तप्तवांस्तपः ॥ २४० ॥
कदाचित् पुत्रकामेन मार्तण्डेन महत्तपः ।
कृतं चान्द्रायणं तत्र दशवर्षसहस्रकम् ॥ २४१ ॥
ततः सप्तसहस्राणि वायुभक्षस्तु संस्थितः ।
ततस्तुष्टोऽस्म्यहं भद्रे सूर्यस्य सुमहौजसः ॥ २४२ ॥
वरेण छन्दयामास आदित्यं तदनन्तरम् ।
विवस्वतं महाभागं मम कर्मपरायणम् ।
वरं वरय भद्रन्ते यस्ते मनसि वर्तते ॥ २४३ ॥
ततो मम वचनं श्रुत्वा कश्यपस्य सुतो बली ।
मधुरं स्वरमादाय प्रत्युवाच महद्वचः ॥ २४४ ॥
यदि देव प्रसन्नोऽसि अयं मे दीयतां वरः ।
पुत्रमिच्छाम्यहं देव प्रसादात् ते सुरेश्वर ॥ २४५ ॥
विवस्वद्वचनं श्रुत्वा तुष्टोऽहं तस्य सुन्दरि ।
तस्य शुद्धेन मनसा प्रोक्तवानस्मि सुन्दरि ।
यमश्च यमुना चैव मिथुनं जनयिष्यसि ॥ २४६ ॥
एवं तस्य वरं दत्त्वा आदित्यस्य वसुन्धरे ।
आत्मयोगप्रभावेण तत्रैवान्तर्हितोऽभवम् ॥ २४७ ॥
आदित्योऽपि गतो भद्रे वेश्म स्वञ्च महाधनम् ।

---

१. तत्रैव मरणं प्राप्य ।

पुण्यं सौकरवे कृत्वा सुदुष्करतरं महत् ॥ २४८ ॥
अष्टमेन तु भक्तेन यस्तु स्नाति वसुन्धरे ।
दशवर्षसहस्राणि सूर्यलोके महीयते ॥ २४९ ॥
अथवा तत्र सुश्रोणि म्रियते पुण्यवान्नरः ।
यमलोकं न गच्छेत तीर्थस्य प्रभावतः ॥ २५० ॥
एतत्ते कथितं भद्रे स्नानस्य मरणस्य च ।
फलञ्चैव यथावृत्तं तीर्थे सौकरवे मम ॥ २५१ ॥
आख्यानानां महाख्यानं क्रियाणाञ्च महाक्रिया ।
एष जप्यः प्रमाणश्च सन्ध्योपासनमेव च ॥ २५२ ॥
एष तेजश्च[1] मन्त्रश्च सर्वभागवतप्रियम् ।
पिशुनाय न दातव्यं मूर्खे भागवते न तु ।
न च वैश्याय शूद्राय ये न जानन्ति मां परम् ॥ २५३ ॥
पंडितानां सभामध्ये ये च भागवता भुवि ।
मठे ब्राह्मणमध्ये तु ये च वेदविदां वराः ।
दीक्षिताय च दातव्यं यश्च शास्त्राणि जानते ॥ २५४ ॥
एतत्ते कथितं भद्रे पुण्यं सौकरवे महत् ।
य एतत् पठते सुभ्रु कल्य उत्थाय मानवः ।
तेन द्वादशवर्षाणि चिन्तितोऽहं न संशयः ॥ २५५ ॥
न स जायेत गर्भेषु मुक्तिमाप्नोति शाश्वतीम् ।
यः पठेदेकमध्यायं तारयेत् स कुलान् दश ॥ २५६ ॥

इति वाराहपुराणे भगवच्छास्त्रे तीर्थमाहात्म्ये सौकरवे
गृद्धजम्बूकाख्यानादित्यवरप्रदानादिर्नाम
सप्तत्रिंशदधिकशततमोऽध्यायः ।



---

१. एष वेदाश्च मन्त्रश्च ।

# अष्टात्रिंशदधिकशततमोऽध्यायः

सूत उवाच

एतत्पुण्यतमं श्रुत्वा[1] रम्ये सौकरवे तदा ।
गुणस्तवञ्च माहात्म्यं जात्यानां परिवर्त्तनम् ॥ १ ॥
ततः कमलपत्राक्षी सर्वधर्मविदां वरा ।
विस्मयं परमं गत्वा निर्वृतेनान्तरात्मना ।
पुनः पप्रच्छ तं देवं विस्मयाविष्टमानसा ॥ २ ॥
अहो तीर्थस्य माहात्म्यं क्षेत्रे सांकरवे तव[2] ।
अकामान् म्रियमाणस्य मानुषत्वमजायत ।
किं वाऽन्त्यद् वृतमाख्याहि क्षेत्रे सौकरवे प्रति ॥ ३ ॥
श्रृण्वन्त्या मे महाजातं चित्ते कौतूहलं परम् ।
गायमानस्य किं पुण्यं वाद्यमानस्य किं फलम् ।
नृत्यतः किं भवेत् पुण्यं जाग्रतो वा फलं नु किम् ॥ ४ ॥
गोदातुरन्नदातुर्वा जलदातुस्तु किं फलम् ।
संमार्जने लेपने वा गन्धपुष्पादिदानतः ॥ ५ ॥
धूपदीपादिनैवेद्यैः किं फलं समुदीरितम् ।
अन्येन कर्मणा चैव जपयज्ञादिनाऽथवा ॥ ६ ॥
कां गतिं प्रतिपद्यन्ते ये शुद्धमनसो जनाः ।
तव भक्तसुखार्थाय तत् भवान् वक्तुमर्हसि ॥ ७ ॥
ततो मह्या वचः श्रुत्वा सर्वदेवमयो हरिः ।
उवाच मधुरं वाक्यं धर्मकामां वसुन्धराम् ॥ ८ ॥

वराह उवाच

श्रृणु सुन्दरि तत्त्वेन यन्मां त्वं परिपृच्छसि ।
सर्वं ते कथयिष्यामि पुण्यकर्म सुखावहम् ॥ ९ ॥
तस्मिन् सौकरवे पक्षी खञ्जरीटस्तु कीटकान् ।
बहून् भुक्त्वा हि वसुधे अजीर्णे भृशं पीडितः ।
मरणं समनुप्राप्तः पतितः स्वेन कर्मणा ॥ १० ॥
सम्प्राप्तास्तत्र वै बालाः क्रीडन्तस्तं मृतं खगम् ।
ग्रहीष्याम इति प्रोच्य धावन्तस्तत्र तत्र ह ॥ ११ ॥
ममायं वै ममायं वै जिघृक्षन्तः परस्परम् ।
[3]सङ्घर्षात् कलहञ्चक्रुर्भृशं क्रीडनकोत्सुकाः ॥ १२ ॥

---

१. एतत् पुण्यतमो भूत्वा । २. क्षेत्रं सौकरवं प्रति । ३. सद्यः किल हनाम् ।

तत एको गृहीत्वैनं गङ्गाम्भसि समाक्षिपत् ।
युष्माकमेव भवतु नानेनाऽस्मत्प्रयोजनम् ॥ १३ ॥

एवं स खञ्जरीटो हि गङ्गातोयाप्लुतस्तदा ।
आदित्यतीव्रसंक्लिन्नशरीरः स वसुन्धरे ॥ १४ ॥
वैश्यस्य तु गृहे जातो ह्यनेकक्रतुयाजिनः[१] ।
धनरत्नसमृद्धे तु रूपवान् गुणवान् शुचिः ।
विबुद्धश्च पवित्रश्च मद्भक्तश्च वसुन्धरे ॥ १५ ॥

जातस्य तस्य वर्षाणि जग्मुर्द्वादश सुव्रते ॥ १६ ॥
कदाचिदुपविष्टौ तौ दृष्ट्वा बालो गुणान्वितः ।
मातरं पितरं चोभौ हर्षेण महतान्वितौ ।
प्रणम्य शिरसा भूमौ बद्धाञ्जलिरयाचत ॥ १७ ॥

मत्प्रियं यदि कर्तव्यमेको मे दीयतां वरः ।
न चाहं वारणीयो वै पित्रा मात्रा कथञ्चन ।
सत्यं शपामि गुरुणा यथा ननु कृतं भवेत् ॥ १८ ॥

पुत्रस्य वचनं श्रुत्वा दम्पती तौ मुदान्वितौ ।
ऊचतुस्तं प्रियं वाक्यं बालं कमललोचनम् ॥ १९ ॥

यद्यत्त्वं वक्ष्यसे वत्स यद्यत्ते हृदि वर्तते ।
सर्वं तत्तत् करिष्यावो विश्रब्धं वद साम्प्रतम् ॥ २० ॥
त्रिंशत् सहस्रं गावो हि सर्वाश्च शुभदोहनाः ।
यद्यत्र रोचते पुत्र देहि त्वमविचारितम् ॥ २१ ॥

पुनरन्यत् प्रवक्ष्यामि आवयोः पुत्रकारणात् ।
वाणिज्यं नः स्मृतं कर्म तत्ते पुत्र यदीप्सितम् ॥ २२ ॥

तत्कुरुष्व यथान्यायं मित्रेभ्यो दीयतां धनम् ।
धनधान्यानि रत्नानि देहि पुत्र ह्यवारितः ॥ २३ ॥

कन्या वै रमणीयाश्च सजातीयाः कुलोद्भवाः ।
आनयिष्याव भद्रन्ते उद्वहेन क्रमेण ते ॥ २४ ॥

यदीच्छसि पुनश्चान्यद् यज्ञैर्यष्टुं सुपुत्रक ।
विधिना पूर्वदृष्टेन वैश्या येन यजन्ति च ॥ २५ ॥
अष्टौ सम्पूर्णधुर्याणां हलानां तावतां शतम् ।
वैश्यकर्म समादाय किं पुनः प्राप्तुमिच्छसि ॥२६ ॥

१. अनेकक्रूरयाजिनः ।

यावद् भोजनतृप्तान् वा[1] द्विजानिच्छसि तर्पितुम् ।
सर्वं निजेच्छया पुत्र कर्तुमर्हसि साम्प्रतम् ॥ २७ ॥
पितृमातृवचः श्रुत्वा स बालो धर्मसंयुतः ।
चरणावुपसंगृह्य पितरौ पुनरब्रवीत् ॥ २८ ॥
गोप्रदाने न मे कार्यं मित्रं वापि न चिन्तितम् ।
कन्यालाभे न चेच्छास्ति न च यज्ञफले तथा ॥ २९ ॥
नाहं वाणिज्यमिच्छामि कृषिगोरक्ष्यमेव च ।
न च सर्वातिथित्वं वा मम चित्ते प्रसज्जति ॥ ३० ॥
एकं मे परमं चिन्त्यं यन्ममेच्छा तपोधृतौ ।
चिन्ता नारायणक्षेत्रं गाढं सौकरवं प्रति ॥ ३१ ॥
ततः पुत्रवचः श्रुत्वा धर्मकर्मपरायणौ ।
करुणं परिदेवन्तौ रुदन्तौ तावुभौ तथा ॥ ३२ ॥
अद्य द्वादश वर्षाणि तव जातस्य पुत्रक ।
किमिदं चिन्तितं वत्स त्वया नारायणाश्रयम् ।
चिन्तयिष्यसि भद्रं ते यदा तत्प्राप्नुया वयः ॥ ३३ ॥
अद्यापि भोजनं गृह्य धावमानास्मि पृष्ठतः ।
किमिदं चिन्तितं वत्स गमने सौकरं प्रति[2] ॥ ३४ ॥
अद्यापि मत्स्तनौ धन्यौ प्रस्नुतौ हि दिवानिशम् ।
पुत्र त्वत्स्पर्शनाशायाः किमेतच्चिन्तितं त्वया ॥ ३५ ॥
रात्रौ सुप्तोऽसि वत्स त्वं शय्यासु परिवर्ततः ।
अम्बेति भाषसेऽद्यापि कथमेतद् विचिन्तितम् ॥ ३६ ॥
स्पृशन्ति तत्र नार्योऽपि क्रीडमानस्य पुत्रक ।
अपराधो न विद्येत पुत्र क्षेत्रगृहेष्वपि ॥ ३७ ॥
न वा स्वजनभृत्याद्यैः परुषन्ते प्रभाषितम् ।
रुष्टेन वापि भीषायै गृह्यते चैव यष्टिका ॥
पुत्र हेतुं न पश्येऽहं तव निर्वेदकारणम्[3] ॥ ३८ ॥
इति मातुर्वचः श्रुत्वा स वैश्यकुलनन्दनः ।
उवाच मधुरं वाक्यं जननीं संशितव्रतः ॥ ३९ ॥
उषितोऽस्मि त्वदङ्गेषु गर्भस्थः कुक्षिसम्भवः ।
क्रीडितोऽस्मि यथान्यायं तवोत्सङ्गे यशस्विनि ॥ ४० ॥
स्तनौ ह्येतौ मया पीतौ ललितेन विजृम्भितौ ।
अङ्गं तव समारुह्य पांशुभिर्गुण्ठिता तनुः ॥ ४१ ॥

१. तृप्तान् हि । २. गमने सौकरवं प्रति । ३. तवेदं कारणं प्रति ।

अम्ब त्वं मयि कारुण्यं कुरुष्व खलु चोचितम् ।
मुञ्च पुत्रकृतं शोकं त्यज मातरनिन्दिते ॥ ४२ ॥
आयान्ति च पुनर्यान्ति गता गच्छन्ति चापरे ।
दृश्यते च पुनर्नष्टो न दृश्यते पुनः क्वचित्[२] ॥ ४३ ॥
कुतो जातः क्व संबन्धः कस्य माता पिताऽथवा ।
इमां योनिमनुप्राप्तो घोरे संसारसागरे ॥ ४४ ॥
मातापितृसहस्राणि पुत्रदारशतानि च ।
जन्मजन्मनि वर्तन्ते कस्य ते कस्य वा वयम् ।
एवं चिन्तां समासाद्य मा शुचो जननि क्वचित् ॥ ४५ ॥
एवं तौ पितरौ श्रुत्वा विस्मयात् पुनरूचतुः ।
अहो वत् महद्गुह्यं किमेतत् तात कथ्यताम् ॥ ४६ ॥
एतद् वचनमाकर्ण्य स वैश्यकुलबालकः ।
उवाच मधुरं वाक्यं जननीं पितरं तथा ॥ ४७ ॥
यदि श्रुतेन वः कार्यं गुह्यस्य परिनिश्चयात् ।
तत् पृच्छ्यतां[३]भवद्भ्यां हि गुह्यं सौकरवं प्रति ॥ ४८ ॥
तत्राहं कथयिष्यामि स्वस्य गुह्यं महौजसम् ।
सूर्यतीर्थं समासाद्य यत्तात परिपृच्छसि ॥ ४९ ॥
वाढमित्येव पुत्रं तौ दम्पती प्रोचतुश्च तम्[४] ।
गमने कृतसङ्कल्पा ततः सौकरवं प्रति ॥ ५० ॥
सर्वद्रव्यसमायुक्तो गमने सौकरवं प्रति ।
ततः स पद्मपत्राक्ष अभीराणां जनेश्वरः ।
गावो विंशसहस्राणि प्रेषयत्यग्रतो द्रुतम् ॥ ५१ ॥
अग्रे प्रययुस्ताः सर्वा द्रव्येण च समायुताः ।
यच्च किञ्चिद् गृहे वास्ति[५]कृतं नारायणं प्रति ॥५२ ॥
ततः पूर्वार्धयामेन माघमासे त्रयोदशी ।
सर्वं स्वजनमामन्त्र्य संबन्धञ्च यथाविधि ॥ ५३ ॥
मुहूर्तेन च तेनैव गमनं कुरुते ततः ।
स्नात्वा च कृतशौचास्ते नारायणमुदावहाः ॥ ५४ ॥
अथ[६] दीर्घेण कालेन नारायणमुदावहाः ।
वैशाखास्य तु द्वादश्यां मम क्षेत्रमुपागताः ॥ ५५ ॥

---

१. सागरे । २. दृश्यन्ते त्र पुनर्नष्टा दृश्यन्ते च पुनः क्वचित् । ३. पृच्छतम् । ४. वाढमित्येव तं दम्पती प्रत्युवाच तम् । ५. चास्ति । ६. तेऽथ ।

स्नाताः संतर्प्य च पितॄन् मम वस्त्रविभूषिताः ।
गावो विंशतिसाहस्रा याः पूर्वमुपकल्पिताः ॥ ५६ ॥
तत्र भङ्गुरसो[1] नाम मम कर्मपरायणः ।
तेनैव ता गृहीता वै विधिदृष्टेन कर्मणा ॥ ५७ ॥
ततः स प्रददौ तस्य विंशा गावो महाधनाः ।
मङ्गल्याश्च पवित्राश्च सर्वाश्च वरदोह्नाः ॥ ५८ ॥
प्रददौ धनरत्नानि नित्यमेव दिने दिने ।
मोदते सह पुत्रेण भार्यया स्वजनेन च ॥ ५९ ॥
एवं तु वसतस्तस्य वर्षाकाल उपागतः ।
प्रावृडुपस्थिता तत्र सर्वशस्यप्रवर्धिनी ॥ ६० ॥
पुष्पितानि कदम्बानि कुटजार्जुनकानि च ।
एवं दुःखमनुप्राप्ताः स्त्रियो या रहिताः प्रियैः ॥ ६१ ॥
गर्जितां गुञ्जतांश्चैव धारापातनिपातिताः ।
मेघाः सविद्युतश्चैव बलाकाङ्गदभूषिताः ॥ ६२ ॥
नदीनाञ्चैव निर्घोषो मयूराणाञ्च निस्वनः ।
कुटजार्जुनगन्धाश्च कदम्बार्जुनपादपाः ॥ ६३ ॥
वाताः प्रवान्ति ते तत्र शिखिनाञ्च सुखावहाः ।
शोकेन कामिनीनाञ्च भर्त्रा च रहिताश्च या ॥ ६४ ॥
एवं स गच्छते कालो मेघदुन्दुभिनादितः ।
ततः शरदनुप्राप्ता अगस्तिरुदितो महान् ॥ ६५ ॥
तडागानि प्रसन्नानि कुमुदोत्पलवन्ति च ।
पद्मषण्डैः सुरम्याणि पुष्पितानि समंततः ॥ ६६ ॥
प्रवान्ति तु सुखा वाताः सुगन्धाश्च सुशीतलाः ।
सप्तपर्णसुगन्धाश्च शीतलाः कामिवल्लभाः ॥ ६७ ॥
एवं शरदि निवृत्ते कौमुदे समुपागते ।
सा तस्मिन् मासे सुश्रोणि शुक्लपक्षान्तरे तदा ॥ ६८ ॥
एकादश्यां ततः सुभ्रु स्नातौ क्षौमविभूषितौ ।
उभौ तौ दम्पती तत्र पुत्रमूचतुरात्मनः ॥ ६९ ॥
उषितास्त्वत्र षण्मासान् सुखांश्च द्वादशी भवेत् ।
किन्नो न वक्ष्यसे गुह्यं येन वै वारिता वयम् ॥ ७० ॥
पित्रोस्तु वचनं श्रुत्वा स पुत्रो धर्मनिष्ठितः ।
उवाच मधुरं वाक्यं तयोस्तु कृतनिश्चयः ॥ ७१ ॥

---

१. भागुरसो नाम ।

एवमेतन्महाभाग यत्त्वया परिभाषितम् ।
कल्यं ते[1] कथयिष्यामि इदं गुह्यं महौजसम् ॥ ७२ ॥
एषा वै द्वादशी तात प्रभुनारायणप्रिया ।
मङ्गला च विचित्रा च विष्णुभक्तसुखावहा ॥ ७३ ॥
ददतेऽस्यां प्रहृष्टा च द्वादश्यां कौमुदे सिते ।
दीक्षितास्ते योगिकुले विष्णुभक्तिपरायणाः ॥ ७४ ॥
तेन दानप्रभावेण विष्णुतोषकरेण च ।
तरन्ति दुस्तरं तात घोरं संसारसागरम् ॥ ७५ ॥
एवं कथयतां तेषां प्रभाता रजनी शुभा ।
ततः सन्ध्यामुपास्याथ उदिते सूर्यमण्डले ।
शुचिर्भूत्वा यथान्यायं क्षौमवस्त्रविभूषितः ॥ ७६ ॥
प्रणम्य शिरसा देवं शङ्खचक्रगदाधरम् ।
उभौ तच्चरणौ गृह्य पितरौ समभाषत ॥ ७७ ॥
श्रृणु तात महाभाग यदर्थं समुपागतः ।
यद् भवान् पृच्छते तात गुह्यं सौकरवं प्रति ॥ ७८ ॥
खञ्जरीटो ह्यहं तात पक्षियोनिसमुद्भवः ।
भक्षिताश्च पतङ्गा मे अजीर्णेनातिपीडितः ॥ ७९ ॥
अहं तेनैव दोषेण न शक्नोमि विचेष्टितुम् ।
दृष्ट्वा मां विह्वलं बाला गृहीत्वा क्रीडितुं गताः॥ ८० ॥
हस्ताद्धस्तेन क्रीडन्तश्चान्योऽन्यपरिहासया ।
त्वया दृष्टो मया दृष्टो ह्ययं चेति कलिः कृतः ॥ ८१ ॥
ततः एकेन बालेन भ्रामयित्वाक्षयेऽम्भसि ।
न ममेति तवेत्युक्त्वा ह्यादित्यं तीर्थमुत्तमम् ।
क्रोधेनादाय तीव्रेण क्षिप्तो गङ्गाम्भसि त्वरा ॥ ८२ ॥
तत्र मुक्त्वा मया प्राणाः सूर्यतीर्थे महौजसि ।
अकामेन विशालाक्षि तत्प्रभावादहं ततः[2] ।
जातस्तव सुतो मातस्तदेतद्दिनमुत्तमम् ॥ ८३ ॥
अकामान्म्रियमाणस्य वर्षाण्यद्य त्रयोदश ।
व्यतीतानि च गुह्यन्ते कथनं मम चैव यत् ॥ ८४ ॥
एतत्ते कथितं तात गुह्यमामनं प्रति ।
अहं कर्म करिष्यामि गच्छ तात नमोस्तु ते ॥ ८५ ॥
ततो माता पिता चैव पुत्रं पुनरुवाच ह ।
विष्णुप्रोक्तानि कर्माणि यं यं कारयिता भवान् ॥८६ ॥

१. कल्पे ते । २. तव

तान् वयञ्च करिष्यामो विधिदृष्टेन कर्मणा ।
घटमाना [1] यथान्यायं कर्म संसारमोक्षणम् ॥ ८७ ॥
तेऽपि दीर्घेण कालेन मम कर्मपरायणाः ।
कृत्वा तु विपुलं कर्म ततः पञ्चत्वमागताः ॥ ८८ ॥
मम क्षेत्रप्रभावेण चात्मनः कर्मनिश्चयात् ।
विमुक्ताः सर्वसंसाराच्छ्वेतद्वीपमुपागताः [2] ॥ ८९ ॥
योऽसौ परिजनः कश्चिद्गृहेभ्यश्च समागतः ।[3]
सर्वः श्रिया युतस्तत्र [4] रोगव्याधिविवर्जितः ॥ ९० ॥
सर्वे च योगिनस्तत्र सर्वे चोत्पलगन्धयः ।
मोदन्ते तु यथान्यायं प्रसादात् क्षेत्रजान्मम् ॥ ९१ ॥
एतत्ते कथितं देवि महाख्यानं महौजसम् ।
पुनरन्यत् प्रवक्ष्यामि यद्वृत्तं सौकरे[5] मम ॥ ९२ ॥
एषा व्युष्टिर्महाभागे क्षेत्रे यत्क्रियते महत् ।
तिर्यग्योनिविनिर्मुक्ताः श्वेतद्वीपमुपागताः ॥ ९३ ॥
य एतत् पठते नित्यं कल्यमुत्थाय मानवः ।
स कुलांस्तारयेत् तूर्णं दश पूर्वाम् दशावरान्[6] ॥९४ ॥
न पठेन्मूर्खमध्ये तु पापिष्ठे शास्त्रदूषके ।
न पठेत् पिशुनानाञ्च एकाकी तु पठेद् गृहे ॥ ९५ ॥
पठेद् ब्राह्मणमध्ये च ये च वेदविदां वराः ।
वैष्णवानाञ्च पुरतो[7] ये च शास्त्रगुणान्विताः ।
विशुद्धानां विनीतानां सर्वसंसारमोक्षणम् ॥ ९६ ॥

इति वाराहपुराणे खञ्जरीटोपाख्यानं नाम
अष्टाविंशदधिकशततमोऽध्यायः ।



१. पठमाना । २. प्रमुक्ता सर्वसंसारान्मम कर्मपरायणाः ।
देवि क्षेत्र-प्रभावेण श्वेतद्वीपमुपागताः ॥
३. एतदर्धं ( ग ) पुस्तकेनास्ति ४. श्रियावृतः । ५. सौकरवे मम । ६. दशापरान् ।
७. वैष्णवानाञ्च पूता ये ।

## ऊनचत्वारिंशदधिकशततमोऽध्यायः

वराह उवाच

शृणु तत्त्वेन मे देवि लिप्यमानस्य यत्फलम् ।
सर्वं ते कथयिष्यामि यथा प्राप्नोति यानवः ॥ १ ॥
गृहीत्वा गोमयं भूमे मम वेश्मोपलेपयेत् ।
न्यस्तानि तत्र यावन्ति पदानि च विलिम्पतः ।
तावद् वर्षसहस्राणि दिव्यानि दिवि मोदते ॥ २ ॥
यदि द्वादश वर्षाणि लिप्यते मम कर्मसु ।
जायते विपुले शुद्धे धनधान्यसमाकुले ॥ ३ ॥
दिव्यैर्नमस्कृतो देवि कुशद्वीपञ्च गच्छति ।
कुशद्वीपमनुप्राप्य सहस्राणि च जीवति ।
दश चैव तु वर्षाणां मम भक्तो महान् शुचिः ॥ ४ ॥
कुशद्वीपात् परिभ्रष्टो मम कर्मपरायणः ।
राजा वै जायते सुभ्रु सर्वधर्मेषु निष्ठितः ॥ ५ ॥
लेपनस्य प्रभावेण मम कर्मपरायणः ।
भक्तौ व्यवस्थितश्चापि सर्वशास्त्राणि पृच्छति ॥ ६ ॥
देवि कारयते सर्वं मम चायतनानि च ।
कारयित्वा यथान्यायं मम लोकाय गच्छति ॥ ७ ॥
गोमस्य तु वक्ष्यामि तच्छृणुष्व वसुन्धरे ।
गोमयं तु समासाद्य यावल्लोकोऽनुगच्छति ।
समीपे यदि वा दूरे गत्वा नयति गेमयम् ॥ ८ ॥
यावन्ति तत्पदान्यस्य तावद्वर्षसस्रकम् ।
गोमयानयिता चैव स्वर्गलोके महीयते ॥ ९ ॥
ततः स शाल्मले द्वीपे रमते च मुदा युतः ।
एकादश सहास्राणि एकादश शतानि च ॥ १० ॥
शाल्मलात्तु परिभ्रष्टो राजा भवति धार्मिकः ।
मद्भक्तश्चैव जायेत सर्वधर्मविदां वरः ॥ ११ ॥
अथ द्वादश वर्षाणि मच्छ्रितः सुदृढव्रतः ।
वहते गोमयं सुभ्रु मम लोकाय गच्छति ॥ १२ ॥
स्नानोपलेपने भूमे सलिलं यो ददाति च ।
तस्य पुण्यं महाभागे शृणु तत्त्वेन निष्कलम् ॥ १३ ॥
यावन्तो विन्दवस्तत्र पानीयस्य वसुन्धरे ।
तावद्वर्षसहस्रापि स्वर्गलोके महीयते ॥ १४ ॥

स्वर्गलोकात् परिभ्रष्टः क्रौञ्चद्वीपञ्च गच्छति ।
क्रौञ्चद्वीपात् परिभ्रष्टो राजा भवति धार्मिकः ।
तेनैव गुणयोगेन श्वेतद्वीपञ्च गच्छति ॥ १५ ॥
सम्मार्जनं प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
यां गतिं पुरुषा यान्ति स्त्रियो वा कर्मसु स्थिताः ।१६।
शुचिर्भागवतः शुद्धः अपराधविवर्जितः ।
यावन्तः पांशवो भूमेरुद्धीयन्ते तु चालिताः ।
तावद्वर्षशतान्याशु स्वर्गलोके महीयते ॥ १७ ॥
स्वर्गलोकात् परिभ्रष्टः शाकद्वीपाय गच्छति ।
तत्र स्थित्वा चिरं कालं राजा भवति धार्मिकः ॥ १८ ॥
ततो भुक्त्वा सर्वभोगान् स्थित्वा संसारसागरे ।
श्वेतद्वीपं ततो गच्छेत् मम कर्मनिरतः शुचिः ॥ १९ ॥
अन्यच्च ते प्रवक्ष्यामि शृणुष्व गदतो मम ।
गायनं ये प्रकुर्वन्ति मम कर्मपरायणाः ।
तेषां यद्यत् फलं भूमौ शृणुष्व गदतो मम[1] ॥ २० ॥
गायमानस्य गीतस्य यावदक्षरपङ्क्तयः ।
तावद्वर्षसहस्राणि इन्द्रलोके महीयते ॥ २१ ॥
रूपवान् गुणवान् सिद्धः सर्ववेदविदां वरः ।
नित्यं पश्यति तत्रस्थो देवराजं न संशयः ॥ २२ ॥
मद्भक्तश्चैव जायेत इन्द्रलोकपथे स्थितः ।
सर्वकर्मगुणश्रेष्ठस्तत्रापि मम पूजकः ॥ २३ ॥
इन्द्रलोकात् परिभ्रष्टो मम गीतपरायणः ।
नन्दनोपवने रम्ये रमन् देवगणैः सह ॥ २४ ॥
ततः स भूमौ जायेत वैष्णवैः सह संस्थितः ।
गायन् मम यशो नित्यं भक्त्या परमया युतः ।
मत्प्रसादात् स शुद्धात्मा मम लोकाय गच्छति ॥२५ ॥

सूत उवाच

तस्य तद्वचनं श्रुत्वा माधवस्य यशस्विनी ।
कृताञ्जलिपुटा भूयः प्रत्युवाच वसुन्धरा ॥ २६ ॥

धरण्युवाच

अहो गीतप्रभावो वै यस्त्वया कीर्तितो महान् ।
के च गीतप्रभावेण सिद्धिं प्राप्ता महौजसः ॥ २७ ॥

---

१. (ग) एतदर्धं परश्लोकश्च न स्तः ।

वराह उवाच

तत्रैव चाश्रमे भद्रे चाण्डालः कृतनिश्चयः[1] ।
दूराज्जागरणे याति मम भक्तौ व्यस्थितः ॥ २८ ॥
गायमानश्च गीतानि संवत्सरगणान् बहून् ।
श्वपाकः स गुणज्ञश्च मद्भक्तश्चैव सुन्दरि ॥ २९ ॥
कौमुदस्य तु मासस्य शुक्लपक्षे तु द्वादशी ।
सुप्ते गते जने गीते वीणामादाय चङ्क्रमत् ।
जाग्रंस्तत्र स चाण्डालो गृहीतो ब्रह्मराक्षसा ॥ ३० ॥
अल्पप्राणः श्वपाको वै बलवान् ब्रह्मराक्षसः ।
दुःखशोकेन सन्तप्तो न शक्नोति विचेष्टितुम् ॥ ३१ ॥
तेन प्रोक्तः श्वपाकेन बलवान् ब्रह्मराक्षसः ।
किं त्वया चेष्टितं मह्यं यस्त्वेवं परिधावसि ॥ ३२ ॥
श्वपाकवचनं श्रुत्वा तेन वै ब्रह्मराक्षसा ।
ततः प्रोवाच तं श्वादं मानुषाहारलोलुपः ॥ ३३ ॥
अथेह दशरात्रं मे निराहारस्य तिष्ठतः ।
विधात्रा विहितस्त्वञ्च आहारः पारणाविधौ ॥ ३४ ॥
अद्य त्वां भक्षयिष्यामि शवमांसशोणितम् ।
तृप्तिं यास्यामि परमां विधात्रा विहितां मम ॥ ३५ ॥
ब्रह्मरक्षो वचः श्रुत्वा श्वपाको गीतलालसः ।
राक्षसं छन्दयामास मम भक्त्या व्यवस्थितः ॥ ३६ ॥
एवमेतन्महाभाग भक्ष्योऽहं समुपागतः ।
अवश्यमेतत् कर्तव्यं धात्रा दत्तं यथा तव ॥ ३७ ॥
किं त्वहं देवदेवस्य भक्त्या गातुञ्च जागरे ।
उद्यतस्तत्र गत्वाहमुपास्य विधिना हरिम् ।
पश्चात् खादस्व मां रक्षो जागराद्विनिवर्तितम् ॥३८॥
विष्णोः सन्तोषणार्थाय यतो मे व्रतमास्थितम् ।
जागरे विनिवृत्ते मां भक्षय त्वंयदीच्छसि[2] ॥ ३९ ॥
श्वपाकस्य वचः श्रुत्वा ब्रह्मरक्षः क्षुधार्दितः ।
उवाच परुषं वाक्यं श्वपाकं तदनन्तरम् ॥ ४० ॥
मिथ्या किं भाषसे मूढ पुनरेष्यामि तेऽन्तिकम् ।
मृत्योर्मुखमनुप्राप्य पुनर्भवति मानवः ।
रक्षसो मुखविभ्रष्टः पुनरागन्तुमिच्छसि ॥ ४१ ॥

---

१. कृत्यनिश्चयः । २. भक्षयस्व यदीच्छसि ।

राक्षसस्य वचः श्रुत्वा चाण्डालस्तथाब्रवीत् ।
यद्यप्यहं हि चाण्डालः पूर्वकर्मविदूषितः ।
सम्प्राप्तो मानुषम्भावं विहितेनान्तरात्मना ॥ ४२ ॥
शृणु मत्समयं रक्षो येनाहं पुनरागमम् ।
दूराज्जागरणं कृत्वा लोकस्य द्विजराक्षसम् ।
सत्येन पुनरेष्यामि मन्यसे यदि मुञ्च माम् ॥ ४३ ॥
सत्यमूलं जगत्सर्वं लोकाः सत्ये प्रतिष्ठिताः ।
सत्येन सिद्धिं प्राप्ता हि ऋषयो ब्रह्मवादिनः ॥ ४४ ॥
सत्येन दीयते कन्या सत्यं जल्पन्ति ब्राह्मणाः ।
सत्यं जयन्ति राजनस्त्रीण्येतान्यब्रुवन्नृतम् ॥ ४५ ॥
सत्येन गम्यते स्वर्गो मोक्षः सत्येन चाप्यते ।
सत्येन तपते सूर्यः सोमः सत्येन रज्यते ॥ ४६ ॥
षष्ठ्यष्टमीममावास्यामुभे पक्षे चतुर्दशी ।
अस्नाता मां गतिं गच्छे यद्यहं नागमे पुनः ॥ ४७ ॥
गुरुपत्नीं राजपत्नीं योऽभिगच्छति मोहितः ।
तां गतिं संप्रपद्येऽहं यद्यहं नागमे पुनः ॥ ४८ ॥
याजकानाञ्च ये लोका ये च मिथ्याभिभाषिणाम् ।
तां गतिं संप्रपद्येऽहं यद्यहं नागमे पुनः ॥ ४९ ॥
ब्रह्मघ्ने च सुरापे वा स्तेने भग्नव्रते तथा ।
तेषां गतिं प्रपद्येऽहं यद्यहं नागमे पुनः ॥ ५० ॥
श्वपाकवचनं श्रुत्वा तुष्टो ब्राह्मणराक्षसः ।
उवाच मधुरं वाक्यं गच्छ शीघ्रं नमोस्तु ते ॥ ५१ ॥
ब्रह्मराक्षसमुक्त्वा तु श्वपाकः कृतनिश्चयः ।
पुनर्गायति मह्यं वै मम भक्तौ व्यवस्थितः ॥ ५२ ॥
अथ प्रभाते विमले गीते नृत्ये च जागरे ।
नमो नारायणायेति श्वपाकः परिवर्तते ॥ ५३ ॥
ततस्त्वरितमागत्य पुमांस्तस्याग्रतः स्थितः ।
उवाच मधुरं वाक्यं चाण्डालं कृतनिश्चयम् ॥ ५४ ॥
क्व यासि त्वरितः साधो न च त्वं गन्तुमर्हसि ।
जानन् कौणपपतिं तञ्च न त्वं मर्तुमिहार्हसि ॥ ५५ ॥
पुरुषस्य वचः श्रुत्वा चाण्डालः पुनरब्रवीत् ।
समयो मे कृतः पूर्वं राक्षसेन हि भक्षता ।
तेन तत्र गमिष्यामि सत्यं च परिपालयन् ॥ ५६ ॥

ततः स पद्मपत्राक्षः श्वपाकं प्रत्युवाच ह ।
मधुरां गिरमादाय विहितेनान्तरात्मना ॥ ५७ ॥
मा गच्छ तत्र चाण्डाल यत्रासौ पापराक्षसः ।
जीवितार्थाय सत्यस्य न दोषः परिहापनात् ॥ ५८ ॥
ततस्तस्य वचः श्रुत्वा श्वपाकः शंसितव्रतः ।
उवाच मधुरं वाक्यं मरणे कृतनिश्चयः ॥ ५९ ॥
नाहमेवं करिष्यामि यन्मां त्व परिभाषसे ।
न चाहं नाशये सत्यमेतन्मे निश्चितं व्रतम् ॥ ६० ॥
सत्यमूलं जगत्सर्वं कुलं सत्ये प्रतिष्ठितम् ।
सत्यमेव परो धर्मः आत्मा सत्ये प्रतिष्ठितः ॥ ६१ ॥
न चैवाहं तदुत्सृज्य असत्यः स्यां कदाचन ।
नाहं मिथ्यां चरिष्यामि गच्छ तात नमोऽस्तु ते ।६२।
एवमुक्त्वा श्वपाकोऽपि नित्यं सत्यव्रते स्थितः ।
राक्षसं समनुप्राप्तस्तमुवाचाथ पूजयन् ॥ ६३ ॥
आगतोऽस्मि महाभाग मा विलम्बय भक्षय ।
त्वत्प्रसादाहं गन्ता वैष्णवं स्थानमुत्तमम् ॥ ६४ ॥
एतानि मम गात्राणि भक्षयस्व यथेष्टतः[१] ।
पिबोष्णं रुधिरं मह्यं पीडितोऽस्मि क्षुधा भृशम् ।
तर्पयस्व स्वमात्मानं कुरुष्व मम वै हितम् ॥ ६५ ॥

श्वपाकस्य वचः श्रुत्वा ततः स ब्रह्मराक्षसः ।
उवाच मधुरं वाक्यं श्वपाकं तदनन्तरम् ॥ ६६ ॥
साधु तुष्टोऽस्म्यहं वत्स सत्यं धर्मञ्च पालितम् ।
चण्डालस्याविधिज्ञस्य यस्य ते मतिरीदृशी ॥ ६७ ॥
ब्रह्मरक्षोवचः श्रुत्वा श्वपाकः सत्यसङ्गरः ।
उवाच मधुरं वाक्यं ब्रह्मराक्षसमेव तु ॥ ६८ ॥

यद्यप्यहं वै चाण्डालः सर्वकर्मविवर्जितः[२] ।
तथापि सत्यं वक्तव्यं ब्रह्मराक्षसनित्यश- ॥ ६९ ॥
श्वपाकवचनं श्रुत्वा ब्रह्मरक्षो भयानकम् ।
उवाच मधुरं वाक्यं श्वपाकं संशितव्रतम् ॥ ७० ॥
यत्त्वया गीयते रात्रौ विष्णोर्जागरणं प्रति ।
फलं गीतस्य मे देहि यदीच्छेर्जीवितं स्वकम् ।
ततो मोक्ष्यामि कल्याण भक्षयामि न भीषणः[३] ॥७१॥

---

१. यथेच्छम् । २. पाककर्मबहिष्कृतः । ३. सशीर्णं ।

ब्रह्मरक्षोवचः श्रुत्वा श्वपाकः प्रत्युवाच ह।
मनोऽज्ञातमिदं वाक्यं ब्रह्मरक्षो निभाषसे।
भक्षयामीति चोक्त्वा मां गीतपुण्यं किमिच्छसि ।।७२।
श्वपाकवचनं श्रुत्वा ब्रह्मरक्षोऽब्रवीत् पुनः।
एकयामीयं मे देहि पुण्यं गीतस्य वै परम्।
ततो मोक्ष्यसि भक्ष्येण सङ्गतः पुत्रदारकैः ॥ ७३ ॥

श्रुत्वा राक्षसवाक्यानि चाण्डालो गीतलोभितः।
उवाच मधुरं वाक्यं राक्षसं कृतनिश्चयः ॥ ७४ ॥
न गायन् फलं दद्मि ब्रह्मराक्षसतवेप्सितम्।
भक्षयस्व यथान्यायं रुधिरं पिब चेप्सितत् ॥ ७५ ॥
श्वपाकवचनं श्रुत्वा राक्षसः पुनरब्रवीत्।
एकगीतस्य मे देहि यत्त्वया विष्णुसंसदि ॥
एतेन तारितोऽस्मीति तव गीतफलेन वै ॥ ७६ ॥

श्रुत्वा वाक्यानि चाण्डालो राक्षसस्य निवारयन्।
उवाच मधुरं वाक्यं चाण्डालो विस्मयान्वितः ॥७७॥
किं त्वया विकृतं कर्म तद् ब्रूहि मम राक्षस।
कर्मणो यस्य दोषेण राक्षसत्वं समागतः ॥ ७८ ॥

श्वपाकवचनं श्रुत्वा ब्रह्मरक्षो महायशाः।
उवाच मधुरं वाक्यं दुःखसन्तप्तमानसः ॥ ७९ ॥
नाम्ना वै सोमशर्माहं चरको ब्रह्मयोनिजः।
सूत्रमन्त्रपरिभ्रष्टो यज्ञकर्मसु निश्चितः ॥ ८० ॥
ततोऽहं यजयाम्यज्ञान् लोभमोहप्रपीडितः।
प्रवर्त्तमाने यज्ञे तु कदाचिद् वै वयोगतः।
उदरे जातशूलोऽहं तेन पञ्चत्वमागतः ॥ ८१ ॥

अथ पञ्चमहारात्रे ह्यसमाप्ते क्रतौ तथा।
अस्य यज्ञस्य दोषेण मातंग[1] शृणु मे वचः।
राक्षसत्वमनुप्राप्तस्तेन दुष्टेन कर्मणा ॥ ८२ ॥
मन्त्रहीनं मया तत्र स्वरहीनञ्च तत्कृतम्।
सूत्रहीनं तथा तत्र प्राग्वंशादि कृतं मया ॥ ८३ ॥
परिणामञ्च रूपञ्च मया तत्रोपलक्षितम्।
कृतस्य तस्य दोषेण योनिं प्राप्तोऽस्मि राक्षसीम् ८४ ॥

१. मतङ्ग।

स्वगीतफलदानेन निस्तारयितुमर्हसि ।
मोचयस्वाधमं पापाद् विष्णुगीतेन सत्वरम् ॥ ८५ ॥
ब्रह्मरक्षोवचः श्रुत्वा श्वपाकः संशितव्रतः ।
बाढमित्येव तं वाक्यं राक्षसं प्राब्रवीत्तदा ॥ ८६ ॥
एतस्य मम गीतस्य सुस्वरस्य फलन्तु यत् ।
ददामि राक्षस त्वञ्चेन्मुच्यते शुद्धमानसः ॥ ८७ ॥
यस्तु गायति संयुक्तं गीतकं विष्णुसन्निधौ ।
स तारयति दुर्गाणीत्युक्त्वा तद्दत्तवान् फलम् ॥ ८८ ॥
एवं तस्मात् फलं प्राप्य श्वपाकाद्राक्षसस्तदा ।
जातः सुविमलो भद्रे शरदीव यथा शशी ॥ ८९ ॥
श्वपाकश्चापि सुश्रोणि मम चैवोपगायकः ।
कृत्वा सुविपुलं कर्म स ब्रह्मत्वमुपागतः ॥ ९० ॥
एतद् गीतफलं देवि प्राप्नोति मनुजो भुवि ।
मह्यं जागरतो भद्रे गीयमानं मनस्विनि ॥ ९१ ॥
यस्तु गायति सुश्रोणि कौमुदीं द्वादशीं प्रति ।
सर्वसङ्गं परित्यज्य मम लोकाय गच्छति ॥ ९२ ॥
यस्तु गायति गीतानि मम जागरणे सदा ।
सर्वसङ्गात् प्रमुक्तो वै मम लोकाय गच्छति ॥ ९३ ॥
एतत्ते कथितं देवि गायनस्य फलं महत् ।
यस्य गीतस्य शब्देन तरेत् संसारसागरम् ॥ ९४ ॥
वादित्रस्य प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
प्राप्तवान् मानुषो येन देवेभ्यः सबलां[1] स्वयम् ॥९५॥
शम्पातालप्रयोगेण सन्निपातेन वा पुनः ।
नववर्षसहस्राणि नववर्षशतानि च ।
कुवेरभवनं गत्वा मोदते वै यदृच्छया ॥ ९६ ॥
कुवेरभवनाद् भ्रष्टः स्वच्छन्दगमनालयः ।
शम्पादितालसम्पातैर्मम लोकाय गच्छति ॥ ९७ ॥
नृत्यमानस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे ।
मानवो येन गच्छेत छित्वा संसारबन्धनम् ॥ ९८ ॥
त्रिंशद्वर्षसहस्राणि त्रिंशद्वर्षशतानि च ।
पुष्करद्वीपमासाद्य स्वच्छन्दगमनालयः ।
फलम्प्राप्नोति सुश्रोणि मम कर्मपरायणः ॥ ९९ ॥

---

१. समताम् ।

रूपवान् गुणवान् शूरःशीलवान् सत्पथे स्थितः ।
मद्भक्तश्चैव जायेत संसारपरिमोचितः ॥ १०० ॥
यस्तु जागरते नित्यं गीतवाद्येन नर्तकः ।
जम्बुद्वीपं समासाद्य राजराजस्तु जायते ॥ १०१ ॥
सर्वकर्मसमायुक्तो रक्षिता वै महीपतिः ।
मद्भक्तश्चैव जायेत मम कर्मपरायणः ॥ १०२ ॥
उपहार्याणि पुष्पाणि मम कर्मपरायणः ।
यो मामुपानयेद् भूमौ मम कर्मपथे स्थितः ॥ १०३ ॥
पुष्पाणि तत्र यावन्ति मम मूर्द्धनि धारयेत् ।
स कृत्वा पुष्कलं कर्म मम लोकाय गच्छति ॥ १०४॥
एतत्ते कथितं देवि भक्तानान्तु महौजसाम् ।
मम भक्तसुखार्थाय सर्वसंसारमोक्षणम् ॥ १०५ ॥
य एतत् पठते[1] भूमौ कल्यमुत्थाय मानवः ।
स तु तारयते[2] जन्तुर्दश पूर्वान् दशापरान् ॥ १०६॥
न पठेन् मूर्खमध्ये तु पिशुनानां पुरो न च ।
पठेद् भागवतानाञ्च मध्ये मुक्तिरतात्मनाम् ॥१०७॥
अश्रद्दधाने क्रूरे वा न पठेद् देवले तथा ।
यदीच्छेत् सिद्धिकल्याणं मङ्गलं च मम प्रियम्॥१०८॥
धर्माणां परमं धर्मं क्रियाणां परमा क्रिया ।
मा पठेच्छास्त्र दूषाय अध्यायं वाकदाचन ।
यदीच्छेत् परमां सिद्धिं मम लोके महीयते ॥ १०९॥

इति वाराहपुराणे भगवच्छास्त्रे सौकरे चाण्डालब्रह्म-
राक्षससंवादे सौकरमाहात्म्यं नाम उनचत्वा-
रिंशदधिकशततमोऽध्यायः ।

---

१. पठतीति साधु । २. तारयतीति साधु ।

## चत्वारिंशदधिकशततमोऽध्यायः

धरण्युवाच

श्रुतानि देवस्थानानि त्वया प्रोक्तानि यान्युत ।
कस्मिंस्तिष्ठसि नित्यं त्वं तत् भवान् वक्तुमर्हसि॥१॥
किञ्च ते परमं स्थानं यत्र मूर्त्या कृतिर्भवान् ।
कस्मिन् स्थाने कृतं कर्म येन यात्युत्तमां गतिम् ॥ २ ॥

वराह उवाच

शृणु तत्त्वेन मे देवि भक्तानां भक्तवत्सले ।
येषु स्थानेषु तिष्ठामि कथ्यमानानिमान् शृणु ॥ ३ ॥
तत्र कोकामुखं नाम यन्मया पूर्वभाषितम् ।
बदरीति च विख्यातं गिरिराज शिलातलम् ॥ ४ ॥
स्थानं लोहार्गलं नाम म्लेच्छराजसमाश्रितम् ।
क्षणञ्चापि न मुञ्चामि एवमेतन्न संशयः ॥ ५ ॥
सचैत्यं पश्य मे स्थानं जगदेतच्चराचरम् ।
सर्वत्राहं वरारोहे न मन्न्यूनं हि जानते ॥ ६ ॥
ये तु जानन्ति मां देवि गुह्यां कामगतिं मम ।
शीघ्रं कोकामुखं यान्तु मम कर्मपरायणाः ॥ ७ ॥
ततो देववचः श्रुत्वा पृथिवी वाक्यमब्रवीत् ।
शिरस्यञ्जलिमाधाय [1]निर्वृतेनान्तरात्मना ॥ ८ ॥

धरण्युवाच

सर्वतो लोकनाथेश परङ्कौतूहलं हि मे ।
कथङ्कोकामुखं श्रेष्ठं तद्भवान् वक्तुमर्हसि ॥ ९ ॥

वराह उवाच

नास्ति कोकामुखात् क्षेत्रं श्रेष्ठं कोकामुखाच्छुचि[2] ।
नास्ति कोकामुखात्स्थानं नास्ति कोकामुखात्प्रियं ।१०।
यस्तु कोकामुखं गत्वा न भूयो विनिवर्तते ।
कर्माणि तत्र कुर्वीत यष्टम्भवति चात्मनि ॥ ११ ॥
यानि यानि च क्षेत्राणि त्वया पृष्टं वसुन्धरे[3] ।
कोकामुखसमं स्थानं न भूतं न भविष्यति ॥ १२ ॥

---

१. निभृतेनान्तरात्मना । २. क्वचित् । ३. त्वया पृष्टानि सुन्दरि ।

मम सा परमा मूर्तिर्या न जानन्ति गोपिताम् ।
स्थितं कोकामुखं नाम एतत्ते कथितं मया ॥ १३ ॥

धरण्युवाच

देव देव महादेव भक्तानामभयप्रद ।
यानि गुह्यानि सन्त्यत्र कोकायां वक्तुमर्हसि ॥ १४ ॥

वराह उवाच

शृणु तत्त्वेन मे देवि यन्मां त्वं परिपृच्छसि ।
तस्मिन् कोकामुखं रम्यं कथ्यमानं मयानघे ॥ १५ ॥
जलबिन्दुरिति ख्यातात्[१] पर्वतात् पतनाद् भुवि ।
तत्तु गुह्यमति देवि कृत्वा कर्म महौजसम् ।
सर्वसङ्गान् परित्यज्य मम लोकाय गच्छति ॥ १६ ॥
विष्णुधारेति विख्याता कोकायां मम मण्डले ।
पर्वतात् पतिता भूमौ धारा मुसलसन्निभा ॥ १७ ॥
अहोरात्रोषितो भूत्वा स्नायात् तत्र प्रयत्नतः ।
अग्निष्टोमसहस्राणां फलं प्राप्नोति मानवः ॥ १८ ॥
न मुह्यति स कर्तव्ये फलं प्राप्नोति चोत्तमम् ।
जायते विपुले शुद्धे मम मार्गानुसारिणि ॥ १९ ॥
तत्राथ मुञ्चते प्राणान् विष्णुधारां समाश्रितः ।
पश्यते परमां मूर्तिमेतां मम न संशयः ॥ २० ॥
तत्र विष्णुपदं नाम स्थानं कोकामुखाश्रितम् ।
एतत् कश्चिन्न जानाति धरे वाराहसंश्रितम् ॥ २१ ॥
तस्मिन् कृतोदको देवि रात्रावुपोषितो नरः ।
क्रौञ्चद्वीपे प्रजायेत मम भक्तिपरायणः ॥ २२ ॥
तत्राथ मुञ्चते प्राणान् गुह्यस्थाने परे मम ।
सर्वसङ्गान् परित्यज्य मम लोकाय गच्छति ॥ २३ ॥
अस्ति विष्णुसरो नाम यत्त्वया सह क्रीडितम्[२]।
यत्र दंष्ट्राप्रहारेण चाहृतासि वसुन्धरे ॥ २४ ॥
तत्र स्नानन्तु कुर्वीत प्रातः काले वसुन्धरे ।
सर्वपापविशुद्धात्मा मम लोकाय गच्छति ॥ २५ ॥
सोमतीर्थमिति ख्यातं कोकायां मम मण्डले ।
यत्र पञ्चशिला भूमिर्विष्णुनाम्ना तथाङ्किता ॥ २६ ॥
यस्तत्र कुरुते स्नानं पञ्चरात्रोषितो नरः ।
गोमेदे जायते द्वीपे मम मार्गानुसारकः ॥ २७ ॥

---

१. जबिन्दुरिति विख्यातात् । २. यत्र त्वया सह क्रीडितम् (क) (ख) ।

तत्राथ मुञ्चते प्राणान् गुह्यक्षेत्रे परे मम ।
सर्वपापविनिर्मुक्तः शुद्धात्मा मां स पश्यति ॥ २८ ॥
तुङ्गकूटेतिविख्यातं कोकायां मम मण्डले ।
धाराः पतन्ति चत्वारः पर्वतादुच्चसंश्रिताः ॥ २९ ॥
यस्तत्र कुरुते स्नानं पञ्चरात्रोषितो नरः ।
कुशद्वीपं समासाद्य मम लोकेषु तिष्ठति ॥ ३० ॥
अनित्यमाश्रमं नाम क्षेत्रकर्मसुखावहम् ।
देवापि यं न जानन्ति किं पुनर्मनुजादयः ॥ ३१ ॥
तत्र स्नात्वा वरारोहे अहोरात्रोषितो नरः ।
जायते पुष्करद्वीपे मम कर्मपरायणः ॥ ३२ ॥
अथ तत्र मृतो भूमौ पुण्यक्षेत्रे महाशुचिः ।
सर्वपापविनिर्मुक्तो मम लोकाय गच्छति ॥ ३३ ॥
अस्त्यत्राग्निसरो नाम परं गुह्यं मम स्थितम् ।
पञ्च धाराः पतन्त्यत्र गिरिकुञ्जसमाश्रिताः ॥ ३४ ॥
तत्र चापि कृतस्नानः पञ्चरात्रोषितो नरः ।
कुशद्वीपे च जायेत मम कर्मपरायणः ॥ ३५ ॥
तत्राथ मुञ्चते प्राणान् कृत्वा कर्म महौजसम् ।
कुशद्वीपात् परिभ्रष्टो ब्रह्मलोकञ्च गच्छति ॥ ३६ ॥
अस्ति ब्रह्मसरो नाम गुह्यं क्षेत्रं परं मम ।
यत्र धारा पतत्येका पुण्या भूमिशिलातले ॥ ३७ ॥
तत्र स्नानं प्रकुर्वीत पञ्चरात्रोषितो नरः ।
वसते सूर्यलोकेषु मम मार्गानुसारकः ॥ ३८ ॥
अथात्र मुञ्चते प्राणान् सूर्यधारां समाश्रितः ।
सूर्यलोकमतिक्रम्य मम लोकान्तु गच्छति ॥ ३९ ॥
अस्ति धेनुवटं नाम गुह्यं क्षेत्रं परं मम ।
एका धारा पतत्यत्र देवि पूर्णा शिलोच्चयात्[१] ॥४०॥
तत्र स्नानं प्रकुर्वीत एकमेकं दिनं तथा ।
सप्तरात्रोषितो भूत्वा मम कर्मसमाश्रितः ॥ ४१ ॥
स्नात्वा सप्तसमुद्रेषु लब्धसंज्ञः समाहितः ।
विहरेत् सप्तद्वीपेषु मम कर्मपरायणः ॥ ४२ ॥
तत्राथ मुञ्चते प्राणान् मम भक्तिसमन्वितः ।
सप्तद्वीपमतिक्रम्य मम लोकं तु गच्छति ॥ ४३ ॥

---

१. पूर्णशिलोच्चयात् ।

अस्ति धर्मोद्भवं नाम तस्मिन् क्षेत्रे परे मम ।
गिरिकुञ्जात्पतत्येका धारा भूमितले शुभा ॥ ४४ ॥
तत्र स्नानं प्रकुर्वीत एकरात्रोषितो नरः ।
स वैश्यो जायते शूद्रो मम कर्मपरायणः ॥ ४५ ॥
तत्राथ मुञ्चते प्राणान् गुह्ये देवि शिलोच्चये ।
सांगयज्ञं सदक्षिण्यं भुक्त्वा मां[1] प्रतिपद्यते ॥ ४६ ॥
अस्ति कोटिवटं नाम क्षेत्रं गुह्यं परं मम ।
एका धारा पतत्यत्र वटमूलमुपाश्रिता ॥ ४७ ॥
तत्र स्नानन्तु कुरुते रात्रावुपोषितो नरः ।
यावन्ति वटपत्राणि तस्मिन् शृंगे परे मम ॥ ४८ ॥
तावद् वर्षसहस्राणि रूपसम्पत्समन्वितः ।
तिष्ठते[2] तु वरारोहे मम मार्गानुसारिणि ॥ ४९ ॥
तत्राथ मुञ्चते प्राणान् कृत्वा कर्म सुदुष्करम् ।
अग्निवर्णस्ततो भूत्वा मम लोकाय गच्छति ॥ ५० ॥
पापप्रमोचनं नाम गुह्यमस्मिन् परं मम ।
पतितैकतमा धारा स्थूला कुम्भसमा ततः ॥ ५१ ॥
यस्तत्र कुरुते स्नानमहोरात्रोषितः नरः ।
जायते च चतुर्वेदी मम कर्मपरायणः ॥ ५२ ॥
तत्राथ मुञ्चते प्राणान् कौशिकीमाश्रितो नदीम् ।
यस्तत्र कुरुते स्नानं पञ्चरात्रोषितो नरः ।
मोदते वासवे लोके मम मार्गानुसारिणि ॥ ५३ ॥
तत्राथ मुञ्चते प्राणान् मम कर्मपरायणः ।
वासवं लोकमुत्सृज्य मम लोकञ्च [3]गच्छति ॥ ५४ ॥
यमव्यसनकं नाम गुह्यमस्ति परं मम ।
स्रोतो वहति तत्रैकं कौशिकीमाश्रितं नदीम् ॥ ५५ ॥
यस्तत्र कुरुते स्नानमेकरात्रोषितो नरः ।
न स गच्छति दुर्गाणि यमस्य व्यसनं महत् ॥ ५६ ॥
अथ तत्र त्यजेत् प्रणान् मम कर्मपरायणः ।
विशुद्धो मुक्तपापोऽसौ मम लोकाय गच्छति ॥५७॥
मातंगं नाम विख्यातं तस्मिन् क्षेत्रे परं मम ।
स्रोतो वहति तत्रैव आश्रितं कौशिकीं नदीम् ॥ ५८
स्नानं कुर्वन्ति ये तत्र एकरात्रोषितो नरः ।

---

१. भक्तो माम् । २. तिष्ठति । ३. मम लोकं तु ।

भेदं किंपुरुषं प्राप्य जायते नात्र संशयः ।
विद्वान् शुचिश्च जायेत मम कर्मानुसारकः[1] ॥ ५९ ॥
तत्राथ मुञ्चते प्राणान् गुह्ये देवि परे मम ।
मुक्त्वा किम्पुरुषं भेदं मम लोकञ्च गच्छति ॥ ६० ॥
अस्ति वज्रभवं नाम गुह्ये तस्मिन् परं मम ।
स्रोतो वहति तत्रैकमाश्रितं कौशिकीं नदीम् ॥ ६१ ॥
स्नानं करोति यस्तत्र एकरात्रोषितो नरः ।
जायते शक्रलोके तु मम कर्मानुसारकः ॥ ६२ ॥
शरीरचक्रसंघाते वज्रहस्तः स्वरूपकः ।
तत्र स्नानप्रभावेण जायते नात्र संशयः ॥ ६३ ॥
अथात्र मुच्यते प्राणान् मम चिन्तनतत्परः ।
शक्रलोकमतिक्रम्य मम लोकं प्रपद्यते ॥ ६४ ॥
तत्र त्रिकोशमात्रेण गुह्यं क्षेत्रं परं मम ।
शुक्ररुद्रेति विख्यातं तस्मिन् कोकाशिलातले ॥ ६५ ॥
स्नानं करोति यस्तत्र त्रिरात्रोपोषितो नरः ।
जम्बूद्वीपे प्रजायेत जम्बूर्यत्र प्रतिष्ठिता ।
जम्बूद्वीपं परित्यज्य जायते मम पार्श्वगः ॥ ६६ ॥
अस्ति चान्यन्महद्भद्रे क्षेत्रे गुह्ये विशेषितम् ।
मनुजा येन गच्छन्ति मुक्त्वा संसारसागरम् ॥६७॥
द्रंष्ट्रांकुरेति विख्यातं यत्र कोका विनिःसृता ।
एतद् गुह्यं न जानन्ति यतो मुञ्चन्ति जन्तवः ॥६८॥
कृतोदकस्तत्र भद्रे अहोरात्रोषितो नरः ।
जायते शाल्मलिद्वीपे मम कर्मानुसारकः ॥ ६९ ॥
तत्राथ मुञ्चते प्राणान् मम कर्मसु निष्ठितः ।
शाल्मलिद्वीपमुत्सृज्य मम पार्श्वे स तिष्ठति ॥ ७० ॥
तस्मिन् क्षेत्रे महागुह्ये परमस्ति फलोदयम् ।
विष्णुतीर्थमिति ख्यातं मम भक्तसुखावहम् ॥ ७१ ॥
ततः पर्वतमध्यात्तु कोकायां पतते जलम् ।
त्रिस्रोतसं महाभागे सर्वसंसारमोक्षणम् ॥ ७२ ॥
तस्मिन् कृतोदको भूमे छित्वा संसारबन्धनम् ।
वायोः स भवनं प्राप्य वायुभूतस्तु तिष्ठति ॥ ७३ ॥
तथाथ मुञ्चते प्राणान् मम कर्मसु निष्ठितः ।
वायुलोकमतिक्रम्य मम लोकं स गच्छति ॥ ७४ ॥

---

१. सारतः ।

अस्ति तत्र वरं स्थानं संगमङ्कौशिकोकयोः ।
सर्वकामिकेति विख्याता[1] शिला तिष्ठति चोत्तरे ।७५।
तत्र यः कुरुते स्नानमहोरात्रोषितो नरः ।
विस्तीर्णे जायते वंशे जातिं स्मरति चात्मनः ॥ ७६ ॥
स्वर्गे वा यदि वा भूमौ यं यं कामयते नरः ।
तं तं प्राप्नोति वै कामं स्नातमात्रः शिलातले ॥ ७७ ॥
तत्राथ मुञ्चते प्राणान् मम कर्मण्यवस्थितः ।
सर्वसंगं परित्यज्य मम लोकं स गच्छति ॥ ७८ ॥

अस्ति मत्स्यशिला नाम गुह्यं कोकामुखे वरम् ।
धाराः पतन्ति तिस्रो वै कौशिकीमाश्रिता नदीम् ॥७९॥
तत्र च स्नायमानस्तु यदि मत्स्यं प्रपश्यति ।
ततो जानाम्यहं देवि प्राप्तो नारायणः स्वयम् ॥ ८० ॥
तत्र मत्स्यं पुनर्दृष्ट्वा यजमानस्तु[2] सुन्दरि ।
दद्यादर्घ्यं ततो भद्रे मधुलाजसमन्वितम् ॥ ८१ ॥
यस्तत्र कुरुते स्नानं देवि गुह्ये ततः परे ।
तिष्ठते पद्मपत्रे तु सोत्तरे मेरुसंश्रिते ॥ ८२ ॥
अथ संप्राप्य मुच्येत मत्स्यं गुह्यं परं मम ।
मेरुश्रृङ्गं समुल्लङ्घ्य मम लोकाय गच्छति ॥ ८३ ॥
पञ्चयोजनविस्तारं क्षेत्रं कोकामुखं मम ।
यस्त्वेतत् तु विजानाति न स पापेन लिप्यते ॥ ८४ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तस्मिन् कोकामुखे रम्ये तिष्ठामि दक्षिणामुखः ॥ ८५॥
शिलाचन्दनसंकाशं देवानामपि दुर्लभम् ।
वराहरूपमादाय तिष्ठामि पुरुषाकृतिः ॥ ८६ ॥
वामोन्नतमुखं कृत्वा वामदंष्ट्रासमुन्नतम् ।
पश्यामि च जगत्सर्वं ये च भक्ता मम प्रियाः ॥ ८७ ॥
ये च मां स्मरते भूमे पुरुषा मुक्तकिल्विषाः ।
तत्र कुर्वन्ति कर्माणि शुद्धाः संसारमोक्षणे ॥ ८८ ॥
यदि कोकामुखं गच्छेत् कदाचित् कालपर्यये ।
मा ततो विनिवर्तेत यदीच्छेन्मम साम्यताम् ॥ ८९ ॥
गुह्यानां परमं गुह्यमेतत् स्थानं परं महत् ।
सिद्धानां परमा सिद्धिर्गुह्यं कोकामुखं परम् ॥ ९० ॥

१. सर्वे कामिकेति । २. स्नायमानस्तु ।

न च सांख्येन योगेन सिद्धिं यान्ति महत्पराम् ।
याति कोकामुखं गत्वा रहस्यं कथितं यया ॥ ९१ ॥
एवं श्रेष्ठं महाभागे यत्त्वया परिपृच्छितम् ।
कथनं कथितं सर्वं किमन्यच्छ्रोतुमिच्छसि ॥ ९२ ॥
य एतत्कथितं भूमे कोकामुखमनुत्तमम् ।
तारिताः पितरस्तेन दश पूर्वास्तथा पराः ॥ ९३ ॥
मृतो वा तत्र जायेत शुद्धे भागवते कुले ।
अनन्यमानसो भूत्वा मम मार्गप्रदर्शकः ॥ ९४ ॥
तश्चेदं शृणुयान्नित्यं कल्यं उत्थाय मानवः ।
सप्तपञ्चशतं जन्म मम भक्तश्च जायते ॥ ९५ ॥
य एतत्पठते नित्यं कोकाख्यानं तथोषसि ।
गच्छते परमं स्थानमेवमेतन्न संशयः ॥ ९६ ॥

इति वराहपुराणे भगवच्छास्त्रे कोकामुखमाहात्म्यवर्णनं नाम चत्वारिंशदधिकशततमोऽध्यायः ।

## एकचत्वारिंशदधिकशततमोऽध्यायः

वराह उवाच

तस्मिन् हिमवतः पृष्ठे परं गुह्यमतः[1] शृणु ।
बदरीति च विख्याता देवानामपि दुर्लभा ॥ १ ॥
न तत्प्राप्नोति मनुजः कृत्वा कर्म सुदुष्करम् ।
प्राप्नुवन्ति च भक्ता ये बदरीं विश्वतारिणीम् ॥ २ ॥
दुर्लभं तन्मम क्षेत्रं हिमकूटशिलातले ।
यस्तत्प्राप्नोति हि क्षेत्रं कृतकृत्यो भवेन्नरः ॥ ३ ॥
ब्रह्मकुण्डमिति ख्यातमास्ते[2] तत्र शिलोच्चये ।
हिमसंस्थं तथात्मानं कृत्वा तिष्ठामि माधवि ॥ ४ ॥
स्नानं करोति यस्तत्र त्रिरात्रोपोषितो नरः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ५ ॥
मुञ्चेत् प्राणांस्तत्र यदि व्रतनिष्ठो जितेन्द्रियः ।
सत्यलोकमतिक्रम्य मम लोकञ्च गच्छति ॥ ६ ॥
अग्निसत्यपदं नाम तस्मिन् क्षेत्रे परं मम ।
शृङ्गत्रयात् पतन्त्यत्र धारा मुसलसन्निभाः ॥ ७ ॥
यस्तत्र कुरुते स्नानं त्रिरात्रोपोषितो नरः ।
सत्यवादी भवेद् दक्षो मम कर्मपरायणः ॥ ८ ॥
यस्तत्र मुञ्चते प्राणान् यदि कृत्वा जलाशयम् ।
सत्यलोकमतिक्रम्य मम लोके स मोदते ॥ ९ ॥
इन्द्रलोकमिति ख्यातं बदर्याञ्च ममाश्रमम् ।
तत्राहं देवि शक्रेण निष्कलं परितोषितः ॥ १० ॥
तत्र चैव तु शृङ्गेभ्यः स्थूलधारा पतेत् पुनः ।
स्थूले शिलातले तत्र मम धर्मो व्यवस्थितः ॥ ११ ॥
स्नानं करोति यस्तत्र एकरात्रोषितो नरः ।
सत्यवादी शुचिर्भूत्वा सत्यलोके महीयते ॥ १२ ॥
अथात्र मुञ्चते प्राणान् कृत्वा चानाशकं व्रतम् ।
सत्यलोकमतिक्रम्य मम लोकेषु तिष्ठति ॥ १३ ॥
अस्ति पञ्च शिखं[3] नाम बदर्यामाश्रमं प्रति ।
यत्र धाराः पतन्त्यत्र पञ्चशृङ्गसमाश्रिताः ॥ १४ ॥

१. गुह्यतमं शृणु । २. शास्तं तत्र । ३. पञ्चशिखा नाम

यस्तत्र कुरुते स्नानं षञ्चस्रोतसि मानवः।
अश्वमेधफलं प्राप्य दैवतैः सह मोदते ॥ १५ ॥
यद्यत्र मुच्यते प्राणान् कृत्वा कर्म सुदुष्करम्।
स्वर्गलोकमतिक्रम्य मम लोके महीयते ॥ १६ ॥
चतुःस्रोतमिति ख्यातं तस्मिन् क्षेत्रे परे मम।
धाराः पतन्ति चत्वारि चतुरो दिशमाश्रिताः ॥ १७ ॥
यस्तत्र कुरुते स्नानमेकरात्रोषितो नरः।
मोदते नाकपृष्ठे तु मम भक्तश्च[1] जायते ॥ १८ ॥
अथ प्राणान् परित्यज्य कृत्वा कर्म सुदुष्करम्।
नाकपृष्ठमतिक्रम्य मम लोकं प्रपद्यते ॥ १९ ॥
वेदधारमिति[2] ख्यातं तस्मिन् क्षेत्रे परे मम।
यत्र ब्रह्ममुखाद् भ्रष्टा वेदाश्चत्वार एव च ॥ २० ॥
तत्रैव हिमवत्पृष्ठे चतुःशृङ्गाद् बृहत्तराः।
धाराः पतन्ति चत्वारि विषमाश्च शिलोच्चये ॥ २१ ॥
यस्तत्र कुरुते स्नानं चतूरात्रोषितो नरः।
चतुर्णामपि देवानां ग्रहणे कारणं भवेत् ॥ २२ ॥
अथात्र मुञ्चते प्रणान् मम कर्मपथे स्थितः।
देवलोकमतिक्रम्य मम लोके प्रतिष्ठिते ॥ २३ ॥
द्वादशादित्यकुण्डेति[3] तस्मिन् क्षेत्रे परे मम।
यत्र ते द्वादशादित्या देवि संस्थापिता मया ॥ २४ ॥
तत्र पर्वतशृङ्गे तु स्थूलमूले शिलातले।
द्वादशा पतते धारा मम कर्म सुखावहाः ॥ २५ ॥
यस्तत्र कुरुते स्नानं यां काञ्चिद् द्वादशीं प्रति।
यत्र ते द्वादशादित्यास्तत्र गच्छेन्न संशयः ॥ २६ ॥
अथात्र मुञ्चते प्राणान् मम कर्मणि संस्थितः।
समतिक्रम्य चादित्यान् मम लोके महीयते ॥ २७ ॥
लोकपालमिति ख्यातं तस्मिन् क्षेत्रे परे मम।
तत्र ते लोकपालास्तु मया संस्थापिताः पुरा ॥ २८ ॥
तत्र पर्वतमध्ये तु स्थलकुण्डं बृहन्मम।
भित्वा पर्वतमुद्गीर्णं[4] यत्र सोमसमुद्भवः ॥ २९ ॥
तत्र स्नानं तु कुर्वीत ज्यैष्ठमासस्य द्वादशीम्।
मोदते लोकपालेषु मम भक्तश्च जायते ॥ ३० ॥

---

१. भक्तिश्च २. वेदधारा इति। ३. कुण्डमिति साधु। ४. भित्त्वा पर्वतमुद्गार इति।

अथात्र मुञ्चते प्राणान् मम कर्मसु तत्परः ।
लोकपालानतिक्रम्य मम लोकं प्रपद्यते ॥ ३१ ॥
अस्ति मेरोर्वरं नाम तस्मिन् गुह्यं परं मम ।
तत्र स्थितेन भूमे तु मेरुः संस्थापितः स्वयम् ॥ ३२ ॥
धारास्तिस्रः पतन्त्यत्र सुवर्णसदृशप्रभाः ।
पतेत्तु तज्जलं भूमौ व्यक्तिं नैवोपलभ्यते[1] ॥ ३३ ॥
यस्तत्र कुरुते स्नानं त्रिरात्रोपोषितो नरः ।
मोदते मेरुशृङ्गेषु मम भक्तश्च[2] जायते ॥ ३४ ॥
अथ तत्र मृतो देवि तस्मिन् गुह्ये परे मम ।
मेरुपृष्ठमतिक्रम्य मम लोकाय गच्छति ॥ ३५ ॥
मानसोद्भेदमिति च तत्रान्यत्तीर्थमुत्तमम् ।
पृथ्वीमुद्भिद्य मध्ये तु जलं गच्छति सत्वरम् ॥ ३६ ॥
देवाप्येवं न जानन्ति तं देशं तत्र संस्थितम् ।
मानुषा हि विजानन्ति भूम्यां पतति तज्जलम्॥ ३७ ॥
यस्तत्र कुरुते स्नानमहोरात्रोषितो नरः ।
मोदते मानसे दिव्ये मम भक्तश्च जायते ॥ ३८ ॥
अस्ति पञ्चशिरं नाम तस्मिन् गुह्यं परं मम ।
ब्रह्मणा छिद्यते यत्र शिरश्चैव महाद्युति ॥ ३९ ॥
तत्र वै पञ्च कुण्डानि स्थूलशीर्षशिलोच्चये ।
पञ्चात्र शिरसः[3] स्थाने बहुधारासमन्विताः ॥ ४० ॥
यत्र तन्मध्यमं कुण्डं छिन्नमेव स्वयम्भुवा ।
तत्र रक्तजला भूमिर्दृश्यते धारसङ्कुला ॥ ४१ ॥
यस्तत्र कुरुते स्नानं पञ्चरात्रोषितो नरः ।
मोदते ब्रह्मलोकस्थो मम भक्तश्च जायते ॥ ४२ ॥
तत्राथ मुञ्चते प्राणान् गुह्ये पञ्चशिरे मम ।
जलचान्द्रायणं कृत्वा[4] मम कर्मसु निष्ठितः ॥ ४३ ॥
बुद्धिमान् मतिमांश्चैव रागमोहविवर्जितः ।
ब्रह्मलोकमतिक्रम्य मम लोकाय गच्छति ॥ ४४ ॥
अस्ति सोमाभिषेकेति तीर्थमन्यत्परं मम ।
राजत्वे ब्राह्मणानां तु मया सोमोऽभिषेचितः ॥ ४५ ॥
तत्राहं तोषितस्तेन अत्रिपुत्रेण माधवि ।
नवपञ्चककोट्यस्तु कृत्वा कर्म सुदुष्करम् ।
प्राप्तश्च परमां सिद्धिं मत्प्रसादाद् वसुन्धरे ॥ ४६ ॥

१. व्यक्तिर्नैवोपलभ्यते इति बहुषु पाठः । २. मम भक्तिश्चेति । ३. शिरसाम् ।
४. जलं चान्द्रायणम् ।

तदायत्तं जगत्सर्वं व्रीहयः परमौषधीः ।
जायन्तेऽस्मिन् प्रलीयन्ते स्कन्देन्द्राः समरुद्गणाः ।
भूमे सोममयं सर्वं मम संस्थं भविष्यति ॥ ४७ ॥
तत्र सोमगिरिर्नाम यत्र धारा पतेद्भुवि ।
कुण्डेऽरण्ये विशाले तु एतत्ते कथितं मया ॥ ४८ ॥
यस्तत्र कुरुते स्नानं त्रिरात्रोपोषितो नरः ।
मोदते सोमलोकेषु एवमेतन्न संशयः ॥ ४९ ॥
अथात्र म्रियते देवि कृत्वा कर्म सुदुष्करम् ।
सोमलोकमतिक्रम्य मम लोकं प्रपद्यते ॥ ५० ॥
अस्ति चोर्वशिकुण्डेति गुह्यं क्षेत्रे परं मम ।
यत्र चैवोर्वशी भित्त्वा दक्षिणोरुमजायत ॥ ५१ ॥
तत्र तप्याम्यहं देवि देवानामपि कारणात् ॥ ५२ ॥
न मां कश्चिद् विजानाति स्वात्मनो हिं विजायते ।
ततो मे तप्यमानस्य बहुवर्षव्यतिक्रमात् ।
देवा अपि न जानन्ति वह्निब्रह्ममहेश्वराः ॥ ५३ ॥
एकैकेन फलेनात्र वदर्यान्तु सुनिश्चितम् ।
बहुवर्षसहस्रं तु तपश्चीर्णं मया भुवि ॥ ५४ ॥
तत्राहं दशकोट्यस्तु दशवर्षं दशार्बुदम् ।
दश भूमे तथान्यानि पद्मानि तपसि स्थितः ॥ ५५ ॥
ततस्ते मां न पश्यन्ति देवा गुह्यपथे स्थितम् ।
विस्मयं परमं जग्मुर्देवा दुःखपरायणाः ॥ ५६ ॥
अहं पश्यामि सर्वं वै तपःसंस्थो वसुन्धरे ।
न मां सर्वे प्रपश्यन्ति योगमायासमावृताः ॥ ५७ ॥
ततस्ता देवताः सर्वाः प्रत्यूचुश्च पितामहम् ।
बिष्णुना च विना लोके शान्तिन्नैव लभामहे ॥ ५८ ॥
देवानान्तु वचः श्रुत्वा ब्रह्मा लोकपितामहः ।
योगमायापटच्छन्नं कथयामास मां तदा ॥ ५९ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
तत्र जग्मुर्महाभागे तुष्यन्तः परमं मुदा ।
विभावयन्ति मां तत्र देवा इन्द्रपुरोगमाः ॥ ६० ॥
त्वया नाथ परित्यक्त्वा दुःखिताः शर्मवर्जिताः ।
त्रायस्व नो हृषीकेश परमानुग्रहेण वै ॥ ६१ ॥
एतत्कृत्वा विशालाक्षि देवान् प्रणतिपूर्वकम् ।
मया विलोकिताः सर्वे परां निर्वृतिमागताः ॥ ६२ ॥

एतस्मिन्नुर्वशीकुण्डे एकरात्रोषितो नरः ।
यः स्नाति सर्वपापेभ्यो मुच्यते नात्र संशयः ।
उर्वशीलोकमासाद्य क्रीडते कालमक्षयम् ॥ ६३ ॥
यस्तत्रोत्सृजते प्राणान् मम कर्मपरायणः ।
पुण्यपापविनिर्मुक्तो याति मल्लयतां प्रिये ॥ ६४ ॥
बदरीमाश्रमे पुण्यां यत्र यत्र स्थितः स्मरेत् ।
स याति वैष्णवं स्थानं पुनरावृत्तिवर्जितः ॥ ६५ ॥
य इदं शृणुयान्नित्यं मद्भक्तः सततं पठेत् ।
ब्रह्मचारी जितक्रोधः सत्यवादी जितेन्द्रियः ।
ध्यानयोगरतो नित्यं स मुक्तिफलभाग्भवेत् ॥ ६६ ॥
यस्यैतद्विदितं सर्वं ध्यानयोगं वसुन्धरे ।
योऽवगच्छति चात्मानं स गच्छेत् परमां गतिम् ॥६७॥

इति वाराहपुराणे भगवच्छास्त्रे बदरिकाश्रममाहात्म्यवर्णनं
नाम एकचत्वारिंशदधिकशततमोऽध्यायः ।

## अथ द्वाचत्वारिंशदधिकशततमोऽध्यायः

सूत उवाच

ततो देववचः श्रुत्वा धर्मकामा वसुन्धरा ।
कृताञ्जलिपुटा भूत्वा प्रसादयति माधवम् ॥ १ ॥

धरण्युवाच

दास्यां मे प्रणयं कृत्वा विज्ञाप्यं शृणु माधव ।
मृदुना च स्वभावेन वक्ष्यामि त्वां जनार्दन ॥ २ ॥
अल्पप्राणबला नार्यो यत्त्वया परिभाषितम् ।
अशक्ताः सहितुं ह्येताः क्षुधामनशनेऽबलाः ॥ ३ ॥
भुञ्जमाना नरा ह्यत्र रजसा यान्ति शं परम् ।
अन्नं ह्यनुग्रहं देव येन ते कर्मसंश्रिताः ॥ ४ ॥
तस्यास्तद्वचनं श्रुत्वा माधव्याः स तु माधवः ।
प्रहस्य भावशुद्धात्मा तत एवं प्रभाषति ॥ ५ ॥

वराह उवाच

साधु देवि वरारोहे मम कर्मव्यवस्थिते ।
पृष्टोऽहं परमं गुह्यं मम भक्तसुखावहम् ॥ ६ ॥
स्पृष्टा या रजसा देवि मम कर्मपरायणा ।
मां संस्पृशन्तु तत्रष्थं यत्र तिष्ठामि सुन्दरि ॥ ७ ॥
यदि भावस्तदा कश्चिद् भोजने कायसाधने ।
चित्तं न्यस्य[1] मयि क्षौणि भोक्तव्यञ्च न संशयः ॥ ८ ॥
न सा लिप्यति दोषेण भुञ्जमाना रजस्वला ।
अञ्जलिं शिरसा कृत्वा मयोक्तं मन्त्रमुत्तमम् ॥ ९ ॥
अनादिमध्यान्तमजं पुराणं
रजस्वला देववरं नमामि ।
तत एतेन मन्त्रेण भुक्त्वा देवि रजस्वला ।
करोति यानि कर्माणि न सा दुष्येत कर्हिचित् ॥ १० ॥
स्नात्वा सा तु महाभागे पञ्चमात्तु दिनात् पुनः ।
यथार्हङ्कुरुते कर्म मच्चित्ता मत्परायणाः ।
प्राप्नुयात् पुरुषत्वञ्च न्यस्तसंसारचिन्तनात् ॥ ११ ॥

धरण्युवाच

पुरुषा वा स्त्रियो वापि न पुमांसो न वा[1] स्त्रियः ।
कथं दोषेण मुञ्चन्ते जन्मसंसारबन्धनात् ॥ १२ ॥

---

१. चित्तं न्यस्य ।

वराह उवाच

इन्द्रियाणि निगृह्याथ[1] चित्तमप्यनुवेश्य च ।
मयि संन्यासयोगेन मम कर्मपरायणः ।
मम योगेषु संन्यासमेकचित्तो दृढव्रतः[2] ॥ १३ ॥
एवं कुर्वन् महाभागे स्त्रियो वा पुन्नपुंसकम् ।
ज्ञानसंन्यासयोगं वा यदीच्छेत् परमां गतिम् ॥ १४ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
मनो बुद्धिश्च चित्तञ्च ते ह्यनीशाः शरीरिणाम् ॥ १५ ॥
एकचित्तं मनः कृत्वा ज्ञानेन पृथुलोचने ।
समचित्तं प्रपद्यन्ते न ते लिप्यन्ति मानवाः ॥ १६ ॥
सर्वभक्ष्याणि भक्षन्तः पेयापेयांस्तथैव च ।
समं चित्तं[3] मयि यदि तदा तस्य न च क्रिया ॥ १७ ॥
चित्तं मनश्च बुद्धिश्च मत्संस्थञ्च समं यदि ।
यत्किञ्चित् कुर्वतः कर्म पद्मपत्रमिवाम्भसि ।
संयोगान्न च लिप्येत समत्वादेव नान्यथा ॥ १८ ॥
रात्रिं दिवं मुहूर्तं वा क्षणं वा यदि वा कला ।
निमेषं वा त्रुटिं वाऽथ[4] देवि चित्तं समङ्कुरु ॥ १९ ॥
सदा दिवानिशोश्चैव कुर्वन्तः कर्मसङ्करम् ।
तेपि यान्ति परां सिद्धिं यदि चित्तं व्यवस्थितम् ॥२०॥
जाग्रतः स्वपतो वापि शृण्वतः पश्यतोऽपि वा ।
यो मां चित्ते चिन्तयति मच्चिन्तस्य च किं भयम् २१
दुर्वृत्तमपि चाण्डालं ब्राह्मणं वाऽपथि स्थितम् ।
तं तु देवि प्रशंसामि नान्यचित्तं कदाचन ॥ २२ ॥
यजन्तः सर्वधर्मज्ञा ज्ञानसंस्कारसंस्कृताः ।
मयि चित्तं समाधाय मम कर्मपरायणाः ॥ २३ ॥
ये मत्कर्माणि कुर्वन्ति मया हृदि समाश्रिताः ।
सुखं निद्रां समादाय स्वपन्तः कर्मसंस्थिताः ॥ २४ ॥
येषां प्रसङ्गतश्चित्तं तेऽपि देवि मम प्रियाः ।
सर्वमात्मनि कर्म स्वं शुभं वा यदि वाऽशुभम् ॥२५॥
प्राप्नुवन्ति च दुःखानि भ्रमच्चित्ता नराधमाः ।
चित्तं नाशो हि लोकस्य चित्तं मोक्षस्य कारणम्[5] ॥२६॥

---

१. न च । २. निगृह्यार्थं । ३. समचित्तम् । ४. वापीति । ५. मोक्षस्य कर्मणः ।

तस्माच्चित्तं समादाय मां प्रपद्यस्व मेदिनि ।
न्यस्य ज्ञानञ्च योगञ्च एकचित्ता भजस्व माम्॥२७॥
मच्चित्तः सततं यो मां भजेत नियतव्रतः ।
मत्पार्श्वं प्राप्य परमं मद्भावायोपपद्यते ॥ २८ ॥
मया चैव पुरा सृष्टं प्रजार्थेन वसुन्धरे ।
मासे मासे तु गन्तव्यमृतुकाले व्यवस्थितम् ।
एकचित्तं समादाय यदीच्छेत मम प्रियम् ॥ २९ ॥
न गच्छेद् यदि मासे तु ऋतुकालव्यवस्थितम् ।
पितरस्तस्य हन्यन्ते दश पूर्वा दशापराः ॥ ३० ॥
न तत्र कामलोभेन मोहेन च वसुन्धरे ।
त्यक्त्वानङ्गञ्च मोहञ्च पित्रर्थाय स्त्रियं व्रजेत् ।३१।
द्वितीयान्न स्पृशेन्नारीं लोभमोहात् कथञ्चन ।
न संस्पृशेत् तृतीयां तु चतुर्थीं न कदाचन ॥ ३२ ॥
कृते संभोगधर्मे तु कृतकौतुकसंस्थितः ।
शयने न स्त्रियं पश्येद् यदीच्छेच्छुद्धिमुत्तमाम् ॥३३॥
कौतुके कृतकृत्ये तु मम कर्मपरायणाः ।
जलस्नानं ततः कुर्यादन्यवस्त्रपरिग्रहम् ॥ ३४ ॥
अपूर्णे ऋतुकाले तु योऽभिगच्छेद्रजस्वलाम् ।
रेतःपाः पितरस्तस्य एवमेतन्न संशयः ॥ ३५ ॥
एकां तु पुरुषो याति द्वितीयां काममोहितः ।
तृतीयां वा चतुर्थीं वा तदा स पुरुषाधमः ॥ ३६ ॥
सर्वस्यैव तु लोकस्य समयोऽयं हि मत्कृतः ।
ऋतुकाले तु सर्वासां पित्रर्थं भोग इष्यते ।
ऋतुकालाभिगामी यो ब्रह्मचार्येव सम्मतः ॥ ३७ ॥
न गच्छति च यः क्रोधान् मोहाद्वा पुरुषाधमः ।
ऋतौ ऋतौ भ्रूणहत्यां प्राप्नोति पुरुषश्चरन् ॥ ३८ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
ज्ञानं तु चित्तयोगस्य कर्मयोगस्य यत् क्रिया ॥ ३९ ॥
कर्मणा यान्ति मत्स्थानं यान्ति मद्गाननिष्ठिताः ।
यान्ति योगविदः स्थानं नास्ति चान्या परा गतिः ॥४०॥
ज्ञानयोगञ्च साङ्ख्यञ्च नास्ति चित्तव्यपाश्रितम् ।
लभन्ते पुष्कलां सिद्धिं मम मार्गानुसारिणः ॥ ४१ ॥
यस्तु भागवतो भूत्वा ऋतुकाले व्यवस्थितः ।
वायुभक्षस्ततः तिष्ठेद् भूमे त्रीणि दिनानि च ॥४२॥

अथ तत्र चतुर्थे तु दिने प्राप्ते वसुन्धरे ।
कृत्वा वै सिद्धिकर्माणि न गच्छत्यपराणि च ॥ ४३ ॥

ततः स्नानेन कुर्वीत शिरसोमलशोधनम् ।
शुक्लाम्बरधरो भूत्वा चित्तं कृत्वा समाहितम् ॥४४॥

ततो बुद्धिं मनश्चैव सम्यं कृत्वा वसुन्धरे ।
पश्चात् कुर्वन्ति कर्माणि सदा ते मे हृदि स्थिताः ।४५।

मम प्रापणकं कृत्वा ततः कुर्वन्ति भोजनम् ।
अञ्जलिं शिरसा कृत्वा मयोक्तं कर्म सस्मितम्[1] ॥४६॥

तत्र मन्त्रः—आदिर्भवान् गुप्तमनन्तमध्यो
रजस्वला देव वयं नमामः ।
उपोषितास्त्रीणि दिनानि चैवं
मुक्तौ रतं[2] वासुदेवं नमामः ॥ ४७ ॥

तत एतेन मन्त्रेण शुद्धाः भूमे रजस्वलाः ।
ये तु कुर्वन्ति कर्माणि स्नातास्नातानि भागशः । ४८ ।

एवं न दुष्यते देवि नारी वा पुरुषोऽपि वा ।
कुर्वन्ति मम कर्माणि ते यथावन्मम प्रियाः ॥ ४९ ॥

सर्वाण्यनुदिनं भद्रे मम चित्तानुसारिणः ।
प्राप्नुयात् पुरुषः स्त्री वा रजसा दूषिता अपि ॥ ५० ॥

एकचित्तस्ततो भूत्वा भूमे चेन्द्रियनिग्रहात् ।
मम योगेष्वसंन्यासं यदीच्छेत् परमां गतिम् ॥ ५१ ॥

एवं कुर्वन्ति ये नित्यं स्त्रियः पुंसो नपुंसकाः ।
ज्ञाने सत्यप्ययोगानां मम कर्मसु कर्मिणाम् ॥ ५२ ॥

अद्यापि मां न जानन्ति नराः संसारसंश्रिताः ।
ते वै भूमे विजानन्ति[3] ये मद्भक्त्या व्यवस्थिताः।५३।

मातापितृसहस्राणि पुत्रदारशतानि च ।
चक्रवत् परिवर्त्तन्ते यन्मोहान्मां न जानते ॥ ५४ ॥

अज्ञानेनावृतो लोको मोहेन च वशीकृतः ।
सङ्गैश्च बहुभिर्बद्धस्तेन चित्तं न संन्यसेत् ॥ ५५ ॥

अन्यत्र गच्छते माता पिता चान्यत्र गच्छति ।
पुत्राश्चान्यत्र गच्छन्ति दासश्चान्यत्र गच्छति ॥५६॥

---

१. कर्म संज्ञितम् । २. सूक्तौ रतम् । १. विजानन्तः ।

जायन्ते चात्मनः स्थाने स्वस्वकर्मसमुद्भवे ।
ज्ञानमूढा वरारोहे नराः संसारमोहिताः ॥ ५७ ॥

अल्पकालं परञ्चैव माससंवत्सरेति च ।
भविष्यन्ति पुनः कृत्वा न मे मूर्त्यां सहासते ॥ ५८ ॥

यस्यैतद् विदितं सर्वं न्यासयोगं वसुन्धरे ।
योगे न्यस्य सदात्मानं मुच्यते न च संशयः ॥ ५९ ॥

य एतच्छृणुयान्नित्यं कल्यमुत्थाय मानवः ।
पुष्कलां लभते सिद्धिं मम लोकञ्च गच्छति ॥ ६० ॥

एतत्ते कथितं भद्रे रहस्यं परमं महत् ।
त्वया पृष्टं च यद्देवि मम भक्तसुखावहम् ॥ ६१ ॥

इति वाराहपुराणे भगवच्छास्त्रे गुह्यकर्ममाहात्म्यवर्णनं
नाम द्वाचत्वारिंशदधिकशततमोऽध्यायः ।

# त्रयश्चत्वारिंशदधिकशततमोऽध्यायः

वराह उवाच

पुनरन्यत् प्रवक्ष्यामि एकान्तं शृणु सुन्दरि ।
स्थानं मे परमं गुह्यं मद्भक्तानां सुखावहम् ॥ १ ॥
जाह्नव्या दक्षिणे कूले विन्ध्यपृष्ठसमाश्रितम् ।
मन्दारेति च विख्यातं सर्वभागवतप्रियम् ॥ २ ॥
तत्र त्रेतायुगे भूमे रामो नाम महद्युतिः [१] ।
भविष्यति न सन्देहः सच मां स्थापयिष्यति ॥ ३ ॥
नारायणमुखाच्छ्रुत्वा धर्मकामा वसुन्धरा ।
उवाच मधुरं वाक्यं लोकनाथं जनार्दनम् ॥ ४ ॥

धरण्युवाच

देवदेव महादेव हरे नारायण प्रभो ।
मन्दरेति त्वया प्रोक्तं देव धर्मार्थसंयुतम् ॥ ५ ॥
मन्दारे कानि कर्माणि कुर्वन्ति च ततो नराः ।
कांश्च लोकान् प्रपद्यन्ते तत्र कर्मकृतो नराः ॥ ६ ॥
मन्दारे कानि गुह्यानि रहस्यं किञ्च तत्र वै ।
वक्तुमर्हस्यशेषेण परं कौतूहलं मम ॥ ७ ॥

वराह उवाच

शृणु सुन्दरि यत्नेन यन्मां त्वं परिपृच्छसि ।
कथयिष्यामि ते गुह्यां मन्दारस्य महाक्रियाम् ॥ ८ ॥
क्रीडमानोऽस्म्यहं तत्र मन्दारे पुष्पिते तदा ।
मन्दारपुष्पमादाय मनोज्ञं न्यस्य वै हृदि ॥ ९ ॥
ततो ममाभवच्चिन्ता मन्दारे पर्वतस्थिते ।
तत्रैकादश कुण्डानि निःसृतानि गिरौ धरे ॥ १० ॥
विन्ध्ये च मत्प्रभावेण मन्दारश्च महाद्रुमः ।
स्तितोऽहं तत्र सुभगे भक्त्यानुग्रहकामया ॥ ११ ॥
दर्शनीयतमं स्थानं मनोज्ञञ्च शिलातलम् ।
यत्र तिष्ठाम्यहं देवि मन्दारद्रुममाश्रितः ॥ १२ ॥
विस्मयं शृणु सुश्रोणि मन्दारेऽस्मिन् महाद्रुमे ।
द्वादश्याञ्च चतुर्दश्यां स पुष्यति महाद्रुमः ॥ १३ ॥

---

१. महाकृतिः ।

तत्र मध्याह्नवेलायां वीक्ष्यमाणो जनैस्ततः ।
ततोऽन्यदिनमासाद्य दृश्यते न कदाचन ॥ १४ ॥
तस्मिन् मन्दारकुण्डे तु एकभक्तोषितो नरः ।
स्नानं करोति शुद्धात्मा स गच्छेत् परमां गतिम् ॥१५॥
अथ प्राणान् प्रमुच्येत कुण्डे मन्दारसंस्थिते ।
तपः कृत्वा वरारोहे मम लोकाय गच्छति ॥ १६ ॥
तस्य चोत्तरपार्श्वे च प्रापणं नाम तं गिरिम् ।
तिस्रो धाराः पतन्त्यत्र दक्षिणां दिशमाश्रिताः ॥ १७ ॥
स्नाकुण्डमिति ख्यातं तस्मिन् क्षेत्रे परं मम ।
दक्षिणे पतते धारा स्रवते चोत्तरामुखम् ॥ १८ ॥
तत्र स्नातो वरारोहे एकरात्रोषितो नरः ।
मोदते दक्षिणे शृङ्गे तस्मिन् मेरौ शिलोच्चये ॥ १९ ॥
तत्राथ मुञ्चयेत् प्राणान् मम कर्मपरायणः ।
सर्वसङ्गान्परित्यज्य मम लोकाय गच्छति ॥ २० ॥
तस्य पूर्वोत्तरे पार्श्वे गुह्यं वैकुण्ठकारणम् ।
यत्र धारा पतत्येका हरिद्रावर्णसन्निभा ॥ २१ ॥
यस्तत्र कुरुते स्नानमेकरात्रोषितो नरः ।
नाकपृष्ठं समासाद्य मोदते सह दैवतैः ॥ २२ ॥
तत्राऽथ मुञ्चते प्राणान कृतकृत्यः सुनिश्चितः ।
तारयित्वा कुलं सर्वं मम लोकं प्रपद्यते ॥ २३ ॥
तस्य दक्षिणपूर्वेण समस्रोतो वराङ्गने ।
पतते विन्ध्यशृङ्गेषु अगाधश्च महाह्रदः ॥ २४ ॥
तत्र स्नानन्तु कुर्वीत एकभक्तोषितो नरः ।
मोदते पूर्वपार्श्वे तु तस्मिन् मेरौ शिलोच्चये ॥ २५ ॥
अथात्र मुञ्चते प्राणान् मम चित्तव्यवस्थितः।
छित्वा वै सर्वसंसारं मम लोकाय गच्छति ॥ २६ ॥
मन्दारस्य तु पूर्वेण गुह्यं कोटरसंस्थितम् ।
यत्र धारा पतत्येका मुसलेन समन्विता ॥ २७ ॥
तत्र स्नानं प्रकुर्वीत पञ्चभक्तोषितो नरः ।
मोदते पूर्वपार्श्वे च मेरौ तस्मिञ्छिलोच्चये ॥ २८ ॥
अथात्र मुञ्चते प्रणान् कृत्वा कर्म सुदुष्करम् ।
मेरुशृङ्गं समुत्सृज्य मम लोकञ्च गच्छति ॥ २९ ॥
तस्य दक्षिणपार्श्वे तु गुह्यं विन्ध्यविनिःसृतम् ।
पञ्च धाराः पतन्त्यत्र मुसलेन समन्विताः ॥ ३० ॥

तत्र स्नानं प्रकुर्वीत अहोरात्रोषितो नरः ।
मोदते दक्षिणे शृङ्गे महामेरौ शिलोच्चये ॥ ३१ ॥
अथात्र मुञ्चते प्राणान् कृत्वा कर्म सुदुष्करम् ।
मेरुशृङ्गं परित्यज्य मम लोकं प्रपद्यते[1] ॥ ३२ ॥
दक्षिणे पश्चिमे भागे मन्दारस्य यशस्विनि ।
अत्र धारा पतत्येका आदित्यसमतेजसा ॥ ३३ ॥
तत्र स्नानं प्रकुर्वीत अहोरात्रोषितो नरः ।
मोदते पश्चिमे भागे ध्रुवो यत्र प्रवर्तते ॥ ३४ ॥
अथात्र मुञ्चते प्राणान् मम कर्मव्यवस्थितः ।
सर्वपापविनिर्मुक्तो मम लोके च मोदते ॥ ३५ ॥
तस्य पश्चिमपार्श्वे तु गुह्यं देवसमन्वितम् ।
चक्रावर्तमिति ख्यातमगाधश्च महाह्रदः ॥ ३६ ॥
स्नानं करोति यस्तत्र पञ्चभक्तोषितो नरः ।
मोदते मेरुशृङ्गेषु स्वच्छन्दगमनालयः ॥ ३७ ॥
अथ वै मुञ्चते प्राणांश्चक्रवर्ती महायशाः ।
शृङ्गान् सर्वान् परित्यज्य मोदते मम सन्निधौ॥ ३८ ॥
दिशं वायव्यमाश्रित्य तस्मिन् विन्ध्यशिलोच्चये ।
तिस्रो धाराः पतन्त्यत्र मुसलाकृतयः शुभाः ॥ ३९ ॥
तत्र स्नानं प्रकुर्वीत मम चित्तव्यवस्थितः ।
मोदते सर्वशृङ्गेषु एकचित्तं समाश्रितः ॥ ४० ॥
अथात्र मुञ्चते प्राणान् तस्मिन् गुह्ये यशस्विनि ।
सर्वसङ्गं परित्यज्य मम लोकाय गच्छति ॥ ४१ ॥
तस्य त्रिक्रोशमात्रेण दक्षिणां दिशमाश्रितः ।
गुह्यो गभीरको नाम अगाधश्च महाह्रदः ॥ ४२ ॥
तत्र स्नानं प्रकुर्वीत अष्टभक्तोषितो नरः ।
मोदते सर्वद्वीपेषु स्वच्छन्दगमनालयः ॥ ४३ ॥
अथ वै मुच्यते प्राणान् मम कर्मव्यवस्थितः ।
सर्वद्वीपान् परिज्य मम लोकं प्रपद्यते ॥ ४४ ॥
तस्य पश्चिमपार्श्वे तु गुह्यं वै परमं महत् ।
सप्त धाराः पतन्त्यत्र अगाधश्च महाह्रदः ॥ ४५ ॥
तत्र स्नानं प्रकुर्वीत अहोरात्रोषितो नरः ।
मोदते शक्रलोके तु स्वच्छन्दगमनालयः ॥ ४६ ॥

---

१. मम लोकं च गच्छति ( ग ) ।

अथ वै मुञ्चते प्राणान् स्वकर्मपरिनिष्ठितः ।
सर्वसङ्गं परित्यज्य मम लोकं प्रपद्यते ॥ ४७ ॥
मण्डलं तस्य क्षेत्रस्य कथ्यमानं मया शृणु ।
समन्तपञ्चकञ्चैव मन्दारस्य गिरौ मम ।
तत्र तिष्ठामि सुश्रोणि विन्ध्यस्य गिरिमूर्धनि ॥ ४८ ॥
मन्दारे परमं गुह्यं तस्मिन् गुह्यशिलोच्चये ।
दक्षिणे संस्थितं चक्रं वामे स्थाने च वै गदा ॥ ४९ ॥
य एतच्छृणुयान्नित्यं गुह्यं मन्दारसंस्थितम् ।
लाङ्गले मुसलञ्चैव शङ्खस्तिष्ठति चाग्रतः ।
तव चैव प्रियार्थाय मम भक्तसुखावहम् ॥ ५० ॥
एतन्न जानते केचिन्मम मायाविमोहिताः ।
मुच्य भागवताञ्छुद्धान् ये च वाराहसंस्थितः ॥ ५१ ॥

इति वाराहपुराणे भगवच्छास्त्रे मन्दारमहिमवर्णनो नामत्रयश्चत्वारिंशदधिकशततमोऽध्यायः ।

## चतुश्चत्वारिंशदधिकशततमोऽध्यायः

सूत उवाच

श्रुत्वा मन्दारमाहात्म्यं धर्मकामा वसुन्धरा ।
विस्मयं परमं गत्वा पुनः पप्रच्छ माधवम् ॥ १ ॥

धरण्युवाच

मया देवप्रसादेन श्रुतं मन्दारवर्णनम् ।
मन्दारात् परमं स्थानं विष्णोः तद्वक्तुमर्हसि ॥ २ ॥

वराह उवाच

शृणु तत्त्वेन मे देवि यन्मां त्वं परिपृच्छसि ।
कथयिष्यामि मे गुह्यं शालग्राममिति स्मृतम् ॥ ३ ॥
द्वापरे तु युगे भूमे यदूनां कुलसङ्कुले ।
तत्र शूर इति ख्यातो यदूनां वंशवर्धनः ॥ ४ ॥
तस्य पुत्रो महाभागे सर्वकर्मपरायणः ।
वसुदेवो गृहे जातो यादवानां कुलोद्वहः ॥ ५ ॥
तस्य भार्या च वसुधे सर्वावयवसुन्दरी ।
देवकी नाम नाम्ना च मनोज्ञा शुभदर्शना ॥ ६ ॥
तस्या गर्भे महाभागे भविष्यामि न संशयः ।
वासुदेव इति ख्यातो देवानामरिमर्दनः ॥ ७ ॥
ततोऽपि संस्थिते तत्र यादवानां कुलोद्वहे ।
तत्र ब्रह्मर्षिपरमः साङ्कलायन एव च ॥ ८ ॥
ममैवाराधनार्थाय भ्रमते स दिशो दश ।
पुत्रार्थं स तपस्तेपे मेरुशृङ्गे समाहितः ॥ ९ ॥
ततः पिण्डाकरे गत्वा मम क्षेत्रे वसुन्धरे ।
लोहार्गले ततो गत्वा सहस्रञ्चैव तिष्ठति ॥ १० ॥
ईश्वरेण समं पूर्वं[1] सर्वयोगेश्वरं स्थितम् ।
न च मां पश्यते देवि मार्गमाण इतस्ततः ॥ ११ ॥
ईश्वरेण समं पूर्वमहमासं वसुन्धरे ।
तस्यैव तप्यमानस्य साङ्कलायनकस्य ह ॥ १२ ॥
तस्मिन् क्षेत्रे हरो देवो मत्स्वरूपेण संयुतः ।
शालग्रामे गिरौ तस्मिञ्छिलारूपेण तिष्ठति ॥ १३ ॥
अहं तिष्ठामि तत्रैव गिरिरूपेण नित्यदा ।

---

१. पुत्रम् ।

तस्मिञ्छिलाः समग्रास्तु मत्स्वरूपा न संशयः।
पूजनीयाः प्रयत्नेन किं पुनश्चक्रलाञ्छिताः ॥ १४ ॥
लिङ्गरूपेण च हरस्तत्र देवालये गिरौ ।
शिवनामाः शिलास्तत्र चक्रनामास्तथा शिलाः ॥१५॥
सोमेश्वराधिष्ठितस्तु शिवरूपो गिरिः स्मृतः ।
सोमेन तत्र संस्थाप्य स्वनाम्ना लिङ्गमुत्तमम् ।
वर्षाणां तु सहस्रं वै स्वशापस्य निवृत्तये ॥ १६ ॥
ततः शापाद्[1] विनिर्मुक्तः तेजसा च परिप्लुतः।
स्वकं तेजो बलम्प्राप्य तुष्टाव गिरिजापतिम् ।
सोमेश्वराच्च वरदमाविर्भूतं त्रियम्बकम् ॥ १७ ॥

सोम उवाच

शिवं सौम्यमुमाकान्तं भक्तानुग्रहकातरम् ।
नतोऽस्मि पञ्चवदनं नीलकण्ठं त्रिलोचनम् ॥ १८ ॥
शशाङ्कशेखरं दिव्यं सर्वदेवनमस्कृतम् ।
पिनाकपाणिं देवेशं भक्तानामभयप्रदम् ॥ १९ ॥
त्रिशूलिनं डमरुणा लसद्धस्तं वृषध्वजम् ।
नानामुखैर्गणैर्जुष्टं नानारूपैर्भयानकैः ॥ २० ॥
त्रिपुरघ्नं महाकालमन्धकारिनिषूदनम् ।
गजाजिनावृतं स्थाणुं व्याघ्रचर्मविभूषितम् ॥ २१ ॥
नागभोगोपवीतञ्च रुद्रमालधरं प्रभुम् ।
अरूपमपि सर्वेशं भक्तेच्छोपात्तविग्रहम् ॥ २२ ॥
वह्निसोमार्कनयनं मनोवाचामगोचरम् ।
जटाजूटप्रकटितं गङ्गासंमार्जितांहसम् ।
कैलासनिलयं शम्भुं हिमाचलकृताश्रमम् ॥ २३ ॥
एवं स्तुतस्तदा शम्भुरिन्दुं वचनमब्रवीत् ।
वरं वरय भद्रं ते यत्ते मनसि वर्तते ।
दुर्लभं दर्शनं यस्मात् प्राप्तवानसि गोपते ॥ २४ ॥

सोम उवाच

वरं ददासि चेद्देव मम लिंगे सदा वस ।
एतत्लिङ्गस्य भक्तानां पूरयस्व मनोरथम् ॥ २५ ॥

---

१. ततः क्षयात् ।

देवदेव उवाच

विष्णुसान्निध्यमप्यत्र सदैव निवसाम्यहम् ।
विशेषतस्त्वदीयेऽस्मिन्नद्यप्रभृति गोपते ।
ममैवान्या परा मूर्तिस्त्वं शशाङ्क न संशयः ॥ २६ ॥

एतल्लिंगार्च्चकानाञ्च भक्तानां मम सर्वदा ।
वरान् दास्यामि भद्रं ते देवानामपि दुर्लभान् ॥ २७ ॥

सालङ्कायनकाख्यस्य मुनेस्तु तपसो बलात् ।
विष्णुना सह संमन्त्र्य स्थितावावां कलानिधे ॥ २८ ॥
शालग्रामगिरिर्विष्णुरहं सोमेश्वराभिधः ।
तयोः पर्वतयोर्या वै शिला विष्णुशिवाभिधाः ॥ २९ ॥
रेवया च कृतं पूर्वं तपः शिवसुतुष्टिदम् ।
मम त्वत्सदृशः पुत्रो भूयादिति विभूतया[1] ॥ ३० ॥

अहं कस्यापि न सुतः किं करिष्यामि चिन्तयन् ।
रेवायास्तु वरो देयस्त्ववश्यं मृगलाञ्छन ।
निश्चित्यैवं तदा प्रोक्तः प्रसन्नेनान्तरात्मना ॥ ३१ ॥
लिंगरूपेण ते देवि गजाननपुरस्कृतः ।
गर्भे तव वसिष्यामि पुत्रो भूत्वा शिवप्रिये ॥ ३२ ॥

मम त्वमपरा मूर्तिः ख्याता जलमयी शिवा ।
शिवशक्तिविभेदेन आवमेकत्र संस्थितौ ॥ ३३ ॥
एवं दत्तवरा रेवा मत्सान्निध्यमिहागता ।
रेवाखण्डमिति ख्याते ततः प्रभृति गोपते ॥ ३४ ॥
गण्डक्यापि पुरा तप्तं वर्षाणामयुतं विधो ।
शीर्णपीर्णाशनं कृत्वा वायुभक्षाऽप्यनन्तरम् ।
दिव्यवर्षशतं तेपे विष्णुं चिन्तयती तदा ॥ ३५ ॥
ततः साक्षात् जगन्नाथो हरिर्भक्तजनप्रियः ।
उवाच मधुरं वाक्यं प्रीतः प्रणतवत्सलः ॥ ३६ ॥
गण्डकि त्वां प्रसन्नोऽस्मि तपसा विस्मितोऽनघे ।
अनविच्छिन्नया भक्त्या वरं वरय सुव्रते ।
किं देयं तद्वदस्वाशु प्रीतोऽस्मि वरवर्णिनि ॥ ३७ ॥
गण्डक्यापि पुरा दृष्ट्वा शङ्खचक्रगदाधरम् ।
दण्डवत् प्रणता भूत्वा ततः स्तोतुं प्रचक्रमे ॥ ३८ ॥

---

१. विभो तया ।

अहो देव मया दृष्टो दुर्दर्शो योगिनामपि ।
त्वया सर्वमिदं सृष्टं जगत्स्थावरजङ्गमम् ।। ३९ ।।
तदनुत्वं प्रविष्टोऽसि पुरुषस्तेन चोच्यसे ।
त्वल्लीलोन्मीलिते विश्वे कः स्वतन्त्रोस्ति वै पुमान् ।४०।
अनाद्यन्तमपर्यन्तं यद्ब्रह्म श्रुतिबोधितम् ।
तदेव त्वं महाविष्णो यस्त्वां वेद स वेदवित् ।। ४१ ।।
तवैवाद्या जगन्माता या शक्तिः परमा स्मृता ।
तां योगमायाप्रकृतिं प्रधानमिति चक्षते ।। ४२ ।।
निर्गुणः पुरुषोऽव्यक्तश्चित्स्वरूपो निरञ्जनः ।
आनन्दरूपः शुद्धात्मा ह्यकर्ता निर्विकारकः ।। ४३ ।।
स्वां योगमायामाविश्य कर्तृत्वं प्राप्तवानसि ।
प्रकृत्या सृज्यमानेऽस्मिन् द्रष्टा साक्षी निगद्यसे।।४४।।
प्रकृतेस्त्रिगुणैरस्मिन् सृज्यमानेऽपि नान्यथा ।
सान्निध्यमात्रतो देव त्वयि स्फुरति कारणे ।। ४५ ।।
स्फटिके हि यथा स्वच्छे जवाकुसुमरागतः ।
प्रकाश्यते त्वत्प्रकाशाज्ज्योती रूपं नतास्मि तत् ।४६।
ब्रह्मादयोऽपि कवयो न विदन्ति यथार्थतः ।
तं कथं वेद्म्यहं मूढा तव रूपं निरञ्जनम् ।। ४७ ।।
मूढस्य जगतो मध्ये स्थिता किञ्चिदजानती ।
त्वया धृता[1] कृता चास्मि योग्यायोग्यमविन्दती ।४८।
तेन लोके महत्वञ्च त्वत्प्रसादेन चेच्छिता[2] ।
ययाचेऽज्ञतयोदार तन्मे दातुं त्वमर्हसि ।।
दयालुरसि दीनेषु नेति मां न वद प्रभो ।। ४९ ।।
ततः प्रोवाच भगवान् देवि यद्यत् त्वमिच्छसि ।
तद् याचय वरारोहे अदेयमपि सर्वथा ।। ५० ।।
यद् दुर्लभं मनुष्याणां शीघ्रं याचय मां प्रति ।
मद्दर्शनमनुप्राप्य को वाऽपूर्णो मनोरथः ।। ५१ ।।
ततो हिमांशो सा देवी गण्डकी लोकतारिणी ।
प्राञ्जलिः प्रणता भूत्वा मधुरं वाक्यमब्रवीत् ।। ५२ ।।
यदि देव प्रसन्नोऽसि देयो मे वाञ्छितो वरः ।
मम गर्भगतो भूत्वा विष्णो मत्पुत्रतां व्रज ।। ५३ ।।
ततः प्रसन्नो भगवांश्चिन्तयामास गोपते ।
किं याचितं निम्नगया नित्यं मत्सङ्गलुब्धया ।

---

१. त्वया धृष्टा । २. इच्छति ।

दास्यामि याचितं येन लोकानां भवमोक्षणम् ।
इत्येवं कृपया देवो निश्चित्य मनसा स्वयम् ।
गण्डकीमवदत् प्रीतः शृणु देवि वचो मम ॥ ५४ ॥
शालग्रामशिलारूपी तव गर्भगतः सदा ।
स्थास्यामि तव पुत्रत्वे भक्तानुग्रहकारणात् ॥ ५५ ॥
मत् सान्निध्यान्नदीनां त्वमतिश्रेष्ठा भविष्यसि ।
दर्शनात् स्पर्शनात् स्नानात् पानाच्चैवावगाहनात् ।
हरिष्यसि महापापं वाङ्मनःकायसम्भवम् ॥ ५६ ॥
यः स्नास्यति विधानेन देवर्षिपितृतर्पकः ।
तर्पयेत् स्वपूतृञ्चापि तारयित्वा दिवं नयेत् ।
स्वयं मम प्रियो भूत्वा ब्रह्मलोकं गमिष्यति ॥ ५७ ॥
यदि त्वय्युत्सृजेत् प्राणान् मम कर्मपरायणः ।
सोऽपि याति मम स्थानं यत्र गत्वा न शोचति ॥५८॥
एवं दत्त्वा वरान् देव्यै तत्रैवान्तरधीयत ॥ ५९ ॥
ततः प्रभृति तिष्ठामः क्षेत्रेऽस्मिन् शशलाञ्छन ।
अहञ्च भगवान् विष्णुर्भक्तेच्छोपात्तविग्रहः ॥ ६० ॥
एवमुक्त्वा द्विजपतिमन्वगृह्णात्[1] हरः प्रभुः ।
प्रभासयन्नुडुपतेरङ्गानि प्रममार्ज ह ॥ ६१ ॥
शङ्करेण करेणापि नीरुजानि विधाय च ।
पश्यतस्तस्य तु विधोस्तत्रैवान्तरधीयत ॥ ६२ ।
सोमेशाद् दक्षिणे भागे बाणेनाद्रिं विभिद्य वै ।
रावणेन प्रकटिता जलधारातिपुण्यदा ।
बाणगङ्गेति विख्याता या स्नाता अघहारिणी ॥६३॥
सोमेशात् पूर्वदिग्भागे रावणस्य तपोवनम् ।
यत्र स्थित्वा त्रिरात्रेण तपसः फलमश्नुते ॥ ६४ ॥
यत्र नृत्येन देवेशस्तुष्टस्तस्मै वरं ददौ ।
तेन रावणनृत्येन प्रख्यातो नर्तनाचलः ॥ ६५ ॥
स्नात्वा तु बाणगङ्गायां दृष्ट्वा बाणेश्वरं प्रभुम् ।
गङ्गास्नानफलं प्राप्य मोदते देववद्दिवि ॥ ६६ ॥
सालङ्कायनोऽप्याशु क्षेत्रे तस्मिन् परं मम ।
शालग्रामे महातीव्रमास्थितं परमं तपः ॥ ६७ ॥

१. अनुगृह्य ।

अन्यच्च ते प्रवक्ष्यामि परं गुह्यं वसुन्धरे ।
तप्यतस्तस्य तु मुनेरीश्वरेण समं सुतम् ।
प्राप्स्यामीति परं भावं ज्ञात्वा देवो महेश्वरः ॥ ६८ ॥
सुन्दरं त्वपरं रूपं धृत्वा दृष्टिसुखावहम् ।
सालङ्कायनपुत्रत्वं योगमायामुपाश्रितः ॥ ६९ ॥
प्राप्नोति तं न जानाति दक्षिणं पार्श्वमास्थितः[1] ।
मायायोगबलोपेतस्त्र्यक्षो वै शूलपाणिधृक् ॥ ७० ॥
रूपवान् गुणवांश्चैव वपुषाऽऽदित्यसन्निभः ।
स तं न ज्ञायते जातं ममैवाराधने स्थितः ॥ ७१ ॥
अथ नन्दी प्रहस्याह महादेवाज्ञया मुनिम् ।
उत्तिष्ठ मुनिशार्दूल सफलस्ते मनोरथः ।
त्वद्दक्षिणाङ्गाज्जातोऽस्मि पुत्रस्ते शाधि मां प्रभो ॥७२॥
त्वया तपः समारब्धमीश्वरेण समं सुतम् ।
प्राप्स्यामीति ततो मह्यं सदृशोऽन्यो न कश्चन ।
विचार्येति तवाहं वै जातोऽस्मि स्वयमेव च ॥ ७३ ॥
तपसाराधयन् देवं शङ्खचक्रगदाधरम् ।
प्राप्तोऽसि परमां सिद्धिं त्वत्पुत्रोऽहं यतः स्थितः ॥७४॥
श्रुत्वा तन्नन्दिनो वाक्यं प्रहृष्टवदनो मुनिः ।
विस्मितस्तु तदोवाच कथं नाद्यापि मे हरिः ।
दृग्गोचरत्वमायाति जातं चेत्तपसः फलम् ॥ ७५ ॥
यावत्तं न समीक्षिष्ये तावन्न विरतं तपः ।
अहमत्रैव वत्स्यामि यावदच्युतदर्शनम् ॥ ७६ ॥
पुत्र त्वमपि योगेन मथुरां व्रज सत्वरम् ।
मदाश्रमे तत्र पुण्ये धनं गोव्रजसंकुलम् ।
आमुष्यायणमादाय शीघ्रमत्र समानय ॥ ७७ ॥
ततस्त्वाज्ञां समादाय नन्दी सत्वरमाव्रजत् ।
गत्वा च मथुरां तस्य ऋषेराश्रममीक्ष्य च ।
दृष्ट्वा मुष्यायणं तत्र पृष्ट्वा नाम तमच्युत ।
गृहे वित्ते च कुशलमपृच्छद् गोधनेषु च ॥ ७८ ॥
साङ्कलायनशिष्योऽपि आमुष्यायणसंज्ञितः ।
सर्वत्र कुशलं साधो प्रभावात्तु गुरोर्मम ।
गुरोश्च कुशलं ब्रूहि कुत्रास्ते स तपोधनः ॥ ७९ ॥

---

१. आश्रितः ।

भवान् कुतः समायातः किमत्रागमकारणम् ।
तन्मे विस्तरतो ब्रूहि अर्घ्यश्चैवोपगृह्यताम् ॥ ८० ॥

इत्युक्तः सोऽर्घ्यमादाय विश्रम्य च ततो गुरोः ।
वृत्तान्तं कथयामास स्वागमस्य च कारणम् ॥ ८१ ॥

ततस्तेनैव सहितो गोधनं तत्प्रगृह्य च ।
दिनैः कतिपयैश्चैव गण्डकीतीरमाश्रितः ॥ ८२ ॥
शनैरुत्तीर्य च ततस्त्रिवेणीं प्राप्य हर्षितः ।
देविका नाम देवानां प्रभावाच्च तपस्यताम् ।
नियमार्थं समुद्भूता गण्डक्या मिलिता शुभा ॥ ८३ ॥

आश्रमादपरा चासीत् पुलस्त्यपुलहाश्रमात् ।
गण्डक्या मिलिता सापि त्रिवेणी गण्डकीत्यभूत् ।८४।
कामिकं तन्महातीर्थं पितॄणामतिवल्लभम् ।
तत्र स्थितं महालिंगं त्रिजलेश्वरसंज्ञितम् ।
मुक्तिभुक्तिप्रदं देवि दर्शनादघनाशनम् ॥ ८५ ॥

धरण्युवाच

प्रयागे या त्रिवेणीति यत्र देवो महेश्वरः ।
शूलटङ्क इति ख्यातः सोमेश इति चापरः ॥ ८६ ॥
वेणिमाधवनाम्नाऽपि यत्र विष्णुः स्वयं स्थितः ।
गङ्गा च यमुना चैव सरस्वत्यपरा नदी ॥ ८७ ॥
सर्वेषाञ्चैव देवानामृषीणां सरसामपि ।
सर्वेषाञ्चैव तीर्थानां समाजस्तत्र मे श्रुतः ॥ ८८ ॥

यत्राप्लुता दिवं यान्ति मृता मुक्तिं प्रयान्ति च ।
तीर्थराज इति ख्यातं तत्तीर्थं केशवप्रियम् ।
सैव त्रिवेणी विख्याता किमपूर्वा प्रशंससि ॥ ८९ ॥

एतद् गुह्यतमं प्रोक्तं त्वया विष्णो न संशयः ।
तत् कथ्यतां महाभाग लोकानां हितकाम्यया ।
मय्यनुक्रोशबुद्ध्या च कृपां कुरु दयानिधे ॥ ९० ॥

वराह उवाच

शृणुष्व देवि भद्रं ते यद्गुह्यं परिपृच्छसि ।
अत्र ते कीर्तयिष्यामि सेतिहासां कथां शुभाम् ॥९१॥

पुरा विष्णुस्तपस्तेपे लोकानां हितकाम्यया ।
हिमालये गिरौ रम्ये देवतागणसेविते ॥ ९२ ॥

ततो बहुतिथे काले याते[1] सति तपस्यतः ।
तीव्रं तेजः प्रादुरासीत् येन लोकाश्चराचराः ॥ ९३ ॥

तस्योष्माणा समुद्भूतः स्वेदपूरस्तु गण्डयोः ।
तेन जाता धुनी दिव्या लोकानामघहारिणी ॥ ९४ ॥
महर्लोकादयः सर्वे विस्मिताः सर्वतो दिशम् ।
तस्य प्रभावमिच्छन्तो ज्ञातुं नेशुः कथञ्चन ॥ ९५ ॥

देवाः सर्वे ततो जग्मुर्ब्रह्माणं प्रति चोत्सुकाः ।
पप्रच्छुः प्रभवं तस्य प्रणम्य च पुनः पुनः ॥ ९६ ॥
ब्रह्मापि हि न जानाति मोहितस्तस्य मायया ।
ततो देवैः समं ब्रह्मा शङ्करं प्रत्युपस्थितः ॥ ९७ ॥
तं दृष्ट्वा सहसा देवैः समेतं प्रत्युपस्थितम् ।
पप्रच्छ तं महादेवस्तदागमनकारणम् ॥ ९८ ॥

ब्रह्मा तञ्च महादेवं पप्रच्छ प्रणतः स्थितः ।
अत्यद्भुतं महत्तेजः किमद्भुतं महेश्वर ॥ ९९ ॥
येन प्रत्याहता क्ष्माऽसौ जगद्व्यतिकरावहत् ।
किन्नु स्यात् कथमेतत्स्यात् कश्चास्य प्रभवो विभो ।१००।

शिवं क्षणं ततो ध्यात्वा ब्रह्मा द्यान् प्रत्युवाच ह ।
महसोऽस्य समुत्पत्तिं महतो दर्शयामि वः ॥१०१॥
जगाम देवसहितः सोमः सहगणः प्रभुः ।
यत्रास्ते भगवान् विष्णुर्महता तपसान्वितः ॥१०२॥

उवाच परमप्रीतस्तदा शम्भुः स्मयन्निव ।
तपस्यसि किमिच्छन्तस्त्वं कर्ता जगतां प्रभुः ।
सर्वाधारोऽखिलाध्यक्षस्तत् किं यत्तव दुर्लभम् ॥१०३॥
एवमुक्तः प्रत्युवाच प्रणम्य जगतां प्रभुः ।
अहं लोकहितार्थाय तपस्तप्तुं समुद्यतः ॥१०४॥
त्वत्तो वरानभीप्सन् वै त्वद्दर्शनसमुत्सुकः ।
त्वद्दर्शनमनुप्राप्य कृतार्थोऽस्मि जगत्पते ॥१०५॥

शिव उवाच

मुक्तिक्षेत्रमिदं देव दर्शनादेव मुक्तिदम् ।
गण्डस्वेदोद्भवा यत्र गण्डकी सरितां वरा ।
भविष्यति न सन्देहो यस्या गर्भे भविष्यसि ॥१०६॥

---

१. गते सति ।

त्वयि स्थिते जगन्नाथे तव सान्निध्यकारणात् ।
अहं ब्रह्मा च देवाश्च ऋषिभिः सह केशव ॥१०७॥
सर्वे वेदाश्च यज्ञाश्च सर्वतीर्थानि चाच्युत ।
वसिष्यामः सदैवात्र गण्डक्यां जगतां पते ॥१०८॥
कार्तिकं सकलं मासं यः स्नास्यति नरः प्रभो ।
सर्वपापविनिर्मुक्तो मुक्तिभागी न संशयः ॥१०९॥
तीर्थानां परमं तीर्थं मङ्गलानाञ्च मङ्गलम् ।
यत्र स्नानेन लभ्येत गङ्गास्नानफलं नरैः ॥११०॥
स्मरणाद् दर्शनात् स्पर्शान्निष्पापो जायते नरः।
यस्यास्तत् समतां कन्या लभेद् गङ्गां विना नदीम्।१११।
यत्र सा परमा पुण्या गण्डकी भुक्तिमुक्तिदा ।
अपरा देविका नाम्ना[1] गण्डक्या सह सङ्गता ॥११२॥
पुलस्त्यपुलहौ पूर्वं तेपाते परमं तपः ।
यत्र सृष्टिविधानार्थं कृत्वाश्रमपदं पृथक् ।
सृष्टेर्विधानसामर्थ्यं यत्र लब्धं ततः परम् ॥११३॥
ततोऽभूद् ब्रह्मतनया पुण्या सा सरितां वरा[2] ।
गण्डक्या यत्र मिलिता ब्रह्मपुत्री यशस्विनी[3]॥११४॥
त्रिवेणी सा महापुण्या देवानामपि दुर्लभा ।
धरे जानीहि तत् क्षेत्रं योजनं परमार्चितम् ॥११५॥
पुरा वेदनिधेः पुत्रौ जयो विजय एव च ।
यजनाय गतौ राज्ञा वृतौ तौ कर्दमात्मजौ ।
तृणविन्दोः सुतौ पापौ जातौ दृष्ट्वैव सुव्रतौ ॥११६॥
यज्ञविद्यासु निपुणौ वेदवेदाङ्गपारगौ ।
पूजयन्तौ हरिं भक्त्या तन्निष्ठेन्द्रियमानसौ ॥११७॥
ययोः पूजयतोर्नित्यं सान्निध्यं किल केशवः ।
ददाति पूजाऽवसरे भक्त्या किल वशीकृतः ॥११८॥
मरुत्तेन कदाचित्तावाहूतौ कुशलौ द्विजौ ।
राज्ञा समाप्तयज्ञेन पूजयित्वा पुरस्कृतौ ॥११९॥
दक्षिणाभिस्तोषयित्वा विसृष्टौ गृहमागतौ ।
विभागं कर्तुमारब्धौ पस्पर्धाते परस्परम् ॥१२०॥
समो विभागः कर्तव्य इति ज्येष्ठोऽभ्यभाषत ।
विजयश्चाब्रवीच्चैनं येन लब्धं हि तस्य तत् ॥१२१॥
जयोऽब्रवीदसामर्थ्यं मन्वानो मां ब्रवीषि किम् ।

१. नाम्नीति (ग)। २. पुरा पुण्या सरिद्वरा (ग)। ३. सर्वदेवसमन्विता (ग)।

न ददासि गृहीत्वा यत्तस्माद् ग्रहत्वमाप्नुहि ॥१२२॥
विजयोऽप्यब्रवीन्नूनमधीभूतोऽसि किं घनैः।
गजो भव मदान्धस्त्वं मामेवं प्रभाषसे ॥१२३॥
एवं तौ ग्राहमातङ्गावभूतां शापतः पृथक्।
गण्डक्यामेव सञ्जातो ग्राहः पूर्वस्मृतिर्द्विजः ॥१२४॥
त्रिवेणीक्षेत्रमध्ये तु जयोऽभूद् वै महान् गजः।
करिशावैर्गजाभिश्च क्रीडमानो वने वसन् ॥१२५॥
बहून्यब्दसहस्राणि व्यतीतानि तयोस्तदा।
वने विहरतोर्भूमे शापमोहितयोः सतोः ॥१२६॥
कदाचित् स गजः स्नातुं करेणुगणसंवृतः।
त्रिवेणीमभितो यातोऽवगाहनपरायणः ॥ १२७ ॥
सिञ्चन् करेणूस्ताभिश्च सिच्यमानो जलं पिबन्।
स्वयञ्च पाययंस्ताश्च चिक्रीड प्रीतमानसः ॥१२८॥
एवं संक्रीडतस्तत्र दैवयोगेन तस्य हि।
ग्राहः सम्प्रेरितः पूर्वं वैरयोगमनुस्मरन् ॥१२९॥
जग्राह सुदृढं पादं गजोऽपि च विषाणतः।
ग्राहं विव्याध सोऽप्येनमाकर्षयत तज्जले ॥१३०॥
तयोर्युद्धं समभवदनेकाब्दं विकर्षणैः।
आकर्षणैश्च बहुभिर्दन्तभेदैः परस्परम् ॥१३१॥
प्रयुद्धयोस्तयोरेवं मत्सरग्रस्तयोः सतोः।
सत्त्वानि पीडितान्यासन्ननेकानि क्षयं ययुः ॥१३२॥
ततो जलेश्वरो राजा भगवन्तं व्यजिज्ञपत्।
तेन विज्ञापितो देवो भगवान् भक्तवत्सलः।
सुदर्शनेन चक्रेण ग्राहास्यं समपाटयत् ॥१३३॥
क्षिप्तं पुनः पुनस्तत्तु शिलाः सङ्घट्टयन् धरे।
संघट्टनात्तु चक्रस्य शिलाश्चक्रेण लाञ्छिताः ॥१३४॥
बाहुल्येन बभूवुर्हि तस्मिन् क्षेत्रे परे मम।
वज्रकीटैश्च ज्ञातानि सन्ततानि विलोक्य च ॥१३५॥
न सन्देहस्त्वया कार्यस्त्रिवेणीं प्रति सुन्दरि।
त्रिवेणीक्षेत्रमहिमा एवं ते परिकीर्तितः ॥१३६॥
यदा च भरतो राजा पुलस्त्यस्याश्रमान्तिके।
स्थित्वा पर्यचरद् विष्णुं त्रिजलेशमपूजयत् ॥१३७॥
ततः प्रभृति तस्यासीद् रतेनारतिस्फुटम्।
पुनश्च मृगदेहान्ते जडः स भरतोऽभवत् ॥१३८॥

तेनैव पूजितो यस्मात् जलेश्वर इति स्मृतः ।
यस्य सम्पूजनाद् भक्त्या योगसिद्धिः प्रजायते ।१३९।
शालग्रामे परे क्षेत्रे यदाहं सुभगे स्थितः ।
तत्र ज्ञात्वा जलेशेन स्तुतोऽहं वसुधे महि ॥१४०॥
ततो भक्तकृपावेशात् क्षिप्तवांस्तत् सुदर्शनम् ।
प्रथमं पतितं यत्र तत्र तीर्थं ततोऽभवत् ।। १४१॥
तत्र स्नानेन तेजस्वी सूर्यलोके महीयते ।
यदि प्राणैर्वियुज्येत मम लोके महीयते ॥१४२॥
भक्तसंरक्षणार्थाय मयाज्ञप्तं सुदर्शनम् ।
यत्र यत्र च भ्रमति तत्रतत्र शिलाङ्किताः ॥
एवं तद्वै भ्रमाक्षिप्तं सर्वं चक्रमयं त्वभूत् ॥१४३॥
ततः स पञ्चरात्राणि स्थित्वा वै विधिपूर्वकम् ।
गोधनान्यग्रतः कृत्वा हरिक्षेत्रं जगाम ह ॥१४४॥
हरिणाधिष्ठितं क्षेत्रं पूजनीयं ततः स्मृतम् ।
यदा नन्दी शूलपाणिर्गोधनेन पुरष्कृतः ।
स्थितवान् तद्दिनादेतत् ख्यातं हरिहरप्रभम्[1] ।
देवानामटनाच्चैव देवाट इति संज्ञितम् ॥१४५॥
तस्य देवस्य महिमा केन वक्तुं हि शक्यते ।
स शूलपाणिर्देवेशो भक्ताभयविधायकः ।
मुनिभिर्देवगन्धर्वैः सेव्यतेऽचिन्त्यशक्तिमान् ॥ १४६॥
तस्मिन् स्थाने महादेवः सालङ्कायनकस्य हि ।
पुत्रत्वं नन्दिरूपेण प्राप्तः साक्षाच्छिवः प्रभुः ॥१४७॥
स्वयञ्चैव महायोगी योगसिद्धिविधायकः ।
आस्थितः परमं पीठं तीर्थे चैव त्रिधारके ॥१४८॥
त्रिजटाभ्योऽभवन् धारास्तिस्रो वै परमाद्भुताः ।
गङ्गा च यमुना चैव पुण्या चैव सरस्वती ।
एतत् त्रैधारिकं तीर्थं त्रिजटाभ्यः समुत्थितम् ॥१४९॥
यत्र शम्भुः स्थितः साक्षान्महायोगी महेश्वरः।
शालग्रामाभिधे क्षेत्रे हरिशीलनतत्परः ।
दिशन् ज्ञानं स्वभक्तानां संसाराद्येन मुच्यते ॥१५०॥
तीर्थे त्रिधारे यः स्नात्वा संतर्प्य पितृदेवताः ।
महायोगिनमभ्यर्च्य न भूयो जन्मभाग्भवेत् ॥१५१॥

---

१. हरिहरात्मकम् ( ग ) ।

तस्यैव पूर्वदिग्भागे हंसतीर्थमिति स्मृतम् ।
तत्रैकं कौतुकं वृत्तं तच्छृणुष्व महत्तरम् ॥१५२॥
कदाचिच्छिवरात्र्यां तु भक्तैः पूजामहोत्सवे ।
नैवेद्यैर्विविधैः सृष्टैः पूजयित्वा तु योगिनम् ।
तत्र काकाः समुत्पेतुरन्ने तस्मिन् बुभुक्षिताः ।
गृहीत्वान्नं तु तत् काकस्तेन उड्डीय निर्गतः ।
तद् गृहीतुं परः काकस्तेनायुध्यत चाम्बरे ॥१५३॥
तावुभौ युध्यमानौ तु कुण्डे तस्मिन्निपेततुः ।
तत्र हंसौ ततो भूत्वा निर्गतौ चन्द्रवर्चसौ ॥१५४॥
तद् दृष्ट्वा महदाश्चर्यं तत्र ये मिलिता जनाः ।
हंसतीर्थमिति प्रोचुस्ततः प्रभृति सत्तमे[1] ।
ततः प्रभृति तत्तीर्थं हंसतीर्थमिति स्मृतम् ॥१५५॥
पूर्वं यक्षकृतं तत्तु यक्षतीर्थमिति स्मृतम् ।
तत्र स्नातो नरः शुद्धो यक्षलोके महीयते ॥१५६॥
तत्राथ मुञ्चते प्राणान् शिवभक्तिपरायणः ।
यक्षलोकमतिक्रम्य मम लोकं प्रपद्यते ॥१५७॥
एवं प्रभावं तत्तीर्थं महायोगिप्रभावतः ।
अहं शिवश्च लोकानामनुग्रहपरायणौ ॥१५८॥
एतत्ते सर्वमाख्यातं क्षेत्रं गुह्यं वसुन्धरे ।
आरम्य मुक्तिक्षेत्रं[3] तत् क्षेत्रं द्वादशयोजनम् ।
शालग्रामस्वरूपेण मया यत्र स्थितं स्वयम् ॥१५९॥
स्वभक्तानां विशेषेण परमानन्ददायकम् ।
गुह्यानां परमं गुह्यं किमन्यच्छ्रोतुमिच्छसि ॥ १६० ॥

इति वाराह पुराणे भगवच्छास्त्रे सोमेश्वरादि लिङ्गमहिम-मुक्तिक्षेत्रत्रिवेण्यादिमहिमकथनं नाम चतुश्चत्वारिंशदधिकशततमोऽध्यायः ।

---

१. स्वच्छं देवि तथाऽनघम् ( ग ) । २ एवदर्धं नास्ति ( ग ) ।
३. आराममुक्तिक्षेत्रमिति क्वचित् ।

## पञ्चचत्वारिंशदधिकशततमोऽध्यायः

धरण्युवाच

भगवन् देवदेवेश सालङ्कायनको मुनिः ।
किञ्चकार तपः कुर्वन् तव क्षेत्रे विमुक्तिदे ॥ १ ॥

वराह उवाच

अथ दीर्घेण कालेन स ऋषिः संशितव्रतः ।
तप्यमानो यथान्यायं पश्यते[1] शालमुत्तमम् ॥ २ ॥
अभिन्नमतुलच्छायं विशालं पुष्पितं तथा ।
मनोज्ञञ्च सुगन्धञ्च देवानामपि दुर्लभम् ॥ ३ ॥
ऋषिर्ज्ञानपरिश्रान्तः सालङ्कायनकोऽद्भुतम् ।
पश्यते च पुनः शालं शुभानां शुभदर्शनम् ॥ ४ ॥
ततो दृष्ट्वा महाशालं परिश्रान्तो महामुनिः ।
विश्रामं कुरुते तत्र द्रष्टुकामोऽथ मां मुनिः ॥ ५ ॥
शालस्य तस्य पूर्वेण स्थितः पश्चान्मुखो मुनिः ।
मायया मम मूढात्मा शक्तो द्रष्टुं न मामभूत् ॥ ६ ॥
ततः पूर्वेण पार्श्वेण तस्य शालस्य सुन्दरि ।
वैशाखमासद्वादश्यां मद्दर्शनमुपागतः ॥ ७ ॥
दृष्ट्वा मां तत्र स मुनिस्तपस्वी शंसितव्रतः ।
तुष्टाव वैदिकैः सूक्तैः प्रणम्य च पुनः पुनः ॥ ८ ॥
मत्तेजसा ताडिताक्षः शनैरुन्मील्य लोचने ।
यावत् पश्यति मां तत्र स्तुवन् स तपसान्वितः
वृक्षस्य दक्षिणे पार्श्वे गतस्तावदहं धरे[2] ॥ ९ ॥
पूर्वस्थानं परित्यज्य स ऋषिः शंसितव्रतः ।
स्थित्वा मत्प्रमुखे चैव स्तुवन्नेवं मम प्रियम् ॥१०॥
ततोऽहं स्तूयमानो वै ऋग्वेदस्यैव ऋग्गतैः ।
स्तोत्रैः संपूज्यमानो हि गतोऽस्मि पश्चिमां दिशम्११
ततः पश्चिमपार्श्वे तु स्थितस्तत्रैव माधवि ।
यजुर्वेदोक्तमन्त्रेण संस्तुतः पश्चिमाङ्गतः ॥ १२ ॥
स्तुवतीत्थं मुनौ देवि गतोऽहमुत्तरां दिशम् ।
तत्रापि[3] सामवेदोक्तैर्मन्त्रैस्तुष्टाव मां मुनिः ॥ १३ ॥

---

१. पश्यति इति साधु । २. गतस्तावद् वसुन्धरे ( ग ) । ३. तत्रासौ ( ग ) ।

ततोऽहं स्तूयमानो वै ऋषिमुख्येन सुन्दरि ।
प्राप्तश्च परमां प्रीतिं तामवोचमृषिं तदा ।। १४ ।।
साधु ब्रह्मन् महाभाग साङ्कलायन सत्तम् ।
तपसानेन सन्तुष्टः स्तुत्या चैवानया तव ।
वरं वरय भद्रं ते संसिद्धस्तपसा भवान् ।। १५ ।।
एवमुक्तः स तु मया सालङ्कायनको मुनिः ।
शालवृक्षं समाश्रित्य निभृतेनान्तरात्मना ।। १६ ।।
ततो मां भाषते देवि स ऋषिः संशितव्रतः ।
तवैवाराधनार्थाय तपस्तप्तं मया हरे ।। १७ ।।
पर्यटामि महीं सर्वां सशैलवनकाननाम् ।
इदानीं खलु दृष्टोऽसि चक्रपाणे महाप्रभो ।। १८ ।।
यदि तुष्टोऽसि मे देव सर्वशान्तिकरः परः ।
यदि देयो वरो मह्यं तपसाराधितेन च ।। १९ ।।
तदा देहि जगन्नाथ ममेश्वरसमं सुतम् ।
एष एव वरो मह्यं दीयतां मधुसूदन ।। २० ।।
एवं वरं याचितोऽस्मि मुनिना भीमकर्मणा ।
पुत्रकामेन विप्रेण दीर्घकालं तपस्यता ।। २१ ।।
एवं तस्य वचः श्रुत्वा ब्राह्मणस्य तपस्विनः ।
मधुरां गिरमादाय प्रत्यवोचमृषिं प्रति ।। २२ ।।
चिरकालं व्रतस्थेन यस्त्वया चिन्तितं मुने ।
स कामस्तव सञ्जातः सिद्धोऽसि तपसः भवान् ।।२३।।
ईश्वरस्य परा[१] मूर्तिर्नाम्ना वै नन्दिकेश्वरः ।
त्वद्दक्षिणाङ्गादुद्भूतः पुत्रस्तव मुनीश्वर ।
संहरस्व तपो ब्रह्मन् शान्तिं गच्छ महामुने ।। २४ ।।
अथ चैतस्य जातस्य कल्पा वै सप्त सप्त च ।
त्वं न जानासि विप्रर्षे स जातो नन्दिकेश्वरः ।
मया योगबलोपेतो गोव्रजं स मया स्थितः ।। २५ ।।
मथुरायाः समानीय आमुष्यायणसंज्ञितम् ।
तव शिष्यं पुरस्कृत्य शूलपाणिरवस्थितः ।। २६ ।।
तत्राश्रमे महाभाग स्थित्वा त्वं तपसान्निधे ।
पुत्रेण परमप्रीतो मत्क्षेत्रेऽस्मत्समो भव ।। २७ ।।
अन्यच्च[२] गुह्यं वक्ष्यामि साङ्कलायन तच्छृणु ।
तव प्रीत्या प्रवक्ष्यामि येनैतत्क्षेत्रमुत्तमम् ।

१. ईशस्य परमा मूर्तिः (क) (ख) । २. अन्यत्ते ।

शालग्राममिति ख्यातं तन्निबोध मुने शुभम् ॥ २८ ॥
योऽयं वृक्षस्त्वया दृष्टः सोऽहमेव न संशयः ।
एतत्कोऽपि न जानाति विना देवं महेश्वरम् ।
माययाऽहं निगूढोऽस्मि त्वत्प्रसादात् प्रकाशितः ॥२९॥
एवं तस्मै वरं दत्त्वा सालङ्कायनकाय वै ।
पश्यतस्तस्य वसुधे तत्रैवान्तर्हितोऽभवम् ॥ ३० ॥
वृक्षं दक्षिणतः कृत्वा जगाम स्वाश्रमं मुनिः ॥ ३१ ॥
मम तद् रोचते स्थानं गिरिकूटशिलोच्चये ।
शालग्राम इति ख्यातं भक्तसंसारमोक्षणम् ॥ ३२ ॥
तत्र गुह्यानि मे भूमे वक्ष्यमाणानि मे शृणु ।
तरन्ति मनुजा येभ्यो घोरं संसारसागरम् ॥ ३३ ॥
गुह्यानि तत्र वसुधे तीर्थानि दश पञ्च च ।
नाद्यापि किञ्चिज्जानन्ति मुच्यन्ते यैरिह स्थिताः ॥३४॥
तत्र विल्वप्रभं नाम गुह्यं क्षेत्रं मम प्रियम् ।
कुञ्जानि तत्र चत्वारि क्रोशमात्रे यशस्विनि ।
ह्यधन्तत् परमं गुह्यं भक्तकर्मसुखावहम् ॥ ३५ ॥
तत्र स्नानं तु कुर्वीत अहोरात्रोषितो नरः ।
चतुर्णामश्वमेधानां फलं प्राप्नोति मानवः ॥ ३६ ॥
अथात्र मुञ्चते प्राणान् मम कर्मसु निष्ठितः ।
अश्वमेधफलं भुक्त्वा मम लोके स मोदते ॥ ३७॥
चक्रस्वामीति विख्यातं तस्मिन् क्षेत्रे परं मम ।
चक्राङ्कितशिलास्तत्र दृश्यन्ते च इतस्ततः ॥ ३८॥
चक्राङ्कितशिला यत्र तिष्ठते वरवर्णिनि ।
तदेतद् विद्धि वसुधे समन्ताद्योजनत्रयम् ॥ ३९ ॥
तत्र स्नानं प्रकुर्वीत त्रिरात्रोपोषितो नरः ।
त्रयाणामपि तन्त्राणां फलं प्राप्नोति निश्चितम् ॥४०॥
अथात्र मुञ्चते प्राणान् मम कर्मपरायणः ।
वाजपेयफलं भुक्त्वा मम लोकञ्च गच्छति ॥ ४१ ॥
तत्र[1] विष्णुपदं नाम क्षेत्रं गुह्यं परं मम ।
तिस्रो धाराः पतन्त्यत्र हिमकूटसमाश्रिताः ॥ ४२ ॥
तत्र स्नानं तु कुर्वीत त्रिरात्रोपोषितो नरः ।
त्रयाणामपि रात्रीणां फलं प्राप्नोति निष्कलम् ॥ ४३ ॥

---

१. यत्र ।

तथैव मुञ्चते प्राणान् मुक्तसङ्गो गतक्लमः ।
अतिरात्रफलं भुक्त्वा मम लोके महीयते ॥ ४४ ॥
तत्र कालीह्रदं नाम गुह्यं क्षेत्रं परं मम ।
अत्र चैव ह्रदस्रोतो बदरीवृक्षनिःसृतः ॥ ४५ ॥
तत्र स्नानं तु कुर्वीत षष्ठिकालोषितो नरः ।
नरमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ४६ ॥
अथात्र मुञ्चते प्राणान् मुक्तरागो गतक्लमः ।
नरमेधफलं भुक्त्वा मम लोके च मोदते ॥ ४७ ॥
अन्यच्च ते प्रवक्ष्यामि महाश्चर्यं वसुन्धरे ।
तत्र शङ्खप्रभं नाम गुह्यं क्षेत्रं परं मम ॥
श्रूयते शङ्खशब्दश्च द्वादश्यामर्धरात्रके ॥ ४८ ॥
गदाकुण्डमिति ख्यातं तस्मिन् क्षेत्रे परं मम ।
यत्र वै कम्पते स्रोतो दक्षिणां दिशमाश्रितम् ॥ ४९ ॥
तत्र स्नानन्तु कुर्वीत[1] त्रिरात्रोपोषितो नरः ।
वेदान्तगानां विप्राणां फलं प्राप्नोति मानवः ॥ ५० ॥
अथ वै मुञ्चते प्राणान् कृतकृत्यो गुणान्वितः ।
गदापाणिर्महाकायो मम लोकं प्रपद्यते ॥ ५१ ॥
पुनश्चाग्निप्रभं नाम गुह्यं क्षेत्रं परं मम ।
धारा पतति तत्रैका पूर्वोत्तरसमाश्रिता ॥ ५२ ॥
यस्तत्र कुरुते स्नानं चतुर्भक्तोषितो नरः ।
अग्निष्टोमात् पञ्चगुणं फलम्प्राप्नोति मानवः ॥ ५३ ॥
अथात्र मुञ्चते प्राणान् मम कर्मसु निष्ठितः ।
अग्निष्टोमफलं भुक्त्वा मम लोकं प्रपद्यते ॥ ५४ ॥
तत्राश्चर्यं महाभागे कथ्यमानं मया शृणु ।
हेमन्ते चोदकमुष्णं ग्रीष्मे भवति शीतलम् ॥ ५५ ॥
गुह्यं सर्वायुधं नाम तत्र क्षेत्रे परं मम ।
पतन्ति सप्त स्रोतांसि हिमवन्निःसृतानि वै ॥ ५६ ॥
तत्र स्नानं प्रकुर्वीत सप्तरात्रोषितो नरः ।
राजा भवति सुश्रोणि सर्वायुधकलान्वितः ॥ ५७ ॥
अथ वै मुञ्चते प्राणान् मम कर्मविनिश्चितः ।
स भुक्त्वा राज्यभोज्यानि मम लोकञ्च गच्छति ॥ ५८ ॥

---

१. स्नानं प्रकुर्वीत ।

तत्र देवप्रभं नाम गुह्यं क्षेत्रं परं मम।
धाराः पञ्चमुखास्तत्र पतन्ति गिरिसंश्रिताः ॥ ५९ ॥
तत्र स्नानं तु कुर्वीत अष्टकालोषितो नरः।
चतुर्णामपि देहीनां याति पारं न संशयः ॥ ६० ॥
अथात्र मुञ्चते प्राणाँल्लोभमोहविवर्जितः।
वेदकर्म समुत्सृज्य मम लोके महीयते ॥ ६१ ॥
गुह्यं विद्याधरं नाम तत्र क्षेत्रे परं मम।
पञ्च धाराः पतन्त्यत्र हिमकूटविनिःसृताः ॥ ६२ ॥
यस्तत्र कुरुते स्नानमेकरात्रोषितो नरः।
याति वैद्याधरं लोकं कृतकृत्यो न संशयः ॥ ६३ ॥
अथात्र मुञ्चते प्राणान् वीतरागो गतक्लमः।
भुक्त्वा वैद्याधरान् भोगान् मम लोकाय गच्छति ॥६४॥
तत्र पुण्यनदी नाम गुह्यक्षेत्रे परे मम।
शिला कुञ्जलताकीर्णा गन्धर्वाप्सरसेविता ॥ ६५ ॥
तत्र स्नानं तु कुर्वीत अष्टभक्तोषितो नरः।
भ्रमते सप्तद्वीपेषु स्वच्छन्दगमनालयः ॥ ६६ ॥
अथात्र मुञ्चते प्राणान् मम कर्मानुसारकः[१]।
सप्तद्वीपान् समुत्सृज्य मम लोकं स गच्छति ॥ ६७ ॥
गन्धर्वेति च विख्यातं तस्मिन् क्षेत्रं परं मम।
एकधारा पतत्यत्र पश्चिमां दिशोमाश्रिता ॥ ६८ ॥
तत्र स्नानन्तु कुर्वीत चतूरात्रोषितो नरः।
मोदते लोकपालेषु स्वच्छन्दगमनालयः ॥ ६९ ॥
अथात्र मुञ्चते प्राणान् मम कर्मपरायणः[२]।
लोकपालन् परित्यज्य[३] मम लोकाय गच्छति ॥ ७० ॥
तत्र देवह्रदं नाम मम क्षेत्रं वसुन्धरे।
यत्र कान्तासि मे भूमे बलेर्यज्ञविनाशनात् ॥ ७१ ॥
स ह्रदो वरदः श्रेष्ठो मनोज्ञः सुखशीतलः।
अगाधः सौख्यदश्चापि देवानामपि दुर्लभः ॥ ७२ ॥
तस्मिन् ह्रदे महाभागे मम वै नियमोदके।
मत्स्याश्चक्राङ्किताश्चैव पर्यटन्ते इतस्ततः ॥ ७३ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
महाश्चर्यं विशालाक्षि यत्र तत्परिवर्तते।
श्रद्दधानस्तु पश्येत न पश्येत् पापपूरुषः ॥ ७४ ॥

---

१. मम कर्मविनिश्चितः। २. मम भक्त्या व्यवस्थितः। ३. समुत्सृज्य (ग)

तस्मिन् देवह्रदे पुण्यं चतुर्विंशतिर्द्वादश ।
सौवर्णानि च पद्मानि दृश्यते भास्करोदये ॥ ७५ ॥
तावत् पश्यन्ति भूतानि यावन्मध्यं दिनं भवेत् ।
यत्र स्नाता दिवं यान्ति शुद्धा वाक्कायजैर्मलैः ॥७६॥
तत्र स्नानम्प्रकुर्वीत दशभक्तोषितो नरः ।
दशानामश्वमेधानां प्राप्नोत्यधिकलं फलम् ॥ ७७ ॥
अथात्र मुञ्चते प्राणान् मम चिन्ताव्यवस्थितः ।
अश्वमेधफलं भुक्त्वा भूमे मत्समतां व्रजेत् ॥ ७८ ॥
अन्यच्च ते प्रवक्ष्यामि क्षेत्रं गुह्यं परं मम ।
सम्भेदो देवनद्योस्तु समस्तसुखवल्लभः ॥ ७९ ॥
दिवोऽवतीर्य तिष्ठन्ति देवा यत्र सहप्रियाः ।
गन्धर्वाप्सरसश्चैव नागकन्याः सहोरगैः ॥ ८० ॥
देवर्षयश्च मुनयः समस्तसुरनायकाः ।
सिद्धाश्च किन्नराश्चैव स्वर्गादवतरन्ति हि ॥ ८१ ॥
नेपाले यच्छिवस्थानं समस्तसुखवल्लभम् ।
तेभ्यस्तेभ्यश्च स्थानेभ्यस्तीर्थेभ्यश्च विशेषतः ॥ ८२ ॥
महादेवजटाजूटान्नीलकण्ठाच्छिवालयः ।
श्वेतगङ्गेति या प्रोक्ता तया सम्भूय सादरम् ।
नाना नद्यः समायाता दृश्याऽदृश्यतया स्थिताः ॥८३॥
गण्डक्या कृष्णया चैव या कृष्णस्य तनूद्भवा ।
तया सम्भेदमापन्ना या सा शिवतनूद्भवा ।
त्रिशूलगङ्गेत्याख्याता सापि तत्र महानदी ॥ ८४ ॥
एवं नदी समुद्भेदः सर्वतीर्थकदम्बकम् ।
मम क्षेत्रे समाख्यातं पुण्यं परमपावनम् ।
वसुधे त्वं विजानीहि देवानामपि दुर्लभम् ॥ ८५ ॥
यश्च सिद्धाश्रम इति विख्यातः पुण्यवर्धनः ।
शम्भोस्तपोवनं[1] तत्र सर्वाश्रमवरम्प्रति ॥ ८६ ॥
नानापुष्पफलोपेतं कदलीखण्डमण्डितम् ।
निचुलैश्चैव पुन्नागैः केसरैश्च विराजितम् ॥ ८७ ॥
खर्जूराशोकवकुलैश्चूतैश्चैव प्रियालकैः ।
नारिकेलैश्च पूगैश्च चम्पकैर्जम्बुभिर्धवैः ॥ ८८ ॥
नारङ्गैर्वदरीभिश्च जम्बीरैर्मातुलुङ्गकैः ।
केतकीमल्लिकाजातीयूथिकाराजिराजिताम् ॥ ८९ ॥

---

१. भृगोस्तपोवनं ( ग )

कुन्दैः कुरवकैर्नागैः कुटजैर्दाडिमैरपि ।
आगत्य यत्र क्रीडन्ति देवानां मिथुनानि च ॥ ९० ॥
तस्मिन् ह्रदे महापुण्ये पुण्यनद्योस्तु सङ्गमे ।
नानाच्छताश्वमेधानां फलं प्राप्नोति मानवः ॥ ९१ ॥
स्नात्वा तत्र तु वैशाखे गोसहस्रफलं भवेत् ।
माघमासे पुनः स्नात्वा प्रयागस्नानजं फलम् ॥ ९२ ॥
कार्तिके मासि यः स्नाति तुलासंस्थे दिवाकरे ।
विधिना नियतः सोऽपि मुक्तिभागी न संशयः ॥९३॥
यस्त्रिरात्रमुषित्वा तु नियते नियताशनः ।
राजसूयफलं प्राप्य मोदते देववद्दिवि ॥ ९४ ॥
यज्ञस्तपोऽथवा दानं श्राद्धमिष्टस्य पूजनम् ।
यत्किंचित् क्रियते कर्म तदनन्तं फलं भवेत् ।
भूमे तस्यापराधांश्च सर्वानेव क्षमाम्यहम् ॥ ९५ ॥
गङ्गायमुनयोर्यद्वत् सङ्गमो मर्त्यदुर्लभः ।
तथैवेयं देवनद्योः सङ्गमः समुदाहृतः ॥ ९६ ॥
एतद् गुह्यं परं देवि मम क्षेत्रे वसुन्धरे ॥ ९७ ॥
अहमस्मिन् महाक्षेत्रे धरे पूर्वमुखः स्थितः ।
शालग्रामे महाक्षेत्रे भूमे भागवतप्रियः ॥ ९८ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
अन्तर्गुह्यं परं श्रेष्ठं[1] यन्न जानन्ति मोहिताः ॥ ९९ ॥
शिवो मे दक्षिणस्थानं तिष्ठते विगतज्वरः ।
लोकानां प्रवरः श्रेष्ठः सर्वलोकवरो हरः ॥ १०० ॥
तं मे विदन्ति ते देवि नूनं मामेव विन्दति ।
ये मां विदन्ति देवेशि ते विदन्ति शिवं परम् ॥१०१॥
अहं यत्र शिवस्तत्र शिवो यत्र वसुन्धरे ।
तत्राहमपि तिष्ठामि आवयोर्नान्तरं क्वचित् ॥ १०२ ॥
शिवं यो वन्दते भूमे स हि मामेव वन्दते ।
लभते पुष्कलं सिद्धिमेवं यो वेत्ति तत्त्वतः ॥ १०३ ॥
एवमेतन्महाभागे क्षेत्रं हरिहरात्मकम् ।
मृता येऽत्र गतिं यान्ति मम कर्मानुसारिणः ॥ १०४ ॥
मुक्तिक्षेत्रं प्रथमतो रुरुखण्डं ततः परम् ।
संभेदो देवनद्योश्च त्रिवेणी च ततः परम् ।

---

१. क्षेत्रम् ( ग )

क्षेत्रं प्रमाणं[1] विज्ञेयं गण्डकीसङ्गतं परम् ॥ १०५ ॥
एवं सा गण्डकी देवि नदीनामुत्तमा नदी ।
गङ्गया मिलिता यत्र भागीरथ्या महाफला ।
अपरं तन्महत्क्षेत्रं हरिक्षेत्रमिति स्मृतम् ॥ १०६ ॥
आदौ सा गण्डकी पुण्या भागीरथ्या च सङ्गता ।
तस्य तीर्थस्य महिमा ज्ञायते न सुरैरपि ॥ १०७ ॥
एतत्ते कथितं भद्रे शालग्रामस्य सुन्दरि ।
गण्डक्याश्चैव माहात्म्यं सर्वकल्मषनाशनम् ।
पूर्वपृष्टं त्वया यच्च पुण्यं भागवतप्रियम् ॥ १०८ ॥
आख्यानानां महाख्यानं द्युतीनां परमा द्युतिः ।
पुण्यानां परमं पुण्यं तपसाञ्च महत्तपः ॥ १०९ ॥
गुह्यानां परमं गुह्यं गतीनां परमा गतिः ।
महालाभस्तु लाभानां नास्त्यस्मादपरं महत् ॥ ११० ॥
पिशुनाय न दातव्यं न शठाय गुरुद्रुहे ।
ये च पापा कृतघ्नाश्च द्विजदेवापराधिनः ॥ १११ ॥
कुशिष्याय न दातव्यं न दद्याच्छास्त्रदूषके ।
नीचाय न चदातव्यं ये न जानन्ति सेवितुम् ॥११२॥
सुशिष्याय च दातव्यं धीराय शुभबुद्धये ।
लोभमोहमदाद्यैर्ये वर्जिताः पुण्यबुद्धयः ॥११३॥
य एतत् पठते नित्यं कल्यमुत्थाय मानवः ।
कुलानि तारितान्येवं सप्त सप्त च सप्त च ॥११४॥
एवं मरणकाले तु न कदाचिद् विमुह्यते ।
यदीच्छेत परमां सिद्धिं मम लोकाय वाच्छति ।११५।
शालग्रामस्य क्षेत्रस्य माहात्म्यं परमं मया ।
कथितं ते महादेवि किमन्यच्छ्रोतुमिच्छसि ॥११६॥
इति वराहपुराणे भगवच्छास्त्रे शालग्रामक्षेत्रमहात्म्य-
वर्णनं नाम पञ्चचत्वारिंशदधिकशततमोऽध्यायः ।

---

१. प्रथमं ( क ) ( ख ) ।

## षट्चत्वारिंशदधिकशततमोऽध्यायः

सूत उवाच

शालग्रामस्य माहात्म्यं श्रुत्वा गुह्यं महौजसम् ।
विस्मयं परमं गत्वा हृष्टा वचनमब्रवीत् ॥ १ ॥

धरण्युवाच

अहो क्षेत्रस्य माहात्म्यं यत्त्वया भाषितं हरे ।
एतच्छ्रुत्वा महाभाग जातास्मि विगतज्वरा ॥ २ ॥
रुरुखण्डमिति प्रोक्तं यत्त्वया परमार्चितम् ।
रुरुर्नाम कथं को वा आसीत् पूर्वं जनार्दन ॥ ३ ॥
यन्नाम्ना परमं क्षेत्रं हृषीकेश त्वयाश्रितम् ।
कथयस्व जगन्नाथ यद्यनुग्राह्यता मयि ॥ ४ ॥

वराह उवाच

आसीत् पुरा महाभागो देवदत्त इति द्विजः ।
भृगुवंशे समुत्पन्नो वेदवेदाङ्गपारगः ।
यज्ञविद्यासु कुशलो व्रतनिष्ठोऽतिथिप्रियः ॥ ५ ॥
तत्राश्रमपदं पुण्यं पुण्यद्रुमलतान्वितम् ।
शान्तैर्मृगगणैः कीर्णं कन्दमूलफलान्वितम् ॥ ६ ॥
तत्र तीव्रं तपोऽतप्यद् देवदत्तो मुनीश्वरः ।
वर्षाणामयुतं साग्रं तत इन्द्रो व्यचिन्तयत् ॥ ७ ॥
कामं वसन्तसहितं गन्धर्वान् ससखीन् पुनः[1] ।
उवाच मधुरं वाक्यं क्षुब्धेन्द्रियमनाः प्रभुः ॥ ८ ॥
अहो सखायः किञ्चिन्मे महत्कार्यमुपस्थितम् ।
तस्य मे चिन्तयानस्य यूयमेव परा गतिः ।
भवत् प्रसादात् स्वस्थोऽहं निर्भयस्तद्विचिन्त्यताम् ॥९॥
तदिन्द्रस्य वचः श्रुत्वा ते काममलयानिलाः ।
प्रत्यूचुर्देवराजानमाज्ञापय निजं प्रियम् ॥ १० ॥
जितेन्द्रियस्यापि मनः कस्य संक्षोभयामहे ।
कं वा सुतीव्रात् तपसो भ्रंशयामः सुपेशलम्[2] ।
आज्ञाप्रसादं ते लब्ध्वा वद शीघ्रं सुखी भव ॥ ११ ॥
इत्युक्तः शतमन्युर्वै प्रत्युवाचाऽथ मानयन् ।

---

१. ससखान् पुरः । २. सुपेशसम् (ग) ।

तदैव मे गता चिन्ता भवतां दर्शनं यदा।
जातमेवाऽखिलं कार्यं मे वै त[1]च्छृणुताखिलाः ॥१२॥
हिमशैले महारण्ये हृषीकेशाश्रितो मुनिः।
देवदत्त इति ख्यातस्तपस्यति महत्तपः।
जिघृक्षुर्मे पदं नूनं तत्तपो विनिवर्त्यताम् ॥ १३ ॥
इत्युक्तास्ते तदाज्ञां वै गृहीत्वा शिरसा द्रुतम्।
प्रस्थानाय मतिञ्चक्रुः कामदेवपुरःसराः।
प्रस्थाप्याग्रे वसन्तञ्च मलयानिलमेव च ॥ १४ ॥
ततः सुरपतिः शक्रः प्रम्लोचान्नाम नामतः।
प्रशस्य प्रणयात् पूर्वं मानयन्निदमब्रवीत् ॥ १५ ॥
गच्छ स्वस्तिमती देवि विजयाय मुनेर्भुवि।
यत्राश्रमपदं तस्य देवदत्तस्य वै मुनेः।
ललितैः स्वैर्विलासैस्तं मोहयित्वा वशं कुरु ॥ १६ ॥
यथा मत्प्रीतिरतुला त्वं मे कार्यकरी सदा।
तथा कुरुष्व भद्रं ते हृषीकेशसमीपतः ॥ १७ ॥
इन्द्रस्याज्ञां समादाय ययौ तस्याश्रमं प्रति।
समीपोपवने रम्ये नाना द्रुमलताकुले ॥ १८ ॥
मधुरालापबहुले कोकिलानां कुलाकुले।
रसालमञ्जरीव्याप्तरसामोदालिसंकुले ॥ १९ ॥
गुञ्जन् मत्तालिसन्नादस्तुतिश्रुतिधारान्विते।
गन्धर्वगीतसंमिश्रे मलयानिलशीतले ॥ २० ॥
सम्फुल्लपङ्कजवने सुनिर्मलजलाशये।
मुनिप्रभावसन्त्यक्तक्रौर्यस्थलजलालये।
मधुरामोदमधुरे चित्तक्षोभविधायिनि ॥ २१ ॥
प्रविश्य सा वरारोहा गीतं सुमधुरं जगौ।
यदा ध्यानादुपरतः समाधेर्विरताश्चिरात्।
गान्धर्वं प्रारंभंस्ते तु गन्धर्वा सुरसम्मताः ॥ २२ ॥
तस्मिन्नेव क्षणे लब्ध्वाऽवसरं पञ्चसायकः।
विचकर्षधनुः पौष्पं सायकान् समयूयुजत्।
संलक्ष्य तं मुनिं शान्तं भाविदैवबलात् कृतम् ॥ २३ ॥
श्रुत्वा तन्मधुरं गीतं पञ्चमालापसुन्दरम्।
क्षुब्धचित्तः समभवत् स मुनिः संशितव्रतः ॥ २४ ॥

---

१. ममैतद् (ग)

चकर्ष च धनुः कामः पुनः पुनरतन्द्रितः ।
देवव्रतोऽपि स मुनिः क्षुब्धात्मा नियतोऽपि सन् ।२५।
विचचाराश्रमपदं पश्यन् सन्तुष्टमानसः ।
दूराद् ददर्श तन्वङ्गीं क्रीडन्तीं कन्दुकेन ताम् ॥ २६ ॥
दृष्ट्वैव तां तु चार्वङ्गीं विद्धः कामेन पत्रिणा ।
तस्याः समीपमगमत् स्मयमानो महामुनिः ॥ २७ ॥
सापि दृष्ट्वा देवदत्तं सज्जन्ती हरिणेक्षणा ।
कटाक्षयन्ती सहसा लज्जमाना विगूहति ॥ २८ ॥
करेण कन्दुकं घ्नन्ती चञ्चलाक्षी सुपेशला ।
स्रंसता केशपाशेन गलत् पुष्पेण राजता ।
मनोहरन्ती तस्यर्षेर्ललितैर्विभ्रमोद्भवैः ॥ २९ ॥
एतस्मिन्नन्तरे तस्या दक्षिणः पवनोऽहरत् ।
वासः सूक्ष्मं गलन्नीवि काञ्चीदामगुणान्वितम् ॥३०॥
पुष्पबाणोऽप्यविध्यत् तं दृष्ट्वाऽवसरमन्तिके ।
सम्मोहितः स तु मुनिर्गत्वान्तिकमथाब्रवीत् ॥ ३१ ॥
का त्वं कस्यासि सुभगे वनेऽस्मिन् किञ्चिकीर्षसि ।
मादृशान किं मृगयसे बाहुपाशेन वा मृगान् ।
बद्ध्वा गृहीत्वा वामोरु किं वाऽस्मान् कर्तुमिच्छसि[1]
सर्वथाऽस्मांस्तवाधीनान् यद्यद् वा कारयिष्यसि ।
तत्तात् कुर्मो वयं नित्यं त्वदधीनाः स्म सर्वथा ॥३३॥
अथ तां हसमानाञ्च गृहीत्वा दक्षिणे करे ।
समालिङ्ग्य विषज्जन्तीं रमयामास मोहितः ॥ ३४ ॥
रममाणस्तया सार्धं भुञ्जन् भोगान् मनोरमान् ।
तपः प्रभावोपनतान् दिवारात्रमतन्द्रितः ॥ ३५ ॥
बहूनहर्गणानेवं रममाणो यदृच्छया ।
सुप्तोत्थित इवाकस्माद् विवेकेन समन्वितः ।
निर्वेदम्प्राप्तवान् सद्यस्तदोवाच भृशातुरः ॥ ३६ ॥
अहो भागवती माया यथाऽहं भृशमोहितः ।
जानन्नपि तपोभ्रंशं प्राप्तो दैवबलात् कृतः ॥ ३७ ॥
अग्निकुण्डसमा नारी घृतकुम्भसमः पुमान् ।
इति प्रवादो मूर्खाणां विचारान्महदन्तरम् ॥ ३८ ॥
घृतकुम्भोऽग्नियोगेन द्रवते न तु दर्शनात् ।
पुमान् स्त्रीदर्शनादेव द्रवते यद्विमोहितः ॥ ३९ ॥

---

१. किञ्चिद् वा कारयिष्यामि ।

नापराधस्त्वतो नार्याः स्वयं यदजितेन्द्रियः ।
इत्युक्त्वाऽसौ निवृत्तात्मा विससर्ज सुरांगनाम् ।
प्रम्लोचाम् दैववशगो मनस्येतद्विचिन्तयत् ॥४०।४१॥
उपसर्गो महान्नत्र तपसोभ्रंशकारकः ।
त्यक्त्वाश्रममिमं चान्यत् स्थानं गत्वा समाहितः ।
तपस्तीव्रं समास्थाय शोषयिष्ये कलेवरम् ॥ ४२ ॥
इति निश्चित्य मनसा गत्वा भृग्वाश्रमं प्रति ।
गण्डकीसंगमे स्नात्वा सन्तर्प्य पितृदेवताः ॥ ४३ ॥
विष्णुं शिवञ्च सम्पूज्य तपः स्थानं विचिन्तयन् ।
पश्यन् भृग्वाश्रमं रम्यमुत्तरं गतवान् शनैः ॥ ४४ ॥
गण्डक्याः पूर्वभागे तु विविक्तं विजनं शुभम् ।
दृष्ट्वा तीरेषु विश्रान्तस्तपोभूमिमचिन्तयत् ॥ ४५ ॥
भृगुतुंगं समासाद्य शङ्कराराधने रतः ।
अतप्यत तपो घोरं शिवदर्शनलालसः ॥ ४६ ॥
अथ दीर्घेण कालेन सन्तुष्टः स महेश्वरः ।
लिंगरूपधरः साक्षादुपर्यपि तथा ह्यधः
तिर्यक् च जलधाराभिर्युक्तस्तत्तापशान्तिकृत् ॥ ४७ ॥
उवाच च प्रसन्नात्मा मुने पश्यस्व मां शिवम् ।
मामेवावैहि विष्णुं त्वं मा पश्यस्वान्तरं मम ॥ ४८ ॥
पूर्वमन्तरभावेन दृष्टवानसि यन्मम ।
तेन विघ्नोऽभवद् येन गलितं त्वत्तपो महत् ।
आवामेकेन भावेन पश्यंस्त्वं सिद्धिमाप्स्यसि ॥ ४९ ॥
तपः प्रभावाल्लिङ्गानि प्रादुर्भूतानि यत्र वै[1] ।
समङ्गमिति विख्यातमेतत् स्थानं भविष्यति ॥ ५० ॥
स्नात्वाऽत्र[2] गण्डकीतीर्थे मम लिङ्गानि योऽर्चयेत् ।
तस्य योगफलं सम्यग् भविष्यति न संशयः ॥ ५१ ॥
इति दत्त्वा वरं शम्भुस्तत्रैवान्तरधीयत ॥ ५२ ॥
देवदत्तोऽपि स मुनिः संप्राप्य ज्ञानमुत्तमम् ।
शिवोपदिष्टमार्गेण सायुज्यं परमं गतः ॥ ५३ ॥
प्रम्लोचापि मुनेर्गर्भं सम्प्राप्याश्रममन्तिकात् ।
प्रसूता कन्यकां त्यक्त्वा स्वर्गमेव जगाम ह ।
पुनर्जातमिवात्मानं मन्यमाना शुचिस्मिता ॥ ५४ ॥

---

१. तत्र वै (ग) । २. स्थित्वा (क) (ख) ।

सापि कन्या मृगैस्तत्र रुरुभिर्वर्धिता सती ।
रुरुरित्येव विख्याता पितुरेवाश्रमे स्थिता ।
युवभिः प्रार्थ्यमानापि चित्ते कञ्चन् नाध्यगात् ॥५५॥
ततः सुनिश्चयं कृत्वा तपसे धृतमानसा ।
चिन्तयन्ती जगन्नाथं भगवन्तं रमापतिम् ॥ ५६ ॥
मासे सा प्रथमे बाला फलाहारपरायणा ।
एकान्तरं दिनं प्राप्य द्वितीये त्रिदिनान्तरे ॥। ५७ ॥
तृतीये पञ्चमदिने चतुर्थे सप्तमान्तरे ॥ ५८ ॥
पञ्चमे नवरात्रेण षष्ठे पञ्चदशाहके ।
मासेन सप्तमे चैव शीर्णपर्णाशनाष्टमे ।
त्यक्त्वा तान्यपि सा बाला वाय्वाहारा बभूव ह ॥५९॥
सैवं वर्ष शतं स्थित्वा हरावेकाग्रमानसा ।
समाधिना समा भूत्वा स्थाणुवन्निश्चलाभवत् ॥ ६० ॥
द्वन्द्वानि नाविदच्चापि आत्मभूतान्तरं विना ।
परां काष्ठां समापन्ना प्रकाशमयकान्तिधृक् ॥ ६१ ॥
तत्तेजसा वृतं सर्वं तदा दृष्ट्वा वसुन्धरे ।
अहं विस्मयापन्नस्तस्याः प्रत्यक्षतां गतः ॥ ६२ ॥
सन्निरुद्धेन्द्रियग्रामा नाचक्षत बहिः स्थितम् ।
तदा हृषीकाण्याविश्य संहृत्य स्वं हृदो बहिः ।
स्थितोऽहं वसुधे देवि अक्ष्णोः प्रत्यक्षतां गतः ॥ ६३ ॥
हृषीकाणि नियम्याहं यतः प्रत्यक्षतां गतः ।
हृषीकेश इति ख्यातो नाम्ना तत्रैव संस्थितः ॥ ६४ ॥
सा मां यदैव नापश्यदुन्मील्य नयने ततः ।
बहिः स्थितं च मां दृष्ट्वा प्रणनाम कृताञ्जलिः ॥ ६५ ॥
गद्गदस्वरसंयुक्ता अश्रुक्लिन्नविलोचना ।
रोमाञ्चिततनुश्चासीत् कदम्बमुकुलाकृतिः ॥ ६६ ॥
तथा भूतां तु तां दृष्ट्वा प्रोवाचमहमङ्गनाम् ।
अयि बाले विशालाक्षि तुष्टोऽहं तपसस्तव ॥ ६७ ॥
वरं याचय मत्तस्त्वं यत्ते मनसि वर्त्तते ।
अदेयमपि ते दद्मि यदन्येषां सुदुर्लभम् ॥ ६८ ॥
इति श्रुत्वा प्रभोर्वाक्यं प्रणम्य च पुनः पुनः ।
स्तुत्वा तं देवदेवेशं[1] प्रबद्धकरसंपुटा ॥ ६९ ॥
ददासि चेद् वरं मह्यं देवदेव जगत्पते ।

---

१. पुनः स्तुत्वा तं देवेशं (क) (ख) ।

अनेनैव स्वरूपेण भगवन् स्थातुमर्हसि ॥ ७० ॥
स्थितोऽस्म्यत्रैव भद्रं ते अपरं वरयाशु मे ।
दुर्लभं ते वरं दद्मि तपसाऽहं प्रतोषितः ॥ ७१ ॥
इत्युक्ता मां प्रणम्याह रुरुः सा संशितव्रता ।
यदि प्रसन्नो देवेश तदा मां कुरु पावनीम् ।
मन्नाम्ना क्षेत्रमेतच्च ख्यातं भवतु नान्यथा ॥ ७२ ॥
तामहं देवि सुभगे प्रोवोचं पुनरेव हि ।
तीर्थानां परमं तीर्थं तव देहोभवत्वयम् ।
तव नाम्ना च विख्यातमेतत् क्षेत्रं भविष्यति ॥ ७३ ॥
तव तीर्थे कृतस्नानस्त्रिरात्रोपोषितो नरः ।
विलोक्य मां भवेत् पूतो मम वाक्यान्न संशयः ॥७४॥
ब्रह्महत्यादिपापानि ज्ञात्वाज्ञात्वा कृतान्यपि ।
यस्यस्ति विलयं क्षिप्रमेवनेतन्न संशयः ॥ ७५ ॥
इति दत्त्वा वरांस्तस्यै तत्रैवान्तर्हितः स्थितः ।
सापि कालेन सञ्जाता तीर्थभूता तथाऽभवत् ॥ ७६ ॥
एतत्ते कथितं देवि रुरुमाहात्म्यमुत्तमम् ।
रुरुक्षेत्रस्य प्रभवमेतद् गुह्यं परं मम ॥ ७७ ॥

इति वराहपुराणे भगवच्छास्त्रे रुरुक्षेत्रहृषीकेशमहिमवर्णनं नाम षट्चत्वारिंशततमोऽध्यायः ।



## सप्तचत्वारिंशदधिकशततमोऽध्यायः

धरण्युवाच

अत्याश्चर्यं श्रुतं ह्येतद् रुरुक्षेत्रसमुद्भवम् ।
हृषीकेशस्य महिमा त्वया य उपवर्णितः ॥ १ ॥
अन्यच्च मत्परं गुह्यं क्षेत्रं परमपावनम् ।
वक्तुमर्हसि देवेश परं कौतूहलं मम ॥ २ ॥

वराह उवाच

शृणु भूमे प्रयत्नेन कारणं परमं मम ।
गुह्यमस्त्यपरञ्चैव हिमशृङ्गशिलोच्चये ॥ ३ ॥
गोनिष्क्रमणकं नाम गावो यत्र प्रतारिताः[1] ।
यथा निष्क्रमणं प्राप्य सुरभीणां वसुन्धरे ॥ ४ ॥
सप्ततिर्यत्र कल्पानि और्वो यत्र प्रजापतिः ।
तपश्चचार परमं मम मायाबलान्वितः ॥ ५ ॥
तस्यैवं वर्तमानस्य याति काले महत्तरे ।
एवं हि तप्यमानस्य सर्वलोकस्य संशयः ॥ ६ ॥
न वरं प्रार्थयत्येष लाभालाभसमन्वितः ।
सूचकोऽपि न विद्येत बलिकर्मसुसंयतः ॥ ७ ॥
अथ दीर्घस्य कालस्य कश्चिद् ब्रह्मयतिस्तदा ।
तपस्तपस्यति मुनी तस्मिन् शैलोच्चये धरे ।
ईश्वरोऽपि महाभागे तत् पार्श्वं समुपागतः[2] ।
गोनिष्क्रमेति विख्याते तस्मिंस्तीर्थे महौजसि ॥८।९॥
तत्र त्वौर्वो महाभागे तप्यते समदर्शनः ।
पद्मानां कारणादौर्वो गङ्गाद्वारमुपागतः ॥ १० ॥
तन्निर्गतं ततो ज्ञात्वा और्वं सर्वे तपस्विनः ।
महेश्वरो महातेजाः संभ्रमं समुपागतः ॥ ११ ॥
फलपुष्पसमाकीर्णा लक्ष्मीश्चैवोपजायते ।
आश्रमं रूपसंपन्नं फलपुष्पोपशोभितम् ।
तच्च वै भस्मसाद्भूतं महारुद्रस्य तेजसा ॥ १२ ॥
दग्ध्वा तञ्चाश्रमं पुण्यमौर्वस्य सुमहत्प्रियम् ।
ईश्वरोऽपि ततः प्राप्तः शीघ्रमेव हिमालयम् ॥ १३ ॥
एतस्मिन्नन्तरे देवि गृह्य 'पुष्पकरण्डकम् ।

---

१. प्रजापतेः (ग) । २. अत्याश्चर्यमुपागतः ।

आश्रमं समनुप्राप्त और्वोऽपि मुनिपुङ्गवः।
शान्तो दान्तः क्षमाशीलः सत्यव्रतपरायणः॥ १४॥
दृष्ट्वा स्वमाश्रमं दग्धं बहुपुष्पफलोदकम्।
मन्युना परमाविष्टो दुःखेन च परिप्लुतः।
उवाच क्रोधरक्ताक्षो वचनं निर्दहन्निव॥ १५॥
येनैष चाश्रमो दग्धो बहुपुष्पफलोदकः।
सोऽपि दुःखेन सन्तप्तः सर्वलोकान् भ्रमिष्यति॥१६॥
एवमौर्वेण दत्ते तु शापे तस्मिन् महौजसि।
मद्भयात् तु लोकानां न कश्चित् पर्यवीक्ष्यत्॥ १७॥
तत्क्षणादेव देवेशि ईशोऽपि जगतो विभुः।
महादाहेन सन्तप्तः शम्भुर्देवीमुवाच ह॥ १८॥
और्वस्य तु तपो दृष्ट्वा भीतैर्देवैरुदाहृतम्।
दह्यते स्म जगत्सर्वं स तु किञ्चिन्न चेच्छसि।
को वा प्रतिविधिस्तत्र यथा सर्वस्य संभवेत्॥ १९॥
एवमुक्ते मया क्रोधादीक्षितस्तस्य चाश्रमः।
दग्धोऽभवत् क्षणेनैव वयं तस्माद् विनिर्गताः॥ २०॥
एतद् दुःखेन सन्तप्तो मन्युना च परिप्लुतः।
और्वः शशाप रोषेण तेन तप्ता वयं शिवे॥ २१॥
ततोऽभ्रमद् विरूपाक्षः शन्न प्राप्नोति कर्हिचित्।
अहञ्च परितप्तोऽस्मि आत्मत्वादीश्वरस्य च।
तेन दाहेन सन्तप्तो न शक्नोमि विचेष्टितुम्॥ २२॥
पार्वत्या च ततः प्रोक्तः आवां नारायणं प्रति।
गच्छावस्तस्य वाक्येन सुखं यत्र भविष्यति॥ २३॥
ततो नारायणं गत्वा सह तेन तमौर्वकम्।
विज्ञापयामो रुद्रस्य शापोऽयं विनिवर्तताम्।
सन्तप्ताः स्म वयं सर्वे तस्माच्छापं निवर्तय॥ २४॥
और्वोऽप्युवाच नोक्तं मे अनृतं तु कदाचन।
सुरभीगणमानीय गत्वैतं स्नापयन्तु वै।
रुद्रशापो निवृत्तः स्यात् तेनैव किल नान्यथा॥ २५॥
एतस्मिन्नन्तरे देवि मया गावोऽवतारिताः।
सप्तसप्तति कल्याणि सौरभेया महौजसाः॥ २६॥
तेनाप्लावितदेहाश्च परां निर्वृतिमागताः।
तच्च गोनिष्क्रमं नाम तीर्थं परमपावनम्॥ २७॥
तत्र स्नानं तु कुर्वीत एकरात्रोषितो नरः।

गोलोकं च समासाद्य मोदते नात्र संशयः ॥ २८ ॥
अथात्र मुञ्चते प्राणान् कृत्वा कर्म सुदुष्करम् ।
शङ्खचक्रगदायुक्तो मम लोके महीयते ॥ २९ ॥
पञ्चधाराः पतन्त्यत्र मूले मूलवटस्य हि ।
तत्र स्नानं प्रकुर्वीत पञ्चरात्रोषितो नरः ॥
पञ्चानामपि यज्ञानां फलमाप्नोति मानवः ॥ ३० ॥
अथात्र मुञ्चते प्राणान् कृत्वा कर्म सुदुष्करम् ।
पञ्चयज्ञफलं भुक्त्वा मम लोकं प्रपद्यते ॥ ३१ ॥
अस्ति पञ्चपदं नाम तस्मिन् क्षेत्रे परं मम ।
मम पूर्वेण पार्श्वेण दृढाः पञ्च महाशिलाः ।
मत्पूर्वां दिशमाश्रित्य तत्र ब्रह्मपदद्वयम् ॥ ३२ ॥
मध्ये तु तस्य कुण्डस्य शिलाविस्तीर्णसंश्रिता ।
ऊर्ध्वं नालपरीणाहं तत्र विष्णुपदं मम ॥ ३३ ॥
तत्र स्नानं तु कुर्वीत पञ्चरात्रोषितोनरः ।
याति शुद्धानि लोकानि ये च भागवतप्रियाः ॥ ३४ ॥
अथात्र मुञ्चते प्राणान्युक्तः पञ्चपदे नरः ।
विमुक्तः सर्वसंसारान्मम लोकञ्च गच्छति ॥ ३५ ॥
ततो ब्रह्मपदं नाम क्षेत्रं गुह्यं परं मम ।
यत्र धारा पतत्येका पश्चिमां दिशमाश्रिता ॥ ३६ ॥
तत्र स्नानन्तु कुर्वीत एकरात्रोषितो नरः ।
ब्रह्मलोकमवाप्नोति ब्रह्मणा सह मोदते ॥ ३७ ॥
कौमुदस्य तु मासस्य शुक्लपक्षस्य द्वादशी ।
यज्ञानां वाजपेयानां फलं प्राप्नोति मानवः ॥ ३८ ॥
अथात्र मुञ्चते प्राणान् मम कर्मसु निष्ठितः ।
वाजपेयफलं भुक्त्वा मम लोके प्रमोदते ॥ ३९ ॥
अस्ति कोटिवटं नाम तस्मिन् क्षेत्रे परं मम ।
पञ्चक्रोशं ततो गत्वा वायव्यां दिशि संस्थितः ॥४०॥
तत्र स्नानन्तु कुर्वीत षष्ठकालोषितो नरः ।
बहुयज्ञस्य कोटीनां फलं प्राप्नोति निष्कलम् ॥ ४१ ॥
अथात्र मुञ्चते प्राणान् भूमे कोटिवटे शुभे ।
यज्ञकोटिफलं भुक्त्वा मम कोटिं प्रपद्यते[1] ॥ ४२ ॥
अस्ति विष्णुसरो नाम तस्मिन् क्षेत्रे परं मम ।

---

१. मम लोकं प्रपद्यते ।

पूर्वोत्तरेण पार्श्वेन पञ्चक्रोशं न संशयः ॥ ४३ ॥
मत्सरः पद्मपत्राक्षि अगाधं परिसंस्थितम् ।
पञ्चक्रोशश्च विस्तारः पर्वतः परिमण्डलः ॥ ४४ ॥
तत्र भ्रमति यो भद्रे कुर्याच्चैव प्रदक्षिणम् ।
उपवासं त्रिरात्रं तु कृत्वा कर्म सुदुष्करम् ॥ ४५ ॥
यावन्ति भ्रममाणस्य पदानि ननु सुन्दरि ।
तावद् वर्ष सहस्राणि ब्रह्मलोके महीयते ॥ ४६ ॥
अथाऽत्र मुञ्चते प्राणान् स्वकर्मपरिनिष्ठितः ।
ब्रह्मलोकं समुत्सृज्य मम लोके महीयते ॥ ४७ ॥
तस्मिन् क्षेत्रे महाभागे आश्चर्यं शृणु सुन्दरि ।
गवां वै श्रूयते शब्दो मम कर्मसुखावहः ॥ ४८ ॥
अथात्र ज्यैष्ठमासस्य शुक्लपक्षस्य द्वादशी ।
श्रूयते सुमहान् शब्दः स्वयमेतन्न संशयः ॥ ४९ ॥
एवं गोस्थलके पुण्ये महाभागवतः शुचिः ।
करोति शुभकर्माणि शीघ्रं मुच्येत किल्विषात्॥ ५० ॥
एवं तेन महाभागे ईश्वरेण यशस्विनि ।
शापदाहो विनिर्मुक्तः सर्वैः सह मरुद्गणैः ॥ ५१ ॥
एतद् गोस्थलकं नाम सर्वशान्तिकरं परम् ।
कथितं देवि कात्स्न्र्येन तवानुग्रहकाम्यया ॥ ५२ ॥
एषोऽध्यायो महाभागे सर्वमङ्गलकारकः ।
मम मार्गानुसाराणां मम च प्रीतिवर्धनः ॥ ५३ ॥
श्रेष्ठानां परमं श्रेष्ठं मङ्गलानाञ्च मङ्गलम् ।
लाभानां परमो लाभो धर्माणां धर्म उच्यते ॥ ५४ ॥
लभन्ते पठमाना वै मम मार्गानुसारिणः ।
तेजः श्रियञ्च लक्ष्मीञ्च सर्वकामान्यशस्विनि ॥ ५५ ॥
तावद् वर्षसहस्राणि मम लोके महीयते ॥ ५६ ॥
पतनञ्च न विद्येत पठमाना दिने दिने ।
तारितानि कुलान्येभिः सप्त सप्त च सप्त च ॥ ५७ ॥
पिशुनाय न दातव्यं न मूर्खाय शठाय च ।
देयं पुत्राय शिष्याय यश्च जानाति सेवितुम् ॥ ५८ ॥
एतन्मरणकाले तु न कदाचित्तु विस्मरेत् ।
श्लोकं वा यदि वा पादं यदीच्छेत् परमां गतिम्॥५९॥
तत् क्षेत्रं तु महाभागे पञ्चयोजनमण्डलम् ।
तिष्ठामि परया प्रीत्या दिशं पूर्वामुपाश्रितः ॥ ६० ॥

पश्चिमेन वहेद्गङ्गां निष्कामेण वसुन्धरे ।
एवं रहस्यं गुह्यञ्च सर्वकर्मसुखावहम् ॥ ६१ ॥
एतत्ते परमं भद्रे गुह्यं धर्मसमन्वितम् ।
मम क्षेत्रं महाभागे यत्त्वया परिपृच्छितम् ॥ ६२ ॥

इति वराह पुराणे भगवच्छास्त्रे गोनिष्क्रमणमाहात्म्य-
वर्णनं नाम सप्तचत्वारिंशदधिकशततमोऽध्यायः ।



## अष्टाचत्वारिंशदधिकशततमोऽध्यायः ।

सूत उवाच

गोनिष्क्रमणमाहात्म्यं श्रुत्वा गुह्यमनुत्तमम् ।
विस्मयं परमं गत्वा सर्वरत्नविभूषिता ॥ १ ॥

धरण्युवाच

अहो गवां हि माहात्म्यं तव चैवं श्रुतं मया ।
यच्छ्रुत्वाऽहं जगन्नाथ जातास्मि परिनिर्वृता ॥ २ ॥
एवमेव परं गुह्यं ब्रूहि नारायण प्रभो ।
अस्मात् क्षेत्रात् परं देव[1] यदि क्षेत्रं विशिष्यते ॥३॥

वराह उवाच

अहं नारायणो देवः सर्वधर्मव्यपाश्रयः ।
मात्सर्यं चैव मे नास्ति तेनाहं परमः प्रभुः ॥ ४ ॥
एतच्चास्त्रं महाभागे प्रयुक्तं लीलया मया ।
वराहरूपमादाय सर्वभागवतप्रियम् ॥ ५ ॥

धरण्युवाच

यथा यथा भाषसे धर्मकारण-
मिदं वचो धर्मविनिश्चयं महत् ।
तथा तथा देववराऽप्रमेयं
हृद्यं मनो भावयसे जनार्दन ॥ ६ ॥

ततो महीवचः श्रुत्वा धर्मश्रेष्ठो महामनाः ।
वराहरूपी भगवान् प्रत्युवाच वसुन्धराम् ॥ ७ ॥

वराह उवाच

साधु भूमे महाभागे मम कर्मव्यवस्थिते ।
कथयिष्याम्यहं ह्येवं गुह्यं लोकसुखावहम् ॥ ८ ॥
स्तुतस्वामीति विख्यातं गुह्यं क्षेत्रं परं मम ।
द्वापरं युगमासाद्य तत्र स्थास्यामि सुन्दरि ॥ ९ ॥
पुत्रोऽहं वसुदेवस्य देवक्या गर्भसंभवः ।
वासुदेव इति ख्यातः सर्वदानवसूदनः ॥ १० ॥
पञ्च तस्य सुशिष्याश्च भविष्यन्ति विचक्षणाः ।
ऋषयो धर्मसंयुक्ता मत्प्रसादाद् बलाश्रिताः ॥

---

१. देवि । ( ग ) तदसङ्गतम् ।

ते मां संस्थापयिष्यन्ति धर्ममूर्ति महीं गतम् ॥ ११ ॥
शाण्डिल्यो जाजलिश्चैव कपिलश्चोपसायकः ।
भृगुश्चैव महाभागे मम मार्गानुसारिणः ॥ १२ ॥
ते च प्रसन्नमनस आत्मदृष्टान्तदर्शिनः ।
स्वयं ज्ञानप्रभावेण भासयिष्यन्ति मां सदा ॥ १३ ॥
सङ्कर्षणो वासुदेवः प्रद्युम्नो ह्यनिरुद्धकः ।
गच्छता बहुकालेन मम कर्मपरायणाः ॥ १४ ॥
ततो दीर्घेण कालेन इज्यापूर्वस्थितेन च ।
वरं तेषां प्रदास्यामि यो यस्य हृदि संस्थितः ॥ १५ ॥
ते प्रवक्ष्यन्ति मां देवि आत्मशास्त्रव्यवस्थिताः।
आत्मशास्त्रं प्रतिष्ठेत यत्र धर्मः सुनिष्ठितः ॥ १६ ॥
भवत्वेतन्निश्चयेन न तु मिथ्या कदाचन ।
तव देव प्रसादेन इह लोकः[1] प्रवर्तताम् ॥ १७ ॥
तानप्येवं वदिष्यामि शिष्याय भवतां प्रियम् ।
भविष्यति न सन्देहो यातो यूयं मम प्रियाः ॥ १८ ।
सुशिष्याः वाढमित्येवं भविष्यन्ति न संशयः ।
तदेते प्रवदिष्यन्ति सर्वभागवतप्रियम् ॥ १९ ॥
यथा च मथ्यमानाद् वै दध्नश्चोद्ध्रियते घृतम् ।
एवं सर्वेषु शास्त्रेषु वाराहं घृतसम्मितम् ॥ २० ॥
वाराहं ज्ञानमुत्सृज्य महाभागं महौजसम् ।
एवं समं मया चैव आत्मना परिभाषितम् ।
ते प्रमाणं करिष्यन्ति सिद्धिं प्रास्यन्ति वै पराम् ॥२२॥
महाज्ञानमिदं सूक्ष्मं भूमे भक्तेषु दृश्यते ।
शास्त्राणां परमं शास्त्रं सर्वसंसारमोक्षणम् ॥ २२ ॥
किञ्चिदन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
शास्त्रमेतन्महाभागे स्थूलकर्म महौजसम् ॥ २३ ॥
केचित्तरन्ति ज्ञानेन केचित् कर्माणि निष्ठिताः ।
केचिद्यथेष्टं सुश्रोणि केचिद्दानेन कर्मणा ॥ २४ ॥
केचिद् योगबलं मुक्त्वा[2] पश्यन्ति मम संस्थितिम् ।
विधिपूर्वं तु मे किञ्चिन्नराः पश्यन्ति निष्ठिताः ॥२५।
सर्वधर्मकराः केचित् सर्वाशाः सर्वविक्रयाः ।

---

१. लोके ( ग ) ।
२. भक्ताः ( ग ) ।

ते मां पश्यन्ति वै भूमे एकचित्तव्यवस्थिताः ॥ २६ ॥
एवमेतन्महाशास्त्रं देवि संसारमोक्षणम् ।
मम भक्तव्यवस्थायै प्रयुक्तं परमं प्रियम्[1] ॥ २७ ॥
ते तथा च प्रवक्ष्यन्ति यच्च यस्याभिरोचते ।
अन्यथाऽन्यस्य दृष्टानामृषिभिर्यत् प्रयोजितम् ॥
तद् युगस्य प्रभावेण भूमे कुर्वन्ति मानवाः ॥ २८ ॥
तैः स्वशिष्यैः समं देवि ये शास्त्रविनियोजिताः ।
मत्प्रसादेन ते सर्वे सिद्धिं यास्यन्ति मत्पराम् ॥ २९ ॥
मम शिष्येषु येषाञ्च मात्सर्योपहतात्मनाम् ।
मच्छास्त्रे च सर्वेदोषस्तेषामत्र पुनर्भवः ॥ ३० ॥
मात्सर्यं ये च कुर्वन्ति मद्धर्मपरमे जने ।
तेषान्नायं परो लोको मात्सर्योपहतात्मनाम् ॥ ३१ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
मम मार्गानुसारेण परं गुह्यं मम प्रिये ॥ ३२ ॥
शास्त्रवन्तो विनीताश्च बहुदोषविवर्जिताः ।
ते तु मात्सर्यदोषेण नष्टाचाराः पतन्त्यधः ॥ ३३ ॥
मात्सर्यं सर्वनाशाय मात्सर्यं धर्मनाशकम् ।
यस्तु मात्सर्यसंयुक्ता न स पश्यति मां क्वचित् ॥३४॥
बहुकर्मसमायुक्ता दानाध्ययननिष्ठिताः ।
तपसा ज्ञानयुक्ता वा नित्यकर्मसु चोद्यताः ॥ ३५ ॥
अनेन हि स्वभावेन मात्सर्यञ्चैव कुर्वते[2] ।
न ते पश्यन्ति मां भूमे मायया परिदूषिताः ॥ ३६ ॥
न कर्तव्यं ततः सर्वैर्मात्सर्यं धर्मघातकम् ।
मम शास्त्रपरेणेह यदीच्छेत् परमं गतिम् ॥ ३७ ॥
एतद् गुह्यं महाभागे न जानन्ति मनीषिणः ।
मात्सर्यस्य तु दोषेण बहवो निधनं गताः ॥ ३८ ॥
एतच्छास्त्रं महाभागे प्रयुक्तं विधिना मया[3] ।
वराहरूपमादाय सर्वभागवतप्रियम् ॥ ३९ ॥
तत्राश्चर्यं महाभागे शृणु भूतगिरौ मम ।
आयसी प्रतिमा तत्र अभेद्या चैव दृश्यते ॥ ४० ॥
ब्रुवन्ति केचित् कांस्येति आयसीत्यपरेऽब्रुवन् ।
पाषाणीत्यपरे केचिदन्ये वज्रमयीति च ॥ ४१ ॥

१. मया ( ग )   २. वर्तते ।   ३. विश्या म (न ? ) या इति (ग) ।

ऊर्ध्वं वा यदि वाऽधो वा ये कुर्वन्ति ममार्चनम् ।
तथापि संस्पृशन्ति मां शिरो मध्ये तु सुन्दरि ॥ ४२ ॥
ये तु पश्यन्ति मां भूमे मणिपूरगिरौ स्थितम् ।
स्तुवन्त्याचार्यवन्तश्च मत् प्रसादात् सुसंयताः ॥ ४३ ॥
आचार्याणां गुणान् मुक्त्वा मम कर्मपथे स्थिताः ।
सर्वकिल्विषमुक्ताश्च यान्ति ते परमां गतिम् ॥ ४४ ॥
तस्मिन् क्षेत्रे महाभागे अस्ति गुह्यं परं मम ।
पञ्चारुमेति विख्यातं उत्तरां दिशमाश्रितम् ॥ ४५ ॥
तत्र स्नानं प्रकुर्वीत पञ्च कालोषितो नरः ।
मोदते नन्दने दिव्ये अप्सरोभिः समाकुले ॥ ४६ ॥
अथात्र मुञ्चते प्राणान् कृतकृत्यो भवेन्नरः ।
नन्दनं वनमुत्सृज्य मम लोकञ्च गच्छति ॥ ४७ ॥
भृगुकुण्डेति विख्यातमत्र गुह्यं परं मम ।
मम दक्षिणपार्श्वे तु अदूरादर्धयोजनात् ॥ ४८ ॥
तत्र स्नानं तु कुर्वीत मम मार्गानुसारकः ।
भूपृष्ठे न तु जायेत कालेन विजितेन्द्रियः ॥ ४९ ॥
ध्रुवो यत्र तु तिष्ठेत मेरुशृङ्गे शिलोच्चये ।
तत्र मोदति सुश्रोणि अप्सरोभिर्यथासुखम् ॥ ५० ॥
अथात्र मुञ्चते प्राणान् म मकर्मपथे स्थितः ।
ध्रुवलोकं परित्यज्य मम लोके महीयते ॥ ५१ ॥
मणिकुण्डेति विख्यातं तत्र गुह्यं परं मम ।
मणयो यत्र दृश्यन्ते अनेकालयसंस्थिताः ॥ ५२ ॥
अगाधं तं ह्रदं भद्रे देवानामपि दुर्लभम् ।
विस्मयं किं पुनस्तत्र मलयश्चञ्चलस्थिताः ॥ ५३ ॥
तत्र स्नानं प्रकुर्वीत पञ्चकालोषितो नरः ।
रत्नभागी भवेद्धीरराजलक्षणसंयुतः[1] ॥ ५४ ॥
अथात्र मुञ्चते प्राणान् मम कर्मपथे स्थितः ।
छित्वा वै सर्वसंसारं मम लोकं प्रपद्यते ॥ ५५ ॥
सुगुह्यं पूर्वपार्श्वेण मम क्षेत्रस्य सुन्दरि ।
अदूरात् त्रीणि क्रोशानि परिमाणं विधीयते ॥
तत्र स्नानं तु कुर्वीत मम लोकाय गच्छति ॥ ५६ ॥
धूतपापेति विख्यातं तत्र गुह्यं परं मम ।
अदूरात् पञ्च क्रोशं वै मम क्षेत्रस्य पश्चिमे ॥ ५७ ॥

---

१. मम शास्त्रेण संयुतः ।

तत्र कुण्डं महाभागे मम तद् रोचते जलम् ।
मारकतं सुवर्णाभमगाधं निर्मितं मया ॥ ५८ ॥
तत्र स्नानं प्रकुर्वीत पञ्च भक्तोषितो नरः ।
धन्वानो दुष्करं कर्म पञ्चभूतात्मनिष्ठितम् ॥ ५९ ॥
तत्र कृतोदको भद्रे धूतपापो यशस्विनि ।
गत्वेन्द्रलोकं सुश्रोणि देवैः सह स मोदते [1] ॥ ६० ॥
अथात्र मुञ्चते प्राणान् मम कर्मपरायणः ।
इन्द्रलोकं परित्यज्य मम लोकं प्रपद्यते[2] ॥ ६१ ॥
तत्राश्चर्यं महाभागे धूतपापे शृणुष्व मे ।
वर्तते च विशालाक्षि मणिपूरे गिरौ मम ॥ ६२ ॥
तावन्न[3] पतते धारा यावत्पापं न धूयते ।
धूते पापे च सुश्रोणि धारा च पतते मही ॥ ६३ ॥
एवं तत्र विशालाक्षि वृक्षमश्वत्थमिश्रितम् ।
धूतपापं न प्रविशेन्नरे शुद्धे प्राविशति ॥ ६४ ॥
तस्मिन् क्षेत्रे वरारोहे समन्तात् पञ्चयोजने[1] ।
यत्र तिष्ठाम्यहं देवि पश्चिमां दिशमाश्रितः ॥ ६५ ॥
तत्र चामलकं भद्रे अदूरादर्धयोजनात् ।
मम चैव प्रभावेण सर्वकामफलोदयम् ॥ ६६ ॥
तत्र कश्चिन्न जानाति पापकर्मा नराधमः ।
भक्तं भागवतं शुद्धं मम कर्मव्यवस्थितम् ॥ ६७ ॥
उपोष्य च त्रिरात्राणि श्रद्धधानो जितेन्द्रियः ।
तत्र गत्वा वरारोहे उदिते च दिवाकरे ॥ ६८ ॥
अथ मध्याह्नवेलायां यदि वास्तंगतेऽपि वा ।
एक चित्तेन गन्तव्यं धृतिं कृत्वा सुपुष्कलाम् ॥ ६९ ॥
यत् तत्र लभते भद्रे फलमामलकं शुभम् ।
पञ्चरात्रेण लभते तस्मिन् भूतगिरौ मम ॥ ७० ॥
ततो हरि वचः श्रुत्वा सा मही संशितव्रता ।
पुनर्नारायणं तत्र प्रोवाच विनयान्विता ॥ ७१ ॥
स्तुतस्वामी श्रुतोऽसि त्वं तत्र स्थानानि यानि च ।
एतन्नामनिरुक्तिं त्वं वक्तुमर्हसि साम्प्रतम् ॥ ७२ ॥

वराह उवाच

भूमे हत्वा तु संसारान् ये चान्ये देवकण्टकाः ।

---

१. सुमोदते । २. मम लोके महीयते । ३. गावत् । १. पञ्चयोजनम् ।

द्वापरं युगमासाद्य यत्रस्थास्यामि सुन्दरि ॥ ७३ ॥
ततोऽमरैश्च ब्रह्माद्यैर्बहुभिर्मन्त्रवादिभिः ।
स्तुतिः कर्तुं समारब्धा मणिपूराश्रितस्य मे ॥ ७४ ॥
ततो मां नारदो देवि असितो देवलस्तथा ।
पर्वतश्च महाभागे मम भक्त्या व्यवस्थितः ।
नाम कुर्वन्ति मे तत्र मणिपूरगिरौ ततः ॥ ७५ ॥
स्तुतस्वामीति विख्यातं मम कर्मव्यपाश्रितम् ॥ ७६ ॥
एतत्ते कथितं भद्रे निरुक्तिकरणं मया ।
त्वया पृष्टं हि यद्भद्रे सर्वभागवतप्रियम् ॥ ७७ ॥
एतत् स्तुतगिरेर्देवि माहात्म्यं कथितं मया ।
द्वापरं युगमासाद्य यत्र स्थास्यामि सुन्दरि ॥ ७८ ॥
एतानि भूमि गुह्यानि तत्र भूतगिरौ मम ।
श्रद्दधानेन मर्त्येन श्रोतव्यं नात्र संशयः ॥ ७९ ॥
एतत्ते कथितं भद्रे सर्वधर्मव्यपाश्रयम् ।
श्रीस्तुतस्वामिमाहात्म्यं किमन्यत् परिपृच्छसि ॥ ८० ॥

इति वराहपुराणे भगवच्छास्त्रे स्तुतस्वामिमहात्म्यं
नाम अष्टाचत्वारिंशदधिकशततमोऽध्यायः ।



## ऊनपञ्चाशदधिकशततमोऽध्यायः

सूत उवाच

श्रीस्तुतस्वामिमाहात्म्यं श्रुत्वा धर्मपरायणा ।
परितुष्टमना देवी वाक्यमेतदुवाच ह ॥ १ ॥

धरण्युवाच

एतच्छ्रुत्वा तु माहात्म्यं देवदेववर प्रभोः ।
मम चित्तस्य परमा जाता शान्तिरनुत्तमा ॥ २ ॥

नाराचधारावरणासिधारी
सुररिपुवधकारी धरणीधरः ।
धृतशार्ङ्गगदाब्जचक्रपाणिः
स्वयमिह शास्त्रमुदावहत् प्रधानम् ॥ ३ ॥

एवं हि गुणमाहात्म्यं स्तुतस्वामिनि मच्छ्रुतम् ।
अस्माच्चेदं परं श्रेष्ठं तन्मे वद कृपानिधे ॥ ४ ॥

वराह उवाच

एवं भूमे वरं श्रेष्ठे फुल्लपङ्कजमालिनि ।
कथयिष्याम्मि चान्यत्तो गुह्यं पापभयापहम् ॥ ५ ॥
द्वापरं युगमासाद्य यादवानां कुलोद्वहः ।
सौरीति तत्र विख्यातो भविष्यति पिता मम ॥ ६ ॥
द्वारकेति च विख्याता पुरी तत्र स्थिताऽभवत् ।
या च देवपुरीरम्या विश्वकर्मविनिर्मिता ॥ ७ ॥
पञ्चयोजनविस्तारा दशयोजनमायता ।
वसाम्यत्र वरारोहे ततपञ्चसमास्तथा[1] ॥ ८ ॥
भारावतरणं कृत्वा देवानां सुमहत्प्रियम् ।
पुनरप्यागमिष्यामि स्वलोकं प्रति सुन्दरि ॥ ९ ॥
भविष्यति वरारोहे ईश्वरः सदृशो मम् ।
दुर्वासा इति विख्यातः शपिष्यति कुलं मम् ॥ १० ॥
तस्य शापाभिसन्तापाद द्वारकावासिनो धरे ।
वृष्णान्धकाश्च भोजाश्च गमिष्यन्ति यमक्षयम् ॥ ११ ॥
चन्द्रपाण्डुरसङ्काशो वनमाली हलायुधः ।
हलेनाकृष्य नगरं समुद्रं गमयिष्यति ॥ १२ ॥
नारायणवचः श्रुत्वा धर्मकर्मा वसुन्धरा ।

---

१. स्थिता ।

उभौ तौ चरणौ गृह्य पुनः प्रच्छ माधवी ॥ १३ ॥

धरण्युवाच

लोकनाथोऽसि सर्वेषां देव मायाकरण्डक ।
शपिष्यति कथं तत्र दुर्वासास्तद् वदस्व मे ॥ १४ ॥

वराह उवाच

तत्र जाम्बवती नाम मम पत्नी भविष्यति ।
रूपयौवनसम्पन्ना मम भोगसमन्विता ॥ १५ ॥
तस्याः पुत्रो महाभागे रूपयौवनदर्पितः ।
साम्ब इत्यभिविख्यातो ममैव सततं प्रियः ॥ १६ ॥
तेनैव क्रीडमानेन कृत्वा गर्भमतथ्यतः ।
स पृष्टः परमश्रेष्ठ ऋषिरेषा प्रसेष्यति ।
पुत्रकामा त्वियं बाला मुने तत्प्रब्रवीहि मे ॥ १७ ॥
साम्बोऽयमिति च ज्ञात्वा स मुनेः कोपमूर्च्छितः।
उवाच तर्हि ते गर्भान्मुसलं कुलनाशनम् ।
येन वृष्ण्यान्धकाः सर्वे गमिष्यन्ति यमक्षयम् ॥ १८ ॥
श्रुत्वा दुर्वाससः शापं ते च सर्वे कुमारकाः ।
शापेन सन्तप्तधियो मामूचुर्भयसंयुताः ॥ १९ ॥
ततस्तानागतान् दृष्ट्वा कुमारान् सृष्टवाहनम् ।
ते च मामब्रुवन सर्वे यथावृत्तं समुत्सुकाः ॥ २० ॥
तच्च तेषां वचः श्रुत्वा प्रोक्तवानस्मि तच्छृणु ।
भविष्यति न सन्देहे दुर्वासा यदुवाच ह ॥ २१ ॥
एवं ते कथितं भूमे वृष्ण्यादिशापकारणम् ।
तत्र स्थानानि मे भूमे कथ्यमानानि वै शृणु ॥ २२ ॥
द्वारकायां महाभागे वैष्णवानां सुखावहे ।
अस्ति पञ्चसरो नाम गुह्यं क्षेत्रं परं मम ।
समुद्रतीरमुत्सृज्य मम कर्मसुखावहम् ॥ २३ ॥
तत्र स्नानन्तु कुर्वीत षष्ठकालोषितो नरः ।
मोदते नाकपृष्ठे तु अप्सरोगण सङ्कुले ॥ २४ ॥
अथात्र मुञ्चते प्राणान् क्षेत्रे पञ्चसरे मम ।
देवलोकं समुत्सृज्य मम लोके महीयते ॥ २५ ॥
प्लक्षो वै तत्र सुश्रोणि शतशाखो महाद्रुमः ।
सुफलैः शोभनैः कुम्भाकृतिभिर्बहुभिः फलैः ॥ २६ ॥
बहवस्तत्र गच्छन्ति लाभलौल्येन[1] मानवाः ।

---

१. लाभालाभेन मानवाः ।

फलं न लभ कश्चित्चिन् मुक्त्वा भागवतं नरम् ।। २७ ।।
लभन्ते ये फलं तत्र मुक्ताः पापेन कर्मणा ।
ते लभन्ते परां सिद्धिं मम कर्मणि संस्थिताः ।। २८ ।।
प्रभासमिति विख्यातं तस्मिंस्तीर्थे परे मम ।
मनुजा यं न पश्यन्ति रागलोभसमन्विताः ।। २९ ।।
तत्र स्नानं प्रकुर्वीत पञ्चभक्तोषितो नरः ।
मोदते सप्तद्वीपेषु गुह्यानि च स गच्छति ।। ३० ।।
अथ चेन्मुच्यते प्राणान् प्रभासे गतकिल्बिषः ।
सर्वसङ्गं परित्यज्य मम लोकाय गच्छति ।। ३१ ।।
तत्राश्चर्यं महाभागे कथ्यमानं मया शृणु ।
प्रभासे यत्र शृण्वन्ति सागरे न मरं प्रति[1] ।। ३२ ।।
मकरास्तत्र दृश्यन्ते भ्रममाणास्ततस्ततः ।
न किञ्चिदपराध्यन्ति स्नायमानाजले ततः ।। ३३ ।।
अथात्र प्रक्षिपेत् पिण्डान् प्रसन्ने सलिले नरः[2] ।
असम्प्राप्तं च गृह्णन्ति एवमेतन्न संशयः ।। ३४ ।।
पापकर्मरतस्यापि न गृह्णन्ति जलं प्रति ।
धर्मात्मनाञ्च गृह्णन्ति पिण्डमेव न संशयः ।। ३५ ।।
पञ्च पिण्डमिति ख्यातं तस्मिन् गुह्यं परं मम ।
अगाधस्याप्यपारस्य क्रोशविस्तार एव च ।। ३६ ।।
तत्राभिषेकं कुर्वीत पञ्चकालोषितो नरः ।
मोदते शक्रलोके स एवमेतन्न संशयः ।। ३७ ।।
अथात्र मुञ्चते प्राणान् पञ्चकुण्डे यशस्विनि ।
शक्रलोकं परित्यज्य मम लोकं स गच्छति ।। ३८ ।।
तत्राश्चर्यं महाभागे कथ्यमानं मया शृणु ।
न पश्येत् पापकर्मा वै शुभकर्मैव पश्यति ।। ३९ ।।
चतुर्विंशति द्वादश्यां मध्याह्ने च दिवाकरे ।
रौप्यं सुवर्णकं पद्मं दृश्यते नात्र संशयः ।। ४० ।।
क्षेत्रं सङ्गमनं नाम तस्मिंस्तीर्थे परं मम ।
धाराः पतन्ति चत्वारि मणिपूरगिरौ श्रिताः ।। ४१ ।।
तत्राभिषेकं कुर्वीत चतुर्भक्तोषितो नरः ।
वैखानसेषु लोकेषु मोदते नात्र संशयः ।। ४२ ।।
अथात्र मुञ्चते प्राणान् मम भक्तिपरायणः ।

---

१. नगरं प्रति । २. सलिले नतु ।

त्यक्त्वा वैखानसाँल्लोकान् मम लोकं स गच्छति ॥४३॥
तत्रापि परमाश्चर्यं कथ्यमानं शृणुष्व मे ।
दृश्यन्ते यानि कुण्डेषु मणिपूरगिरौ तथा ॥ ४४ ॥
प्रक्षीयमाणे पापे तु नयते तज्जलं भुवि ।
स्नायमानेषु पापेषु न पतेत् तद् यथा पुरा ॥ ४५ ॥
हंसकुण्डेति विख्यात तस्मिन् क्षेत्रे परे मम ।
धारा चैका पतत्यत्र मणिपूरगिरौ श्रिता ॥ ४६ ॥
तत्राभिषेकं कुर्वीत षष्ठकालोषितो नरः ।
मुक्तसङ्गो महाभागे मोदते वरुणालये ॥ ४७ ॥
अथात्र मुञ्चते प्राणान् हंसकुण्डे वरानने ।
वारुणं लोकमुत्सृज्य मम लोके महीयते ॥ ४८ ॥
तत्राश्चर्यं प्रवक्ष्यामि हंसकुण्डे यशस्विनि ।
शुद्धाः पश्यन्ति मनुजाः पापकर्मा न पश्यति ॥ ४९ ॥
चतुर्विंशति द्वादश्यां मध्याह्ने च दिवाकरे ।
हंसाश्चैवाऽत्र दृश्यन्ते चन्द्रकुन्दसमप्रभाः ॥५०॥
यस्तत्र पश्यते हंसान् भ्रममाणानितस्ततः ।
लभन्ते ते परां सिद्धिं धरे नास्त्यत्रसंशयः ॥ ५१ ॥
कदम्बमिति विख्यातं तस्मिन् क्षेत्रे परं मम् ।
वृष्णयो यत्र वै शुद्धाः संप्राप्ताश्च समालयम् ॥ ५२ ॥
तत्राभिषेकं कुर्वीत चतुः कालोषितो नरः ।
मोदते ऋषिलोकेषु पुण्यात्मा वै न संशयः ॥ ५३ ॥
अथात्र मुञ्चते प्राणान् कृत्वा कर्म सुदुष्करम् ।
ऋषिलोकं परित्यज्य मम लोकं प्रपद्यते ॥ ५४ ॥
तत्राश्चर्यं महाभागे कथ्यमानं शृणुष्व मे ।
कदम्बात् पतते धारा तत्र पूर्वं विनिःसृता ॥ ५५ ॥
स कदम्बो महाभागे माघमासस्य द्वादशीं ।
पुष्पाणि वै प्रकटयत्युदयस्थे दिवाकरे ॥ ५६ ॥
ये वा लभन्ते तत्पुष्पं मम मार्गानुसारिणः ।
ते लभन्ते परां सिद्धिमेवमेतन्न संशयः ॥ ५७ ॥
चक्रतीर्थमिति ख्यातं तस्मिन् क्षेत्रे परं ममः ।
पञ्च धाराः पतन्त्यत्र मणिपूरसमाश्रिताः ॥ ५८ ॥
तत्राभिषेकं कुर्वीत पञ्चकालोषितो नरः ।
दशवर्षसहस्राणि स्वर्गलोके स मोदते ॥ ५९ ॥
अथात्र मुञ्चते प्राणाँल्लोभमोह विवर्जितः ।

सर्वान् स्वर्गान् समुत्सृज्य मम लोकाय गच्छति ।६०।
तत्राश्चर्यं प्रवक्ष्यामि कथ्यमानं शृणुष्व मे ।
अन्यथैतन्न पश्यन्ति मम कर्मपरायणाः ।। ६१ ।।
चतुर्विंशति द्वादश्यामर्धरात्रे यशस्विनि ।
श्रूयते तत्र निर्घोषो मनःकर्णसुखावहः ।। ६२ ।।
सुगन्धो वहते वायुर्बहुमाल्यसमन्वितः ।
दुर्लभः पापिनाञ्चैव सुलभः पुण्यकर्मिणाम् ।। ६३ ।।
तस्य चोत्तरपार्श्वेन अशोकश्च महाद्रुमः ।
पुष्पते सोऽथ तत्रापि सूर्ये चाभ्युदिते[1]सति ।। ६४ ।।
ये तत्र लभते पुष्पं मम मार्गानुसारिणः ।
ते लभन्ते परां सिद्धि एवं भूमे न संशयः ।। ६५ ।।
अस्ति रैवतकं नाम तस्मिन् क्षेत्रे परं मम ।
सर्वलोकेषु विख्यातं यत्र विक्रीडितं मया ।। ६६ ।।
बहुगुल्मलताकीर्णं बहु पुष्पैश्च शोभितम् ।
बहुवर्णशिलापङ्का गुहाश्चापि दिशो दश ।
वाप्यश्च कन्दराश्चैव देवानामपि दुर्लभाः ।। ६७ ।।
तत्राभिषेकं कुर्वीत षष्ठकालोषितो नरः ।
गच्छते सोमलोकाय कृतकृत्यो न संशयः ।। ६८ ।।
अथात्र मुञ्चते प्राणान् मम कर्मसु निष्ठितः।
सोमलोकं समुत्सृज्य मम लोकं प्रपद्यते ।। ६९ ।।
तत्राश्चर्यं महाभागे कथ्यमानं मया शृणु ।
पश्यन्ति मनुजाः सर्वे धर्मकामा न संशयः ।। ७० ।।
पतन्ति सर्ववृक्षाणां पत्राणि सुबहून्यपि ।
एकश्चापि न दृश्येत प्रसन्नं याति तज्जलम् ।
स च पूर्वेण पार्श्वेण शोभते वै महाद्रुमः ।। ७१ ।।
अपरो मम पार्श्वेण देवानामपि दुर्लभः ।
पञ्चक्रोशसुविस्तारः शोभते वै महाद्रुमः ।। ७२ ।।
पद्मैश्चैवोत्पलैश्छन्नं सुगन्धिकुसुमैः सह ।
बहुमत्स्यजलाकीर्णं सर्वतस्तु फलान्वितम् ।
शिलातलगुहाच्छन्नं सुगन्धिकुसुमैः सह ।। ७३ ।।
तत्राभिषेकं कुर्वीत अष्टभक्तोषितो नरः ।
मोदते नन्दने दिव्ये अप्सरोभिः समन्विते ।। ७४ ।।
अत्राश्चर्यं महाभागे कथ्यमानं मया शृणु ।

१. अभ्युद्यते ।

पश्यन्ति मनुजाः सर्वे धर्मकामा न संशयः ॥ ७५ ॥
मध्याह्ने च पुनः पूर्णश्चार्धरात्रे समो वहेत् ।
वर्धते क्षीयते चैव यथैव च महोदधिः ॥ ७६ ॥
तस्य पश्चिमपार्श्वे तु बिल्वश्चैव महाद्रुमः ।
चतुर्विंशति द्वादश्यां स पुष्पति च निष्कलम् ॥ ७७ ॥
पश्यते शुभकर्मा च पापकर्मा न पश्यति ।
दृश्यते च महाभागे अस्तमेते दिवाकरे ॥ ७८ ॥
यस्तत्र लभते पुण्यं मम मार्गानुसारकः ।
स लभेत परां सिद्धिमेवम्भूतम् न संशयः ॥ ७९ ॥
विष्णुसंक्रमण नाम तस्मिन् क्षेत्रे परे मम ।
विद्धोऽस्मि यत्र व्याधेन स्वमूर्तिं चास्थितःपुनः ॥८०॥
तत्र कुण्डं महाभागे मणिपूरगिरौ श्रुतम् ।
धारा चैका पतत्यत्र लाभालाभ विवर्जितः ।
सूर्यलोकं समुत्सृज्य मम लोके महीयते ॥ ८१ ॥
तत्राश्चर्यं प्रवक्ष्यामि विष्णुं शत्रुगणेश्वरम् ।
पापिनां यस्तु दुर्दर्शः सुदृश्यः पुण्यचारिणाम् ॥ ८२ ॥
तस्य दक्षिणपार्श्वेन अश्वत्थो वै महाद्रुमः ।
चतुर्विंशति द्वादश्यां मध्याह्ने दिवाकरे ।
फलते स यथान्यायं सर्वभागवतप्रियम् ॥ ८३ ॥
ये लभन्ते फलं तत्र मम मार्गानुसारिणः ।
ते लभन्ते परां सिद्धिमेवमेतन्न संशयः ॥ ८४ ॥
तस्मिन् क्षेत्रे महाभागे तिष्ठामि चोत्तरामुखः ।
सर्वभागवतप्रीतिं समुद्रतटमाश्रितः ॥ ८५ ॥
अहं रामेण सहितः सा च एकादशी शुभा ।
त्रीणि तत्रैव तिष्ठामो द्वारकायां यशस्विनि ॥ ८६ ॥
तस्मिन् क्षेत्रे महाभागे त्रयो मोदामहे वयम् ।
त्रिंशद् योजनविस्तारः सर्वतस्तु दिशो दश ॥ ८७ ॥
तत्र गत्वा वरारोहे ये मां द्रक्ष्यन्ति भक्तितः ।
अदीर्घेणैव कालेन प्राप्नुवन्ति पराङ्गतिम् ॥ ८८ ॥
आख्यानानां महाख्यानं शान्तीनां शान्तिरुत्तमा ।
धर्माणां परमो धर्मो द्युतीनां परमा द्युतिः ॥ ८९ ॥
लाभानां परमो लाभः क्रियाणां परमा क्रिया ।
श्रुतीनां परमं श्रेष्ठं तपसाञ्च परं तपः ॥ ९० ॥
एतन्मरणकालेऽपि मा कदाचित्तु विस्मरेत् ।

यदीच्छेत् परमां सिद्धिं मम लोकाय गच्छति ॥ ९१ ॥
य एतत् पठते भद्रे कल्यमुत्थाय मानवः ।
सकुल्यास्तारितास्तेन सप्त सप्त च सप्त च ॥ ९२ ॥
एतत्ते कथितं भद्रे द्वारकायाः सुनिश्चयम् ।
उचितेनोपचारेण किमन्यत् परिपृच्छसि ॥ ९३ ॥

इति वाराहपुराणे भगवच्छास्त्रे द्वारवतीमाहात्म्यवर्णनो नाम ऊनपञ्चाशदधिकशततमोऽध्यायः ॥

# पञ्चाशदधिकशततमोऽध्यायः

सूत उवाच

द्वारकायास्तु माहात्म्यं श्रुत्वा ह्येतत् सुभाषितम् ।
दृष्टोवाच तदा देवं धर्मकामा वसुन्धरा ॥ १ ॥

धरण्युवाच

अहो देव प्रसादश्च यत्त्वया परिकीर्तितम् ।
श्रुत्वैतत् परमं पुण्यं प्राप्तास्मि परमां श्रियम् ॥ २ ॥
एतस्मादपि चेद्गुह्यं लोकनाथ जनार्दन ।
यद्यस्ति प्रोच्यतां मह्यं कृपा चेत् परमाऽपि ते॥ ३ ॥
ततो मही वचः श्रुत्वा विष्णुः कमललोचनः ।
वराहरूपी भगवान् प्रत्युवाच वसुन्धराम् ॥ ४ ॥

वराह उवाच

सानन्दूरेति विख्यातं भूमे गुह्यं परं मम ।
उत्तरे तु समुद्रस्य मलयस्य तु दक्षिणे ॥ ५ ॥
तत्र तिष्ठामि वसुधे उदीचीं दिशमाश्रितः ।
प्रतिमा वै मदीयाऽस्ति नात्युच्चा नातिनीचका ॥ ६ ॥
आयसीं तां वदन्त्येके अन्ये ताम्रमयीं तथा ।
कांस्यां रीतिमयीमन्ये केचित् सीसकनिर्मिताम् ।
शिलामयीमित्यपरे महदाश्चर्यरूपिणीम् ॥ ७ ॥
तत्र स्थानानि वै भूमे कथ्यमानानि वै शृणु ।
मनुजा यत्र मुच्यन्ते गताः संसारसागरम् ॥ ८ ॥
तत्राश्चर्यं प्रवक्ष्यामि सानन्दूरे यशस्विनि ।
सौवर्णं दृश्यते पद्मं मध्याह्ने तु दिवाकरे ॥ ९ ॥
यत्र रामगृहं नाम मम गुह्यं यशस्विनि ।
तत्रापि शृणु चाश्चर्यं यश्चापि परिवर्तते ॥ १० ॥
एका तत्र लता वृक्षे उच्चैस्थूलो महाद्रुमः ।
समुद्रमध्ये तिष्ठन्तं कोऽपि तत्र न पश्यति ॥ ११ ॥
अन्यच्च ते प्रवक्ष्यामि महाश्चर्यं वसुन्धरे ।
मम भक्ता हि पश्यन्ति तिष्ठमानाः स्वकर्मणा ।
बहुमत्स्यसहस्राणि कोट्यो ह्यर्बुदमेव च ॥ १२ ॥
क्षिप्तः पिण्डश्च तन्मध्ये येन केन विकर्मणा ।

एकस्तत्र स्थूलमत्स्यो भूमे चक्रेण चाङ्कितः ।
तावत् कश्चिन्न गृह्णाति यावत्तेन न भक्षितः ॥ १३ ॥
तत्र रामसरो नाम गुह्यं क्षेत्रं परं मम ।
अगाधञ्चाप्यपारञ्च रक्तपद्मविभूषितम् ॥ १४ ॥
तत्र स्नानं तु कुर्वीत एकरात्रोषितो नरः ।
बुधस्य भवनं गत्वा मोदते नात्र संशयः ॥ १५ ॥
अथ प्राणान् प्रमुच्येत तस्मिन् सरसि सुन्दरि ।
बुधस्य भवनं त्यक्त्वा मम लोकं प्रपद्यते ॥ १६ ॥
तस्मिन् रामसरस्युच्चैराश्चर्यं शृणु सुन्दरि ।
मनुजास्तन्न पश्यन्ति मम कर्मरता न ये ॥ १७ ॥
तत्सरः क्रोशविस्तारं बहुगुल्मलतावृतम् ।
मनोज्ञं रमणीयञ्च जलजैश्चापि संवृतम् ॥ १८ ॥
तत्र रूढानि पद्मानि द्योतयन्ति दिशो दश ।
एकन्तु दृश्यते श्वेतमब्जं रुक्ममयं तथा ॥ १९ ॥
तत्र ब्रह्मसरस्युच्चैरुत्तरं पार्श्वमाश्रिता ।
धारा चैका प्रपतति स्थूला मुसलसन्निभा ॥ २० ॥
तत्र स्नानं प्रकुर्वीत षष्ठकालोषितोनरः ।
ब्रह्मलोकं समासाद्य मोदते नात्र संशयः ॥ २१ ॥
अथात्र मुञ्चते प्राणैर्भूमे ब्रह्मसरस्यपि ।
ब्रह्मणा ह्यननुज्ञातो मम लोकञ्च गच्छति ॥ २२ ॥
तत्राश्चर्यं महाभागे रम्ये ब्रह्मसरे शृणु ।
मद्भक्ता यच्च[1] पश्यन्ति घोरसंसारमोक्षणे ॥ २३ ॥
चतुर्विंशतिद्वादश्यां सा धारा पृथुलेक्षणे ।
मध्याह्ने पतते भूमौ यावत् सूर्यस्तु तिष्ठति ॥ २४ ॥
परिवृत्ते तु मध्याह्ने सा धारा न पतेद् भुवि ।
एवं तत्र महाश्चर्यं पुण्यब्रह्मसरोवरे ॥ २५ ॥
अस्ति सङ्गमनं नाम गुह्यं क्षेत्रं परं मम ।
समुद्रश्चैव रामश्च समेष्येते वराङ्गने ॥ २६ ॥
तत्र कुण्डं महाभागे प्रसन्नविमलोदकम् ।
बहुगुल्मलताकीर्णं शोभितञ्च विहङ्गमैः ॥ २७ ॥
समुद्रस्य तु पार्श्वेण अदूरात् तत्र योजनात् ।
मण्डितं कुमुदैः पद्मैः सुगन्धैश्चोत्तमैस्तथा ॥ २८ ॥
तत्र स्नानं तु कुर्वीत षष्ठकालोषितो नरः ।

---

१. यानि पश्यन्ति

समुद्रभवनं गत्वा मम लोकं प्रपद्यते ॥ २९ ॥
तत्राश्चर्यं प्रवक्ष्यामि कुण्डं रामस्य सङ्गमे ।
यद् दृष्ट्वा मनुजास्तत्र भ्रमन्ति विगतज्वराः ॥ ३० ॥
यानि कानि च पर्णानि पतन्ति जलसंसदि ।
एकमप्यत्र पश्यन्ति न केऽपि वसुधे नराः ॥ ३१ ॥
अच्छिद्राणि च पत्राणि तस्मिन् रामस्य सङ्गमे ।
प्रपन्नेनापि मार्गं तच्छिद्रं तत्र न पश्यति ॥ ३२ ॥
अस्ति शक्रसरो नाम गुह्यं क्षेत्रं परं मम ।
तत्र पूर्वेण पार्श्वेण अदूरादर्धयोजनात् ॥ ३३ ॥
तस्य कुण्डस्य सुश्रोणि चतस्रो विपमाश्रिताः[1]।
धाराः पतन्ति कल्याणि प्रसन्नसलिलास्तथा ॥ ३४ ॥
तत्र स्नानं प्रकुर्वीत चतुष्कालोषितो नरः ।
चतुर्णां लोकपालानां लोकानाप्नोति चोत्तमान् ॥३५॥
अस्मिंश्च शक्रसरसि यदि प्राणान् प्रमुञ्चति ।
लोकपालान् समुत्सृज्य मम लोकेषु मोदते ॥ ३६ ॥
तत्राश्चर्यं महाभागे दृश्यते तच्छृणुष्व मे ।
शुद्धैर्भागवतैर्भूमे सर्वसंसारमोक्षणम् ॥ ३७ ॥
ता धाराश्चतुरो भद्रे पतन्ति चतुरो दिशः ।
न च तद्वर्धते चाम्भो न चैव परिहीयते ॥ ३८ ॥
मासे भाद्रपदे चैव शुक्लपक्षे तु द्वादशीं ।
श्रूयते गीतनिर्घोषः श्रुतिकर्ममनोहरः ॥ ३९ ॥
अस्ति सूर्पारकं नाम गुह्यं क्षेत्रं परं मम ।
जामदग्न्यस्य रामस्य आश्रमोऽथ भविष्यति ॥ ४० ॥
तत्र तिष्ठाम्यहं देवि समुद्रतटमाश्रितः ।
शाल्मलीञ्चाग्रतः कृत्वाऽधिष्ठितश्चोत्तरामुखः ॥ ४१ ॥
तत्र स्नानं प्रकुर्वीत पञ्चकालोषितो नरः ।
ऋषिलोकं ततो गत्वा पश्यते चाप्यरून्धतीम् ॥ ४२ ॥
अथ प्राणान् विमुञ्चेत कृत्वा कर्म सुदुष्करम् ।
ऋषिलोकं परित्यज्य मम लोकं प्रपद्यते ॥ ४३ ॥
तत्राश्चर्यं महाभागे नमस्कारं च कुर्वत ।
वर्षाणि द्वादशैतेन नमस्कारः कृतो भवेत् ॥ ४४ ॥
तस्मिन् क्षेत्रे महाभागे पश्यन्ति परिनिष्ठिताः ।
पापात्मानो न पश्यन्ति मम मायाविमोहिताः ॥४५ ॥

१. दिगुपाश्रिताः ।

चतुर्विंशतिद्वादश्यां समुपायान्ति शाल्मलीम् ।
तत्र पश्यन्ति सुश्रोणि शुद्धा भागवता नराः ॥ ४६ ॥
तस्मिन् क्षेत्रे महाभागे अस्ति गुह्यं परं मम ।
जटाकुण्डमिति ख्यातं वायव्यां दिशि संस्थितम् ।४७।
तत्कुण्डस्य महाभागे समन्ताद् दशयोजनम् ।
मलयस्य दक्षिणेन समुद्रस्योत्तरे तथा ॥ ४८ ॥
तत्र स्नानं तु कुर्वीत पञ्चकालोषितो नरः ।
अगस्तिभवनं गत्वा मोदते नात्र संशयः ॥ ४९ ॥
अथ प्राणान् प्रमुञ्चेत मम चिन्तापरायणः ।
अगस्तिभवनं त्यक्त्वा मम लोकं तु गच्छति ॥ ५० ॥
तस्य कुण्डस्य सुश्रोणि नव धारा न किञ्चन ।
विस्तारश्च महाभागे अगाधश्च महार्णवः ॥ ५१ ॥
आश्चर्यं सुमहत् तत्र कथ्यमानं मया शृणु ।
यश्च पश्यति सुश्रोणि समन्तादितरो जनः ॥ ५२ ॥
चतुर्विंशतिद्वादश्यां रवावभ्युदिते सति ।
न वर्धति ततश्चाम्भो यावत्तिष्ठति तत्पुनः ॥ ५३ ॥
एतत् ते कथितं भद्रे सानन्दूरेति तन्मया ।
आश्चर्यञ्च प्रमाणञ्च भक्तिकीर्तिविवर्धनम् ॥ ५४ ॥
गुह्यानां परमं गुह्यं स्थानानां परमं महत् ।
यस्तु गच्छति सुश्रोणि अष्टभक्तपथे स्थितः ।
प्राप्नोति परमां सिद्धिं ममैव वचनं यथा ॥ ५५ ॥
य एतत्पठते नित्यं यश्चैवं शृणुयान्मुदा ।
कुलानि तेन तीर्णानि षट् च षट् च पुनश्च षट् ॥५६॥
एतन्मरणकाले न विस्मर्तव्यं कदाचन ।
यदीच्छेद्विष्णुलोके हि निष्कलं गमनं नरः ॥ ५७ ॥
एतत्ते कथितं भद्रे त्वया पृष्टं च मां प्रति ।
उक्तं भागवतार्थाय किमन्यत् परिपृच्छसि ॥ ५८ ॥

इति वाराहपुराणे भगवच्छास्त्रे सानन्दूरमाहात्म्यवर्णनो नाम पञ्चाशदधिकशततमोऽध्यायः ।

## एकपञ्चाशदधिकशततमोऽध्यायः

सूत उवाच

सानन्दूरस्य माहात्म्यमेतच्छ्रुत्वा वसुन्धरा ।
कृताञ्जलिपुटा भूत्वा वराहं पुनरब्रवीत् ॥ १ ॥

धरण्युवाच

श्रुतमेतज्जगन्नाथ विष्णो गुह्यमनुत्तमम् ।
यच्छ्रुत्वा सुमहाभाग जातास्मि विगतज्वरा ॥ २ ॥
अपरं वाऽस्ति चेत् किञ्चिद् गुह्यं क्षेत्रं शुभावहम् ।
सानन्दूरात् परं गुह्यं क्षेत्रमस्ति न वा परम् ॥ ३ ॥

सुरकरण नृसिंह लोकनाथ
युतससुरासुरधीर देववीर ।
कमलदलसहस्रनेत्ररूपो
जयति कृतान्तसमानकालरूपः ॥ ४ ॥

गद्गदं वचनं श्रुत्वा पृथिव्याः स जनार्दनः ।
उवाच मधुरं वाक्यं सर्वलोकार्तिहा हरिः ॥ ५ ॥

वराह उवाच

शृणु देवि च तत्त्वेन यन्मां त्वं परिपृच्छसि ।
गुह्यमन्यत् प्रवक्ष्यामि मद्भक्तः कर्मणोजनिः ॥ ६ ॥
ततः सिद्धवटे गत्वा त्रिंशद् योजनदूरतः ।
म्लेच्छमध्ये वरारोहे हिमवन्तं समाश्रितम् ॥ ७ ॥
तत्र लोहार्गले क्षेत्रे निवासो विहितः शुभः ।
गुह्यं पञ्चदशायामं समन्तात् पञ्चयोजनम् ॥ ८ ॥
दुर्गमं दुःसहञ्चैव पापैः सर्वत्र वेष्टितम् ।
सुलभं पुण्ययुक्तानां मम चिन्तानुसारिणाम् ॥ ९ ॥
तत्र तिष्ठाम्यहं भद्रे उदीचीं दिशमाश्रितः ।
हिरण्यप्रतिमां कृत्वा जातरूपां न संशयः ॥ १० ॥
ततो मे दानवाः सर्वे क्रमन्तो लोकमुत्तमम् ।
मया चैवान्तरं कृत्वा कृत्वा मायां च वैष्णवीम् ॥११॥
तत्र ब्रह्मा च रुद्राश्च स्कन्देन्द्रसमरुद्गणाः ।
आदित्या वसवो वायुरश्विनौ च महौजसौ ॥ १२ ॥
सोमो बृहस्पतिश्चैव ये चान्ये वै दिवौकसः ।
तेषाञ्चैवार्गलं दत्त्वा चक्रं गृह्य महौजसम् ।

शतकोटिसहस्राणि शीघ्रमेव निपातितम् ॥ १३ ॥
ततश्च देवताः सर्वास्तुष्यमाणा इतस्ततः ।
एवं लोहार्गलं नाम क्षेत्रं नाम मया कृतम् ॥ १४ ॥
ततो देवासुरे युद्धे हत्वा त्रिदशकण्टकान् ।
तेषां संस्थापनं तत्र कृतञ्चैव महौजसाम् ॥ १५ ॥
यो मां पश्यति तत्रस्थं प्रयत्नेन कदाचन ।
सोऽपि भागवतो भूमे भवत्येव सुनिश्चितः ॥ १६ ॥
तस्मिन् कुण्डेति सुश्रोणि यः स्नाति नियतो नरः ।
उपोष्य च त्रिरात्रं तु विधिदृष्टेन कर्मणा ।
ततः स्वर्गसहस्रेषु मोदते नात्र संशयः ॥ १७ ॥
अथात्र मुञ्चते प्राणान् स्वकर्मपरिनिष्ठितः ।
सर्वान् स्वर्गान् परित्यज्य मम लोकं प्रपद्यते ॥ १८ ॥
अन्यच्च ते प्रवक्ष्यामि यत्र तत्परमाद्भुतम् ।
लोकविस्मापनार्थाय मया तत्र च यत्कृतम् ॥ १९ ॥
चतुर्विंशतिद्वादश्यां मासेन विधिना मम ।
बलिः प्रदीयते तत्र सर्वकामविशोधनः ॥ २० ॥
अश्वो मे कल्पितस्तत्र सर्वरत्नविभूषितः ।
श्वेतः कुमुदवर्णाभः शङ्खकुन्दसमप्रभः ॥ २१ ॥
मार्गणा मे धनुस्तत्र अक्षसूत्रं कमण्डलुः ।
आसनं विततं दिव्यं दीयतेऽश्वोपरि स्थिरम् ॥ २२ ॥
श्वेतपर्वतमारुह्य पतमानः कुरून् बहून् ।
पतितस्तत्र दृश्येत क्षतं तत्र न दृश्यते ॥ २३ ॥
अनेकान्येव रूपाणि पातयित्वा नभस्तलात् ।
शान्तो दान्तः परिक्लिष्टः स चाश्वो दिवि वर्तते ॥२४॥

सूत उवाच

ततो भूम्या वचः श्रुत्वा ब्रह्मपुत्रो महामुनिः ।
विस्मयं परमं प्राप्तो विष्णुमायोपबृंहितः ॥ २५ ॥
ततः स विस्मयाविष्टो ब्रह्मपुत्रो महामतिः ।
सनत्कुमारो भगवान् पुनरेव प्रभाषत ॥ २६ ॥

सनत्कुमार उवाच

धन्यासि देवि सुश्रोणि सुपुण्यासि वरानने ।
देवि यल्लोकनाथस्य साक्षाद्दर्शनमागता ॥ २७ ॥
पद्मपत्रविशालाक्षो यत्त्वया परिभाषितः ।
तेनोक्तं शंस सकलं सर्वेषां सुखवर्धनम् ॥ २८ ॥

यथा यथा वदसि च धर्मसंहितं
गुह्यं परं देववरप्रणीतम् ।
गुणोत्तमं कारणसंप्रयुक्तं
तथा तथा भावयसे मनो मम ॥ २९ ॥
ततः स पुण्डरीकाक्षः किमाचष्ट ततः परम् ।
कर्मणा विधिदृष्टेन सर्वभागवतप्रिय ॥ ३० ॥

सूत उवाच

तस्य तद्वचनं श्रुत्वा कुमारस्य महौजसः ।
उवाच मधुरं वाक्यमाभाष्य ब्राह्मणः सुतम् ॥
शृणु वत्स जगन्नाथो यथा मामाह नोदितः ॥ ३१ ॥

वराह उवाच

एवं तत्रैव कर्माणि क्रियन्ते विधिपूर्वकम् ।
शोधकानि च पापानां मृदूनि च शुभानि च ॥ ३२ ॥
अश्वानं तत् कुलीनानामावहन्ति सुमध्यमे ।
नान्यं बहन्ति ते चाश्वा मम वाहा दुरत्ययाः ॥ ३३ ॥
अश्वानं कुलीनानामावहन्ति सुमध्यमे ।
नान्यं वहन्ति ते चाश्वा मम वाहा दुरत्ययाः॥३३ ॥
कुण्डं पञ्चसरो नाम गुह्यं क्षेत्रं परं मम ।
धाराः पतन्ति चत्वारि शङ्खवर्णा मनोजवाः ॥ ३४ ॥
तत्र स्नानं तु कुर्वीत चतुर्भुक्तोषितो नरः ।
लोकञ्चैत्राङ्गदं गत्वा गन्धर्वैः सह मोदते ॥ ३५ ॥
अथ चेन्मुञ्चते प्राणांस्तस्मिन् क्षेत्रे परे मम ।
गन्धर्वलोकमुत्सृज्य मम लोकाय गच्छति ॥ ३६ ॥
ततो नारदकुण्डेति मम क्षेत्रे परे महत् ।
पञ्चधाराः पतन्त्यत्र तालवृक्षसमोपमाः ॥ ३७ ॥
तत्र स्नानं तु कुर्वीत एकभक्तोषितो नरः ।
देवर्षिं नारदं पश्येत् मोदते तेन वै समम् ॥ ३८ ॥
अथात्र मुञ्चते प्राणान् मम गुह्यविनिश्चितः।
प्रमुच्य नारदं दिव्यं मम लोकं च गच्छति ॥ ३९ ॥
ततो वसिष्ठकुण्डेति तस्मिन् क्षेत्रं परं मम ।
धाराः पतन्ति तिस्रस्तु न स्थूला नाति वै कृशाः॥४०॥
तत्राभिषेकं कुर्वीत पञ्चकालोषितो नरः ।
वासिष्ठं लोकमासाद्य मोदते नात्र संशयः ॥ ४१ ॥
अथात्र मुञ्चते प्राणान् मम कर्मसु निष्ठितः ।

वाशिष्ठं लोकमुत्सृज्य मम लोकं प्रपद्यते ॥ ४२ ॥
पञ्चकुण्डेति विख्यातं यस्मिन् क्षेत्रे परं मम ।
पञ्चधाराः पतन्त्यत्र हिमकूटविनिःसृताः ॥ ४३ ॥
तत्राभिषेकं कुर्वीत पञ्चकालोषितो नरः ।
स तत्र गच्छते भूमे यत्र पञ्चशिखो मुनिः ॥ ४४ ॥
अथात्र मुञ्चते प्राणान् मम भक्तो जितेन्द्रियः ।
पञ्चचूडं समुत्सृज्य स याति परमां गतिम् ॥ ४५ ॥
सप्तर्षिकुण्डं विख्यातमस्मिन् क्षेत्रे परं मम ।
सप्त धाराः पतन्त्यत्र हिमवत् पर्वतस्थिताः ॥ ४६ ॥
तत्राभिषेकं कुर्वीत सप्तभक्तोषितो नरः ।
मोदते ऋषिलोकेषु ऋषिकन्याभिसंवृतः ॥ ४७ ॥
अथात्र मुञ्चते प्राणान् रागलोभविवर्जितः ।
सप्तर्षीन् स समुत्सृज्य मोदते मम संस्थितः ॥ ४८ ॥
शरभङ्गस्य कुण्डं वै क्षेत्रे गुह्यं परे मम ।
तत्र धारा पतत्येका शरभङ्गाश्रिता नदी ॥ ४९ ॥
स्नानं यस्तत्र कुर्वीत षष्ठभक्तोषितो नरः ।
मोदते तस्य लोकेषु ऋषिकन्याप्रमोदितः ॥ ५० ॥
अथात्र मुञ्चते प्राणान् सर्वसङ्गविवर्जितः ।
शरभङ्गं समुत्सृज्य मम लोके महीयते ॥ ५१ ॥
कुण्डमग्निसरो नाम सर्वमायाभिसंवृतम् ।
भूमिं नीत्वा जलं तत्र तिष्ठते च वरानने ॥ ५२ ॥
तत्र स्नानं प्रकुर्वीत अष्ट कालोषितो नरः ।
गच्छत्यङ्गिरसो लोकं सुखभागी न संशयः ॥ ५३ ॥
अथात्र मुञ्चते प्राणान् मम कर्मपरायणः ।
अग्निलोकं समुत्सृज्य मम लोकं स गच्छति ॥ ५४ ॥
कुण्डं बृहस्पतेर्भूमे सर्ववेदोदकाश्रितम् ।
धारा चैका पतत्यत्र हिमकूटसमाश्रिता ॥ ५५ ॥
तत्र स्नानं प्रकुर्वीत षष्ठकालोषितो नरः ।
गत्वा बृहस्पतेर्लोकं मुनिकाम्याभिमोदितः ॥ ५६ ॥
अथात्र मुञ्चते प्राणान् मम लोकसमाश्रितः ।
सोऽपि याति परां सिद्धिं समुत्सृज्य बृहस्पतिम् ॥५७॥
वैश्वानरस्य कुण्डेति गुह्यं क्षेत्रं परं मम ।
धाराचैका पतत्यत्र दृश्यते हिमसङ्क्षयात् ॥ ५८ ॥

तत्राभिषेकं कुर्वीत षष्ठभक्तोषितो नरः ।
गत्वा बृहस्पतेर्लोकं मुनिकन्याभिमोहितः ।
वैश्वानरेथ लोकेषु मोदते नात्र संशयः ॥ ५९ ॥
अथात्र मुञ्चते प्राणान् मम कमपरायणः ।
वैश्वानरं समुत्सृज्य मम लोकं स गच्छति ॥ ६० ॥
कार्तिकेयस्य कुण्डेति गुह्यं क्षेत्रं परं मम ।
यत्र पञ्चदशा धाराः पतन्ति हिमपर्वतात् ॥ ६१ ॥
तत्र स्नानं प्रकुर्वीत षष्ठकालोषितो नरः ।
कुमारं पश्यते व्यक्तं षण्मुखं शुभदर्शनम् ॥ ६२ ॥
अथात्र मुञ्चते प्राणान् कृत्वा चान्द्रायणं शुचि ।
कार्तिकेयं समुत्सृज्य मोदते मम मण्डले ॥ ६३ ॥
उमाकुण्डेति विख्यातं तस्मिन् क्षेत्रे परं मम ।
सा गौरी यत्र चोत्पन्ना महादेववराङ्गना ॥ ६४ ॥
तत्र स्नानं तु कुर्वीत दशरात्रोषितो नरः ।
गौरीं स पश्यते देवी तस्या लोके च मोदते ॥ ६५ ॥
अथ प्राणान् प्रमुञ्चेत दशरात्रोषितो नरः ।
उमालोकं समुत्सृज्य मम लोकं प्रपद्यते ॥ ६६ ॥
महेश्वरस्य वै कुण्डं यत्र चोद्वाहिता उमा ।
कादम्बैश्चक्रवाकैश्च हंससारससेवितम् ॥ ६७ ॥
तिस्रो धाराः पतत्यत्र हिमवत् पर्वताश्रिताः ।
स्थूलाश्च रमणीयाश्च न ह्रस्वाश्चातिनिर्मलाः ॥ ६८ ॥
तत्र स्नानं तु कुर्वीत द्वादशाहोषितो नरः ।
मोदते रुद्रलोकेषु रुद्रकन्याभिरावृतः ॥ ६९ ॥
अथात्र मञ्चते प्राणान् कृत्वा कर्म सुदुष्करम् ।
रुद्रलोकं समुत्सृज्य मम लोकञ्च गच्छति ॥ ७० ॥
प्रख्यातं ब्रह्मकुण्डेति वेदा यत्र समुत्थिताः ।
चतुरो वेदधारास्तु पतन्ति च हिमालयात् ॥ ७१ ॥
ततः पूर्वेण पार्श्वेन समा धारा पतेच्छुभा ।
उच्चा च रमणीया च पाण्डरोदकशोभिता ॥ ७२ ॥
पुनरस्योत्तरे पार्श्वे सवर्णसदृशोपमा ।
ऋग्वेदः पतते धाराः प्रसन्ना विमलोदका ॥ ७ ॥
अथ पश्चिमपार्श्वेन यजुर्वेदेन संयुता ।
अथ दक्षिणपार्श्वेन आथर्वणसमन्विता ॥ ७४ ॥
एका धारा पतत्यत्र इन्द्रगोपजसन्निभा ॥ ७५ ॥

यस्तत्र कुरुते स्नानं सप्तरात्रोषितो नरः ।
ब्रह्मलोकं परित्यज्य मम लोकं प्रपद्यते ॥ ७७ ॥
गुह्याख्याने महाभागे क्षेत्रे लोहार्गले मम ।
सिद्धिकामेन मर्त्येन गन्तव्यं नात्र संशयः ॥ ७८ ॥
समन्तात् पञ्चविंशन्तु योजनानि वरानने ।
न तस्य कर्म विद्येत स एवमपि संस्थितः ॥ ७९ ॥
आख्यानानां महाख्यानं धर्माणां धर्म उत्तमः ।
पवित्राणां पवित्रं तु न देयं यस्य कस्यचित् ॥ ८० ॥
ये पठन्ति महाभागे शृण्वन्ति मत्पथे स्थिताः ।
तारितानि कुलानि स्युरुभयत्र दशापि च ॥ ८१ ॥
एतन्मरणकाले तु न कदाचित्तु विस्मरेत् ।
यदिच्छेत् परमां सिद्धिं सर्वसंसारमोक्षणीम् ॥ ८२ ॥
एतत्ते कथितं भद्रे लोहार्गलमनुत्तमम् ।
माहात्म्यं पद्मपत्राक्षि गुह्यं यच्च महौजसम् ।
महात्म्यञ्च पवित्रं च मम भक्तसुखावहम् ॥ ८३ ॥

इति वाराहपुराणे भगवच्छास्त्रे लोहार्गलमहात्म्यवर्णनो नाम एकपञ्चाशदधिक शततमोऽध्यायः ।

# द्वापञ्चाशदधिकशततमोऽध्यायः

सूत उवाच

श्रुत्वा देवस्य माहात्म्यं लोहार्गलनिवासिनः ।
त्रैलोक्यनाथाधिपतेर्विस्मयं परमं गता ॥ १ ॥

धरण्युवाच

पद्मपत्र विशालाक्ष लोकनाथ जगत्पते ।
त्वत्प्रसादाच्च देवेश श्रुतं शास्त्रं महौजसम् ॥ २ ॥
तव शिष्या च दासी च त्वामहं शरणं गता ।
जगद्धाता जगज्जोतिर्जगत्प्रभुरतन्द्रितः ॥ ३ ॥
तव सम्भावनाद् देव[1] जातास्मि कनकोज्वला ।
अलङ्कृता च शस्ता च सर्वशास्त्रेण मानद ॥ ४ ॥
जगद्धातुर्जगच्छास्त्रकृतेन हि परिश्रमः ।
त्वय्यायत्तं जगत्सर्वं यच्च किञ्चित् प्रवर्तते ॥ ५ ॥
इति कृत्वा च मे देव साह्लादो हृदि वर्तसे ।
लोहार्गलात् परं श्रेष्ठं गुह्यं परमदुर्लभम् ॥ ६ ॥
तीर्थं तद्वद कल्याणं तीर्थानामुत्तमोत्तमम् ।
यदस्ति दुर्लभं तीर्थं तत्त्वं कथय मे प्रभो ॥ ७ ॥

वराह उवाच

न विद्यते च पातले नान्तरिक्षे न मानुषे ।
समानं मथुराया हि प्रियं मम वसुन्धरे ॥ ८ ॥

सूत उवाच

तच्छ्रुत्वा वचनं तस्य प्रियश्च वसुधा तदा ।
प्रणम्य शिरसा देवी वराहं पुनरब्रवीत् ॥ ९ ॥

पृथिव्युवाच

पुष्करं नैमिषञ्चैव पुरीं वाराणसीं तथा ।
एतान् हित्वा महाभाग मथुरां किं प्रशंससि ॥ १० ॥

वराह उवाच

शृणु कार्त्स्न्येन वसुधे कथ्यमानं मयानघे ।
मथुरेति च विख्यातं तस्मान्नास्ति परं मम ॥
सा रम्या च सुशस्ता च जन्मभूमिस्तथा मम ॥ ११ ॥

---

[1] तव सम्भाषात् ।

शृणु देवि यथा स्तौमि मथुरां पापहारिणीम् ।
तत्र वासी नरो याति मोक्षं नास्त्यत्र संशयः ॥ १२ ॥
महामाघ्यां प्रयागे तु यत्फलं लभते नरः ।
तत्फलं लभते देवि मथुरायां दिने दिने ॥ १३ ॥
पूर्णं वर्षसहस्रं तु वाराणस्यां तु यत्फलम् ।
तत्फलं लभते देवि मथुरायां क्षणेन हि ॥ १४ ॥
कार्तिक्यां चैव यत्पुण्यं पुष्करे तु वसुन्धरे ।
तत्फलं लभते देवि मथुरायां जितेन्द्रियः ॥ १५ ॥
मथुरां तु परित्यज्य योऽन्यत्र कुरुते रतिम् ।
मूढो भ्रमति संसारे मोहितो मम मायया ॥ १६ ॥
यः शृणोति वरारोहे माथुरं मम मण्डलम् ।
अन्येनोच्चारितं शश्वत् सोऽपि पापैः प्रमुच्यते ॥ १७॥
पृथिव्यां यानि तीर्थानि आसमुद्रं सरांसि च
मथुरायां प्रयान्त्यत्र सुप्ते चैव जनार्दने ॥ १८ ॥
मथुरामण्डलं प्राप्य श्राद्धं कृत्वा यथाविधिः ।
तृप्तिं प्रयान्ति पितरो यावत् स्थित्यग्रजन्मनः ॥ १९ ॥
ये वसन्ति महाभागे मथुरामितरे जनाः ।
तेऽपि यान्ति परां सिद्धिं मत्प्रसादान्न संशयः ॥२० ॥
कुब्जाम्रके सौकरवे मथुरायां विशेषतः ।
विना सांख्येन योगेन मत्प्रसादात्र संशयः ॥ २१ ॥
मथुरायां महापुर्यां ये वसन्ति शुचिव्रताः ।
बलिभिक्षप्रदातारो देवास्ते नरविग्रहाः ॥ २२ ॥
भविष्यामि वरारोहे द्वापरे युगसंस्थिते ।
ययाति भूपवंशाच्च क्षत्रियः कुलवर्धनः ॥ २३ ॥
भविष्यामि वरारोहे मथुरायां न संशयः ॥
मूर्तिं चतुर्विधां कृत्वा स्थास्यामि ऋषिभिः स्तुतः ।
वत्सराणां शतं तत्र युद्धेषु कृतनिश्चयः ॥ २४ ॥
एका चन्दनसङ्काशा द्वितीया कनकप्रभा ।
अशोकसदृशा चान्या अन्या चोत्पलसन्निभा॥ २५ ॥
तत्र गुह्यानि नामानि भविष्यन्ति मम प्रिये ।
पुण्यानि च पवित्राणि संसारच्छेदनानि च ॥ २६ ॥
यत्राहं घातयिष्यामि द्वात्रिंशतिर्वसुन्धरे ।
दैत्यान् घोरान् महाभागे कंसादीन् धर्मदूषकान् ॥२७॥

यमुना यत्र सुवहा नित्यसन्निहिता ध्रुवम् ।
वैवस्वतसुता रम्या यमुना यत्र विश्रुता ॥ २८ ॥
गङ्गां प्राप्य प्रयोगे या वेणीति प्रथिता भुवि ।
गङ्गा शतगुणा पुण्या माथुरे मम मण्डले ।
यमुना विश्रुता देवि नात्र कार्या विचारणा ॥ २९ ॥

तत्र तीर्थानि गुह्यानि भविष्यन्ति ममानघे ।
येषु स्नाने नरो देवि मम लोके महीयते ॥ ३० ॥
अथात्र मुञ्चते प्राणान् मम कर्मपरायणः ।
न जायते स मर्त्येषु जायते च चतुर्भुजः ॥ ३१ ॥
अविमुक्ते नरः स्नातो मुक्तिं प्राप्नोत्यसंशयम् ।
तथाऽत्र मुञ्चते प्राणान् मम लोकं स गच्छति॥ ३२ ॥

विश्रान्तिसंज्ञकं नाम तीर्थं त्रैलोक्यविश्रुतम् ।
यस्मिन् स्नातो नरो देवि मम लोकं प्रपद्यते ॥ ३३ ॥
सर्वतीर्थेषु यत्स्नानं सर्वतीर्थेषु यत्फलम् ।
तत्फलं लभते देवि दृष्ट्वा देवं गतश्रमम् ॥ ३४ ॥
न च यज्ञैर्न तपसा न ध्यानैर्न च संयमैः ।
तत्फलं लभते स्नातो यथा विश्रान्तिसंज्ञके ॥ ३५ ॥

कालत्रयं तु वसुधे यः पश्यति गतश्रमः ।
कृत्वा प्रदक्षिणे द्वे तु विष्णुलोक स गच्छति ॥ ३६ ॥
अस्ति चान्यत् परं गुह्यं सर्वसंसारमोक्षणम् ।
यस्मिन् स्नातो नरो देवि मम लोकं प्रपद्यते ॥ ३७ ॥

प्रयागं नाम तीर्थं तु देवानामपि दुर्लभम् ।
यस्मिन् स्नातो नरो देवि अग्निष्टोमफलं लभेत् ।३८।
इन्द्रलोकं समासाद्य नरोऽसौ देवि मोदते ।
अथात्र मुञ्चते प्राणान् मम लोकं स गच्छति ॥ ३९ ॥

तथा कनखलं नाम तीर्थं गुह्यं परं मम ।
स्नानमात्रेण तत्रापि नाकपृष्ठे स मोदते ॥ ४० ॥
अस्ति क्षेत्रं परं गुह्यं तिन्दुकं नाम नामतः ।
तस्मिन् स्नातो नरो देवि मम लोके महीयते ॥ ४१ ॥

अस्मिंस्तीर्थे पुरा वृत्तं तच्छृणुष्व वसुन्धरे ॥ ४२ ॥
पाञ्चालविषये देवि काम्पिल्यञ्च पुरोत्तमम् ।
धनधान्यसमायुक्तं ब्रह्मदत्तेन पालितम् ॥ ४३ ॥
तस्मिंस्तु वसते देवि तिन्दुको नाम नापितः ॥ ४४ ॥

तस्मिंस्तु वसतस्तस्य नापितस्य पुरोत्तमे ।
कालेन महता तस्य कुटुम्बञ्च क्षयं गतम् ॥ ४५ ॥
क्षीणे कुटुम्बे तु तदा सुभृशं दुःखपीडितः ।
सर्वसङ्गं परित्यज्य सोऽगच्छन्मथुरां तदा ॥ ४६ ॥
ब्राह्मणावसथे सोऽपि वसमानो वसुन्धरे ।
तस्य कर्म शतं कृत्वा स्नात्वैव यमुनां नदीम् ।
नित्यं स यमुनां स्नाति चिरकालं दृढव्रतः ॥ ४७ ॥
ततः कालेन महता पञ्चत्वं समुपागतः ।
स च तीर्थप्रभावेण जातोऽसौ ब्राह्मणोत्तमः ॥ ४८ ॥
तस्मिन् वरगृहे देवि ब्राह्मणो योगिनां वरः ।
जातिस्मरो महाप्राज्ञो विष्णुभक्तो वसुन्धरे ।
तत्तीर्थस्य प्रभावेण जाता मुक्तिः सुदुर्लभा ॥ ४९ ॥
ततः परं सूर्यतीर्थं सर्वपापप्रमोचनम् ।
वैरोचनेन बलिना सूर्यस्त्वाराधितः पुरा ।
भ्रष्टराज्येन हि तथा धनकामेन सुन्दरि ॥ ५० ॥
ऊर्ध्वबाहुर्निराहारस्तताप परमं तपः ।
साग्रं संवत्सरं देवि ततः काममवाप्तवान् ॥ ५१ ॥
तस्य प्रसन्नो भगवान् द्युमणिः प्रत्यभाषत ।
किं कारणं बले ब्रूहि तपस्यति महत्तपः ॥ ५२ ॥

बलिरुवाच

भ्रष्टराज्योऽस्मि देवेश पाताले निवसाम्यहम् ।
वित्तेनापि विहीनस्य कुटुम्बभरणं कुतः ॥ ५३ ॥
मुकुटात् तस्य वै सूर्यो ददौ चिन्तामणिं ततः ।
चिन्तामणिं समासाद्य पातालमगमद् बलिः ॥ ५४ ॥
तस्मिंस्तीर्थे नरः स्नातः सर्वपापैः प्रमुच्यते ।
तत्राथ मुञ्चते प्राणान् मम लोकञ्च गच्छति ॥ ५५ ॥
आदित्याहनि संक्रान्तौ[1] ग्रहणे चन्द्रसूर्ययोः ।
तस्मिन् स्नातो नरो देवि राजसूयफलं लभेत् । ५६ ।
ध्रुवेण यत्र सन्तप्तं स्वेच्छया परमं तपः ।
तत्र वै स्नानमात्रेण ध्रुवलोके महीयते ।
तत्राथ मुञ्चते प्राणान् मम लोके महीयते ॥ ५७ ॥

---

१. संप्राप्ते ।

ध्रुवतीर्थे तु वसुधे यः श्राद्धं कुरुते नरः।
पितॄंस्तारयते सर्वं पितृपक्षे विशेषतः ॥ ५८ ॥
दक्षिणे ध्रुवतीर्थस्य तीर्थराजं प्रकीर्तितम्।
तस्मिन् स्नाते नरो देवि मम लोकं प्रपद्यते ॥ ५९ ॥
तद्दक्षिणे महादेवि ऋषितीर्थं परं मम।
तत्र स्नातो नरो देवि ऋषिलोकं प्रपद्यते।
अथात्र मुञ्चते प्राणान् मम लोके महीयते ॥ ६० ॥
दक्षिणे ऋषितीर्थस्य मोक्षतीर्थं परं मम।
तत्र वै स्नानमात्रेण मोक्षमेव प्रपद्यते ॥ ६१ ॥
तत्र वै कोटितीर्थं हि देवानामपि दुर्लभम्।
तत्र स्नानेन दानेन मम लोके महीयते ॥ ६२ ॥
कोटितीर्थे नरः स्नात्वा सन्तर्प्य पितृदेवताः।
तारिताः पितरस्तेन तथैव प्रपितामहाः ॥ ६३ ॥
कोटितीर्थे नरः स्नात्वा ब्रह्मलोके महीयते ॥ ६४ ॥
तत्रैव वायु तीर्थं तु पितॄणामपि दुर्लभम्।
पिण्डदानात् तु तत्रैव पितृलोकं स गच्छति ॥ ६५ ॥
गयापिण्डप्रदानेन यत्फलं लभते नरः।
तत्फलं लभते देवि ज्येष्ठे दानान्न संशयः ॥ ६६ ॥
द्वादशैतानि तीर्थानि देवानां दुर्लभानि च।
स्नानं दानं जपं होमं सहस्रगुणितं भवेत् ॥ ६७ ॥
एषां स्मरणमात्रेण सर्वपापैः प्रमुच्यते।
तीर्थानाञ्चैव माहात्म्यं श्रुत्वा कामानवाप्नुयात् ॥ ६८ ॥

इति वराहपुराणे मथुरातीर्थप्रशंसा नाम
द्वापञ्चाशदधिकशततमोऽध्यायः।



# अथ पञ्चाशदधिकशततमोऽध्यायः

वराह उवाच

उत्तरे शिवकुण्डाच्च तीर्थानां नवकं स्मृतम् ।
नवतीर्थात् परं तीर्थं न भूतं न भविष्यति ॥ १ ॥
तत्रैव स्नानमात्रेण सौभाग्यं जायते परम् ।
रूपवन्तः प्रजायन्ते स्वर्गलोके न संशयः ।
तस्मिन् स्नातो नरो देवि मम लोकं प्रपद्यते ॥ २ ॥
तत्र संयमनं नाम तीर्थं त्रैलोक्यविश्रुतम् ।
तत्र स्नातो मृतो वापि मम लोकं स गच्छति ॥ ३ ॥
पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तस्मिन् संयमने तीर्थे यद्यद् वृत्तं पुरातनम् ॥ ४ ॥
कश्चित् पापसमाचारो निषादो दुष्टमानसः ।
वसते नैमिषारण्ये सुप्रतीते सुपापकृत् ॥ ५ ॥
केनचित् त्वथ कार्येण सोऽगच्छन्मथुरां प्रति ।
तत्र प्राप्य च कालिन्दीं कृष्णपक्षे चतुर्दशीम् ॥ ६ ॥
स निषादस्तर्तुकामस्तस्याञ्चैव तिथौ ततः ।
ततार यमुनां सोऽथ प्राप्य संयमनं शुभे ॥ ७ ॥
ममज्जासौ ततः पापस्तस्मिंस्तीर्थे परे शुभे ।
लग्नमात्रस्ततः पापः सद्यः प्राणैर्व्ययुज्यत ॥ ८ ॥
तत्तीर्थस्य प्रभावेण जातोऽसौ पृथिवीपतिः ।
सौराष्ट्रविषये देवि क्षत्रियोऽभूद्धनुर्धरः ॥ ९ ॥
नाम्ना यक्ष्मधनुर्नाम सोऽभवत् प्रियदर्शनः ।
पालयामास वसुधां क्षत्रधर्मसमाश्रितः ॥ १० ॥
तेनोढा काशिराजस्य पीवरी नामतः शुभा ।
पत्नी शीतानां मुख्यानां प्रवरा सा वसुन्धरे ॥ ११ ॥
ताञ्चैव रमयामास उद्यानेषु वनेषु च ।
प्रासादेषु च रम्येषु नदीनां पुलिनेषु च ॥ १२ ॥
प्रजाः पालयतस्तस्य दानानि ददतस्तथा ।
कालो गच्छति राजा तु भोगासक्तिञ्च विन्दति[१] ।१३।
भोगासक्तस्य वसुधे वर्षाणि[२] सप्तसप्ततिः ।
पुत्राः सप्त तथा जाताः कन्याः पञ्च सुशोभमाः १४
राज्ञां पञ्चसु ताः दत्ताः कन्याः कमललोचनाः ।
पुत्रान् संस्थापयामास स्थानेषु वसुधाधिपान् ॥ १५ ॥
पीवर्या सह सुप्तः स रात्रौ च वसुधाधिपः ।
तत्र प्रबुद्धो नृपतिर्हा हेति वदते मुहुः ।
स्मृत्वा तु मथुरां देवि स्मृत्वा तु संयमनं परम् । १६ ।

---

१. राज्ञस्तु भोगासक्तिञ्च विन्दति । इति बहुषु पाठः । २. वर्षाणाम् ।

ततः सा पीवरीत्याह किमेवं भाषसे नृप[1] ।
प्रियाया वचनं श्रुत्वा राजा वचनमब्रवीत् ।। १७ ।।
मत्तः सुप्तः प्रमत्तश्च असंबद्धं प्रभाषते ।
निद्रावशस्य वचनं न सम्प्रष्टुं त्वमर्हसि ।। १८ ।।

पीवर्युवाच

कथयस्व ममाद्य त्वं यद्यहं वल्लभा तव ।
प्राणांस्त्यक्ष्याम्यहं देव गोपयिष्यसि मे यदि ।। १९ ।।
प्रियाया वचनं श्रुत्वा प्रत्युवाच नराधिपः ।
अवश्यं यदि वक्तव्यं गच्छावो मथुरां पुरीम् ।
तत्र गत्वा यथातत्त्वं वदिष्यामि शुभानने ।। २० ।।
ददस्व विपुलं दानं ब्राह्मणेभ्यः सुलोचने ।
पुत्रान् संस्थाप्य दौहित्रान् स्वे स्वे स्थाने शुभान् प्रिये
कोशं रत्नानि ग्रामांश्च पुत्रान् वीक्ष्य पुनः पुनः ।।२१।।
ततः सम्मानयामास जनं पुरनिवासिनम् ।
पितृपैतामहं राज्यं पालनीयं यथाक्रमम् ।
राज्ये पुत्रान् नियोक्ष्यामि यदि वो रोचयतेऽनघाः ।२२।
राज्य-पुत्रकलत्राणि बन्धुवर्गं तथैव च ।
नित्यमिच्छन्ति वै लोको यमस्येच्छानि चान्यथा ।२३।
एवं ज्ञात्वा प्रपन्नेन कर्तव्यं चात्मनो हितम् ।
तस्मात् सर्वप्रयत्नेन गच्छामो मथुरां पुरीम् ।। २४ ।।
अहो कष्टं यदस्माभिः पुरा राज्यमनुष्ठितम् ।
इदानीं तु मया ज्ञातं त्यागान्नास्ति परं सुखम् ।।२५।।
नास्ति विद्यासमञ्चक्षुर्नास्ति चक्षुःसमं बलम् ।
नास्ति रागसमं दुःखं नास्ति त्यागात् परं सुखम् ।२६।
यः कामान् कुरुते सर्वान् यश्चैतान् केवलांस्त्यजेत् ।
प्रायेण सर्वकामानां परित्यागो विशिष्यते ।। २७ ।।
अभिषिच्य सुतं ज्येष्ठमनुयोज्य परान् बहून् ।
ततः पौरजनं दृष्ट्वा चतुरङ्गबलान्वितः ।
ततः कालेन महता सम्प्राप्तो मथुरां पुरीम् ।। २८ ।।
तेन दृष्टा पुरी रम्या वासवस्य पुरी यथा ।
तीर्थैर्द्वादशभिर्युक्ता पुण्या पापहरा शुभा ।। २९ ।।
रम्यं मधुवनं नाम विष्णुस्थानमनुत्तमम् ।
तं दृष्ट्वा मनुजो देवि कृतकृत्यो हि जायते ।। ३० ।।

---

१. "ततः सा पीवरी राज्ञी भर्तारं पर्यपृच्छत । किं त्वयाभाषितं राजन् मथुरेति पुनः पुनः ।। एवं सा पृच्छते देवी भर्तारं शुभलोचना ।" इति ( ग ) पाठभेदः ।

एकादशी शुक्लपक्षे मासि भाद्रपदे तथा[1]।
तस्यां[2] स्नातो नरो देवि कृतकृत्यो हि जायते ॥३१॥
वनं कुन्दवनं नाम तृतीयञ्चैवमुत्तमम्।
तत्र गत्वा नरो देवि कृतकृत्यो हि जायते ॥ ३२ ॥
एकादशी कृष्णपक्षे मासि भाद्रपदे हि या।
तत्र स्नातो नरो देवि रुद्रलोके महीयते ॥ ३३ ॥
चतुर्थं काम्यकवनं वनानां वनमुत्तमम्[3]।
तत्र गत्वा नरो देवि मम लोके महीयते ॥ ३४ ॥
विमलस्य च कुण्डे तु सर्वपापैः प्रमुच्यते।
यस्तत्र मुञ्चते प्राणान् मम लोकं स गच्छति ॥३५॥
पञ्चमं वकुलवनं नाम वनानामुत्तमं वनम्।
तत्र गत्वा नरो देवि अग्निस्थानं स गच्छति ॥ ३६ ॥
यमुनायाः परे पारे देवानामपि दुर्लभम्।
अस्ति भद्रवनं नाम षष्ठं वनमनुत्तमम् ॥ ३७ ॥
तत्र गत्वा तु वसुधे मद्भक्तो मत्परायणः।
तद्वनस्य प्रभावेण नागलोकं स गच्छति ॥ ३८ ॥
सप्तमं तु वनं भूमे खादिरं लोकविश्रुतम्।
तत्र गत्वा नरो भद्रे मम लोकं स गच्छति ॥ ३९ ॥
महावनञ्चाष्टमं तु सदैव तु मम प्रियम्।
यत्र गत्वा तु मनुज इन्द्रलोके महीयते ॥ ४० ॥
लोहजङ्घवनं नाम लोहजङ्घेन रक्षितम्।
नवमं तु वनं नाम सर्वपातकनाशनम् ॥ ४१ ॥
वनं विल्ववनं नाम दशमं देवपूजितम्।
तत्र गत्वा तु मनुजो ब्रह्मलोके महीयते ॥ ४२ ॥
एकादशं तु भाण्डीरं योगिनां प्रियमुत्तमम्।
तस्य दर्शनमात्रेण नरो गर्भं न गच्छति ॥ ४३ ॥
भाण्डीरं समनुप्राप्य वनानां वनमुत्तमम्।
वासुदेवं ततो दृष्ट्वा पुनर्जन्म न विद्यते ॥ ४४ ॥
वृन्दावनं द्वादशमं वृन्दया परिरक्षितम्।
मम चैव प्रियं भूमे महापातकनाशनम् ॥ ४५ ॥
वृन्दावनञ्च गोविन्दं ये पश्यन्ति वसुन्धरे।
न ते यमपुरं यान्ति यान्ति पुण्यकृतां गतिम् ॥ ४६ ॥

इति वराहपुराणे भगवच्छास्त्रे मथुरातीर्थमाहात्म्य-वर्णनं नाम त्रयः पञ्चाशदधिक शततमोऽध्यायः।

१. हि या। २. तस्मिन्। ३. चतुर्थं बहुलवनं नाम वनानामुत्तमं वनम्।

# चतुःपञ्चाशदधिकशततमोऽध्यायः

वराह उवाच

एवंविधाञ्च मथुरां दृष्ट्वा तौ मुदमापतुः ।
एवन्तु वसतस्तस्य राज्ञस्तत्र वसुन्धरे ।
प्रप्रच्छ च तदा भार्या यद्गुह्यं पूर्वभाषितम् ।। १ ।।
पुरस्थेन तदा राज्ञा वक्ष्यामि मथुरां प्रति ।
तन्मे वद महाराज यद्गोप्यं पूर्वभाषितम् ।। २ ।।
राजाऽप्युवाच तां राज्ञीं त्वयाप्युक्तं पुरा मम ।
तद् वदस्व स्वकं गुह्यं पश्चाद् वक्ष्याम्यहं तव ।। ३ ।।

इत्युक्त्वा पीवरी ज्ञात्वा प्रहस्य तु गुणालया ।
प्रोवाच चैव राजानं मनसः प्रीतिकारणम् ।। ४ ।
अहं तु पीवरी नाम गङ्गातीरनिवासिनी ।
आगतेमां पुरीं द्रष्टुं कुमुदस्य तु द्वादशीम् ।। ५ ।।
नावमारुह्य यान्तीह पतिता यमुनाजले ।
सद्यः प्राणैर्वियुक्ता च तीर्थस्य प्रभावतः ।। ६ ।।
काशीराजपतेः कन्या जातास्मि वसुधाधिप ।
त्वया विवाहिता राजन् न च मां विजहात् स्मृतिः ७
एतत् तीर्थप्रभावेण धर्मयुक्ता तथाऽनघ ।
धारापतनके तीर्थे त्यक्त्वा जीवितमात्मनः ।। ८ ।।
एतच्छ्रुत्वा ततो राजा कथां प्राग्जन्मसम्भवाम् ।
स्वाञ्चाप्यकथयत तस्यै यथा संयमने मृतः ।। ९ ।।

एवं तौ मथुरां प्राप्य स्नात्वा यामुनतीर्थयोः ।
मां पश्यन्तौ नियमतस्तत्रैव निधनं गतौ ।
मतौ सर्वपरित्यक्तौ गतौ मम सलोकताम् ।। १० ।।
एतत्ते कथितं देवि आश्चर्यं यद्भून्महत् ।
त्यक्त्वा चात्मतनुं तीर्थे धारापतनसंज्ञके ।
नाकलोकमवाप्नोति त्यक्तपापो न संशयः ।। ११ ।।

यमुनेश्वरमासाद्य त्यक्त्वा जीवितमात्मनः ।
विष्णुलोकमवाप्नोति दिव्यमूर्तिश्चतुर्भुजः ।। १२ ।।
धारापतनके स्नात्वा वै नाकलोके स मोदते ।
अथात्र मुञ्चते प्राणान् मम लोकं स गच्छति ।।१३।।

अतः परं नागतीर्थं तीर्थानामुत्तमोत्तमम् ।
यत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥१४॥
घण्टाभरणकं तीर्थं सर्वपापप्रमोचनम् ।
यस्मिन् स्नातो नरो याति सूर्यलोकं न संशयः ।
अथात्र मुञ्चते प्राणान् मम लोकं स गच्छति ॥१५॥
पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
तीर्थानामुत्तमं तीर्थं ब्रह्मलोकेषु विश्रुतम् ॥ १६ ॥
तत्र स्नात्वा च पीत्वा च नियतो नियताशनः ।
ब्रह्मणा समनुज्ञातो मम लोकं स गच्छति ॥ १७ ॥
सोमतीर्थे तु वसुधे पवित्रे यमुनाम्भसि ।
यत्र मां पश्यते सोमो द्वापरे युगसंस्थिते ॥ १८ ॥
तत्राभिषेकं कुर्वीत स्वकर्मपरिनिष्ठितः ।
मोदते सोमलोके तु एवमेव न संशयः ।
अथात्र मुञ्चते प्राणान् मम लोकं स गच्छति ॥१९॥
सरस्वत्याश्च पतनं सर्वपापहरं शुभम् ।
तत्र स्नातो नरो देवि अवर्णोऽपि यतिर्भवेत् ॥ २० ॥
पुनरन्यत् प्रवक्ष्यामि माथुरे मम मण्डले ।
यस्तत्र कुरुते स्नानं त्रिरात्रोपोषितो नरः ॥ २१ ॥
स्नानमात्रेण मनुजो मुच्यते ब्रह्महत्यया ।
अथात्र मुञ्चते प्राणान् मम लोकं स गच्छति ॥२२॥
दशाश्वमेधमृषिभिः पूजितं सर्वदा मुदा ।
तत्र ते स्नान्ति नियस्तेषां स्वर्गो न दुर्लभः ॥ २३ ॥
मथुरापश्चिमे पार्श्वे सततमृषिपूजितम् ।
ब्रह्मणा सृष्टिकाले तु मनसा निर्मितं पुरः ॥ २४ ॥
मानसं नाम तीर्थं तु ऋषिभिः पूजितं पुरा ।
तत्र स्नाता दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ २५ ॥
तीर्थं तु विघ्नराजस्य पुण्यं पापहरं शुभम् ।
तत्र स्नातान् मनुष्यांश्च विघ्नराजो न पीडयेत् ॥२६॥
अष्टम्याञ्च चतुर्दश्यां चतुर्थ्यांतु विशेषतः ।
तस्मिंस्तीर्थवरे स्नातं न पीडयति विघ्नराट् ॥ २७ ॥
विद्यारम्भेषु सर्वेषु यज्ञदानक्रियासु च ।
अविघ्नं कुरुते तस्य सततं पार्वतीसुतः ।
तत्राथ मुञ्चते प्राणान् मम लोकं स गच्छति ॥ २८ ॥

तत: परे कोटितीर्थं पवित्रं परमं स्मृतम् ।
तत्र वै स्नानमात्रेण गवां कोटिफलं लभेत् ॥ २९ ॥

तत्राथ[1] मुञ्चते प्राणान् लोभमोहविर्जितः ।
सोमलोकमतिक्रम्य मम लोकञ्च गच्छति ॥ ३० ॥

अतः परं शिवक्षेत्रमर्धक्रोशं तु दुष्करम् ।
तत्र स्थितो हरो देवो मथुरां रक्षते सदा ॥ ३१ ॥

तत्र स्नात्वा च पीत्वा च माथुरं लभते फलम् ।
अथात्र मुञ्चते प्राणान् मम लोकं स गच्छति ॥ ३२ ॥

इति वराहपुराणे यमुनातीर्थप्रभाववर्णनो नाम
चतुःपञ्चाशदधिकशततमोऽध्यायः ।

—:०:—

१. तत्राथ ।

## पञ्चपञ्चाशदधिकशततमोऽध्यायः

वराह उवाच

पुनरन्यत् प्रवक्ष्यामि मर्त्यलोके सुदुर्लभम् ।
अनन्तं विदितं तीर्थमचलं ध्रुवमव्ययम् ॥ १ ॥
तत्र नित्यं स्थितो देवि लोकानां हितकाम्यया ।
मां दृष्ट्वा मनुजा देवि मुक्तिभाजो भवन्ति ते ॥ २ ॥
अयने विषुवे चैव तथा विष्णुपदीषु च ।
अनन्तं तं समासाद्य मुच्यते सर्वपातकैः ॥ ३ ॥
अक्रूरेति विख्यातं मम क्षेत्रं वसुन्धरे ।
तत्र स्नात्वा महाभागे राहुग्रस्ते दिवाकरे ।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥ ४ ॥
तीर्थराजं हि चाक्रूरं गुह्यानां गुह्यमुत्तमम् ।
तत्स्नानात् फलमाप्नोति प्रयागस्नानजं फलम् ॥ ५ ॥
अस्मिंस्तीर्थे पुरावृत्तं तच्छृणुष्व वसुन्धरे ।
नाम्ना तु सुधनो नाम मम भक्तः सदैव हि ।
धनधान्यसमायुक्तः सुतयुक्तः[1] सदैव हि ॥ ६ ॥
बन्धुपुत्रकलत्रैश्च गृहे प्रीतिरनुत्तमा ।
पुत्रदारसमेतस्य मयि भक्तिर्वसुन्धरे ॥ ७ ॥
गच्छन्ति दिवसास्तस्या मासाः संवत्सरास्तथा ।
करोति गृहकृत्यानि धनोपायेन नित्यशः ।
मानकूटं तुलाकूटं न करोति स कर्हिचित्[2] ॥ ८ ॥
एवञ्च वसतस्तस्य बह्वो वत्सरा गताः ।
नित्यकालञ्च कुरुते हरिपूजनमुत्तमम् ।
पुष्पदीपप्रसादेन चन्दनेन सुगन्धिना ।
उपहारेण दिव्येन धूपेन च सुगन्धिना ॥ ९ ॥
एकादश्यां तु कुरुते पक्षयोरुभयोरपि ।
उपवासं तु कुरुते रात्रौ जागरणं तथा ॥ १० ॥
स गच्छति यथाकालमक्रूरं तीर्थमुत्तमम् ।
तत्रागत्य ममाग्रेऽसौ नृत्यते शुभदर्शनः ॥ ११ ॥
सुधनस्तु वणिक् श्रेष्ठः कदाचिद् रात्रिजागरे ।
गच्छमानो गृहीतस्तु चरणे ब्रह्मरक्षसा ॥ १२ ॥

---

१. बन्धुयक्तः । २. स कदाचित् ।

कृष्णवर्णो महाकाय ऊर्ध्वकेशो भयङ्करः ।
पादे गृहीत्वा वसुधे इदं वचनमब्रवीत् ॥ १३ ॥
राक्षसोऽहं वणिक्श्रेष्ठ वसामि वनमाश्रितः ।
त्वामद्य भक्षयिष्यामि तृप्तिं यास्यामि शाश्वतीम् ॥१४॥

सुधन उवाच

प्रतीक्षस्व क्षणं मेऽद्य[1] दास्यामि तव पुष्कलम् ।
भक्षयिष्यसि मे गात्रं मिष्टान्नपरिपोषितम् ॥१५॥
जागरं देवदेवस्य कर्तुमिच्छामि राक्षस ।
मम व्रतं सार्वकालं यज्जागर्मि हरेः पुरः ॥ १६ ॥
तत्र जागरणं कृत्वा प्रभाते तव सन्निधौ ।
आगमिष्याम्यहं शीघ्रमादित्योदयनं प्रति ॥ १७ ॥
ततः खादयिष्यसे गात्रं विनिवृत्तस्य जागरात् ।
विष्णुतुष्ट्यै व्रतमिदमारब्धं सर्वकामदम् ॥ १८ ॥
मा कुरु व्रतभङ्गं मे रक्षो नारायणस्य हि ।
जागरे विनिवृत्ते तु मां भक्षय यथेप्सितम् ॥ १९ ॥
सुधनस्य वचः श्रुत्वा ब्रह्मरक्षः क्षुधार्दितः ।
उवाच मधुरं वाक्यं वणिजं प्रति सादरम् ॥ २० ॥
मिथ्या प्रभाषसे साधो त्वं पुनः कथमेष्यसि ।
को हि रक्षो मुखाद् भ्रष्टो मानुषो यो निवर्तते ॥२१॥
राक्षसस्य वचः श्रुत्वा स वणिग् वाक्यमब्रवीत् ।
सत्यमूलं जगत्सर्वं सर्वं सत्ये प्रतिष्ठितम् ।
सिद्धिं लभन्ते सत्येन ऋषयो वेदपारगाः ॥ २२ ॥
यद्यहञ्च वणिक् पूर्वं कर्मणा न हि दूषितः ।
प्राप्तश्च मानुषो भावो विहितेनान्तरात्मना ।
श्रृणु मत् समयं रक्षो येनाहं पुनरागमम् ॥ २३ ॥
कृत्वा जागरणं तत्र नृत्यं कृत्वा यथासुखम् ।
पुनरेष्याम्यहं रक्षो नासत्यं विद्यते मयि ॥ २४ ॥
सत्येन दीयते कन्या सत्यं जल्पन्ति[2] ब्राह्मणाः ।
सत्योत्तीर्णा हि राजानः सत्येन वसुधा धृता ॥२५॥
स्वर्गमिच्छसि सत्येन मोक्षः सत्येन लभ्यते ।
सत्येन सूर्यस्तपति सोमः सत्येन राजते ॥ २६ ॥
यमः सत्येन हरति सत्यादिन्द्रो विराजते ।
तत् सत्यं मम नश्येत यद्यहं नागमे पुनः ॥ २७ ॥

---

१. दिनं मेऽद्य । २. (ग) पुस्तकेऽतः परम् सार्धं चरणपञ्चकं नास्ति ।

परदारांस्तु यो गच्छेत् काममोहप्रपीडितः ।
तस्य पापेन लिप्येऽहं यदि नायामि ते पुनः ॥ २८ ॥
यो वै रजस्वलां गच्छेत् काममोहप्रपीडितः ।
तेन पापेन लिप्येऽहं[१] यदि नायामि ते पुरः ॥ २९ ॥

दत्त्वा भूमिदानं यो ह्यपकारं करोति च ।
तेन पापेन लिप्येऽहं[२] यद्यहं नागमे पुनः ॥ ३० ॥
पूर्वं भुक्त्वा स्त्रियं यस्तु सुखमाप्य विहृत्य च ।
द्वेषात् तां यदि चेज्जह्यात् तस्याघं मे भवत्वलम् ।३१।
पंक्तिभेदन्तु यः कुर्यादेकपङ्क्त्याशिनां ध्रुवम् ।
तस्य पापेन लिप्येऽहं नागन्ता[३] यदि ते पुरः ॥३२॥

अमावास्यां महारक्षः श्राद्धं कृत्वा स्त्रियं व्रजेत् ।
तेन पापेन लिप्येऽहं[४] यद्यहं नागमे पुनः ॥ ३३ ॥
षष्ठ्यष्टमी त्वमावास्या उभे पक्षे चतुर्दशी ।
अस्नातानां गतिं गच्छेम् यद्यहं नागमे पुनः ॥३४॥
गुरोर्भ्रातुः सुतस्यापि सख्युर्वै मातुलस्य च ।
व्यवस्यति च यन्नारीं यो मोहेन विमोहितः[५] ।
अभिगच्छन्ति मन्दात्मा तत्पापं मे भवेत् तदा ॥३५॥

राजपत्नीं ब्रह्मपत्नीं विधवां योऽभिगच्छति ।
तस्य पापेन लिप्येऽहं यद्यहं नागमे पुनः[६] ॥ ३६ ॥

यस्तु कन्यां सकृद्दत्त्वा अन्यस्मै चेत्पुनर्ददेत् ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥ ३७ ॥
राजयाजकयाज्याश्च ये च वै ग्रामयाजकाः ।
तेषां पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥ ३८ ॥
ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे ।
या गतिस्तां प्रपद्येऽहं यद्यहं नागमे पुनः ॥ ३९ ॥

वराह उवाच

सुधनस्य वचः श्रुत्वा सन्तुष्टो ब्रह्मरक्षसः ।
उवाच मधुरं वाक्यं गच्छ शीघ्रं नमोऽस्तु ते ॥ ४० ॥

ब्रह्मराक्षसमुक्तोऽसौ वणिक् तु दृढनिश्चयः ।
पुनर्नृत्यति चैवाग्रे मम भक्तौ व्यवस्थितः ॥ ४१ ॥

---

१. लिप्येयम् । २. लिप्येयम् । १. नागतः । २. लिप्येयम् । ३. पितृव्यपत्नीं यो गच्छेन्मोहेन हि विमोहितः (ग) । ४. लिप्येयं यदि नायामि तेऽन्तिकम् (ग) ।

अथ प्रभातसमये नृत्यचित्तोऽतिकोविदः ।
पुनः पुनर्वै उच्चार्य नमो नारायणाय च ।
निवृत्ते जागरे सोऽथ कालिन्दीसलिलप्लुतः ।
दृष्ट्वा मां दिव्यरूपं तु गतोऽसौ मथुरां पुरीम् ।४२-४३।
दृष्टश्चाग्रे त्वहं तेन पुरुषो दिव्यरूपवान् ।
स च पृष्टो मया देवि क्व भवान् प्रस्थितो द्रुतम् ।४४।
पुरुषस्य वचः श्रुत्वा सुधनो वाक्यमब्रवीत् ।
अहं गच्छामि त्वरितो ब्रह्मराक्षससन्निधौ ।। ४५ ।।
निवारयामास तदा न गन्तव्यं त्वयानघ ।
जीवितो धर्ममाहात्म्यं मृते धर्मः कुतो यशः ।। ४६ ।।
पुरुषस्य वचः श्रुत्वा स वणिग् वाक्यमब्रवीत् ।
तत्र सत्यं वदिष्यामि यास्ये राक्षससन्निधौ ।। ४७ ।।
आगतोऽहं महाभाग नर्तयित्वा यथासुखम् ।
विष्णवे लोकनाथाय आगतो[1] हरिजागरात् ।। ४८ ।।
इदं शरीरं मे रक्षो भक्षयस्व यथेप्सितम् ।
यथान्यायं विधानेन यथा वा तव रोचते ।। ४९ ।।
नोक्तपूर्वं मयाऽसत्यं कदाचिदपि राक्षसः ।
तेन सत्येन मां भुङ्क्ष्व ब्रह्मराक्षस दारुण ।। ५० ।।
वणिजस्तु वचः श्रुत्वा ततोऽसौ ब्रह्मराक्षसः ।
उवाच मधुरं वाक्यं सुधनं तदनन्तरम् ।। ५१ ।।
साधु तुष्टोऽस्मि भद्रन्ते सत्यं धर्मश्च पालितः ।
वणिक् त्वञ्चातिविज्ञस्तु यस्य ते गतिरीदृशी ।। ५२ ।।
जागरस्य समस्तस्य मम पुण्यं प्रयच्छ वै ।
सत्य[2]पुण्यप्रभावेण यथाहं मुक्तिमाप्नुयाम् ।। ५३ ।।

सुधन उवाच

नाहं दास्यामि[3] ते पुण्यं नृत्यस्य नरभोजन ।
अर्धं वाऽथ समस्तं वा प्रहरं चार्धमेव वा ।। ५४ ।।
सुधनस्य वचः श्रुत्वा अब्रवीद् ब्रह्मराक्षसः ।
एकनृत्यस्य मे पुण्यं दद[4] त्वं वणिजोत्तम ।। ५५ ।।

सुधन उवाच

नाऽहं दास्यामि ते पुण्यं यथोक्तं च समाचर ।
केन त्वं कर्मदोषेण राक्षसत्वमुपागतः
यत्ते गुह्यं महाभाग सर्वं तत्कथयस्व मे ।। ५६ ।।

१. आयातः । २. तस्य । ३. ददामि । ४. देहि साधुः ।

सुधनस्य वचः श्रुत्वा विहसित्वाऽह राक्षसः ।
किं त्वं माञ्च विजानासि प्रतिवासी ह्ययं तव ।
अग्निदत्तास्तु वै नाम छान्दसो ब्राह्मणोत्तमः ॥ ५७ ॥
इष्टकांस्तु हरन्नित्यं परकीयांश्च सर्वदा ।
मृतस्तु गृहकामेन राक्षसत्वमुपागतः ॥ ५८ ॥
मया त्वं हि यथाप्राप्त उपकारं कुरुष्व मे ।
एकविश्रामपुण्यं मे देहि त्वं बणिजोत्तम ॥ ५९ ॥
कृपया तु समायुक्तो बणिग् वचनमब्रवीत् ।
साधु राक्षस दत्तं ते एकनृत्यं मया तव ।
एकनृत्यप्रभावेण राक्षसो मुक्तिमागतः ॥ ६० ॥

वराह उवाच

सुधनस्तु ततो देवि विश्वरूपं जनार्दनम् ।
अग्रतस्तु स्थितं देवं दृष्ट्वाऽसौ धरणीं गतः ॥ ६१ ॥
उवाच मधुरं वाक्यं देवदेवो जनार्दनः ।
चतुर्भुजो दिव्यतनुः शङ्खचक्रगदाधरः ॥ ६२ ॥
विमानवरमारुह्य मम लोकं व्रजस्व च ।
इत्युक्तवा माधवो देवस्तत्रैवान्तरधीयत ॥ ६३ ॥
सुधनः सशरीरोऽपि सकुटुम्बो दिवं ययौ ।
विमानवरमारुह्य विष्णोर्लोकं जगाम ह ॥ ६४ ॥
एष तीर्थप्रभावो वै कथितस्ते वसुन्धरे ।
अक्रूराच्च परं तीर्थं न भूतं न भविष्यति ॥
तस्य तीर्थप्रभावेण सुधनो मुक्तिमाप्तवान् ॥ ६५ ॥
द्वादशी शुक्लपक्षे तु कुमुदस्य च या भवेत् ।
तस्मिन् स्नातस्य वसुधे राजसूयफलं भवेत् ॥ ६६ ॥
कार्तिकीं समनुप्राप्य तत्तीर्थे तु वसुन्धरे ।
वृषोत्सर्गं नरः कुर्वंस्तारयेत् स्वकुलोद्भवान् ॥ ६७ ॥
श्राद्धं यः कुरुते सुभ्रु कार्तिक्यां प्रयतो नरः ।
पितरस्तारितास्तेन सदैव प्रपितामहाः ॥ ६८ ॥

इति वराहपुराणे मथुरामाहात्म्ये अक्रूरतीर्थप्रभावो नाम पञ्चपञ्चाशदधिकशततमोऽध्यायः ।

## षट्पञ्चाशदधिकशततमोऽध्यायः ।

वराह उवाच

वत्सक्रीडनकं नाम तीर्थं वक्ष्ये परं[1] मम ।
तत्र रक्तशिलाबद्धं रक्तचन्दनभूषितम् ।
स्नानमात्रेण तत्रैव वायुलोकं व्रजेन्नरः ।
तत्राथ मुञ्चते प्राणान् मम लोके महीयते ॥ १ ॥
पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
अस्ति भाण्डीरकं नाम यत्तीर्थं परमुत्तमम् ॥ २ ॥
शालैस्तालैश्च तरुभिस्तमालैरर्जुनैस्तथा ।
इङ्गुदैः पीलुकैश्चैव करीरैरक्तपुष्पकैः ॥ ३ ॥
तस्मिन् भाण्डीरके स्नातो नियतो नियताशनः ।
सर्वपापविनिर्मुक्त इन्द्रलोकं स गच्छति ।
तत्राऽथमुञ्चते प्राणान् मम लोकञ्चगच्छति ॥ ४ ॥
पुनरन्यत् प्रवक्ष्यामि क्षेत्रं वृन्दावनं मम ।
तत्राहं क्रीडयिष्यामि गोभिर्गोपालकैः सह ॥ ५ ॥
रम्यञ्च[2] सुप्रतीतञ्चदेवदानवदुर्लभम् ।
तत्र कुण्डे महाभागे बहुगुल्मलतावृते ॥ ६ ॥
तत्र स्नानं प्रकुर्वीत एकरात्रोषितो नरः ।
गन्धर्वैरप्सरोभिश्च क्रीडमानः स मोदते ।
तत्राथ मुञ्चते प्राणान् मम लोकञ्च गच्छति ॥ ७ ॥
पुनरन्यत् प्रवक्ष्यामि महापातकनाशनम् ।
तत्रवृन्दावने तीर्थे यत्र केशी निपातितः ॥ ८ ॥
केद्रयः शतगुणं पुण्यं यत्रविश्रमते हरिः ।
तस्माच्छतगुणं पुण्यं नात्र कार्या विचारणा ॥ ९ ॥
तत्रापि च विषोऽस्ति केशीतीर्थे वसुन्धरे ।
तस्मिन् पिण्डप्रदानेन गयातुल्यफलं भवेत् ।
स्नाने दाने तथा होमे अग्निष्टोमफलं भवेत्[3] ॥ १० ॥
सूर्य तीर्थेषु वसुधे द्वादश्यादिव्यसंज्ञके ।
कालीयो रमते तत्र कालिन्द्याः सलिले शुभे ॥ ११ ॥
कालियो दामितस्तत्र[4]आदित्याः स्थापिता मया ।
वरं वृणुध्वं भद्रं वो यद्वो मनसि वर्तते ॥ १२ ॥

---

१. क्षेत्रे परम् । २. सुरम्यम् । ३. शुभे । ४. आदिव्यो दमितः ।

आदित्या ऊचुः

वरं ददासि नो देव वराही यदि वा वयम् ।
अस्मिंस्तीर्थवरे स्नानमस्माकं सम्प्रदीयताम् ॥ १३ ॥

आदित्यानां वचः श्रुत्वा क्रीडां कृत्वा वसुन्धरे ।
स्नानमात्रेण तत्रैव मुच्यते सर्वकिल्विषैः ।
अथात्र मुञ्चते प्राणान् मम लोकं स गच्छति ॥ १४ ॥

उत्तरे हरिदेवस्य दक्षिणे कालियस्य तु ।
अनयोर्देवयोर्मध्ये ये मृतास्तेऽपुनर्भवाः ॥ १५ ॥

इति वराहपुराणे मथुरामाहात्म्ये मथुराप्रादुर्भावो नाम
षट्पञ्चाशदधिकशततमोऽध्यायः ।



## सप्तपञ्चाशदधिकशततमोऽध्यायः

वराह उवाच

यमुनापारमुल्लङ्घ्य तत्रैव च महामुने ।
मलयार्जुनकं तीर्थं कुण्डं तत्र च विद्यते ॥ १ ॥
पर्यस्तं तत्र शकटं भिन्नभाण्डकुटीघटम् ।
तत्र स्नानोपवासाभ्यामनन्तं फलमश्नुते ॥ २ ॥
द्वादश्यां शुक्लपक्षस्य ज्यैष्ठमासे वसुन्धरे ।
तत्र स्नानेन दानेन महापातकनाशनम् ॥ ३ ॥
ज्यैष्ठस्य शुक्लद्वादश्यां स्नात्वा सुनियतेन्द्रियः ।
मथुरायां हरिं दृष्ट्वा प्राप्नोति परमां गतिम् ॥ ४ ॥
यमुनासलिले स्नातः शुचिर्भूत्वा जितेन्द्रियः ।
समभ्यर्च्याच्युतं सम्यक् प्राप्नोति परमां गतिम् ॥५॥
अपि चास्मत्कुले जातः कालिन्दी सलिले प्लुतः ।
अर्चयिष्यति गोविन्दं मथुरायामुपोषितः ।
इति गायन्ति पितरः परलोकगताः[1] सदा ॥ ६ ॥
ज्यैष्ठमासे तु द्वादश्यां समभ्यर्च्य जनार्दनम् ।
धन्योऽसौ पिण्डनिर्वापं यमुनायां करिष्यति ॥ ७ ॥
तत्रैव तु महातीर्थे वने बहुलसंज्ञके ।
तत्र स्नातो नरो देवि रुद्रलोके महीयते ॥ ८ ॥
चैत्रमासे तु द्वादश्यां शुक्लपक्षे वसुन्धरे ।
तत्र स्नातो नरो याति मम लोकं न संशयः ॥ ९ ॥
अस्ति भाण्डह्रदं नाम परपारेषु दुर्लभम् ।
दृश्यन्तेऽहरहस्तत्र आदित्याः शुभकारिणः ॥ १० ॥
तत्र चार्कस्थले कुण्डे स्नानं यः कुरुते नरः ।
सर्वपापविनिर्मुक्तः सूर्यलोकं[2] व्रजेन्नरः ।
तत्राऽथामुञ्चते प्राणान् मम लोकं स गच्छति ॥११॥
अर्कस्थलसमीपे कूपन्तु विमलोदकम् ।
सप्तसामुद्रकं नाम देवानामपि दुर्लभम् ॥ १२ ॥
तत्र स्नानेन वसुधे स्वच्छन्दगमनालयः ।
अथात्र मुञ्चते प्राणान् मम लोकं स गच्छति ॥१३॥

---

१. परलोकं गताः । २. सूर्यलोके ।

तत्र वीरस्थलं नाम क्षेत्रं गुह्यं परं मम।
आसन्नसलिलञ्चैव पद्मोत्पलविभूषितम् ॥ १४ ॥
यस्तत्र कुरुते स्नानमेकरात्रोषितो नरः।
स मत्प्रसादात् सुश्रोणि वीरलोके महीयते।
अथात्रमुञ्चते प्राणान् मम लोकं स गच्छति॥ १५ ॥

कुशस्थलञ्च तत्रैव पुण्यं पापहरं शुभम्।
तत्र स्नातो नरो देवि ब्रह्मलोके महीयते।
अथात्र मुञ्चते प्राणान् मम लोकं स गच्छति॥ १६ ॥

तत्र पुष्पस्थलं नाम शिवक्षेत्रमनुत्तमम्।
तत्र स्नानेन मनुजः शिवलोके महीयते ॥ १७ ॥
एते पञ्चस्थलाख्याता[1] महापापविनाशनाः।
तेषु स्नानेषु वसुधे ब्रह्मणा सह मोदते।
तत्र गोपीश्वरो नाम महापातकनाशनः ॥ १८ ॥

कृष्णस्य रमणार्थं हि सहस्राणि च षोडश।
गोप्यो रूपाणि चक्रे च तत्र क्रीडनके हरिः ॥ १९ ॥
यदा बालेन कृष्णेन भग्नार्जुनयुगं तथा।
शकटं च तदा भिन्नं घटभाण्डकुटीरकम् ॥ २० ॥

ताभिस्तत्रैव गोविन्दं क्रीडन्तंचयदृच्छया।
परिष्वज्य[2] हि धर्मेण व्याजेन च सुगोपितम्॥ २१ ॥

मातलिस्तत्र चागत्य देवैरुक्तं यथोदितम्।
गोपवेशधरं देवमभिषेकञ्चकार ह ॥ २२ ॥
आनीय सप्त कलशान् रत्नौषधिपरिष्णुतान्।
गोपीमण्डलपातेन स्नापितो हेमकुण्डलः।
गोप्यो गायन्ति नृत्यन्ति कृष्ण कृष्ण इति ब्रुवन् ॥२३॥

तत्र गोपीश्वरं देवं मातलिः स्थाप्य पूजितम्।
कूपञ्च स्थापयामास माङ्गल्यैः कलशैः[3] शुभैः।
सप्तसामुद्रिकं नाम कूपन्तु विमलोदकम् ॥ २४ ॥

देवस्याग्रे तु वसुधे गोपा यस्य महात्मनः।
पितरश्चापि नन्दन्ति पानीयं पिण्डमेव च ॥ २५ ॥

सप्तसामुद्रिके कूपे यः श्राद्धं सम्प्रदास्यति।
पितरस्तारितास्तेन कुलानां सप्तसप्ततिः ॥ २६ ॥

---

१. एतत्पञ्चस्थलाख्यानामितः बहुषु पाठः। २. परिष्वक्तम्। ३. कवचैः।

सोमवारे त्वमायां वै पिण्डदानं करोति यः ।
पितरस्तस्य तृप्यन्ति कोटिवर्षशतान्यलम् ॥ २७ ॥
गोविन्दस्य च देवस्य तथा गोपीश्वरस्य च ।
मध्ये तु मरणं यस्य शक्रस्येति सलोकताम् ॥ २८ ॥
तथा बहुलरुद्रस्य गोविन्दस्यैव मध्यतः ।
तद्वद् ब्राह्मणमाशास्य गोपीशस्यैव मध्यतः ॥ २९ ॥
एतेषु स्नानदानेन पिण्डपातेन भामिनि ।
नरस्तारयते पुंसां दशपूर्वान् दशापरान् ॥ ३० ॥
एषु स्नातो नरो देवि देवैश्च सह मोदते ।
तत्राथ मुञ्चते प्राणान् मम लोकं स गच्छति ॥ ३१ ॥
वसुपन्नं महातीर्थं पुण्यं परमसुत्तमम् ।
मथुरादक्षिणे पार्श्वे क्षेत्रं फाल्गुनकं तथा ।
तत्र स्नात्वा च पीत्वा च परलोके महीयते ॥ ३२ ॥
तत्र फाल्गुनके चैव तीर्थे परम दुर्लभे ।
वृषभाञ्जनकं नाम क्षेत्रं मे दुर्लभं महत् ॥ ३३ ॥
तत्राभिषेकं यः कुर्यात् स देवैः सहमोदते ।
तत्र यो मुञ्चते प्राणान् मम लोकं स गच्छति ॥३४॥
अस्ति तालवनं नाम धेनुकासुररक्षितम् ।
मथुरापश्चिमे भागे अदूरादर्धयोजनम् ॥ ३५ ॥
तत्र कुण्डं स्वच्छजलं नीलोत्पलविभूषितम् ।
तत्र स्नानेन दानेन वाञ्छितं फलमाप्नुयात् ॥ ३६ ॥
अस्ति संपीठकं नाम अस्मिन् क्षेत्रे परं मम[1] ।
तत्र कुण्डं विशालाक्षि प्रसन्नं सलिलं शुभम् ॥ ३७ ॥
तत्र स्नानं च ये कुर्युरेकरात्रोषितो नराः ।
आग्निष्टोमफलञ्चैव लभन्ते नात्र संशयः ।
अथात्र मुञ्चते प्राणान् मम लोकं स गच्छति ॥३८ ॥
देवकीगर्भसम्भूतो वसुदेवगृहे शुभे
तत्र पुण्येन हि मया रविराराधितः शुभः ।
लब्धः प्राज्ञो मया पुत्रो रूपवांश्च गुणान्वितः॥३९ ॥
तत्रैवं तु ततो दृष्टः पद्महस्तो दिवाकरः ।
मासि भाद्रपदे देवि तिग्मतेजा विभावसुः ।
सप्तम्यां कृष्णपक्षस्य रविस्तिष्ठति सर्वदा ॥ ४० ॥

---

१. तीर्थमृषिवर्णाचितम् । तत्र चातः परं चरणचतुष्टयं नास्ति ।

तस्मिन्नहनि यः स्नानंकुर्यात् कुण्डेसमाहितः ।
न तस्य दुर्लभं लोके सर्वदाता दिवाकरः ॥ ४१ ॥
आदित्येऽहनि संप्राप्ते सप्तम्यां तु वसुन्धरे ।
नरो वाप्यथवा नारी प्राप्नोत्यविकलं फलम् ॥ ४२ ।
तत्रैव तु तपस्तप्तं राज्ञा शान्तनुना पुरा ।
आदित्यं तु पुरः स्थाप्य प्राप्तो भीष्मो महाबलः॥४३॥
शान्तनुः प्राप्य तं पुत्रं गतोऽसौ हस्तिनापुरम् ।
तत्र स्नानेन दानेन वाञ्छितं फलमाप्नुयात् ॥ ४४ ॥

इति वराहपुराणे मथुरामाहत्म्ये सप्तपञ्चाशदधिक शततमोऽध्यायः ।



## अष्टापञ्चाशदधिकशततमोऽध्यायः ।

वराह उवाच

विंशतिर्योजनानां तु माथुरं मम मण्डलम् ।
यत्र यत्र नरः स्नातो मुच्यते सर्वकिल्बिषैः ॥ १ ॥
वर्षाकाले तु स्थातव्यं यत्र स्थानं तु हर्षदम् ।
पुण्यात् पुण्यतरं चैव माथुरे मम मण्डले ॥ २ ॥
सप्तद्वीपेषु तीर्थानि पुण्यान्यतमानि च ।
मथुरायां गमिष्यन्ति प्रसुप्ते तु सदा मयि ॥ ३ ॥
सुप्तोत्थितं तु दृष्ट्वा मां मथुरायां वसुन्धरे ।
ते नरा मां प्रपश्यन्ति सर्वकालं न संशयः ॥ ४ ॥
सुप्तोत्थितं तु वसुधे दृष्ट्वा मे मुखपङ्कजम् ।
सप्तजन्मकृतं पापं तत्क्षणादेव मुच्यते ॥ ५ ॥
मथुरावासिनो लोकाः सर्वे ते मुक्तिभाजनाः ।
मथुरां समनुप्राप्य दृष्ट्वा देवं तु केशवम् ॥ ६ ॥
स्नात्वा पुनस्तु कालिन्द्यां मम लोके महीयते ।
स तत्फलमवाप्नोति राजसूयाश्वमेधयोः ॥ ७ ॥
प्रदक्षिणीकृतो येन मथुरायां तु केशवः ।
प्रदक्षिणी कृता तेन सप्तद्वीपा वसुन्धरा ॥ ८ ॥
घृतपूर्णेन पात्रेण समग्रेण च वाससा ।
केशवस्याग्रतो दत्वा दीपकं तु वसुन्धरे ॥ ९ ॥
पञ्चयोजनविस्तारमायाम पञ्चविस्तरम् ।
दीपमालासमाकीर्णं विमानं लभते नरः ॥ १० ॥
सर्वकामसमृद्धं तदप्सरोगण सेवितम् ।
रम्यमालासमाकीर्णं भोगाढ्यं सर्वकामिकम् ।
समारोहति वै नित्यं प्रभामण्डलमण्डितम् ॥ ११ ॥
ये देवा ये च गन्धर्वाः सिद्धाश्चारणपन्नगाः ।
तं स्पृहन्ति सदा देवि पुण्यमस्ति कृतं भुवि ॥ १२ ॥
यदि कालान्तरे पुण्यं हीयतेऽस्य पुरा कृतम् ।
सतां पुण्यगृहे देवि जायते मानवो हि सः ॥ १३ ॥

धरण्युवाच

क्षेत्रं हि रक्षते देव कस्त्विदं पापनाशनम् ।
पशुभूतपिशाचैश्च रक्षोभूतविनायकैः ।
एवमादिभिराकृष्टं तत्क्षेत्रं फलदं भवेत् ॥ १४ ॥

वराह उवाच

मत्क्षेत्रं ते न पश्यन्ति मत्प्रभावात् कदाचन।
न विकुर्वन्ति ते दृष्ट्वा मत्पराणां हि देहिनाम् ॥ १५ ॥
रक्षार्थं हि मया दत्ता दिक्पालास्तु वरानने।
लोकपालास्तु चत्वारस्तीर्थं रक्षन्ति ये सदा ॥ १६ ॥
पूर्वां रक्षति इन्द्रस्तु यमो रक्षति दक्षिणाम्।
पश्चिमां रक्षते नित्यं वरुणः पाशभृत्स्वयम् ॥ १७ ॥
उत्तरां तु कुवेरस्तु महाबलपराक्रमः।
मध्यां तु रक्षते नित्यं शिवो देव उमापतिः ॥ १८ ॥
मथुरायां गृहं यस्तु प्रासादं कुरुते नरः।
चतुर्भुजस्तु विज्ञेये जीवन्मुक्तो न संशयः ॥ १९ ॥
मथुराया महाभागे कुण्डे च विमलोदके।
गम्भीरे सर्वदा देवि तिष्ठते च चतुर्भुजः ॥ २० ॥
तत्र मुञ्चेत यः प्राणान् स्नानं कृत्वा वसुन्धरे।
वैष्णवं लोकमासाद्य क्रीडते स सुखादिव ॥ २१ ॥
तत्रैव तु तदाश्चर्यं कथ्यमानं मया शृणु।
यदुच्यते वै सुश्रोणि कुण्डे तु विमलोदके ॥ २२ ॥
हेमन्ते तु भवेच्चोष्णं शीतलं ग्रीष्मके भवेत्।
तेजसा मम सुश्रोणि तुषारसदृशोपमम् ॥ २३ ॥
न वर्धते च वर्षासु ग्रीष्मे चापि न हीयते।
एतच्च महदाश्चर्यं तस्मिन् कुण्डे परं मम ॥ २४ ॥
पदे पदे तीर्थफलं मथुरायां वसुन्धरे।
तत्र तत्र नरः स्नातो मुच्यते सर्वपातकैः ॥ २५ ॥
वर्षासु स्थूलतीर्थेषु[1] स्नातव्यं तु प्रयत्नतः।
कूपे ह्रदे देवखाते[2] गर्तेषु च नदीषु च ॥ २६ ॥
प्रवाहेषु च दिव्येषु नदीनां संगमेषु च।
वर्षासु सर्वतःस्नायात् यदीच्छेत् परमांगतिम् ॥ २७ ॥
अस्ति क्षेत्रं परं दिव्यं मुचुकुन्दं तु नामतः।
मुचुकुन्दः स्वपित्यत्र दानवासुरपातनः ॥ २८ ॥
तत्र कुण्डे नरः स्नात्वा प्राप्नोत्यभिमतं फलम्।
अत्राथमुञ्चते प्राणान् मम लोकं स गच्छति ॥ २९ ॥
इह जन्मकृतं पापमन्यजन्मकृतञ्च यत्।
तत्सर्वं नश्यते शीघ्रं कीर्तनात् केशवस्य तु ॥ ३० ॥

---

१. वर्षासु स्थलीतीर्थेषु ।　　२. ह्रदेषु देवखातेषु ।

किं तस्य बहुभिर्मन्त्रैर्भक्तिर्यस्य जनार्दने ।
नरके पाच्यमानस्य गतिर्देवि जनार्दनः ॥ ३१ ॥
कृत्वा प्रदक्षिणं देवि विश्रामं कुरुते तु यः ।
नारायणसमीपं तु सोऽनन्तफलमश्नुते ॥ ३२ ॥
सुप्तोत्थितं हरिं दृष्ट्वा मथुरायां वसुन्धरे ।
न तस्य पुनरावृत्तिर्जायते स चतुर्भुजः ॥ ३३ ॥
कुमुदस्य तु मासस्य नवम्यां तु वसुन्धरे ।
प्रदक्षिणीकृत्य वसुधां सर्वपापैः प्रमुच्यते ॥ ३४ ॥
ब्रह्मध्नश्च सुरापश्च गोघ्नो भग्नव्रतस्तथा ।
मथुरां तु परिक्रम्य पूतो भवति मानवः ॥ ३५ ॥
अष्टम्यां प्राप्य मथुरां दन्तधावनपूर्वकम् ।
ब्रह्मचर्येण तां रात्रिं कृतसङ्कल्पमानसः ॥ ३६ ॥
धौतवस्त्रस्तु सस्नातो मौनव्रतपरायणः ।
प्रदक्षिणं तु कुर्वीत सर्वपातकनाशनम्[1] ॥ ३७ ॥
प्रदक्षिणां क्रियमाणमन्योन्यः स्पृशते नरः ।
सर्वकामानवाप्नोति नात्र कार्या विचारणा ॥ ३८ ॥
मथुरायां नरो गत्वा दृष्ट्वा देवं स्वयम्भुवम् ।
प्रदक्षिणायां यत्पुण्यं तत्पुण्यं लभते नरः ॥ ३९ ॥
देवस्याग्रे तु वसुधे कूपं तु विमलोदकम् ।
पितरश्चाभिनन्दन्ति पानीयं पिण्डमेव च ॥ ४० ॥
चतुः सामुद्रिकं नाम त्रिलोकेषुच विश्रुतम्[2] ।
तत्र स्नातो नरो भद्रे देवैश्च सह मोदते ।
तत्राथ मुञ्चते प्राणान् मम लोकं स गच्छति ॥ ४१ ॥

इति वराहपुराणे मथुरातीर्थप्रादुर्भावो नाम
अष्टापञ्चाशदधिकशततमोऽध्यायः ।

---

१. सर्वपातकशुद्धये । २. कूपं लोकेषु विश्रुतम् ।

## ऊनषष्ट्यधिकशततमोऽध्यायः ।

धरण्युवाच

श्रुतं सुबहुशो देव तीर्थानां सुविस्तरम् ।
प्रोच्यमानं तु पुण्याख्यं त्वत्प्रसादाज्जनार्दन[1]॥ १ ॥
न दानैर्न तपोभिश्च न यज्ञैस्तादृशं फलम् ।
भूमेः प्रदक्षिणायाश्च यादृशं तीर्थसेवया ॥ २ ॥
भुवश्च चतुरन्तायास्तीर्थप्रक्रमणं हरे ।
सर्वतीर्थाभिगमनमस्ति दुर्गतरं नृणाम् ॥ ३ ॥
अस्ति कश्चिदुपायोऽत्र येन सम्यगवाप्यते ।
प्रसादसुमुखो भूत्वा तत्सर्वं कथयस्व मे ॥ ४ ॥

वराह उवाच

भद्रे शृणु महत्पुण्यं पृथिव्यां सर्वतो दिशम् ।
परिक्रम्य यथाध्वानं प्रमाणगणितं शुभम्[2] ॥ ५ ॥
भूम्याः परिक्रमे सम्यक् प्रमाणयोजनानि च ।
षष्टिकोटि सहस्राणि षष्टिकोटिशतानि च ॥ ६ ॥
तीर्थान्येतानि देवाश्च तारकाश्च नभस्तले ।
गणितानि समस्तानि वायुना जगदायुषा ॥ ७ ॥
ब्रह्मणा लोमशेनैव नारदेन ध्रुवेण च ।
जाम्बवतीशपुत्रेण रावणेन हनूमता ॥ ८ ॥
एतैरनेकधा देवैः ससागरवना मही ।
क्रमिता बलिना चैव बाह्यमण्डलरेखया ॥ ९ ॥
अन्तरा भ्रमणेनैव सुग्रीवेण महात्मना ।
तथा च पूर्वं देवेन्द्रैः पञ्चभिः पाण्डुनन्दनैः ॥ १० ॥
योगसिद्धैस्तथा कैश्चन् मार्कण्डेयमुखैरपि ।
क्रमिता न क्रमिष्यन्ति न पूर्वे नापरे जनाः ॥ ११ ॥
अल्पसत्त्वबलोपेतैः प्राणिभिश्चाल्पबुद्धिभिः ।
मनसाऽपि न शक्यन्ते गमनस्य च का कथा ॥ १२ ॥
सप्तद्वीपे च तीर्थानां भ्रमणाद् यत्फलं भवेत् ।
प्राप्यते चाधिकं तस्मान्मथुरायाः परिक्रमे ॥ १३ ॥

---

१. (ग) पुस्तके प्रथमःश्लोकः द्वितीयश्लोकस्थप्रथमपादश्च न स्तः ।
२. परिक्रम्य यथाध्वानं पृथिव्यां सर्वतो दिशम् ।

मथुरां समनुप्राप्य यस्तु कुर्यात् प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥ १४ ॥
तस्मात् सर्वप्रयत्नेन सर्वकामानभीप्सुभिः ।
कर्तव्या मथुरां प्राप्य नरैः सम्यक् प्रदक्षिणा ॥ १५ ॥

धरण्युवाच

यथा विधानक्रमणं मथुरायामवाप्यते ।
प्रदक्षिणाफलं सम्यगनुक्रमविधिं वद ॥ १६ ॥

वराह उवाच

पुरा सप्तर्षिभिः पृष्टो ब्रह्मा लोकपितामहः ।
इदमेव पुरा प्रोक्तं यथा त्वं प्रष्टवान् मम ॥ १७ ॥
श्रुत्वा सर्वपुराणोक्तं तीर्थानुक्रमणं परम् ।
पृथिव्याश्चतुरन्तायास्तथा तद् वक्तुमुद्यतः ॥ १८ ॥
सर्वदेवेषु यत्पुण्यं सर्वतीर्थेषु यत् फलम् ।
सर्वदानेषु यत् प्रोक्तमिष्टापूर्तेषु चैव हि ॥ १९ ॥
यत्फलं लभते विप्रास्तस्माच्छतगुणोत्तरम् ।
प्रक्रमान्मथुरायास्तु सत्यमेतद् वदामि वः ॥ २० ॥
इत्युक्त्वा ऋषयो जग्मुरभिवाद्य स्वयम्भुवम् ।
आगत्य मथुरां देवीमाश्रमांश्चक्रुतु[1] द्विजाः ।
ध्रुवेण सहिता आसन् कामयानास्तु तद्दिनम् ॥ २१ ॥
कुमुदस्य तु मासस्य नवम्यां शुक्लपक्षके ।
मथुरोपक्रमं कृत्वा सर्वपापैः प्रमुच्यते ॥ २२ ॥

इति वराहपुराणे मथुरामाहात्म्यं नाम
ऊनषष्ट्यधिकशततमोऽध्यायः ।



१. चरतुः ।

## षष्ठ्यधिकशततमोऽध्यायः

वराह उवाच

अष्टम्यां मथुरां प्राप्य कार्तिकस्यासिते नरः ।
स्नात्वा विश्रान्तितीर्थे तु पितृदेवार्चने रतः ॥ १ ॥

विश्रान्तिदर्शनं कृत्वा दीर्घविष्णुश्च केशवम् ।
प्रदक्षिणायाः सम्यग्वै फलमाप्नोति मानवः ॥ २ ॥

उपवासरतः सम्यगल्पमेध्याशनोऽथवा ।
दन्तकाष्ठञ्च सायाह्ने कृत्वा शुद्ध्यर्थमात्मनः ॥ ३ ॥
ब्रह्मचर्येण तां रात्रिं कृत्वा सङ्कल्पमानसः ।
धौतवस्त्रेण सुस्नातो मौनव्रतपरायणः ॥ ४ ॥

तिलाक्षतकुशान् गृह्य पितृदेवार्थमुद्यतः ।
दीपहस्तो वनं गत्वा श्रान्तो विश्रान्ति जागरे ॥ ५ ॥

यथानुक्रमणं तैश्च ध्रुवाद्यैर्ऋषिभिः कृतम् ।
एवं परम्परायातं क्रमणीयं नरोत्तमैः ॥ ६ ॥

प्रदक्षिणावर्तमानो नरो भक्तिसमन्वितः ।
सर्वान् कामानवाप्नोति हयमेधफलं लभेत् ॥ ७ ॥
एवं जागरणं कृत्वा नवम्यां नियतः शुचिः ।
ब्राह्मे मुहूर्ते संप्राप्ते ततो यात्रामुपक्रमेत् ॥ ८ ॥
तथा प्रारंभयेद् यात्रां यावन्नोदयते रविः ।
प्रातः स्नानं तथा कुर्यात् तीर्थे दक्षिणकोटिके ॥ ९ ॥
प्रक्षाल्यपादावाचम्य हनूमन्तं प्रसादयेत् ।
सर्वमङ्गलमाङ्गल्यं कुमारं ब्रह्मचारिणम् ॥ १० ॥

विज्ञाप्य सिद्धिकर्तारं यात्रासिद्धिप्रदायकम् ।
यस्य संस्मरणादेव सर्वे नश्यन्त्युपद्रवाः ॥ ११ ॥
यथा रामस्य यात्रायां सिद्धिस्ते सुप्रतिष्ठिता ।
तथा परिभ्रमन् मेऽद्य भवान् सिद्धिप्रदो भव ॥ १२ ॥

इति विज्ञाप्य विधिवद्धनूमन्तं गणेश्वरम् ।
दीपपुष्पोपहारैस्तु पूजयित्वा विसर्जयेत् ॥ १३ ॥
तथैव पद्मनाभं तु दीर्घविष्णुं भयापहम् ।
विज्ञाप्य सिद्धिकर्तारं देवश्च तदनन्तरम् ॥ १४ ॥

दृष्ट्वा वसुमतीं देवीं तथैव ह्यपराजिताम् ।
आयुधागारसंस्थाञ्च नृणां सर्वभयापहाम् ॥ १५ ॥
कंसवासनिकां तद्वदौग्रसेनाञ्च[1] चर्चिकाम् ।
वधूटीञ्च तथा देवीं[2] दानवक्षयकारिणीम् ॥ १६ ॥
जयदां देवतानाञ्च मातरो देवपूजिताः ।
गृहदेव्यो वास्तुदेव्यो दृष्ट्वाऽनुज्ञाप्य निर्गमेत् ॥१७॥
मौनव्रतधरो गच्छेद् यावद् दक्षिणकोटिके ।
प्राप्य स्नात्वा पितॄंस्तर्प्य दृष्ट्वा देवं प्रणम्य च ।
नत्वा गच्छेदिक्षुवासं देवीं[3] कृष्णसुपूजिताम् ॥ १८ ॥
बालक्रीडनरूपाणि कृतानि सह गोपकैः ।
यानि तीर्थानि तान्येव स्थापितानि महर्षिभिः ।
ख्यातिं गतानि सर्वाणि सर्वपापहराणि च ॥ १९ ॥
वत्सयुत्रं ततो गच्छेत् सर्वपापहरं परम् ।
अर्कस्थलं[4] वीरस्थलं कुशस्थलमनन्तरम् ॥ २० ॥
पुण्यस्थलं महास्थलं महापापविनाशनम्[5] ।
पञ्चस्थलानि तत्रैव सर्वपापहराणि च ॥ २१ ॥
येषां तु दर्शनादेव ब्रह्मणा सह मोदते ।
शिवं सिद्धमुखं दृष्ट्वा स्थलानां फलमाप्नुयात् ॥ २२ ॥
हयमुक्तिं ततो गच्छेत् सिन्दूरं ससहायकम् ।
श्रूयते चात्र ऋषिभिर्गाथा गीता पुरातना ॥ २३ ॥
अश्वारूढेन तेनैव यत्रेयं समनुस्थिता ।
अश्वो मुक्तिं गतस्तत्र सहायसहितः सुखम् ॥ २४ ॥
राजपुत्रः स्थितस्तत्र यानयात्रा न मुक्तिदा ।
तस्माद् यानैश्च यात्रा च न कर्तव्या फलेच्छया ॥२५॥
तस्मिंस्तीर्थे तु तं दृष्ट्वा स्पृष्ट्वा पापैः प्रमुच्यते ।
कुण्डं शिवस्य विख्यातं तत्र स्नानफलं महत् ॥ २६ ॥
मल्लिकादर्शनं कृत्वा कृष्णस्य जयदं शुभम् ।
ततः कदम्बखण्डस्य गमनात् सिद्धिमाप्नुयात् ॥ २७ ॥
चर्चिका योगिनी तत्र योगिनीपरिवारिता ।
कृष्णस्य रक्षणार्थं हि स्थिता सा दक्षिणां दिशम् ॥ २८॥
अस्पृश्या चास्पृशा चैव मातरौ लोकपूजितौ ।
बालानां दर्शनं ताभ्यां महारक्षां करिष्यति ॥ २९ ॥

---

१. औग्रसेनीं तु । २. तथा देवि । ३. देवि । ४. अङ्कस्थलं ।
५. महापातकनाशनम् ।

वर्षखातं ततो गत्वा कुण्डं पापहरं परम् ।
गत्वा स्नात्वा पितृंस्तर्प्य सर्वपापैः प्रमुच्यते ॥ ३० ॥
क्षेत्रपालं ततो गत्वा शिवं भूतेश्वरं हरम् ।
मथुराक्रमणं तस्य जायते सफलं तथा ॥ ३१ ॥
कृष्णक्रीडासेतुबन्धं महापातकनाशनम् ।
बालानां क्रीडनार्थञ्च कृत्वा देवो गदाधरः ॥ ३२ ॥
गोपकैः सहितस्तत्र क्षणमेकं दिने दिने ।
तत्रैव रमणार्थं हि नित्यकालं स गच्छति ॥ ३३ ॥
बलिह्रदञ्च[1] तत्रैव जलक्रीडाकृतं शुभम् ।
यस्य सन्दर्शनादेव सर्वपापैः प्रमुच्यते ॥ ३४ ॥
ततः परञ्च कृष्णेन कुक्कुटैः क्रीडनं कृतम् ।
यस्य दर्शनमात्रेण चण्डोऽपि गतिमाप्नुयात् ॥ ३५ ॥
स्तम्भोच्चयं सुशिखरं सौरभैः ससुगन्धिभिः ।
भूषितं पूजितं तत्र कृष्णेनाक्लिष्टकर्मणा ॥ ३६ ॥
तस्य प्रदक्षिणं कृत्वा परिपूज्य प्रयत्नतः ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं व्रजेत्तु सः[2] ॥ ३७ ॥
वसुदेवेन देवक्या गर्भस्य रक्षणाय च[3] ।
कृतमेकान्तशयनं महापातकनाशनम् ॥ ३८ ॥
ततो नारायणस्थानं प्रविशेन्मुक्तिहेतवे ।
परिक्रम्य ततो देवान्नारायणपुरोगमान् ॥ ३९ ॥
दृष्ट्वा ततः सुविज्ञाप्य गणं विधिविनायकम् ।
कुब्जिकां वामनाञ्चैव ब्राह्मण्यै कृष्णपालिते ॥ ४० ॥
अनुज्ञाय ततः स्थानं द्रष्टुं गर्तेश्वरं शिवम् ।
दृष्टमात्रेण तत्रैव यात्रा फलमवाप्यते ॥ ४१ ॥
महाविद्येश्वरी देवी आरक्षं पापकं हरेत्[4] ।
रक्षणार्थं हि क्षेत्रस्य यात्रायाः सिद्धिदां नृणाम् ।
प्रभामल्लीञ्च[5] तत्रैव दृष्ट्वा कामानवाप्नुयात् ॥ ४२ ॥
महाविद्येश्वरी देवी कृष्णरक्षार्थमुद्यता ।
नित्यं सन्निहिता तत्र सिद्धिदा पापनाशिनी ॥ ४३ ॥
कृष्णेन बलभद्रेण गोपैः कंसं जिघांसुभिः ।
सङ्केतकं कृतं तत्र मन्त्रनिश्चयकारकम् ॥ ४४ ॥

---

१. बालह्रदम् । २. व्रजेन्नरः । ३. गर्भसंरक्षणाय च । ४. आरक्षं परमं हरेः । ५. प्रभालल्लिम् ।

तदा सङ्केतकैः सा च सिद्धा देवी प्रतिष्ठिता ।
सिद्धिप्रदा भोगदा च तेन सिद्धेश्वरी स्मृता ॥ ४५ ॥
सङ्केतकेश्वरीञ्चैव दृष्ट्वा सिद्धिमवाप्नुयात् ।
तत्र कुण्डं स्वच्छजलं महापातकनाशनम् ॥ ४६ ॥
ततो दृष्ट्वा महादेवं गोकर्णेश्वरनामतः ।
यस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ॥ ४७ ॥
सरस्वतीं नदीं दृष्ट्वा ततो भद्राणि पश्यति ।
विघ्नराजं ततो गच्छेत् गणेशं विघ्ननायकम् ।
सर्वसिद्धिप्रदं रम्यं दर्शनाच्च फलं लभेत् ॥ ४८ ॥
गङ्गा साध्वी च तत्रैव महापातकनाशिनी ।
दृष्ट्वा स्पृष्ट्वा तथा ध्यात्वा सर्वकामान् समश्नुते ॥ ४९ ॥
महादेवमुखाकारं नाम्ना रुद्रमहालयम् ।
क्षेत्रपं तं परं दृष्ट्वा क्षेत्रवासफलं लभेत् ।
तस्मादुत्तरकोटिञ्च दृष्ट्वा देवं गणेश्वरम् ॥ ५० ॥
द्यूतक्रीडा भगवता कृता गोपीजनैः सह ।
नानावहासरूपेण जिता गोप्यो धनानि च ॥ ५१ ॥
गोपैरानीय ताश्चैव कृष्णाय च निवेदिताः ।
गोपालकृष्णगमनं महापातकनाशनम् ॥ ५२ ॥
समस्तं बालचरितं भ्रमणं च यथासुखम् ।
कृतं तत्र यथारूपं यद्रूपं च यथा तथा ।
ऋषिभिः सेवितं ध्यातं विष्णोर्माहात्म्यमुत्तमम् ॥५३॥
ततो गच्छेन्महातीर्थं विमलं यमुनाम्भसि ।
स्नात्वा पीत्वा पितॄंस्तर्प्य नाम्ना रुद्रमहालयम् ।
गार्ग्यतीर्थे महापुण्ये नरस्तत्र तथा क्रमेत् । ५४ ॥
भद्रेश्वरे महातीर्थं सोमतीर्थं तथैव च ।
स्नात्वा सोमेश्वरं देवं दृष्ट्वा यात्राफलं लभेत् ॥ ५५ ॥
सरस्वत्याः सङ्गमे च देवर्षिपितृमानवान् ।
सन्तर्प्य विधिवद्दत्त्वा विष्णुसायुज्यमाप्नुयात् ॥ ५६ ॥
घण्टाभरणके तद्वत् तथा गरुडकेशवे ।
धारालोपनके तद्वत् वैकुण्ठे खण्डवेलके ॥ ५७ ॥
मन्दाकिन्याः संयमने असिकुण्डे तथैव च ।
गोपानां तीर्थके चैव तथैव मुक्तिकेश्वरे ॥ ५८ ॥
वैलक्षगरुडे चैव महापातकनाशने ।
तीर्थान्येतानि पुण्यानि यथा विश्रान्तिसंज्ञकम् ॥ ५९ ॥

एषु तीर्थेषु क्रमितो भक्तिमांश्च जितेन्द्रियः ।
देवान् पितॄन् समभ्यर्च्य ततो देवं प्रसादयेत् ॥ ६० ॥
अविमुक्तेश देवेश सप्तर्षिभिरनुष्टुत ।
मथुराक्रमणीयं मे सफलं स्यात् तवाज्ञया ॥ ६१ ॥
इत्येवं देवदेवेशं विज्ञाय क्षेत्रपं शिवम् ।
विश्रान्तिसंज्ञके स्नानं कृत्वा च पितृतर्पणम् ॥ ६२ ॥
गतश्रमं परिक्रम्य स्तुत्वा दृष्ट्वा प्रणम्य च ।
सुमङ्गलां ततो गच्छेद् यात्रा सिद्धिं प्रसादयेत् ॥६३॥
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
यात्रेयं त्वत्प्रसादेन सफला मे भवत्विति ॥ ६४ ॥
पिप्पलादेश्वरं देवं पिप्पलादेन पूजितम् ।
विश्रान्तस्तु परिक्रम्य त्रातस्तत्र महातपाः ॥ ६५ ॥
उपलिप्य ततस्तस्य शीर्षोपरि महच्छिवम् ।
स्वनाम्ना चिह्नितं स्थाप्य तदा यात्राफलं लभेत् ॥६६॥
कर्कोटकं तथा नागं महादुष्टनिवारणम् ।
दृष्ट्वा गच्छेत् ततो देवीं या कृष्णेन निर्मिता ॥ ६७ ॥
कंसभेदं प्रथमतः श्रुतं यत्र कुमन्त्रितम् ।
सुखवासञ्च वरदं कृष्णस्याक्लिष्टकर्मणः ।
सुखासीनञ्च तत्रैव स्थापितं शकुनाय वै ॥ ६८ ॥
स्वानुकूलो स्वरो यत्र प्रवेशे दक्षिणः स्वनः ।
ध्याता स्वभावे कृष्णेन स्वसा साऽतिसुखप्रदा ॥ ६ ॥
भयार्तेन च कृष्णेन ध्याता देवी च चण्डिका ।
स्थापिता सिद्धिदा तत्र नाम्ना चार्तिहरा ततः ।
दृष्ट्वा सर्वार्तिहरणं यस्या देव्या सुखी नरः ॥ ७० ॥
अग्रोत्तरं शुभतरं शकुनार्थं च याचतः ।
कृष्णस्य कंसघातार्थं सम्भूता सा तथोत्तरे ॥ ७१ ॥
तां दृष्ट्वा मनुजः कामान् सर्वानिष्टानवाप्नुते ।
वत्रानन्नं ततो ध्यात्वा कृष्णो मल्लजिघांसया ॥ ७२ ॥
निहत्य मल्लान् पश्चाद्धि वत्राननमकल्पयत् ।
वाञ्छितार्थफलञ्चक्रे कृष्णोऽस्य मनोरथान् ॥ ७३ ॥
यस्यै यस्यै देवतायै तस्यै तस्यै ददौ मखम् ।
उपयाचितं तु माङ्गल्यं सर्वपापहरं शुभम् ॥ ७४ ॥
कृष्णस्य बालचरितं महापातकनाशनम् ।
सूर्यं तं वरदं देवं माथुराणां कुलेश्वरम् ।
दृष्ट्वा तत्रैव दानञ्च दत्त्वा यात्रां समापयेत् ॥ ७५ ॥

एवं प्रदक्षिणं कृत्वा नवम्यां शुक्लकौमुदे ।
सर्वं कुलं समासाद्य विष्णुलोके महीयते ॥ ७६ ॥

क्रमतः पदविन्यासाद् यावन्तः सर्वतो दिशः ।
तावतः कुलसम्भूता सूर्ये तिष्ठन्ति शाश्वते ॥ ७७ ॥

ब्रह्मघ्नश्च सुरापश्च चौरा भग्नव्रताश्च ये ।
अगम्यागमने शीलाः क्षेत्रदारापहारकाः ।
मथुराक्रमणं कृत्वा विपाप्मानो भवन्ति ते ॥ ७८ ॥

अन्यदेशागतो दूरात् परिभ्रमति यो नरः ।
तस्य सन्दर्शनादन्ये पूताः स्युर्विगतामयाः ॥ ७९ ॥

श्रुतं यैश्च विदूरस्थैः कृतयात्रं नरं नरैः ।
सर्वपापविनिर्मुक्तास्ते यान्ति परमं पदम् ॥ ८० ॥

इति वराहपुराणे मथुरापरिक्रमप्रादुर्भावे
षष्ट्यधिकशततमोऽध्यायः ।



## एकषष्ट्यधिकशततमोऽध्यायः

धरण्युवाच

ये धर्मविमुखा मूढाः सर्वज्ञानविवर्जिताः ।
का गतिः कृष्ण तेषां हि विहिता नरके सुरैः ॥ १ ॥
अभुक्त्वा नारकं दुःखं सुकृतैः पुण्यदैर्नृणाम् ।
प्रयान्ति कर्मणा येन तमुपायं ब्रवीहि मे ॥ २ ॥

वराह उवाच

सर्वधर्मविहीनानां पुरुषाणां दुरात्मनाम् ।
नरकार्तिहरा देवी मथुरा पापघातिनी ॥ ३ ॥
मथुरावासिनो ये च तीर्थानां चोपसेवकाः ।
वनानां दर्शको वाथ मथुराक्रमकोऽपि वा ॥ ४ ॥
येषां मध्ये कृतं यैश्च एकञ्च शतमोजसा ।
न ते नरकभोक्तारः स्वर्गभाजो भवन्ति ते ॥ ५ ॥
प्रथमं मधुवनं नाम द्वितीयं तालमेव च ।
वनं कुन्दवनञ्चैव तृतीयं वनमुत्तमम् ॥ ६ ॥
चतुर्थं काम्यकं वनं वनानां वनमुत्तमम् ।
पञ्चमं बहुवनं नाम षष्ठं भद्रवनं स्मृतम् ॥ ७ ॥
सप्तमं तु वनं भूमे खादिरं लोकविश्रुतम् ।
महावनं चाष्टमं तु सदैव च मम प्रियम् ॥ ८ ॥
लोहार्गलवनं नाम नवमं पातकापहम् ।
वनं विल्ववनं नाम दशमं देवपूजितम् ॥ ९ ॥
एकादशं तु भाण्डीरं द्वादशं वृन्दकावनम्[1] ।
एतानि ये प्रपश्यन्ति न ते नरकभोगिनः ॥ १० ॥
यथाक्रमेण ये यात्रां वनानाञ्च जितेन्द्रियाः ।
करिष्यन्ति वरारोहे इन्द्रलोकं व्रजन्ति ते ॥ ११ ॥

इति वराहपुराणे मथुरामाहात्म्ये देववनप्रभवो नाम
एकषष्ट्यधिकशततमोऽध्यायः ।



---

१. वृन्दावनम् ।

# द्विषष्ट्यधिकशततमोऽध्यायः

वराह उवाच

पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
चक्रतीर्थे पुरा वृत्तं मथुरायां तथोत्तरे ॥ १ ॥
महागृहोदयं नाम जम्बूद्वीपस्य भूषणम् ।
तस्मिन् पुरवरे दिव्ये ब्राह्मणो वसते शुभे ॥ २ ॥
कन्यां सपुत्रमादाय ब्राह्मणो वेदपारगः ।
शालिग्रामं महापुण्यमगच्छद् ब्राह्मणोत्तमः ॥ ३ ॥
तत्रासौ वासमकरोत् पुण्यसेवी जितेन्द्रियः ।
तीर्थसेवी च स्नायी च[1] देवतादर्शने रतः ॥ ४ ॥
तत्र सिद्धेन संवादो ब्राह्मणस्याभवत्तदा ।
स सिद्धो वसते नित्यं कल्पग्रामे च सर्वदा ।
गच्छते सर्वकालं तु शालिग्रामे वसुन्धरे ॥ ५ ॥
स तेन सह सङ्गत्य कान्यकुब्जनिवासिना ।
कल्पग्रामविभूतिं च नित्यकालमवर्णयत् ॥ ६ ॥
कल्पग्रामविभूतिञ्च श्रुत्वा स मुनिसत्तमः ।
गमने बुद्धिरुत्पन्ना ततः सिद्धमयाचत ॥ ७ ॥
मित्रत्वं वर्तते सिद्ध नयस्वात्मनिवेशने ।
ब्राह्मणस्य वचः श्रुत्वा सिद्धो वचनमब्रवीत् ॥ ८ ॥
तत्र सिद्धा हि गच्छन्ति ते न तत्र गतिर्भवेत् ।
प्रार्थनादुःखलाभं तु शृणु वै ब्राह्मणोत्तम ॥ ९ ॥
आत्मयोगबलेनैव चलिष्यामि सपुत्रकः ।
दक्षिणे तु करे गृह्य ब्राह्मणं वेदपारगम् ।
वामे च तु करे गृह्य तस्य पुत्रं महामतिम् ।
उत्पपात तदा सिद्धो गृहीत्वा ब्राह्मणोत्तमौ ॥ १० ॥
कल्पग्रामे तु तौ मुक्तौ पितापुत्रौ वसुन्धरे ।
तत्र तौ वसतो नित्यं कल्पग्रामे द्विजोत्तमौ ॥ ११ ॥
तत्र कालेन महता रुग्देहे चाभवत् तदा ।
रुजा तु पीड्यमानः स दशमीं च दशाङ्गतः ॥ १२ ॥
मर्तुकामो द्विजवरो निरीक्ष्य सुतमुत्तमम् ।
उवाच पुत्रं धर्मात्मा मरणे समुपस्थिते ।
गङ्गातीरे च मां पुत्र नय त्वं मा विलम्बय ॥ १३ ॥

---

१. तीर्थसेवी स्नानपरः ।

तेन पुत्रेण नीतोऽसौ गङ्गातीरे महामुनिः ।
रुरोद पुत्रस्तु तदा पितृस्नेहसमन्वितः ॥ १४ ॥
वेदाध्ययनशीलः स पितृभक्त्या नियन्त्रितः ।
वसतस्तस्य वै तत्र कालो जातो महामतेः ॥ १५ ॥
कल्पग्रामे तदा सिद्धस्तस्य कन्या सुमध्यमा ।
वरमन्वेषयन्ती सा न प्राप्तस्तु तया मतः ॥ १६ ॥
कदाचिद् दैवयोगेन कान्यकुब्जनिवासिनः ।
गृहे प्रविष्टो विप्रः स भोजनार्थं महामतिः ॥ १७ ॥
पृष्टोऽसौ ब्राह्मणो भद्रे क भवांस्त्वमिहागतः ।
स सर्वं कथयामास यथावृत्तं दृढव्रतः ॥ १८ ॥
दिव्यज्ञानेन तं ज्ञात्वा पूजयामास तं द्विजः ।
पूजयित्वा यथान्यायं कन्यां तस्मै ददौ तदा ॥ १९ ॥
श्वशुरस्य गृहे नित्यं भोजनं कुरुते द्विजः ।
वसते पितृसान्निध्ये प्रतिचारी स पुत्रकः ॥ २० ॥
काले भगवतस्तस्य अतिक्षीणः पिता तदा ।
तं दृष्ट्वा क्षीणतां प्राप्तं श्वशुरं पर्यपृच्छत ॥ २१ ॥
स्वामिन् पितुर्मे मरणं भविष्यति वदस्व माम् ।
जामातृवचनं श्रुत्वा प्रहस्य श्वशुरोऽब्रवीत् ॥ २२ ॥
शूद्रान्नं भक्षितं तेन नित्यकालं द्विजोत्तम ।
तस्य चाहारदोषेण मृत्युर्दूरं गतः पितुः ॥ २३ ॥
पादयोर्विद्यते तच्च शूद्रान्नञ्च पितुस्तव ।
जान्वोरूर्ध्वे न विद्येत शूद्रान्नञ्च द्विजोत्तम ।
शूद्रान्ने विहीनस्य तस्य मृत्युर्भविष्यति ॥ २४ ॥
श्वशुरस्य तु वचनं पितुरग्रे न्यवेदयत् ।
तस्य पुत्रस्य वचनं श्रुत्वात्मानं विगर्हयत् ॥ २५ ॥
ततः प्रभाते विमले उदिते च दिवाकरे ।
पितुः समीपात् स गतः श्वशुरस्य निवेशनम् ॥ २६ ॥
गते पुत्रे पिता तस्य रुजा अत्यन्तपीडितः ।
दुःखेन पीडितः क्षीणो मर्तुकामो द्विजोत्तमः ॥ २७ ॥
गङ्गातीरात् समुत्तिष्ठन् दिशः सर्वा विलोकयन् ।
सन्निधावुपलं दृष्ट्वा गृहीतं तेन तत्पदा ॥ २८ ॥
चूर्णयामास तौ पादौ पीडया मोहितो द्विजः ।
ततः प्राणान् परित्यज्य गतोऽसौ कालवर्तनम् ॥ २९ ॥

स्नात्वा भुक्त्वा ततो गत्वा प्रेक्ष्य तं पितरं मृतम् ।
गतसंज्ञञ्च पितरं दृष्ट्वा स रुरुदे भृशम् ॥ ३० ॥
रुदित्वा सुचिरं कालं शास्त्रं दृष्ट्वा व्यचिन्तयत् ।
संस्कारयोग्यता नास्ति इत्येवं पुनरब्रवीत् ॥ ३१ ॥
सर्पश्रृङ्गिहतानाञ्च दंष्ट्रिविप्रहतस्य च ।
आत्मनस्त्यागिनश्चैव आपस्तम्बोऽब्रीवीदिदम् ॥३२॥
आत्मघाती नरः पापो नरके पच्यते चिरम् ।
प्रायश्चित्तं विधीयीत न दद्याच्चोदकक्रियाम् ।
अहो दैवं सुबलवत् पौरुषं तु निरर्थकम् ॥ ३३ ॥
तस्य पुत्रो महाभागे गतः श्वशुरमन्दिरम् ।
तं दृष्ट्वा श्वशुरो दीनमिदं वचनमब्रवीत् ।
ब्रह्महत्या तु ते जाता गच्छ त्वञ्च यथेप्सितम् ॥३४॥
श्वशुरस्य वचः श्रुत्वा जामाता वाक्यमब्रवीत् ।
न मया ब्राह्मणवधः कदाचिदपि कारितः ।
केन दोषण मे सिद्धं ब्रह्महत्याफलं महत् ॥ ३५ ॥
जामातुर्वचनं श्रुत्वा श्वशुरो वाक्यमब्रवीत् ।
पितुस्त्वया वधोपायो विनिर्दिष्टश्च पुत्रक ।
तेन दोषेण विप्रर्षे ब्रह्महत्याफलं तव ॥ ३६ ॥
आसन्नशयनाच्चैनं भोजनात् कथनादिषु ।
संवत्सरेण पतति पतितेन सहाचरन् ।
तस्मान्मम गृहे नास्ति वासस्ते हि द्विजोत्तम ॥ ३७ ॥
श्वशुरस्य वचः श्रुत्वा जामाता वाक्यमब्रवीत् ।
किं मया वद कर्तव्यं त्वया त्यक्तेन सुव्रत ॥ ३८ ॥
तस्य तद्वचनं श्रुत्वा ब्राह्मणः शंसितव्रतः ।
कल्पग्रामं परित्यज्य मथुरां याहि सुव्रत ।
नान्यत्र तव संशुद्धिः कदाचित्पितृघातिनः ॥ ३९ ॥
कल्पग्रामं परित्यज्य तत् क्षणादेव निःसृतः ।
ततः कालेन महता संप्राप्तो मथुरां पुरीम् ।
ब्राह्मणेभ्यो बहिःस्थाने नित्यन्तु वसते द्विजः ॥ ४० ॥
कन्यापुरनिवासी तु कुशिकोऽथ नराधिपः ।
तस्य सत्रं नित्यकालं मथुरायां प्रवर्तते ॥ ४१ ॥
द्वे सहस्रे तु विप्राणां तस्य सत्रे च भुञ्जते ।
ब्राह्मणानां सदोच्छिष्टं ततश्चोद्धरते तु सः ॥ ४२ ॥
चक्रतीर्थं समासाद्य स्नानं स कुरुते सदा ।
न भिक्षां कुरुते तत्र भोजनार्थं न गच्छति ॥ ४३ ॥

ततः कालेन महता चिन्ताभूच्छ्वशुरस्य च ।
दिव्यज्ञानेन तत्सर्वं ज्ञात्वा जामातृचेष्टितम् ।
स्वां सुतां चोदयामास गच्छ तां मथुरां पुरीम् ।
भोजनं गृह्य तत्रैव गच्छ त्वं भर्तृसन्निधौ ॥ ४४ ॥
दिव्यज्ञानेन च तदा नित्यं सा भर्तृसन्निधौ ।
दिने दिने गच्छति सा भर्तृभोजनकारणात् ।
दिवसस्यावसाने तु भोजनं गृह्य गच्छति ॥ ४५ ॥
भोजनं कुरुते नित्यं प्रियादत्तं वसुन्धरे ।
पात्रं निःक्षिप्य कुण्डे तु सत्रे वसति सर्वदा ॥ ४६ ॥
एवं निवसतस्तस्य वर्षार्धं तु गतं तदा ।
ततः कालेन महता तैः पृष्टः स द्विजोत्तमः ।
कुत्र सन्तिष्ठसे नित्यं भोजनं कुरुषे कुतः ॥ ४७ ॥
कथयामास वृत्तान्तं तं सर्वञ्चात्मनो हि सः ।
तं श्रुत्वा ब्राह्मणाः सर्वे एकीभूता वसुन्धरे ।
इदमूचुस्ततो विप्राः शुद्धोऽसीति द्विजं प्रति ॥ ४८ ॥
चक्रतीर्थप्रभावेण पापान्मुक्तः सनातनः ।
अस्माकं वचनाच्चैव पुनः सिद्धोऽसि वै द्विज ॥ ४९ ॥
ब्राह्मणानां वचः श्रुत्वा स द्विजो हृष्टमानसः ।
स्नानार्थं तु ततः स्थानाच्छक्रतीर्थं समागतः ॥ ५० ॥
गते तस्मिंस्तस्य भार्या भिक्षामादाय चागता ।
सा तु हृष्टेन मनसा भर्तारं वाक्यमब्रवीत् ।
भोजनं कुरु मे दत्तं हत्या जक्ष्यामि ते गता ॥ ५१ ॥
प्रियावचनमाकर्ण्य भर्ता वचनमब्रवीत् ।
पुनराभाषितं भद्रे यदिदं भाषितं त्वया ॥ ५२ ॥
भर्तुर्वचनमाकर्ण्य पत्नी वचनमब्रवीत् ।
न त्वं संभाषितः पूर्वं ब्रह्महत्यासमन्वितः ।
चक्रतीर्थप्रभावेण मुक्तोऽसि द्विजसत्तम ॥ ५३ ॥
उत्तिष्ठ कान्त गच्छावः कल्पग्रामं सुशोभितम् ।
तया सार्धं जगामाथ कल्पग्रामं द्विजोत्तमः ॥ ५४ ॥
भद्रेश्वरनिमित्तं हि द्रव्यञ्च कथितं शुभम् ।
नित्यञ्च मुञ्चते यत्र पात्रं द्रव्यसमर्पितम् ।
दृष्ट्वा भद्रेश्वरे देवं चक्रतीर्थे फलं लभेत्[1] ॥ ५५ ॥

१. भवेत् ।

कल्पग्रामाच्छतगुणं चक्रतीर्थं वसुन्धरे ।
अहोरात्रोपवासेन मुच्यते ब्रह्महत्यया ॥ ५६ ॥

कल्पग्रामेण किं तस्य वाराणस्याञ्च वा शुभे ।
मथुरां तु समासाद्य य कश्चिन्म्रियते भुवि ।
अपि कीटः पतङ्गो वा जायते स चतुर्भुजः ॥ ५७ ॥

इति वराहपुराणे चक्रतीर्थप्रभावो नाम
द्विषष्ट्यधिकशततमोऽध्यायः ।

—:०:—

## अथः षष्ट्यधिकशततमोऽध्यायः

वराह उवाच

पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
वैकुण्ठतीर्थमासाद्य यद्वृत्तं हि पुरातनम् ॥ १ ॥
मिथिलायां[1] पुरी रम्या जनकेन च पालिता ।
मिथिलावासिनो लोकास्तीर्थयात्रां समागताः ॥ २ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चापि वसुन्धरे ।
स्नात्वा सौकरवे तीर्थे आयाता मथुरां पुरीम् ॥ ३ ॥
तेषाञ्च भक्तिरुत्पन्ना मथुरां प्रति सुन्दरि ।
वैकुण्ठतीर्थमासाद्य सर्वे ते मनुजाः स्थिताः ॥ ४ ॥
तेषान्तु ब्राह्मणा कश्चिद् ब्रह्महत्यासु चिह्नितः ।
रुधिरस्य हि धारा च स्रवन्ती तस्य हस्ततः ॥ ५ ॥
प्रत्यक्षा दृश्यते सर्वैर्ब्रह्महत्यास्वरूपिणी ।
सर्वतीर्थप्लुतस्यापि ब्राह्मणस्य हि सा तदा ॥ ६ ॥
न गता पूर्वमेवासीद् वैकुण्ठे स्नानमाचरत् ।
न सा वै दृश्यते धारा ततस्ते विस्मयं गताः ॥ ७ ॥
किमेतत् किमिति प्राहुर्धारां प्रति वसुन्धरे ।
देवो ब्राह्मणरूपेण लोकान् सर्वान् हि पृच्छति ॥ ८ ॥
केन कारणदोषेण धारा त्यक्त्वा गता द्विजम् ।
तत्सर्वं कथयामासुर्ब्राह्मणस्य विचेष्टितम् ॥ ९ ॥
वैकुण्ठे तु[2] निमग्नोऽयं ब्रह्महत्या गता ततः ।
विस्मयो नात्र कर्तव्यस्तीर्थस्येदं महत्फलम् ॥ १० ॥
इत्युक्तस्तैर्देवदेव-स्तत्रैवान्तरधीयत ।
एषः प्रभावस्तीर्थस्य वैकुण्ठस्य वसुन्धरे ॥ ११ ॥
वैकुण्ठतीर्थे यः स्नाति मुच्यते सर्वपातकैः ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ १२ ॥

सूत उवाच[3]

पुनरन्यत् प्रवक्ष्यामि असिकुण्डोऽतिपुण्यदे ।
नाम्ना गन्धर्वकुण्डं तु तीर्थानां तीर्थमुत्तमम् ॥ १३ ॥

---

१. मिथिला या पुरी । २. वैकुण्ठेऽति । ३. सूत उवाचेति सार्वत्रिकः पाठः परमेष न संगच्छते पूर्वतोऽविच्छिन्ने वराहवाक् प्रसङ्गे स्थिते सूतवचनस्याप्रसंगत्वात्, वक्ष्यमाणानां मम लोकं स गच्छति' इत्यादि वचनानामसंबद्धत्वाच्च । अतोऽत्र वराह उवाच इति सम्यक् संभाव्यते ।

तत्र स्नातो नरो देवि गन्धर्वैः सह मोदते ।
तत्र यो मुञ्चते प्राणान् मम लोकं स गच्छति ॥ १४ ॥
विंशतिर्योजनानान्तु माथुरं मम मण्डलम् ।
इदं पद्मं महाभामे सर्वेषां मुक्तिदायि च ॥ १५ ॥
कर्णिकायां स्थितो देवि केशवः केशनाशनः ।
कर्णिकायां मृता ये तु तेऽमरा मुक्तिभागिनः ॥ १६ ॥
तत्र मध्ये मृता ये तु तेषां मुक्तिर्वसुन्धरे ॥ १७ ॥
पश्चिमेन हरिं देवं गोवर्धनविलासिनम् ।
दृष्ट्वा तं देवदेवेशं किं मनः परितप्यते ॥ १८ ॥
उत्तरेण तु गोविन्दं दृष्ट्वा देवं परं शुभम् ।
नासौ पतति संसारे यावदाभूतसंप्लवम् ॥ १९ ॥
विश्रान्तिसंज्ञके देवं पूर्वपत्रे व्यवस्थितम् ।
यं दृष्ट्वा तु नरो याति मुक्तिं नास्त्यत्र संशयः ॥ २० ॥
दक्षिणेन तु मां विद्धि प्रतिमां दिव्यरूपिणीम् ।
महाकायां सुरूपाञ्च केशवाकारसन्निभाम् ।
तां दृष्ट्वा मनुजो देवि ब्रह्मणा सह मोदते ॥ २१ ॥
कृते युगे तु राजासीन्मान्धाता नाम नामतः ।
तेनाहं तोषितो देवि भक्तियुक्तेन चेतसा ॥ २२ ॥
तस्य तुष्टेन हि मया प्रतिमेयं समर्पिता ।
तेनेयं पूजिता नित्यमात्ममुक्तिमभीप्सिता ॥ २३ ॥
यदा तु मथुरां प्राप्य लवणोऽयं निपातितः ।
तदैव प्रतिमा दिव्या मथुरायां व्यवस्थिता ॥ २४ ॥
पुण्येयं प्रतिमा दिव्या तैजसा दिव्यरूपिणी ।
कपिलो नाम विप्रर्षिर्मम भक्तिपरायणः ॥ २५ ॥
मनसा निर्मिता तेन वाराही प्रतिमा शुभा ।
कपिलो ध्यायते नित्यमर्च्चति स्म दिने दिने ॥ २६ ॥
इन्द्रेणाराधितो देवि कपिलो मुनिसत्तमः ।
तस्य प्रीतो ददौ देवं वराहं दिव्यरूपिणम् ॥ २७ ॥
देवे लब्धे तु वाराहे शक्रो हर्षसमन्वितः ।
ध्यायति स्म[1] सदा देवं पूजाङ्कृत्वा हि भक्तितः ।
इन्द्रेण तु तदा प्राप्तं दिव्यं ज्ञानमनुत्तमम् ॥ २८ ॥
ततः कालेन महता रावणो नाम राक्षसः ।
इन्द्रलोकं गतः सोऽथ स्वर्गं जेतुं महाबलः ॥ २९ ॥

१. ध्यायते स्म ।

शक्रेण सह संगम्य ततो युद्धं प्रवर्तितम् ।
रावणेन जिता देवाः शक्रश्चैव महाबलः ।
बध्वा चेन्द्रं महाबाहुं शक्रस्य भवनं गतः ॥ ३० ॥
प्रविश्य रावणस्तत्र गृहे रत्नविभूषिते ।
दृष्ट्वा कपिलवाराहं शिरसा धरणीं गतः ।
तेन संमोहितो देवि रावणो नाम राक्षसः ॥ ३१ ॥
त्रातुमर्हसि मे देव धरणीधर माधव ।
दामोदर ऋषीकेश हिरण्याक्षविदारण ॥ ३२ ॥
वेदगर्भ नमस्तेऽस्तु वासुदेव नमोऽस्तु ते ।
कूर्मरूप नमस्तेऽस्तु नारायण नमोऽस्तु ते ॥ ३३ ॥
मत्स्यरूपधरं देवं मधुकैटभनाशिनम् ।
निरीक्षितुं न शक्नोमि प्रष्टुञ्चैव गुणव्रत[1] ॥ ३४ ॥
देवदेव नमस्तुभ्यं भक्तानामभयप्रदम् ।
मम त्वं भक्तिनम्रस्य प्रसादं कुरु सर्वदा ॥ ३५ ॥
इति स्तुतो रावणेन देवदेवो जगत्पतिः ।
सौम्यरूपोऽभवद् देवो लोकनाथो जनार्दनः ॥ ३६ ॥
सन्निधानमनुप्राप्य पुष्पकारोहणोत्सुकः ।
तदुद्धर्तुं न शक्नोति रावणो विस्मयं गतः ॥ ३७ ॥
शङ्करेण पुरा सार्धं कैलासस्तु मयोद्धृतः ।
देव त्वं स्वल्पकायोऽसि नाहमुद्धरणक्षमः ॥ ३८ ॥
प्रसीद देवदेवेश सुरनाथ नमोऽस्तु ते ।
अहं त्वां नेतुमिच्छामि पुरीं लङ्कामनुत्तमाम् ॥ ३९ ॥

वराह उवाच

अवैष्णवोऽसि रक्षस्त्वं कुतो भक्तिस्तवेदृशी ।
कपिलस्य वचः श्रुत्वा रावणो वाक्यमब्रवीत् ॥४०॥
त्वद् दर्शनात् समुत्पन्ना भक्तिरव्यभिचारिणी ।
महात्मन् त्वां नयिष्यामि देवदेव नमोऽस्तु ते ॥४१॥
भक्तिमुद्वहतस्तस्य लघुर्देवोऽभवत् तदा ।
पुष्पके तु समारोप्य देव त्रैलोक्यविश्रुतम् ॥४२॥
आनयामास लङ्कायां स्थापयित्वा स्वके गृहे ।
तदा स्थितोऽहं लङ्कायां रावणेन प्रपूजितः ॥ ४३ ॥
अयोध्याधिपती रामो हन्तुं राक्षसपुंगवम् ।
गतोऽसौ विक्रमेणैव हत्वा राक्षसपुङ्गवम् ॥ ४४॥

---

१. न सुव्रत ।

विभीषणश्च लङ्काया आधिपत्येऽभिषेचितः ।
विभीषणेन रामस्य सर्वस्वञ्च निवेदितम् ॥४५॥
राम उवाच
अनेन नास्ति मे कार्यं तव रक्षो विभीषण ।
देवो मे दीयतां रक्षः शक्रलोकाद्य आगतः ।
अहन्यहनि पूजामि देवं वाराहरूपिणम् ॥ ४६ ॥
अयोध्यायां च नेष्यामि त्वया दत्तं हि राक्षस ।
ततः समर्पयामास कपिलं दिव्यरूपिणम् ॥ ४७ ॥
पुष्पके तु समारोप्य नीतवान् नगरीं प्रति ।
अयोध्यां स्थापयित्वा पूजयामास तं तदा ॥ ४८ ॥
गतं वर्षसहस्रं तु दशोत्तरमतः परम् ।
लवणस्य वधार्थं हि शत्रुघ्नं प्रेषयत् तदा ।
कृतप्रणामः शत्रुघ्नो राघवाय महात्मने ।
चतुरङ्गबलोपेतो जगाम मथुरां प्रति ॥ ४९ ॥
गत्वा तु राक्षसश्रेष्ठं लवणं रौद्ररूपिणम् ।
घातयित्वा तु शत्रुघ्नः प्रविश्य मथुरां पुरीम् ॥५०॥
ब्राह्मणान् स्थापयित्वा तु मया तुल्यान् महोजसः ।
षड्विंशति सहस्राणि वेदवेदाङ्गपारगान् ॥ ५१ ॥
अनूचो माथुरो यत्र चतुर्वेदस्तथापरः ।
एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिताः ॥५२॥
लवणस्य यथावृत्तं कथितं ते वसुन्धरे ।
लवणस्य वधं श्रुत्वा राघवो वाक्यमब्रवीत् ।
वरं वरय शत्रुघ्न यत्ते मनसि रोचते ॥ ५३ ॥
राघवस्य वचः श्रुत्वा शत्रुघ्नो वाक्यमब्रवीत् ।
यदि तुष्टोऽसि मे देव वराहो यदि वाऽप्यहम् ।
दीयतां मम देवोऽयं यदि मे वरदो भवान् ॥ ५४ ॥
शत्रुघ्नस्य वचः श्रुत्वा राघवो वाक्यमब्रवीत् ।
नय शत्रुघ्न देवं त्वं दिव्यं वाराहरूपिणम् ॥ ५५ ॥
धन्याऽसौ मण्डलो लोके धन्या सा मथुरा पुरी ।
धन्यास्ते माथुरा लोकाः कपिलं पश्यते सदा ॥५६॥
दृष्टः स्पृष्टः सदा ध्यातः स्नापितश्च दिने दिने ।
अनुलिप्तश्च शत्रुघ्न सर्वपापं व्यपोहति ॥५७॥
पूजितः स्नापितो देवो दृष्टो यैस्तु दिने दिने ।
सर्वं हरति वै पापं मोक्षञ्चैव प्रयच्छति ॥ ५८ ॥

इत्युक्त्वा राघवस्तस्मै देवं प्रादात् वसुन्धरे ।
देवमादाय शत्रुघ्नो जगाम मथुरां पुरीम् ।। ५९ ।।
ब्राह्मणं स्थापयित्वा तु आगच्छन्मम सन्निधौ ।
तत्र मध्ये तु संस्थाप्य पूजयामास राघवः ।।
अनेन क्रमयोगेन मथुरायां स्थितः प्रभुः ।।६०।।
गयायां पिण्डदानेन यत्फलं ज्येष्ठपुष्करे ।
तत्फलं समवाप्नोति श्वेतं दृष्ट्वा सदा नरः ।। ६१ ।।
विश्रान्तिसंज्ञके तद्वद् गोविन्दे च तथा हरौ ।
केशवे दीर्घविष्णौ च तदेव फलमश्नुते ।। ६२ ।।
उदये नामकं तेजः सदा विश्रान्तिसंज्ञके ।
मध्याह्ने मामकं तेजो दीर्घविष्णौ व्यवस्थितम् ।
केशवे मामकं तेजो दिनमाने चतुर्थके ।। ६३ ।।
एषा विद्या पुरा देवि नित्यकालं सुगोपिता ।
भक्ता त्वं मम शिष्या च कथिता ते वसुन्धरे ।।६४ ।।

इति वराहपुराणे कपिलवराहमाहात्म्यं नाम
त्रयःषष्ठ्यधिकशततमोऽध्यायः ।

## चतुःषष्ट्यधिकशततमोऽध्यायः

वराह उवाच

अस्ति गोवर्धनं नाम क्षेत्रं परमदुर्लभम् ।
मथुरापश्चिमे भागे अदूराद् योजनद्वयम् ॥ १ ॥
ह्रदं तत्र महाभागे द्रुमगुल्मलतायुतम् ।
चत्वारि तत्र तीर्थानि पुण्यानि च शुभानि च ॥ २ ॥
ऐन्द्रं पूर्वेण पार्श्वेन यमतीर्थन्तु दक्षिणे ।
पश्चिमे वारुणं तीर्थं कौबेरं चोत्तरेण तु ।
तेषां मध्ये स्थितो भद्रे क्रीडयिष्ये यदृच्छया ॥ ३ ॥
तत्र वै शक्रतीर्थे तु स्नानं कुर्यात् दृढव्रतः ।
मोदते शक्रलोके तु सर्वद्वन्द्वविवर्जितः ॥ ४ ॥
दक्षिणे यमतीर्थे तु स्नानं कुर्यात् यथाविधि ।
यमस्य भवनं गत्वा मोदते कृतनिश्चयः ॥ ५ ॥
तत्राथ मुञ्चते प्राणान् लोभमोहविवर्जितः ।
यमलोकं परित्यज्य मम लोकं स गच्छति ॥ ६ ॥
तत्रैव वारुणं तीर्थमासाद्य स्नानमाचरेत् ।
वारुणं भवनं गत्वा मुच्यते सर्वकिल्विषात् ॥ ७ ॥
तत्राथ मुञ्चते प्राणान् कामक्रोधविवर्जितः ।
वारुणं लोकमुत्सृज्य मम लोकं स गच्छति ॥ ८ ॥
तत्र मध्ये च यः स्नाति क्रीडते स मया सह ।
अथात्र मुञ्चते प्राणान् मम लोकं स गच्छति ॥९॥
अन्नकूटं[1] ततः प्राप्य तस्य कुर्यात् प्रदक्षिणम् ।
न तस्य पुनरावृत्तिर्देवि सत्यं ब्रवीमि ते ॥ १० ॥
स्नात्वा मानसगङ्गायां दृष्ट्वा गोवर्धने हरिम् ।
अन्नकूटं परिक्रम्य किं पुनः परिशोचति ॥ ११ ॥
सोमवारे त्वमायां वै[2] प्राप्य गोवर्धनं गिरिम् ।
दत्त्वा पिण्डं पितृभ्यश्च राजसूयफलं भवेत् ॥ १२ ॥
गयायां पिण्डदानेन यत्फलं प्राप्यते नरः ।
तत्फलं प्राप्यते तत्र नात्र कार्या विचारणा ॥ १३ ॥
गोवर्धनं परिक्रम्य दृष्ट्वा देवं परं हरिम् ।

---

१. अत्र कूटं ।   २. अमावस्याम् ।

राजसूयाश्वमेधानां फलं प्राप्नोत्यसंशयम् ॥ १४ ॥

पृथिव्युवाच

परिक्रमोऽन्नकूटस्य विधिना क्रियते कथम् ।
प्रभावगुणमाहात्म्यं तद्भवान् वक्तुमर्हसि ॥ १५ ॥

वराह उवाच

मासि भाद्रपदे या तु शुक्ला चैकादशी शुभा ।
गोवर्धनं सोपवासः कुर्यात् तत्र प्रदक्षिणाम् ॥ १६ ॥
स्नात्वा मानसगङ्गायां प्रभाते उदिते रवौ ।
गोवर्धनं प्रसाद्यैव हरिञ्चाऽचलमूर्धनि ।
पुण्डरीकं ततो गच्छेत् कुण्डे स्नात्वा विधानतः ।१७।
देवान् पितॄन् समभ्यर्च्य पुण्डरीकमथार्च्य च ।
सर्वपापविनिर्मुक्तः प्रयाति भवनं हरेः ॥ १८ ॥
कुण्डञ्चाप्सरसं नाम प्रसन्नसलिलाशयम् ।
तत्र स्नानं तर्पणञ्च कृत्वा फलमवाप्नुयात् ।
राजसूयाश्वमेधानां धूतपाप्मा न संशयः ॥ १९ ॥
तीर्थं सङ्कर्षणं नामा बलभद्रेण रक्षितम् ।
गोहत्या पूर्वसंलग्ना उत्तीर्णा तत्र दूरतः ॥ २० ॥
स्नानाद् गच्छति सा क्षिप्रं नात्र कार्या विचारणा ॥
अन्नकूटस्य सान्निध्ये तीर्थं शक्रविनिर्मितम् ।
तत्र कृष्णेन पूजार्थमिन्द्रस्य विहितो मखः ॥ २१ ॥
महानिन्द्रस्य चोत्थानं भक्ष्यभोज्यसमन्वितम् ।
कृत्वा तुष्टिकरान्[1] साक्षा दिन्द्रेण सह संकथा ।।२२।।
इन्द्रस्य वर्षतोऽत्यन्तं तासां पीडाकरं जलम् ।
तासां गवां रक्षणाय धृतो गिरिवरस्तदा ॥ २३ ॥
सोऽन्नकूट इति ख्यातः सर्वतः शक्रपूजितः ।
देवा दैत्यस्तथा गावो ऋषिभिश्च समन्विताः ।।२४।।
पूजितास्तर्पिताः श्रेष्ठाः श्रमतो विष्णुना पुरा ।
तस्मिन् स्थाने तर्पणेन शतक्रतुफलं लभेत् ॥ २५॥
ततः कदम्बखण्डाख्यं कुण्डं तु विमलोदकम् ।
स्नात्वा पितॄन् समभ्यर्च्य ब्रह्मलोकमवाप्नुयात् ।२६।
ततो गच्छेद् देवगिरिं शतबाहुसमुच्छ्रितम् ।
यत्र स्नानाद् दर्शनाच्च वाजपेयफलं लभेत् ॥ २७ ॥

---

१. तुष्टिकरात् साक्षात् ।

महादेवं ततो दृष्ट्वा गत्वा ध्यात्वा फलं लभेत् ।
कुण्डे स्नात्वा पितॄंस्तर्प्य कृतकृत्यो दिवं व्रजेत् ॥२८॥

गङ्गायाश्चोत्तरं यावद् देवदेवस्य चक्रिणः ।
अरिष्टेन समं यत्र महद् युद्धं प्रवर्तितम् ॥ २९ ॥

घातयित्वा ततश्चेममरिष्टं वृषरूपिणम् ।
कोपेन पार्ष्णिघातेन मह्यां तीर्थं प्रवर्तितम् ॥३०॥

वृषभस्य वधाज्ज्ञेयं तीर्थं सुमहदद्भुतम् ।
स्नातस्तत्र सदा कृष्णो वृषं हत्वा महासुरम् ॥ ३१ ॥

वृषहत्यासमायुक्तः कृष्णश्चिन्तान्वितोऽभवत् ।
वृषो हतो मया चायमरिष्टः पापपूरुषः ॥ ३२ ॥

तत्र राधा समाश्लिष्य कृष्णमक्लिष्टकारणम् ।
स्वनाम्ना विदितं कुण्डं कृतं तीर्थमदूरतः ॥ ३३ ॥

राधाकुण्डमिति ख्यातं सर्वपापहरं शुभम् ।
अरिष्ट राधाकुण्डाभ्यां स्नानात् फलमवाप्नुयात् ।३४।

राजसूयाश्वमेधानां नात्र कार्या विचारणा ।
गोहत्याब्रह्महत्यायाः पापं क्षिप्रं विनश्यति ॥ ३५ ॥

तीर्थं हि मोक्षराजाख्यं नृणां मुक्तिप्रदायकम् ।
यस्य दर्शनमात्रेण सर्वपापैः प्रमुच्यते ॥ ३६ ॥

इन्द्रध्वजोच्छ्रयं[1] यत्र पूर्वस्यां दिशि वै कृतम् ।
इन्द्रध्वजमिति ख्यातं तीर्थं चैवातिमुक्तिदम्[2] ॥३७॥

तत्र स्नाता दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ।
ततो हरौ निवेद्याशु यात्राफलमनुत्तमम् ॥ ३८ ॥

चक्रतीर्थे नरः स्नात्वा पञ्चतीर्थाख्यकुण्डके ।
समाप्य तीर्थयात्रायाञ्च रात्रौ जागरणं तथा ॥ ३९ ॥

गोवर्धने च कर्तव्यं महापातकनाशनम् ।
एकादश्यां तदा रात्रौ कृत्वा जागरणं शुभम् ॥ ४० ॥

द्वादश्यामुषसि स्नात्वा पिण्डं निर्वाप्य शक्तितः ।

---

१. इन्द्रवज्रोच्चयम् । २. अथ मुक्तिदम् ।

पितृणां मुक्तिदं तेषां य एवं कुरुते नरः ।
सर्मपापविनिर्मुक्तः परं ब्रह्माधिगच्छति ॥ ४१ ॥

ऐतत्ते कथितं भद्रे अन्नकूटपरिक्रमम् ।
यथानुक्रमयोगेन तथाषाढेऽपि चोच्यते ॥ ४२ ॥

य एतत् शृणुयाद् भक्त्या तीर्थानुक्रमणं हरेः ।
गोवर्धनस्य माहात्म्यं गङ्गास्नानफलं लभेत् ॥ ४३ ॥

इति वराहपुराणे गोवर्धनमाहात्म्ये अन्नकूटपरिक्रम-
प्रभावो नाम चतुः षष्ट्यधिकशततमोऽध्यायः ।

—:०:—

## पञ्चषष्ट्यधिकशततमोऽध्यायः

वराह उवाच

अतः परं प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
यथा वृत्तं प्रतिष्ठाने दक्षिणा पथमण्डले॥ १ ॥
सुशीलो नाम वैश्यस्तु तस्मिन् वसति पत्तने।
धनधान्यसमृद्धस्तु बहुपुत्रः कुटुम्बवान्॥ २ ॥
कुटुम्बभरणासक्तो नित्यकालं हि तिष्ठति।
स्नानं दानं जपं होमं देवार्चां न करोति सः॥ ३ ॥
क्रयविक्रयसक्तस्य कालो दीर्घो गतस्तदा।
कदाचिदपि पापोऽसौ न साधु गमनं गतः॥ ४ ॥
न तेन धर्मश्रमणं कदाचिदपि संश्रुतम्।
देवानां ब्राह्मणानाञ्च भक्तिस्तस्य न विद्यते॥ ५ ॥
आत्मोदरनिमित्तं हि पापञ्च कुरुते सदा।
गच्छन्तं बहुकालञ्च न तं बुध्यति पापकृत्॥ ६ ॥
न तस्य जायते बुद्धिर्दानं दातुं कदाचन।
तस्यैव वसतस्तत्र प्रतिष्ठाने पुरोत्तमे॥ ७ ॥
धनयुक्तोऽपि पापोऽसौ न ददाति कदाचन।
नैवान्यमतिदातारं शक्नोति च निरीक्षितुम्॥ ८ ॥
स तु कालेन महता कुटुम्बासक्तमानसः।
कदाचिद् दैवयोगेन साध्वीं भार्यां प्रियान् सुतान्।
त्यक्त्वा जगाम निधनं प्रेतत्वं समुपागतः॥ ९ ॥
निरुदकेषु देशेषु विच्छायेषु वनेषु च।
परिभ्रमन् क्षुधाविष्टो मरुदेशं गतोऽपि सः॥ १० ॥
तत्रैव च कृतावासो बहुकालं स वै वणिक्।
कदाचिद्दैवयोगेन तत्र सार्थ उपागतः॥ ११ ॥
तस्य मध्ये तु वणिजो मथुरायां विनिःसृताः।
गते सार्थे तु स वणिक् तं वृक्षं समुपाश्रितः॥ १२ ॥
तत्रैव वसति प्रेतो रौद्ररूपो भयानकः।
दीर्घदंष्ट्रः सुविकटो ह्रस्वबाहुविभीषणः।
महाहनुर्विशालाक्षो विडालसदृशाननः॥ १३ ॥
अथ कालेन बहुना दैवयोगेन भामिनि।
तत्राजगाम कश्चित्तु क्रयविक्रयकारकः॥ १४ ॥

तं दृष्ट्वा दूरतो प्रेतः अतिहर्षेण संयुतः ।
तत्राजगाम नृत्यन् स इदं वचनमब्रवीत् ।
भक्ष्यभूतो ममाद्यत्वं क भवान् यातुमिच्छति ॥१५॥
प्रेतस्य वचनं श्रुत्वा सोऽति भीतो द्रुतं गतः ।
गच्छन्तं तं गृहीत्वा स प्रेतो वचनमब्रवीत्[1] ॥१६॥
मम त्वं विहितो भक्ष्यः स्वयं प्राप्तोऽसि मानव ।
मांसं ते भक्षयिष्यामि पिबामि तव शोणितम् ॥१७॥
इत्याकर्ण्य वचस्तस्य स बणिक् वाक्यमब्रवीत् ।
कुटुम्बभरणार्थाय सम्प्राप्तो दुर्गमाटवीम् ॥ १८ ॥
वृद्धः पिता मम गृहे माता पत्नी पतिव्रता ।
मयि संभक्षिते रक्षः कुटुम्बं हि मरिष्यति ॥ १९ ॥
ततो वचनमाकर्ण्य प्रेतो वचनमब्रवीत् ।
कस्मात् स्थानात् समायातः सत्यं ब्रूहि महामते ।२०।

विभुरुवाच

गोवर्धनो गिरिवरो यमुना च महानदी ।
तयोर्मध्ये पुरी रम्या मथुरा लोकविश्रुता ।
तस्यां वसाम्यहं प्रेत पितृपैतामहे गृहे ॥ २१ ॥
तत्र मे वसतो नित्यं यद्द्रव्यं पूर्वसञ्चितम् ।
तत्सर्वं तस्करैर्नीतं क्षीणवित्तोऽभवं तदा ॥ २२ ॥
स्वल्पं वित्तं गृहीत्वाऽहं समायातो मरुस्थलम् ।
तव दृष्टिपथं यातो मत्कार्यं तत्कुरुष्व मे ॥ २३ ॥

प्रेत उवाच

न त्वां खादितुमिच्छामि कृपा मे जायते त्वयि ।
समयेन हि मोक्ष्यामि कुरुष्व[2] वचनं मम ॥२४॥
निवृत्य गच्छ मथुरां मम कार्यार्थसाधकः ।
तत्र गत्वा त्वया कार्यं यत्कर्तव्यं वदामि तत् ॥ २५॥
स्नानं कृत्वा तु विधिवत् कूपे चातुःसमुद्रिके ।
पिण्डदानं कुरुष्व त्वं मम नाम्ना प्रयत्नतः ।
स्नानस्य च फलं देहि ततो गच्छ यथासुखम् ॥ २६ ॥
प्रेतवाक्यं ततः श्रुत्वा विभुर्वचनमब्रवीत् ।
नाहं यास्यामि मथुरां द्रव्याभावे कथञ्चन ।
भक्षयस्व शरीरं मे ततस्तृप्तिमवाप्स्यसि ॥ २७ ॥

---

१. पञ्चदशश्लोकस्य परार्धं षोडशश्लोकश्च ( ग ) नास्ति । २. कुरुष्व भो ।

प्रेत उवाच

गृहे बहुधनं तेऽस्ति त्वं गच्छ मम सत्कुरु ।
आस्ते धनमपर्याप्तं गच्छ त्वं मा विलम्बय ॥ २८ ॥

विमुरुवाच

गृहे मम धनं नास्ति यत्त्वया समुदीरितम् ।
गृहशेषं मम धनं न चान्यत् तत्र विद्यते ।
पितृपैतामही कीर्तिरविक्रेया हि सा मया ॥ २९ ॥
प्रेतः प्रहस्य सानन्दमिदं वचनमब्रवीत् ।
अस्ति चैव धनं प्रोक्तं यन्मया त्वद्गृहे विभो ।
सुवर्णभारो गर्तस्थो गृहे तिष्ठति सञ्चितः ॥ ३० ॥
निवर्त गच्छ सन्तुष्टः सुहृदां प्रीतिवर्धनः ।
एवं द्रक्ष्यामि ते मार्गं मथुरा येन गम्यते ॥ ३१ ॥

सूत उवाच

वणिग् हृष्टमना भूत्वा पुनर्वचनमब्रवीत् ।
इमामवस्थां संप्राप्य कथं ज्ञानं समुद्भवः ।
ततः स कथयामास यद्वृत्तं हि पुरातनम् ॥ ३२ ॥
प्रतिष्ठाने पुरवरे विष्णोरायतनं महत् ।
प्रभातसमये तत्र विष्णोरायतने शुभे ।
ब्राह्मणाः क्षत्रियाः वैश्याः शूद्रास्तत्र समागताः ॥३३॥
वाचकः पठते तत्र कथां पौराणिकीं शुभाम् ।
मम मित्रञ्च तत्रैव नित्यकालञ्च गच्छति ॥ ३४ ॥
तस्मिन् काले तु मित्रेण नीतोऽहं विष्णुमन्दिरम् ।
अत्यादरेण महता सन्तोष्य च पुनः पुनः ।
मित्रेण सह तत्रैव तस्य पार्श्वे व्यवस्थितः ॥ ३५ ॥
श्रुतो मया ततः कूपः पुण्योऽयं पापनाशनः ।
समुद्राः किल तिष्ठन्ति चत्वारोऽत्र समागताः ॥३६॥
तस्य कूपस्य माहात्म्यं श्रुतं तत्र महत्फलम् ।
वाचकाय ततो दानं दत्तं सर्वैर्महाजनैः ॥ ३७ ॥
मित्रेण प्रेरितो दाने मया मौनं समाश्रितम् ।
मित्रेण च पुनः प्रोक्तं यथाशक्त्या प्रदीयताम् ।
तदा मित्रसङ्गेन दत्तो वै स्वर्णमाषकः ॥ ३८ ॥
ततः कालेन महता गतो वैवस्वतक्षयम् ।
वैवस्वतनियोगेन ततोऽहं पूर्वकर्मभिः
प्रेतत्वं समनुप्राप्तो दुस्तरं दुर्गमं महत् ॥ ३९ ॥

न दत्तं न हुतञ्चापि तीर्थं नैवावगाहितम् ।
न तर्पितास्तु पितरः प्राप्तोऽहं प्रेततां ततः ॥ ४० ॥
इत्येतत् कथितं सर्वं यन्मां त्वं परिपृच्छसि ।
गच्छ त्वं संमुखस्तत्र यत्र सा मथुरा पुरी ॥ ४१ ॥
प्रेतस्य वचनं श्रुत्वा विभुर्वचनमब्रवीत् ।
कथं धारयसे प्राणान् वृक्षमूलं समाश्रितः ॥ ४२ ॥

प्रेत उवाच

कथितं हि मया पूर्वं यद्वृत्तं हि पुरातनम् ।
वाचकाय तु यद्दत्तं सुवर्णस्य च माषकम् ।
तद्दानस्य प्रभावेण नित्यं तृप्तोऽस्मि वै विभो ॥ ४३ ॥
अकामेन मया दत्तं तस्येदं कर्मणः फलम् ।
प्रेतभावं गतस्यापि न मे ज्ञानस्य विभ्रमः ॥ ४४ ॥
ततश्च स वणिक्श्रेष्ठ आगत्य मथुरां पुरीम् ।
कृतं तेन च तत्सर्वं यथा प्रेतेन भाषितम् ।
तेन कृत्येन प्रेतोऽसौ मुक्ति प्राप्य दिवं गतः ॥४५॥
एतत्ते कथितं भूमे माहात्म्यं मथुराभयम् ।
चतुः सामुद्रिके रूपे पिण्डदाने परां गतिम् ॥ ४६ ॥
तीर्थे चैव गृहे वापि देवस्थानेऽपि चत्वरे ।
यत्र तत्र मृता देवि मुक्ति यान्ति न चान्यथा ॥४७॥
अन्यत्र हि कृतं पापं तीर्थमासाद्य गच्छति ।
तीर्थे तु यत्कृतं पापं वज्रलेपो भविष्यति ॥ ४८ ॥
मथुरायां कृतं पापं तत्रैव च विनश्यति ।
एषा पुरी महापुण्या यस्यां पापं न विद्यते ॥ ४९ ॥
कृतघ्नश्च सुरापश्च चौरो भग्नव्रतस्तथा ।
मथुरां प्राप्य मनुजो मुच्यते सर्वकिल्बिषैः ॥ ५० ॥
तिष्ठेद् युगसहस्रं तु पादेनैकेन यः पुमान् ।
तस्याधिकं भवेत् पुण्यं मथुरायां निवासिनः ॥ ५१ ॥
परदाररता ये च ये नरा अजितेन्द्रियाः ।
मथुरावासिनः सर्वे ते देवा नरविग्रहाः ॥ ५२ ॥
बलिभिक्षाप्रदातारस्ते मृताः क्रोधवर्जिताः[1] ।
तीर्थस्नानरता ये च देवास्ते नरमूर्तयः ॥ ५३ ॥
यदन्येषां सहस्रेण ब्राह्मणानां महात्मनाम् ।

---

१. क्रोधविवर्जिताः ।

ऐकेन पूजितेन स्यान्माथुरेणाखिलं हि तत् ॥ ५४ ॥
अनृग्वै माथुरो यत्र चतुर्वेदस्तथा परः।
वेदैश्चतुर्भिर्न च स्यान्माथुरेण समः क्वचित् ॥ ५५ ॥
भवन्ति सर्वतीर्थानि पुण्यान्यायतनानि च।
मङ्गलानि च सर्वाणि यत्र तिष्ठन्ति माथुराः ॥ ५६ ॥
चतुर्वेदं परित्यज्य माथुरं पूजयेत् सदा।
सिद्धा भूतगणाः सर्वे ये च देवगणा भुवि ॥ ५७ ॥
मथुरावासिनो लोकान् पश्यन्ति च[1] चतुर्भुजान्।
मथुरायां ये वसन्ति विष्णुरूपा हि ते नराः ॥ ५८ ॥
ज्ञानिनस्ता[2] हि पश्यन्ति अज्ञाः पश्यन्ति तान्न च ॥

इति वराहपुराणे मथुरामाहात्म्ये कूपप्रभावे ब्राह्मण-
माहात्म्यं नाम पञ्चषष्ट्यधिकशततमोऽध्यायः।



१. लोकांस्ते पश्यन्ति। २. 'तान् हि' साधु।

# षट्षष्ट्यधिकशततमोऽध्यायः

धरण्युवाच

श्रुतानि तु महादेव तीर्थानि विविधानि तु[1] ।
अग्निकुण्डेति संज्ञेयं तन्मे त्वं कथय प्रभो ॥ १ ॥

वराह उवाच

सुमतिर्नाम राजासीद् धार्मिको लोकविश्रुतः ।
तीर्थयात्रानिमित्तेन स्वर्गलोकं गतः पुरा ॥ २ ॥
गते स्वर्गं तु नृपतौ पुत्रो राज्यञ्चकार ह ।
विमतिर्नाम नाम्ना च राज्ये पैतामहे स्थितः ॥ ३ ॥
राज्यञ्च कुर्वतस्तस्य आगतो नारदस्तदा ।
विष्टरं पाद्यमर्घ्यं च तस्मै दत्तं यथोचितम् ॥ ४ ॥
प्रतिगृह्य च तत्सर्वं तमुवाच स नारदः ।
पितुर्ह्यनृणतां गत्वा स पुत्रो धर्मभाग्भवेत् ॥ ५ ॥
इत्युक्त्वा नारदस्तत्र तत्रैवान्तरधीयत ।
नारदे तु गते राजा पप्रच्छ स्वात्ममन्त्रिणः ॥ ६ ॥
तदा किमुक्तमृषिणा नारदेन पितुः कृते ।
अनृण्यमिति यद् वाक्यं मया बुद्धं न किञ्चन ॥ ७ ॥
मन्त्रिणश्च ततो ज्ञात्वा पितुर्मरणमेव च ।
तीर्थयात्रानिमित्तं च तस्मै राज्ञे न्यवेदयन् ॥ ८ ॥
अत एवोक्तमानृण्यं नारदेन पितुस्तव ।
श्रुत्वा वाक्यं ततो राजा तीर्थयात्राञ्चकार ह[2] ॥९॥
विमतेर्बुद्धिरुत्पन्ना गच्छामो मथुरां पुरीम् ।
चतुरो वार्षिकान् मासान् मथुरायां वसाम्यहम् ।१०।
सर्वाणि तत्र तीर्थानि तिष्ठन्ति विविधानि च[3] ।
आगते तु नृपे तत्र तीर्थान्यूचुः परस्परम् ॥११॥
युद्धं विमतिना सार्धं स्वयं कर्तुं न शक्नुमः ।
कल्पग्रामं तु गच्छामो वराहो यत्र तिष्ठति ॥ १२ ॥
गतानि तत्र तीर्थानि कल्पग्रामं वसुन्धरे ।
तत्र वाराहरूपेण स्थितोऽहञ्च यदृच्छया ।
यावन्निरीक्षयाम्यग्रं तावत् तिष्ठन्ति सन्निधौ ॥ १३ ॥

---

१. त्रिविधानि । २. पितुस्तथा । ३. त्रिविधानि च ।

तीर्थान्यूचः
जय विष्णो जयाचिन्त्य जय देव जयाच्युत ।
जय विश्वेश कर्त्तेश जय देव नमोऽस्तु ते ॥ १४ ॥
वराह उवाच
तीर्थैः स्तुतोऽहं वसुधे वचनं चेदमब्रवम् ।
वरं वृणुत भद्रं वो यद्वो मनसि वर्तते ॥ १५ ॥
तीर्थान्यूचुः
वराह यदि देवेश अभयं दातुमर्हसि ।
विमतिना सुपापेन कृतस्त्रासः सुदारुणः ।
तन्नियच्छस्व पापिष्ठं यदि पश्यसि नः सुखम् ॥१६॥
वराह उवाच
हिताय सर्वतीर्थानां हनिष्यामि महारिपुम् ।
तत्र तीर्थनियोगेन आगतो मथुरां पुरीम् ॥ १७ ॥
तत्रागते तु वसुधे युद्धं कृत्वा तु तेन वै ।
तदासिना तु दिव्येन स राजा बलदर्पितः ।
सूदितो हि मया देवि अस्यग्रं निहितं भुवि ॥ १८ ॥
असेरग्रेण उद्धृत्य मृत्तिकां वरवर्णिनि ।
तत्र कुण्डं महद्दिव्यं देवर्षिविधिनिर्मितम् ।
असिकुण्डेति संज्ञा च प्राप्ता तेन वसुन्धरे ॥ १९ ॥
तत्राश्चर्यं प्रवक्ष्यामि मनः कर्णसुखावहम् ।
पश्यन्ति मनुजाः सिद्धाः सर्वपापविवर्जिताः ॥ २० ॥
द्वादश्याञ्च चतुर्दश्यां श्रद्दधाना जितेन्द्रियः ।
फलानि तस्य पश्यन्ति लभन्ते न[1] सुनिश्चिताः ।२१।
तस्मिन् काले ह्यहं देवि मथुरायां समागतः ।
तत्र तिष्ठाम्यहं भद्रे पश्चिमां दिशमाश्रितः ॥ २२ ॥
तत्र कृत्वा च हैरण्या मूर्तयश्च चतुर्विधाः ।
तीर्थे वराहसंज्ञे तु मथुरायां व्यवस्थितः ।
सुदृढाः सुस्पृशाः सुभ्रूयः पश्यति स मुच्यते ॥ २३ ॥
एका वराहसंज्ञा च तथा नारायणस्य च ।
वामनाय तृतीया वै चतुर्थी राघवस्य च ॥ २४ ॥
एताश्चतस्रो यः पश्येत् स्नात्वा कुण्डेऽसिसंज्ञिते ।
चतुःसागरपर्यन्ता क्रान्ता तेन धरा ध्रुवम् ।
तीर्थानां माथुराणाञ्च सर्वेषां फलमश्नुते ॥ २५ ॥

---

१. च ।

तत्र सर्वेषु तीर्थेषु असिकुण्डं महत्तरम् ।
या संख्या कथिता पूर्वं तीर्थानां दक्षिणेत्तरे ।
असि कुण्डं समारभ्य तीर्थानुक्रमणिका वरा ॥२६॥
गुप्तोत्थितोऽपि द्वादश्यांमसिकुण्डाप्लुतो नरः ।
मूर्तिः पश्यति यस्तास्तु ब्रह्मभूयाय कल्पते ।
नास्तीह पुनरावृत्तिर्भवेत् कालविपर्यये ॥ २७ ॥

इति वराहपुराणे असिकुण्डप्रभावो नाम
षट्षष्ट्यधिकशततमोऽध्यायः

## सप्तषष्ट्यधिकशततमोऽध्यायः

वराह उवाच

शृणु देवि यथा संज्ञा विश्रान्तेः कीर्तिता पुरा ।
राक्षसेन पुरा प्रोक्ता ब्राह्मणाय महात्मने ॥ १ ॥

पृथिव्युवाच

किमर्थं राक्षसेनोक्ता संज्ञा विश्रान्तिसंज्ञिता ।
किमर्थं पृष्टवान् विप्रः सर्वं कथय मे प्रभो ॥ २ ॥

वराह उवाच

उज्जयिन्यामभूद् विप्रः सदाचारविवर्जितः ।
न स पूजयते देवान् न स साधून्नमस्यति ॥ ३ ॥
पुण्यतीर्थं समासाद्य न च स्नानं करोति सः ।
देववेदाग्निरहितः परदाररतः सदा ॥ ४ ॥
सन्ध्ये द्वे शयनस्थश्च नित्यं कालं स तिष्ठति ।
न स देवमनुष्यांश्च पितॄन् पूजयते सदा ॥ ५ ॥
पापाचाररतो नित्यं पापसङ्गः सुदुर्मतिः ।
गार्हस्थधर्ममाश्रित्य मोहितो वर्तते सदा ॥ ६ ॥
गार्हस्थ्यं सर्वधर्माणां श्रेष्ठमुक्तं स्वयम्भुवा ।
यावन्ति[1] जन्तवः सर्वे यथा गो सर्वतः स्थिताः ॥७॥
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः[2] ।
एवं गार्हस्थ्यमाश्रित्य सर्वे जीवन्ति जन्तवः ॥ ८ ॥
ततः स चौर्यतां प्राप्तः पापैः सह नराधमः ।
स च रात्रौ द्रवँल्लोकाँल्लब्धोऽसौ राजरक्षिभिः ।
पलायमानः स परमन्धकूपेऽपतत् तदा ॥ ९ ॥
मृतोऽसौ पतितस्तत्र राक्षसत्वमुपागतः[3] ।
अन्धकूपे स पतितो घोररूपोऽवसत् तदा ॥ १० ॥
कदाचिदथ कार्येषु महान् सार्थ उपागतः ।
तेषां मध्ये द्विजः कश्चिद् रक्षां कृत्वा वसुन्धरे ॥११॥
रक्षोघ्नेन च मन्त्रेण सर्वं सार्थञ्च रक्षति ।
तत्रागत्य च रक्षस्तु ब्राह्मणं वाक्यमब्रवीत् ॥ १२ ॥

---

१. जीवन्ति । २. जीवन्ति चागमाः क्वचित्पाठः ।
३. मृतः स पतितोऽमुत्र राक्षसत्वमुपागतः ।

राक्षस उवाच

अहं दास्यामि ते विप्र यत्ते मनसि वर्तते ।
बहुकालेन सम्प्राप्तं भोजनञ्च यथेप्सितम् ॥ १३ ॥
उत्तिष्ठ विप्र गच्छ त्वमन्यत्र शयनं कुरु ।
येनाहं भक्षये सार्थं यावत् तृप्तिर्भवेन्मम ॥ १४ ॥
राक्षस्य वचः श्रुत्वा विप्रो वचनमब्रवीत् ।
एकः सार्थं प्रयातोऽहं[1] नोत्सृजामि कथञ्चन ॥१५॥
तस्मात् राक्षस गच्छ त्वं सार्थं मम परिग्रहम् ।
निरीक्षितुं न शक्तोऽसि मम मन्त्रबलेन हि ॥१६॥

राक्षस उवाच

मम भक्ष्ये हते विप्र दोषस्तव भविष्यति ।
दयां कुरु त्वं विप्रर्षे भोजनं मम दीयताम् ॥ १७ ॥
ततोऽपृच्छदसौ विप्रो राक्षसं दारुणं प्रति ।
केन त्वं कर्मदोषेण राक्षसत्वमुपागतः ॥ १८ ॥
ततश्च कथयामास यथावृत्तं पुरातनम् ।
अनाचारादिहेतोश्च राक्षसत्वमुपागतम् ॥ १९ ॥
आत्मानं कथयामास विप्राग्रे स यथातथम् ।
तस्य दुःखेन संयुक्तो विप्रोऽसौ वाक्यमब्रवीत् ।२०।

विप्र उवाच

मित्रत्वे वर्तसे रक्षस्तव दास्यामि किं वद ।
आत्मना चोपकारेण प्रियं किं करवाणि ते ॥ २१ ॥

राक्षस उवाच

ददासि यदि तद् विप्र यन्मे मनसि वर्तते ।
मथुरायाञ्च यत्स्नातं कृतं विश्रान्तिसंज्ञके ॥ २२ ॥
तस्य स्नानफलं देहि येन मुक्तिं व्रजाम्यहम् ।
तस्य दुःखेन संयुक्तो विप्रो वाक्यमथाब्रवीत्[2] ॥२३॥

विप्र उवाच

कथं जानासि रक्षस्त्वं तीर्थं विश्रान्तिसंज्ञकम् ।
कथञ्च संज्ञा तस्याभूत् तत्कथयस्व राक्षस ॥ २४ ॥

राक्षस उवाच

पुरी उज्जयिनी नाम्ना तस्यां वासो हि मे सदा ।
कस्मिंश्चिदथ कालेन गतोऽहं विष्णुमन्दिरम् ॥२५॥

---

१. एकसार्थमुपातोहं ( उपेतोऽहम् ? ) इति ( ग ) २. एतच्चरणं ( ग ) नास्ति ।

तस्याग्रे तिष्ठते विप्रो वाचको वेदपारगः।
विश्रान्तितीर्थमाहात्म्यं श्रावयन् सदिनेदिने ॥ २६ ॥

तस्य श्रवणमात्रेण मम भक्तिर्हृदि स्थिता।
सा संज्ञा च श्रुता तत्र विश्रान्तेश्च मयाऽनघ ॥ २७ ॥

वासुदेवो महाबाहुर्जगत्स्वामी जनार्दनः।
विश्रामं कुरुते तत्र तेन विश्रान्तिसंज्ञिता[1] ॥ २८ ॥

राक्षसस्य[2] वचः श्रुत्वा विप्रो वचनमब्रवीत्।
एकस्नानस्य हि फलं तव दत्तञ्च राक्षस।
विप्रे इत्युक्तमात्रे च मोक्षवासमवाप सः[3] ॥ २९ ॥

इति वाराहपुराणे विश्रान्तिमाहात्म्यं नाम
सप्तषष्ट्यधिकशततमोऽध्यायः।



१. संज्ञका इति ( ग )। २. एकं स्नानस्येति ( ग )।
३. इत्युक्तमात्रे च वने ततो मोक्षमवाप स इति ( ग )।

## अष्टषष्ट्यधिकशततमोऽध्यायः

धरण्युवाच

मथुरां रक्षते कोऽसौ क्षेत्रपालो व्यवस्थितः।
तेन दृष्टेन यत्पुण्यं कथयस्वाखिलं प्रभो ॥ १ ॥

वराह उवाच

दृष्ट्वा भूतपतिं देवं वरदं पापनाशनम्।
तस्य दर्शनमात्रेण मथुरायां फलं भवेत्[1] ॥ २ ॥
पुरा वर्षसहस्रं तु तपस्तप्तं सुदारुणम्।
पूर्णे वर्षसहस्रे तु मया सन्तोषितो हरः।
वरं वरय भद्रं ते यस्ते मनसि वर्त्तते ॥ ३ ॥

ईश्वर उवाच

सर्वगस्त्वं हि देवेश मया ज्ञातं सुनिश्चितम्।
मथुरायाञ्च मे स्थानं सदा देव प्रदीयताम् ॥ ४ ॥
देवदेववचः श्रुत्वा हरिर्वचनमब्रवीत्।
मथुरायाञ्च देव त्वं क्षेत्रपालो भविष्यसि ॥ ५ ॥
त्वयि दृष्टे महादेव मम क्षेत्रफलं भवेत्[2]।
अन्यथा नाप्नुयात् सिद्धिमेवमेतन्न संशयः ॥ ६ ॥
येन यथादृशं पुण्यं कृतं तीर्थे प्रयत्नतः।
भजते मनुजः सिद्धिमात्मभावेन तादृशीम् ॥ ७ ॥
मम क्षेत्रप्रवेशे च भूमिः संसारनाशिनी।
इन्द्रस्येव पुरी रम्या यथा नाकेऽमरावती।
जम्बूद्वीपे तथोत्कृष्टा मथुरा मम वल्लभा ॥ ८ ॥
विंशतिर्योजनानां हि माथुरं मम मण्डलम्।
पदे पदेऽश्वमेधानां फलं नात्र विचारणा ॥ ९ ॥
न मया कथितं देवि ब्रह्मणश्च महात्मनः।
रुद्रस्य न मया पूर्वं कथितञ्च वसुन्धरे।
मया सुगोपितं पूर्वं गुह्याद्गुह्यतरं परम् ॥ १० ॥
अत्र क्षेत्रे पुरी रम्या सर्वरत्नविभूषिता।
तस्यां तिष्ठन्ति तीर्थानि तानि वक्ष्यामि तच्छृणु ॥ ११ ॥

---

१; २. लभेदिति ( ग ), तच्च आर्षम् ।

षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ।
तीर्थसंख्या च वसुधे मथुरायां मयोदिता ॥ १२ ॥

गोवर्द्धनं तथाक्रूरं द्वे कोटी दक्षिणोत्तरे ।
प्रस्कन्दनञ्च भाण्डीरं कुरुक्षेत्रसमानि षट् ॥ १३ ॥

पुण्यात्पुण्यतरं श्रेष्ठमेतद्विश्रान्तिसंज्ञकम् ।
असिकुण्डं सवैकुण्ठं कोटितीर्थोत्तमं स्मृतम् ॥ १४ ॥

अविमुक्तं सोमतीर्थं यमनं तन्दुकं ततः[१] ।
चक्रतीर्थं तथाक्रूरं द्वादशादित्यसंज्ञितम् ॥ १५ ॥

एतत्पुण्यं पवित्रञ्च महापातकनाशनम् ।
कुरुक्षेत्राच्छतगुणं मथुरायां न संशयः ॥ १६ ॥

ये पठन्ति महाभागाः शृण्वन्ति च समाहितः ।
मथुरायास्तु माहात्म्यं ते यान्ति परमं पदम् ।
कुलानि ते तारयन्ति द्वे शते विंशयोर्द्वयोः ॥ १७ ॥

एतन्मरणकाले तु यः स्मरेत्प्रयतो नरः ।
स गच्छेत्परमां सिद्धिमिह संसारनाशिनीम् ॥ १८ ॥

एतत्ते कथितं देवि सर्वपातकनाशनम् ।
तीर्थानाञ्चैव माहात्म्यं किमन्यच्छ्रोतुमिच्छसि ॥ १९ ॥

इति वाराहपुराणे भगवच्छास्त्रे मथुरामाहात्म्ये
अष्टषष्ट्यधिकशततमोऽध्यायः ।



१. तेन्दुकं तत इति ( ग ) ।

# ऊनसप्तत्यधिकशततमोऽध्यायः

वराह उवाच

मथुरायाः परं क्षेत्रं त्रैलोक्ये न च विद्यते ।
तस्यां वसाम्यहं देवि मथुरायाञ्च सर्वदा ॥ १ ॥
सर्वेषामेव तीर्थानां मथुरा च परं महत् ।
कृष्णेन क्रीडितं तत्र तच्छुद्धं हि पदे पदे ॥ २ ॥
चक्रस्थितं हि तत्सर्वं कृष्णस्यैव पदेन तु ।
तत्र मध्यं तु तत्स्थानमर्द्धचन्द्रे प्रतिष्ठितम् ।
तत्रैव वासिनो लोका मुक्तिं यान्ति न संशयः ॥ ३ ॥
कृष्णस्य दक्षिणा कोटिरुत्तरा कोटिमध्यतः ।
तयोर्मध्ये स्थितो देव आकारात्[1] सोमचक्रता ॥ ४ ॥
तौ देवौ क्षेत्रफलदौ स्नानदानादिकर्म्मणि ।
तस्माद्धि मरणञ्चात्र द्वे कोटी सर्वकर्मसु ॥ ५ ॥
अर्द्धचन्द्रे तु यः स्नानं करोति नियताशनः ।
तेन वै चाक्षया लोकाः प्राप्ताश्चैव न संशयः ॥ ६ ॥
दक्षिणस्यां समारभ्य उत्तरस्यां समापयेत् ।
यज्ञोपवीतमात्रेण त्रायन्ते च कुलं बहु ॥ ७ ॥

पृथिव्युवाच

यज्ञोपवीतमात्राया विधानं कीदृशं प्रभो ।
यथा मानं हि कर्त्तव्यं तत्सर्वं वक्तुमर्हसि ॥ ८ ॥

वराह उवाच

यज्ञोपवीतस्य विधिं शृणुष्व वरवर्णिनी ।
दक्षिणस्यां समारभ्य उत्तरस्यां समापयेत् ॥ ९ ॥
यज्ञोपवीतस्य विधिरेष एव प्रकीर्त्तितः ।
मनुजा येन विधिना मुक्तिं यान्ति न संशयः ॥ १० ॥
अनेन विधिना चैव उत्तरस्यां समापयेत् ।
गृहान्निःसृत्य मौनेन यावत्स्नानं समाचरेत् ॥ ११ ॥
पूजां कृष्णस्य कृत्वा वै ततो ब्रूयाद् वसुन्धरे ।
स्नाने समाप्ते विधिवद्देवदेवस्य चैव ह ॥ १२ ॥

---

१. आकारः सोमचक्रतेति ( ग ) ।

कृष्णस्य कृत्वा तु मखं स्नानादीनि यथाक्रमम् ।
गां वै पयस्विनीं दत्त्वा हिरण्यं वसुमेव च ॥ १३ ॥
ब्राह्मणान् भोजयेत्पश्चाद्विधिरेव उदाहृतः ।
तथा शयनमुद्दिश्य एवमेवं तु कारयेत् ॥ १४ ॥
न तस्य पुनरावृत्तिर्मम लोके महीयते ।
अर्द्धचन्द्रे मृता देवि मम लोकं व्रजन्ति ते ॥ १५ ॥
अन्यत्र तु मृता ये च अर्द्धचन्द्रकृतक्रियाः[1] ।
तेऽपि स्वर्गं गमिष्यन्ति दाहादिकरणैर्युताः ॥ १६ ॥
यावदस्थीन्यर्द्धचन्द्रं यस्य तिष्ठन्ति देहिनः ।
तावत्सुपुण्यकर्त्ता च स्वर्गलोके महीयते ॥ १७ ॥
अर्द्धचन्द्रे विशेषोऽस्ति तीर्थे विश्रान्तिसंज्ञके ।
दाहादिकरणे तत्र गर्दभोऽपि चतुर्भुजः ॥ १८ ॥
गर्त्तेश्वरोऽथ भूतेशो द्वे कोटी तु वसुन्धरे ।
मध्ये सदैव तिष्ठामि न त्यजामि कदाचन ॥ १९ ॥
माथुराणाञ्च यद्रूपं तद्रूपं मे वसुन्धरे ।
माथुरेण तु तृप्तेन तृप्तोऽहं नात्र संशयः ॥ २० ॥
शृणु देवि यथा वृत्तं गरुडस्य महात्मनः ।
मथुरामागतो योऽसौ कृष्णदर्शनकाङ्क्षया ।
मथुरायां स्थितं देवं भिन्नरूपं न पश्यति ॥ २१ ॥
तदा गतोऽसौ वसुधे देवस्याग्रे विहङ्गमः ।
कृष्णस्य दर्शनार्थाय दिव्यं स्तोत्रमुदीरयन् ॥ २२ ॥

गरुड उवाच

विश्वरूप जयादित्य जय विष्णो जयाच्युत ।
जय केशव ईशान जय कृष्ण नमोऽस्तु ते ॥ २३ ॥
जय मूर्त्त जयाचिन्त्य जय लोमविभूषण ।
इत्येवं संस्तुतो देवो गरुडेन महात्मना ॥ २४ ॥
गरुडस्य पुरस्तत्र स्थितो देवः शरीरवान् ।
सान्त्वयामास गरुडं प्रीतिपूर्वमुवाच ह ॥ २५ ॥
किं कुर्य्यात्स्तोत्रमेतन्मे किं वा तव चिकीर्षितम् ।
मथुरागमकृत्ये ते सर्वं ब्रूहि ममाग्रतः ॥ २६ ॥

---

१. अर्द्धचन्द्रकृते क्रिया इति ( ग ) ।

गरुड उवाच

मथुरामागतश्चाहं तव दर्शनकाङ्क्षया ।
आगते तु मया देव न दृष्टं तव रूपकम् ॥ २७ ॥

माथुरैरेव लोकैस्तु समं दृष्टं हि रूपकम् ।
एकीभूतमहं सर्वं दृष्ट्वा मां मोह आविशत् ।
तस्मात् स्तुतिस्तु देवेश कृतानुग्रहकाम्यया ॥ २८ ॥

गरुडस्य वचः श्रुत्वा प्रहस्य मधुसूदनः ।
उवाच श्लक्ष्णया वाचा गरुडं प्रति भाविनि[1] ॥ २९ ॥

कृष्ण उवाच

माथुराणाञ्च यद्रूपं तद्रूपं मे विहङ्गमः ।
ये पापास्ते न पश्यन्ति मद्रूपा माथुरा द्विजाः ॥ ३० ॥

एवमुक्त्वा ततः कृष्णस्तत्रैवान्तरधीयत ।
गरुडोऽपि ततः स्थानाद् गतो देवि यथासुखम् ॥३१॥

एतत्ते कथितं देवि माथुराणां तु रूपकम् ।
येषां पूजितमात्रेण तुष्टोऽहञ्चैव सर्वदा ॥ ३२ ॥

मथुरायां मृता ये च मुक्तिं यान्ति न चान्यथा ।
अपि कीटः पतङ्गो वा तिर्यग्योनिं गतोऽपि वा ।
चतुर्भुजास्तु ते सर्वे भवन्तीति विनिश्चितम् ॥ ३३ ॥

यः पश्येत्पद्मनाभं तु द्वादश्यामाश्विनस्य तु ।
एकदेहधरौ देवौ शिवकेशवरूपिणौ ॥ ३४ ॥

एकादश्याञ्चोपवासी कृतशौचः समाहितः ।
कालिन्द्यां तु नरः स्नातो मुच्यते योनिसङ्कटात् ॥३५॥

चैत्रस्य शुक्लद्वादश्यामुपोष्य स्नानमाचरेत् ।
चिन्ताविष्णुं समभ्यर्च्य कृत्वा वै जागरं निशि ।
यः करोति स मुच्येत नात्र कार्या विचारणा ॥ ३६ ॥

एकां संशान्ततो[2] देवीं यशोदां देवकीं तथा ।
महाविद्येश्वरीं देवि[3] मुच्यते ब्रह्महत्यया ॥ ३७ ॥

---

१. भामिनीति ( ग ) । २. एकां नंशां ततो देवीमिति ( ग ) । अत्र एकां पश्यन्ततो देवीमिति पाठः सम्भाव्यते । तथा कृत एवार्थसङ्गतिर्भवति ।
३. देवीमिति ( ग ) ।

या धारा धर्मराजस्य मथुरायाश्च पश्चिमे ।
स्नानं करोति तस्यां तु ग्रहदोषैर्न लिप्यते ॥ ३८ ॥

यं यं देवमभिध्यायेद्भक्तियुक्तेन चेतसा ।
विश्रान्तिसंज्ञकं दृष्ट्वा दीर्घविष्णुञ्च केशवम् ।
सर्वेषां दर्शनं पुण्यं पूजनात्तु फलं भवेत् ॥ ३९ ॥

इति जपविधिहोमध्यानकाले स सम्यक्
सततमभिसमीक्ष्य[1] ब्रह्मणा यत्प्रयुक्तम् ।
सकलगुणगणानामास्पदं ब्रह्मसंज्ञं
जननमरणहीनं विष्णुमेवाभियाति[2] ॥ ४० ॥

इति वाराहपुराणे प्रागितिहासे मथुरामाहात्म्ये
ऊनसप्तत्यधिकशततमोऽध्यायः ।



---

१. अतिसमीक्ष्येति ( ग ) ।
२. अभियान्तीति ( ग ) ।

# सप्तत्यधिकशततमोऽध्यायः

वराह उवाच

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
मथुरायां पुरा वृत्तं गोकर्णस्य महात्मनः।
वसुकर्णः पिता तस्य वैश्यो धनसमृद्धिमान् ॥ १ ॥
तस्य भार्या सुशीला तु नाम्ना गुणसमन्विता।
भर्त्तुः प्रियकरी साध्वी न प्रसूता वयोऽधिका॥ २ ॥
विललाप च सुश्रोणी एकान्ते दीनमानसा।
सरस्वतीसङ्गमेऽथ स्त्रियो दृष्ट्वा प्रजावतीः ॥ ३ ॥
वृक्षमूले तु तत्रैव मुनिरेकः समास्थितः।
तस्या विलपितं श्रुत्वा शनैः सकरुणं हृदि ॥ ४ ॥
जातहार्दः प्रियं इष्टं[1] शनैः स्त्रियमथाब्रवीत्।
का त्वं कस्यासि सुभगे किमर्थं रोदिषि स्वयम्॥ ५ ॥
इति तस्य वचः श्रुत्वा सा स्त्री ऋषिमथाब्रवीत्।
सापत्यास्तु स्त्रियो दृष्ट्वा क्रीडन्त्यो बालकैः सह।
मम तन्नास्ति हि मुने दुर्भगायाः प्रजासुखम् ॥ ६ ॥
उवाच मुनिशार्दूलस्तां स्त्रियं पुत्रगर्द्धिनीम्।
देवतायाः प्रसादेन तव पुत्रो भविष्यति ॥ ७ ॥
शिवस्यायतनं पुण्यं गोकर्णेति च विश्रुतम्।
तमाराधय देवेशं पत्या सह यशस्विनि।
स्नानदीपोपहारेण स्तोत्रैर्नानाविधैर्जपैः ॥ ८ ॥
इत्युक्ता सा च सुश्रोणी प्रणिपत्य प्रसाद्य तम्।
भर्त्रे सा कथयामास यदुक्तं मुनिना प्रियम् ॥ ९ ॥
स तद्वचनमाकर्ण्य प्रीतियुक्तं सुसंयतम्।
जगादोच्चैः प्रियां देवि भद्रं जातो मनोरथः।
ममाप्येतन्मतं देवि यदुक्तमृषिणा ततः ॥ १० ॥
इति प्रियां समाभाष्य प्रियया च तथाऽकरोत्।
सरस्वत्याः सङ्गमे तौ स्नात्वा गोकर्णमर्च्चतुः।
पुष्पदीपोपहारं तु चक्राते तौ दिने दिने ॥ ११ ॥

---

१. प्रियं द्रष्टुमिति वा पाठः।

एवं तयोर्दशाब्दानि[1] गतानि सुतहेतवे ।
ततः प्रसन्नो भगवानुमापतिरुवाच ह ।
भविष्यति युवां[2] पुत्रौ रूपवान् गुणसंयुतः ॥ १२ ॥
शस्यसन्ततिवद्दश्यः सन्तानो यस्य वै बहुः ।
देवतानां प्रसादेन खलु तस्य भविष्यति ॥ १३ ॥
इत्युक्तौ तौ तु देवेन स्नानं कृत्वा सरस्वतीम् ।
प्रभाते देवेदेवाय ददौ द्रव्यमनन्तकम् ।
ब्राह्मणेभ्यो ददौ भोज्यं वस्त्राद्यं बहुदक्षिणम् ॥ १४ ॥
ततस्तस्यां सुशीलायां गर्भाधानमविन्दत ।
ततः प्रववृधे गर्भः शुक्लपक्षे यथा शशी ।
सुषुवे दशमे मासि पुत्रं बालशशिप्रभम् ॥ १५ ॥
गोसहस्रं तदा दत्त्वा ससुवर्णं सवस्त्रकम् ।
बहुशः सर्ववर्णेभ्यः पुत्रजन्ममहोत्सवे ॥ १६ ॥
जातकर्म तथा चैव नामकर्म चकार च ।
गोकर्णं नाम तस्यैव पिता चक्रे निरूप्य च ॥ १७ ॥
एवमन्नप्राशनञ्च चूडोपनयनं तथा ।
अतः परञ्च गोदानं वैवाहिकमनुत्तमम् ॥ १८ ॥
दानं तु ददतस्तस्य देवतां पूजयिष्यतः ।
कृतानि बहुमुख्यानि मङ्गलानि यथाविधि ॥ १९ ॥
ततः प्रविष्टे तारुण्ये अग्रजं वीक्ष्य पुत्रकम् ।
पुनर्विवाहयामास भार्यास्तस्य चतुष्टयम् ॥ २० ॥
वयोरूपगुणोपेतास्तस्य[3] भार्याः सुलोचनाः ।
अप्रजा एव ताः सर्वा नाभवत्पुत्रिणी क्वचित् ॥ २१ ॥
तेनैव धर्म आरब्धः प्रजार्थो[4] देवसेवनम् ।
वापीकूपतडागानि देवतायतनानि च ।
प्रपा मालाश्च[5] नित्यान्नं भोजनं वर्त्तनानि च ॥ २२ ॥
अनित्यतां ततो मत्वा चञ्चलाऽस्थिरजीवितम् ।
विनियोगः कृतस्तेन सर्वदा सर्वकर्मसु ॥ २३ ॥
गोकर्णस्य समीपे तु पश्चिमे चक्रपाणिनः ।

---

१. 'अब्दानि'–इति क्लीबत्वम् आर्षम् ।
२. 'युवाम्' इति आर्षम् । अत्र 'युवयोः' 'वाम्' इति वा समीचीनः ।
३. सत्यो भार्या इति पाठान्तरम् । ४. प्रजार्थमिति इति वा पाठः ।
५. प्रपा मताश्चेति वा पाठः ।

प्रासादं कारयामास पञ्चायतनकं हरेः ॥ २४ ॥
आरामस्तत्र विस्तीर्णः पुण्यजात्यस्तथैव च ।
आम्रजम्बीरनारङ्ग बीजपूरः सदाडिमः ॥ २५ ॥
प्राकारं कारयामास परिखामण्डलीयकम्[१] ।
प्रावर्त्तनञ्च कूपेषु येन सिञ्चेत्प्रवाटिकाम् ॥ २६ ॥
पुष्पाणि च विचिन्वन्ति सर्वास्ता वरयोषितः ।
स्नानं पूजादिकं तद्वन्मार्जनं दीपकर्म च ।
कुर्वन्ति देवतागारे ताः सर्वाः शुभलोचनाः ॥ २७ ॥

पतिव्रता महाभागाश्चतुरो भगिनीर्यथा ।
नित्यकालं पतेर्वाक्ये स्थिताः कुर्वन्त्यहर्निशम् ॥ २८ ॥
मालाकारस्तथा नित्यं विटपांश्च प्रसिञ्चति ।
पालयामास विधिवद्विधिदृष्टेन कर्मणा ॥ २९ ॥
जाताः सुपुष्पवन्तश्च द्रुमाः फलसमन्विताः ।
नित्यकालमपर्यन्तः फलानां सुमहोत्सवम् ।
दीयते भुज्यते सर्वैर्यथा शक्रस्तथा सदा ॥ ३० ॥
एवं तु वसतस्तस्य मथुरायां स्थितस्य च[२] ।
धनस्य सङ्क्षयो यातः प्रत्यहं ददतः सतः ॥ ३१ ॥
शेषमात्रे धने तस्य चिन्ताभून्महती तदा ।
मातापित्रोः कुटुम्बस्य भरणीयस्य भोजनम् ।
कथं ब्रूहि करिष्यामि महाकष्टमिति सोऽब्रवीत्[३] ॥ ३२ ॥

इति निश्चित्य मनसा वणिग्भावं[४] हृदि स्थिरम् ।
कृत्वा सार्थमुपामन्त्र्य निर्गतः पूर्वमण्डलम् ॥ ३३ ॥
तत्र क्रीत्वा[५] सुपण्यानि उत्तरापथगानि च ।
बहूनि बहुमौल्यानि परदेशगमानि च ॥ ३४ ॥
यातायातं ततः कृत्वा लाभालाभविचक्षणः ।
क्रीत्वा क्रेयानि वस्तूनि लाभालाभं विचार्य च ।
उत्तरापथदेशात्तु सार्थं स बहुविस्तरम् ॥ ३५ ॥
अश्वरत्नं मणिरत्नं पट्टरत्नं समर्थकम् ।
गृहीत्वा तु समागच्छन्मथुरायां गृहं प्रति ॥ ३६ ॥

---

१. परिखाः मण्डलीयकमिति ( ग ) । २. स्थितस्य तु इति ( ग ) ।
३. अत्र महाकष्टमिति सोऽब्रवीदित्यत्राक्षराधिक्याच्छन्दोदोषः द्रष्टव्यः । महाकष्टमथोऽब्रवीदिति समीचीनः ।
४. वणिग्भागमिति ( ग ) ५. कृत्वेति वा पाठः ।

एकदा सार्थसम्भारो विश्रान्तुं समुपक्रमे[1] ।
सानौ पर्वतसामीप्ये प्रभूतयवसोदके ।
नद्यास्तीरे सुप्रदेशे आवासांश्च प्रचक्रिरे ॥ ३७ ॥
निवेश्य भाण्डं तत्रैव अश्वानां यवसादिकम् ।
समादिश्येतिकृत्यञ्च भृत्यैः कतिपयैर्वृतः ।
समारुरोह तं शैलं बहुकन्दरशोभितम् ॥ ३८ ॥
क्रीडार्थं विहरंस्तत्र सोऽपश्यत् स्थानमुत्तमम् ।
प्रसन्नसलिलोपेतं नारङ्गैस्तु विभूषितम् ॥ ३९ ॥
फलवन्तश्च वृक्षाश्च पुष्पाणि सुरभीणि च ।
पाषाणसन्धौ तत्रस्थैर्मालाकारैस्तु रोपितम् ॥ ४० ॥
तत्रारुह्य दरीद्वारं यावद्दृष्टिर्निपात्यते ।
तावदभ्यागतादीनि स्वागतादि शृणोति च ॥ ४१ ॥
श्रुत्वाऽपि शब्दप्रभवं किमेतदिति निश्चयम् ।
करिष्यंस्तत्र चैकान्ते दृष्टः पञ्जरगः शुकः ॥ ४२ ॥
तेनोक्तं भो इहागच्छ आतिथ्यं करवाणि ते ।
पाद्यं गृहाण भोः पान्थ आसनं ते इदं शुभम् ॥ ४३ ॥
फलानीमानि स्वादूनि मधुमांसोदकानि च ।
यथेष्टं यावतीच्छा च तावद्गृह्णन्त्विमे नराः ।
आगत्य पितरौ मह्यं[2] विशेषे तौ करिष्यतः ॥ ४४ ॥
अतिथेरागतस्येह पूजायां विमुखो भवेत् ।
गृहस्थस्तस्य पितरो वसन्ति नरके[3] ध्रुवम् ।
पूजिते पूजिताः स्वर्गे मोदन्ते कालमक्षयम् ॥ ४५ ॥
अतिथिर्यस्य भग्नाशो गृहात्प्रव्रजते यदि ।
आत्मनो दुष्कृतं तस्मै दत्त्वा तत्सुकृतं हरेत् ॥ ४६ ॥
तस्मात्सर्वप्रयत्नेन पूज्यो वै गृहमेधिना ।
काले प्राप्तस्त्वकाले वा यथा विष्णुस्तथैव सः ॥ ४७ ॥
एवंविधाः शुभा वाचो वैश्यो धर्मोपदेशकात् ।
श्रुत्वा शुकात्स सर्वाय[4] गोकर्णो मुदितोऽब्रवीत् ॥४८॥

---

१. 'विश्रान्तुमुपचक्रमे'—इति समीचीनः ।
२. ममेत्यत्र मह्यमित्यार्षम् ।
३. वसन्ते नरके इति ( ग ) । अत्र 'वसन्ते' इति आर्षम् ।
४. 'सर्वस्मै' इति समीचीनः । श्रुत्वा शुकात् सर्वार्थाश्चेति ( ग ) ।

कस्त्वमृषिः पुराणज्ञः किं वा देवोऽथ गुह्यकः ।
तव प्रसन्नरूपस्य यस्येयं वागमानुषी ।
कस्त्वं कथय मे सत्यमुत्साहश्चातिथिप्रियः ॥ ४९ ॥
धन्यः स मानुषो यस्य नित्यं सन्निहितो भवान् ॥५०॥
इत्युक्तः स शुकः सर्वं शशंसात्मपुराकृतम् ।
शृणु रौद्रं यथा पूर्वं मया कृतमबुद्धिना ।
शुकस्य विप्रियं यादृङ्महर्षेस्तु तपस्यतः ॥ ५१ ॥
सुमेरोरुत्तरे पार्श्वे महर्षिगणसेविते ।
तपश्चचार विप्रलं[1] शुको व्याससुतो महान् ॥ ५२ ॥
श्रोतुकामाः पुराणानि सेतिहासानि नैगमाः ।
ऋषयस्तत्र आजग्मुरसितोदेवलस्तदा ॥ ५३ ॥
मार्कण्डेयो भरद्वाजो यवक्रीतस्ततो भृगुः ।
अङ्गिरास्तैत्तिरीयेभ्यः काण्वो मेधातिथिः कृतः ॥५४॥
तन्तुः सुतन्तुरादित्यो वसुमानेकतो द्वितः ।
वामदेवश्चाश्वशिरास्त्रिशीर्षो गौतमोदरः ॥ ५५ ॥
अन्ये च सिद्धा देवाश्च पन्नगा गुह्यकास्तथा ।
शुकं सम्मुखयामासुः पप्रच्छुर्द्धर्मसंहिताम् ॥ ५६ ॥
अहं तु वामदेवस्य शिष्यो नाम्ना शुकोदरः ।
भ्रष्टः श्रद्धान्वितो बाल्यात्सुनीत्यामग्रतश्चरन् ॥ ५७ ॥
ऊहापोहकरं प्रश्नं वारंवारञ्च पृष्टवान् ।
अन्यायवादिनं मां च गुरुर्नित्यं निषेधति ॥ ५८ ॥
गुरूणामग्रतो वाक्यं कथायां कथतां सह ।
पूर्वपक्षाश्च सिद्धान्ताः परस्परजिगीषवः ।
अन्तरे चान्तराक्षेपं पुनर्नैवमवोचथाः ॥ ५९ ॥
एवं निषेधितश्चाहं गुरुणा मुनिसत्तमैः ।
न कृतं यन्मया वाक्यं तेनाहं शपितस्तदा ॥ ६० ॥
शुकेन कोपाच्छापो मे दत्तोऽयं जल्पको वटुः ।
यथानामा त्वयं पक्षी शुको भवति नान्यथा ॥ ६१ ॥
इत्युक्तमात्रे वचने तत्रैवाहं शुकोदरः ।
शुकत्वं तत्क्षणात्प्राप्तः क्षमस्वेत्यूचुरोजसा ।
मुनयस्तं महात्मानं शुकं तत्त्वार्थवित्तमम् ॥ ६२ ॥
नान्यथा नान्यथा चोक्तं कदाचित्स भविष्यति ।
आगामिकाले दास्यामि वरमस्मै शुकाय भोः ॥ ६३ ॥

---

१. विप्रोऽलमिति पाठः सम्भाव्यते ।

युष्माकमुपरोधेन यथारूपो विहङ्गमः ।
अयं भविष्यति सदा सद्भावहितभावनः ॥ ६४ ॥
पुराणतत्त्ववेत्ता च सर्वशास्त्रार्थपारगः ।
मथुरायां मृतः पश्चाद् ब्रह्मलोकं गमिष्यति ॥ ६५ ॥
एवं शापं वरं गृह्य[1] तस्माद्दीनो ह्यहं द्रुतम् ।
मथुरा मथुरोच्चारं कुर्यान्नित्यमतन्द्रितः ॥ ६६ ॥
नित्योद्विग्नस्य मे गात्रं हिमाद्रौ तु गुहां वसन् ।
प्राप्तोऽहं शबरेणैव येनाहं पञ्जरे कृतः ॥ ६७ ॥
शबरस्तु सभार्यो वै क्रीडते स मया सह ।
मुनेः प्रसादान्मे ज्ञानं न जहाति कदाचन ॥ ६८ ॥
भुज्यते ह्यवशेनैव कृतं येन यथा च यत् ।
स्वस्थो भव महाभाग मा स्म शोके मनः कृथाः ॥६९॥
इत्युक्तः स तु गोकर्णस्तदा तेन शुकेन च ।
तस्य च वचनं हृद्यं शुकमोक्षप्रदायकम् ॥ ७० ॥
या सा मुक्तिप्रदा रम्या मथुरा पापनाशिनी ।
तस्यां वसाम्यहं भद्र वाणिज्यार्थमिहागतः ।
पुनरिच्छामहे तत्र भाण्डं गृह्य यथासुखम् ॥ ७१ ॥
मथुरावासिनं श्रुत्वा गोकर्णं स शुकस्तदा ।
पुत्रं संस्थाप्य चात्मानं गोकर्णस्य यथेप्सितम् ॥ ७२ ॥
एवञ्च वदतस्तस्य[2] शबरी शयनोत्थिता ।
दर्पान्निःसृत्य तु बहिर्ददर्शासनसंस्थितम् ।
भृत्यैः परिवृतं चारुदर्शनीयस्वरूपकम्[3] ॥ ७३ ॥
निरीक्ष्य बहुशस्तत्र शुको वचनमब्रवीत् ।
प्रियातिथिञ्च सम्प्राप्तं मातः पूज्यतमं शुचिम् ।
कुरु पूजां यथार्हञ्च गोकर्णस्य वरातिथेः ॥ ७४ ॥
शुकस्य वचनाद्यावत्पूजार्थमुपकल्पितम् ।
न ददाति ततस्तत्र वनाच्छबर आगतः ॥ ७५ ॥
तस्याग्रे तु पुनस्तेन शुकेनातिथिपूजनम् ।
शंसितं स तथेत्युक्त्वा कृत्वा पूजां प्रणम्य च ॥ ७६ ॥
फलानि मांसयुक्तानि मधूनि सुरभीणि च ।
सम्पाद्य संविदं कृत्वा वद किं करवाणि ते ॥ ७७ ॥

---

१. गृहीत्वेति समीचीनः । एवं परत्र द्रष्टव्यः ।
२. ताभ्यामिति ( ग ) । ३. रुद्रदर्शनीयस्वरूपकमिति वा पाठः ।

इत्युक्तः शबरेणाथ गोकर्णो वाक्यमब्रवीत् ।
अन्यत्किञ्चिदथो देयं यदि किञ्चिद्ददासि च ॥ ७८ ॥

शुकोऽयं पञ्जरस्थश्च पुत्रार्थं मे प्रदीयताम् ।
मथुरायां गमिष्यामि कृतार्थः पितुरन्तिके ॥ ७९ ॥

इत्युक्तमात्रे वचने शबरो वाक्यमब्रवीत् ।
अस्माकं यमुनास्नानं सङ्गमे यमुनाम्भसः ।
सरस्वत्याश्च पतने दत्ते दास्यामि ते शुकम् ॥ ८० ॥

शबरेणैवमुक्तस्तु गोकर्णः प्रत्यभाषत ।
सरस्वत्याः सङ्गमे च यत्फलं लभते नरः ।
स्नानेन किं फलं तस्य यदि जानासि तद्वद ॥ ८१ ॥

शबर उवाच

शुकेनानेन मे सर्वं मथुरायाश्च यत्फलम् ।
यत्फलं सङ्गमस्योक्तं शृणुयाद् द्वादशीव्रतम् ॥ ८२ ॥
वियोनिस्थो राक्षसो वा तिर्यग्योनिङ्गतस्य वा[1]।
यस्योद्दिश्य व्रतं कुर्यात्स गच्छेत्परमां गतिम् ॥ ८३ ॥
सङ्गमस्य फलं तस्य दृष्ट्वा गोकर्णमीश्वरम् ।
नासौ यमपुरं याति विष्णुलोकञ्च गच्छति ।
एवं मया श्रुतं तस्य सङ्गमस्य महत्फलम् ॥ ८४ ॥

इति वाराहपुराणे गोकर्णसरस्वतीमाहात्म्ये
सप्तत्यधिकशततमोऽध्यायः ।



१. 'तिर्यग्योनिं गतोऽपि वा' इति समीचीनः ।

## एकसप्तत्यधिकशततमोऽध्यायः

वराह उवाच

शुकं गृह्य ततः स्थानात्प्रस्थितो[1] मथुरां पुरीम् ।
प्रविश्य गृह्य तत्पुण्यं मातापित्रोस्तदर्पितम् ।
शुकस्य चरितं सर्वं निवेद्य च महामतिः ॥ १ ॥
एवं निवसतस्तस्य बहुवर्षाणि तत्र वै ।
सुखं प्राप्तं मतञ्चापि व्यवहारे च पूजने ॥ २ ॥
एवं निवसतस्तस्य द्रव्यशेषमजायत ।
पुनस्तत्रैव गमने वणिग्भावे मतिर्गता ॥ ३ ॥
समुद्रयाने रत्नानि महामौल्यानि साधुभिः ।
रत्नपरीक्षकैः सार्द्धमानयिष्ये बहूनि च ॥ ४ ॥
एवं निश्चित्य मनसा महासार्थपुरःसरः ।
समुद्रयायिभिर्लोकैः संविदं सूच्य निर्गतः ॥ ५ ॥
पेयाहारसमाहारं कृत्वा कृत्यविदार्थकम् ।
शुकं गृहीत्वा प्रस्थानमकरोत्पुण्यवासरे ॥ ६ ॥
मातापित्रोः शुभा वाचो गृहीत्वा देवतागृहे ।
भार्याणां देवकार्यञ्च वाटिकायाश्च पोषणम् ।
पितुः शुश्रूषणं चोक्त्वा सर्वं यूयं करिष्यथ ॥ ७ ॥
यथायोगं यथाकालं यथाकृत्यं यथा च यत् ।
भवतीभिश्च कृत्यं मे करणीयं यथा तथा ॥ ८ ॥
सन्दिश्य भार्याः सुश्रोणीर्देवं दृष्ट्वा प्रसाद्य च ।
भार्याभिः समनुज्ञातो यानपात्रङ्गतस्तदा ॥ ९ ॥
शुकेन सह सम्प्राप्तो महान्तं लवणार्णवम् ।
पोतारूढास्ततः सर्वे पोतवाहैरूपोहिताः[2] ।
अपारे दुस्तरेऽगाधे यान्ति वेगेन नित्यशः ॥ १० ॥
अथ दैववशाद्वायुर्विलोमः समजायत ।
दुर्वातेन तदा नित्यं बलात्पोत उपोहितः ॥ ११ ॥
पोतवाहास्ततः सर्वे विसंज्ञा मोहिताः कृशाः ।
हा कष्टं हि कथं किञ्च कुत्र गच्छामहे वयम् ॥ १२ ॥

---

१. प्रतिस्थानात् प्रस्थित् इति ( ग ) ।
२. 'पोतवाहैरुपोषिता' इति पाठान्तरम् ।

तेषां तु वचनं श्रुत्वा ज्ञात्वा दुर्वातपीडनम् ।
आक्षिपद्वाग्भिरुग्राभिरन्योन्याशङ्क्य मूर्च्छिताः॥१३॥
जल्पन्ति कोऽत्र पापिष्ठः समारूढो निराकृतिः ।
तस्य पातकसंस्पर्शान्मृता. सर्वे न संशयः ॥ १४ ॥
एवं विलपतां तेषां चत्वारोऽपि समभ्ययुः ।
मासास्तत्रैव वाणिज्यं षण्मासान्सिध्यते फलम् ॥ १५ ॥
निर्भर्त्सनं ततस्तेषामन्योऽन्यमभिजल्पनम् ।
श्रुत्वा शुकस्य गोकर्णः शशंसात्मविनिन्दनम् ॥ १६ ॥
अपुत्रस्य गतिर्नास्ति इति सर्वस्य निश्चितम् ।
एषां मध्ये ह्यहं पापस्तेन तप्यामि पुत्रक ॥ १७ ॥
यदत्र युक्तं कालेऽस्मिन् विषमे समुपस्थिते ।
वद स्वाध्यायषाड्गुण्यं कृच्छ्रे त्वं कार्यवित्तमः ॥ १८ ॥

शुक उवाच

मा भैस्तात जोषमास्स्व[1] अस्मिन् काले यथोचितम् ।
अहं करिष्ये तत्सर्वं मा विषादे मनः कृथाः ॥ १९ ॥
एवमाश्वास्य पितरं समुड्डीय ततो द्रुतम् ।
ध्रुवाख्यां दिशमुद्वीक्ष्य उत्तराभिमुखो ययौ ॥ २० ॥
नीचगत्या रक्षयन्वै सुतरं दुस्तरं जलम् ।
सानौ पर्वतसामीप्ये योजनेन वरं गिरिम् ॥ २१ ॥
रोमाञ्चिततनुर्जातः शुको वीक्ष्य महागिरिम् ।
क्रमित्वोर्द्धञ्च यात्युग्रं तावद्देवालयं शुभम् ॥ २२ ॥
दृष्टञ्च विष्ण्वायतनं तेजसा चोपशोभितम् ।
दिक्षु सर्वास्वटित्वैवं निलिल्ये देवमन्दिरे ॥ २३ ॥
वत्साऽयं कोऽत्र सञ्चारी कदा किन्तु पिता मम ।
वितरिष्यति नो कालं दुरन्तं सुकृतिर्यथा ॥ २४ ॥
क्षणमेकं तथा चैनं तस्य चिन्तान्वितस्य हि ।
सौवर्णपात्रहस्ता च देवी देवं समचर्चयत् ।
नमोनारायणायोक्त्वा निषसाद वरासने ॥ २५ ॥
निमेषान्तरमात्रेण वयोरूपसमन्विताः ।
असंख्याताः समायाता यथा देवी तथैव ताः ॥ २६ ॥
गीतं वाद्यञ्च नृत्यञ्च यथासौख्यं विहृत्य च ।
गतास्ता देवताः सर्वा यथास्थानमनुत्तमम् ॥ २७ ॥

---

१. पितर्जोषमास्स्वेति ( ग ) ।

देवतादक्षिणे भागे पक्षिणाञ्च जटायुषाम् ।
लक्ष्याण्यनेकयूथानि वृहन्ति बहुसङ्घशः ॥ २८ ॥
शुको लिख्यासमस्तेषां मध्ये कृत्वा तु संविदम् ।
स्वभाषां पुरतः कृत्य[1] शरणञ्च अयाचयत् ॥ २९ ॥
ते समाश्वास्य तं प्राहुः कथमस्मिन् भवान् गतः ।
वारिराशिर्दुराधर्षः समुद्रो झषसंकुलः ॥ ३० ॥
शुकस्तान् प्रत्युवाचाथ पिता मे पोतसंस्थितः ।
दुर्गवाताद्गमस्थो विषमे समुपस्थिते ॥ ३१ ॥
तस्य त्राणमभीप्सन्वै आगतोऽत्र वरं गिरम् ।
कुरुध्वं तस्य मे त्राणं यथा सुखमवाप्यते ॥ ३२ ॥

पक्षिण ऊचुः

एहि पुत्र सुकार्यं ते मार्गं द्रक्ष्यामहे वयम् ।
पोताभ्यासगतिं यासि पितुस्तव गतिं प्रति ॥ ३३ ॥
ममैव पादविन्यासे क्रमयिष्ये यथा जलम् ।
तेन ते पृष्ठतो मह्य[2] स पिता सन्तरिष्यति ॥ ३४ ॥
मम चञ्च्वावगाहेन नङ्क्ष्यन्ति जलजन्तवः ।
एतत्पितुः समक्षं हि शंस क्षिप्रं नदीपतिम् ॥ ३५ ॥
तरयामास वेगेन गत्वा पृष्ठं जटायुषः ।
स ययौ पर्वतं तीर्त्वा क्वचिन्नाभिसमं जलम् ।
हृत्कण्ठञ्चैव गम्भीरं सुखेन सुकृती यथा ॥ ३६ ॥
स्तोकान्तरे ततः सोऽथ देवागारमनुत्तमम् ।
सरोवरं च पद्माढ्यं मणिरत्नविभूषितम् ॥ ३७ ॥
स्नात्वा देवान् पितॄंश्चैव तर्पयित्वा यथासुखम् ।
पुष्पाण्यादाय देवञ्च पूजयित्वा स केशवम् ॥ ३८ ॥
पञ्चायतनकञ्चैव खचितं रत्नसञ्चयैः ।
दृष्ट्वा निलिल्ये चैकान्ते शुकस्यानुमते स्थितः ॥ ३९ ॥
क्षणेन ता यथापूर्वं देवताश्चागताः पुनः ।
नर्त्तयित्वा यथायोग्यं तासां ज्येष्ठाऽब्रवीदिदम् ॥ ४० ॥
स्वागतस्य क्षुधार्त्तस्य ब्रह्मेष्टस्य महात्मनः ।
भोजनार्थं फलं दिव्यं पानार्थं तोयमुत्तमम् ।
गोकर्णस्य प्रयच्छध्वं येन तृप्तिस्त्रिमासिकी ॥ ४१ ॥

---

१. कृत्वेति समीचीनः । २. ममेत्यत्र मह्यमिति आर्षम् ।

यथा शोको यथा पापं यथा मोहः प्रणश्यति ।
तथा कृत्वा तमूचुस्ता अभयं तेऽस्तु मा शुचः ।
वस स्वर्गोपमे स्थाने यावत्सिद्धिर्भवेत्तव ॥ ४२ ॥
गतास्ताः पुनरेवञ्च नित्यमेव दिने दिने ।
वसते स सुखं तत्र मथुरायां यथा तथा ॥ ४३ ॥
पोतात्तस्मादुत्ततार सुवातेनोपवाहितः ।
रत्नाकरः शुभो यत्र भावित्वाद्दैवयोगतः ।
रत्नानि बहुमौल्यानि आहृतानि बहून्यथ ॥ ४४ ॥
यावत्परीक्षणार्थञ्च गोकर्णं रत्नकोविदम् ।
निरीक्ष्यतेऽस्य संवासो न दृष्टश्चुक्रुशुस्ततः ॥ ४५ ॥
कुतोऽसौ गतवान् भद्रो मृतो नष्टो जले प्लुतः ।
व्रीडायुतो निमग्नोऽयं निश्चितं मकरालये ॥ ४६ ॥
पितुरस्य वयं सर्वे पुत्रवद्विचरामहे ।
यथा भागं च रत्नानां भागं दास्यामहे परम ।
एष धर्मः सदास्माकमेकसार्थागमेन हि ॥ ४७ ॥
एवं वसन् स गोकर्णो द्वीपस्थः शोकविह्वलः ।
शुकं प्रोवाच दीनात्मा मातापित्रोः कृते तदा ॥ ४८ ॥
शुकेन मन्त्रमोहत्वात्पितुरेवं निवेदितम् ।
अहं पक्षी लघुतनुर्भवन्तं नेतुमक्षमः ।
याताऽस्मि[1] मथुरां मार्गे समुद्रे जलमालिनि ॥ ४९ ॥
पित्रोर्वाक्यं तवाख्यास्ये त्वदीयं च तयोरहम् ।
अवश्यञ्च गमिष्येऽहमनुज्ञा तु प्रदीयताम् ॥ ५० ॥
सत्यमुक्तं ततस्तेन गोकर्णेन शुकं प्रति ।
गच्छ त्वं पुत्र मथुरामवस्थां मामकीमिमाम्[2] ।
त्वया विना न शक्नोमि शीघ्रमागमनं कुरु ॥ ५१ ॥
इत्युक्तः स तथेत्युक्त्वा पोतारूढः खगोत्तमः ।
कालेन मथुरां प्राप्तः सर्वं पित्रे न्यवेदयत् ॥ ५२ ॥
श्रुत्वा तौ विषमावस्थं मृतं हृदि निवेश्य च ।
रुदित्वा सुचिरं कालं शुके स्नेहो निवेशितः ॥ ५३ ॥
अस्माकं जीवनार्थाय त्वया कार्यं विहङ्गम ।
कथाभिरनुकूलाभिर्धर्मदर्शिभिरेव च ॥ ५४ ॥

---

१. 'यातोऽस्मि' इति ( ग ) ।
२. मामकीमिमामवस्थां ताभ्यां निवेदयेत्यर्थः ।

शुकेन पञ्जरस्थेन कथालापेन विद्यया ।
पुत्रशोकाभिसन्तप्तौ तथैवानेन सान्त्वितौ ॥ ५५ ॥
अथ सार्थः समायातो रत्नपूर्णो यथोदधिः ।
वसुकर्णस्य पुत्रार्थमकरोत्स जनो महान् ॥ ५६ ॥
सर्वैस्तैर्विंशतिः[१] संख्या एकैकेन समुद्रगैः ।
रत्नैः समर्चितोऽत्यर्थं पर्वतः कुसुमोत्करैः ।
प्रसाद्य सर्वे सम्पूज्य प्रेषितास्ते गृहं ययुः ॥ ५७ ॥
एवं ते न्यवसंस्तत्र यावत्कालं सुखेन तु ।
शुश्रूषमाणास्तं वैश्यं यथा स्वपितरं तथा ॥ ५८ ॥

इति वाराहपुराणे भगवच्छास्त्रे गोकर्णमाहात्म्ये
एकसप्तत्यधिकशततमोऽध्यायः ।



१. 'विंशतिः संख्या' इत्यस्य न तृतीयान्तः चिन्त्यः ।

# द्विसप्तत्यधिकशततमोऽध्यायः

वराह उवाच

गोकर्णस्तु तथा चक्रे[1] तस्मिन्नायतने शुभे।
प्रथमेऽह्नि यथा कृत्यमेवमेव त्रयोदश ॥ १ ॥
ता देव्यो नृत्यगीतेषु कुशलाश्चागमेऽभवन्।
सुरूपाश्च स्वलङ्कारा रमयन्ति दिने दिने ॥ २ ॥
गोकर्णः सर्वभावेन गृहं विस्मृतवानसौ।
तथैकदा स गोकर्णस्ता देव्यश्च हतौजसः ॥ ३ ॥
विवर्णवदना दीना भग्नालङ्कारवाससः।
हीनाङ्गा लुञ्चितशिरः केशपक्ष्मनखादयः ॥ ४ ॥
दृश्यन्ते विकृताकाराः सव्रणा रुधिरस्रवाः।
ता दृष्ट्वाऽतीवदुःखार्त्तश्चक्रे मनसि वेदनाम् ॥ ५ ॥
अपुत्रस्य गतिर्नास्ति स्वर्गे नैव च नैव च।
मम सङ्गादिमा देव्यो दशमीं च दशां गताः ॥ ६ ॥
एवं ज्ञात्वा स पप्रच्छ तासां रूपविपर्ययम्।
कथयध्वं महाभागाः किमेतद्रूपव्यत्ययम् ॥ ७ ॥

देव्य ऊचुः

अप्रष्टव्यं महाभाग दैवः सर्वेषु कारणम्।
कालात्मकः स भगवान् भुज्यते सुकृतं यतः ॥ ८ ॥
स एव नित्यकालञ्च पृच्छति स्म तदुत्तरम्।
दुःखार्त्तस्य सुदीनस्य न जल्पन्त्यतिदुःखिताः ॥ ९ ॥
निश्चयार्थं पुनः सोऽथ गोकर्णस्ताः प्रणम्य च।
पृच्छत्याग्रहरूपेण निश्चयं विन्दते यथा ॥
यदि गोप्यं ममार्त्तस्य वैरूप्यं कथयिष्यथ।
अगाधे दुस्तरे प्राणांस्त्यक्ष्याम्यद्य सुदुःखितः ॥
एवमुक्ते तदा तासां मध्ये एकाऽब्रवीदिदम्।
दुःखं तस्य समाख्येयं यो विनाशयते रुजम् ॥ १० ॥
शृणु वत्स वदिष्येऽहं विरूपकारणं[2] यथा।
अस्माकञ्च समुत्पन्नमेकचित्तोऽवधारय ॥ ११ ॥

---

१. चक्रे इति ( ग )। २. विरूपकरणमिति ( ग )।

आस्ते मधुपुरी रम्या नृणां मुक्तिप्रदायिनी ।
अयोध्याधिपतिर्वीरश्चतुरङ्गबलान्वितः ।
चातुर्मास्यं तीर्थसेवी स गतो भक्तिपूर्वकम् ॥ १२ ॥
तत्र देवस्य चागारं विष्णोः पञ्चसमन्वितम् ॥ १३ ॥
आरामवाटिकाः शुभ्राः प्राकारावरवेष्टिताः ।
कूपप्रावर्त्तकोपेताः पुष्पजात्यः सुवासिताः ॥ १४ ॥
फलवन्तो द्रुमास्तस्मिन् सर्वर्त्तु सुमनोहराः ।
तस्याभ्यासे स राजर्षिश्चकारावासमुत्तमम् ॥ १५ ॥
सेवकैर्नाशितः सर्व आरामः सफलद्रुमः ।
प्राकारपरिखा चैव स्थण्डिलप्रतिमा कृता ॥ १६ ॥
बहुधा वार्यमाणैस्तु पापबुद्धिसमाश्रितैः ।
एवं तेन कृतं तत्र सोऽपि दैववशं गतः ॥ १७ ॥
पञ्जरस्थो यथा सिंहः कोऽस्मांस्त्राता भवेदिति[1] ।
विधायाञ्जलिना वक्त्रमश्रुक्लिन्नस्तनान्तरा ।
रुरोदोच्चैः स्वरं[2] दीना हा कष्टमिति जल्पती ॥ १८ ॥
सर्वासां रुदतीनाञ्च कुररीणामिव स्वनः ।
श्रूयते बहुधाकारो गोकर्णोऽप्यतिदुःखितः ॥ १९ ॥
एकैकस्यास्तु चक्रेऽसौ मूर्ध्ना पादाभिवन्दनाम् ।
प्राञ्जलिर्दीनया वाचा सान्त्वयामास ताः शनैः ॥ २० ॥
प्राप्तसंज्ञास्तु ताः सर्वाः गोकर्णोऽप्याह सुस्वनः ।
भविता यदि तत्राहं राजानं तं निवारयम् ।
किं करिष्यामि दैवेन समर्थोऽप्यवसादितः ॥ २१ ॥
इत्युक्तमात्रे वचने ताः सर्वा लब्धचेतसः ।
ऐक्यभावेन ताः सर्वाः पप्रच्छुर्वणिजं प्रति ।
कस्त्वं कथय कस्माच्च स्थानाद्यस्त्वमिहागतः ॥ २२ ॥

गोकर्ण उवाच

गोकर्णोऽहं सुचार्वास्यः सुकपोलः सुलोचनः ।
पूर्वं दृष्टा भवत्यो मे चार्वङ्ग्यश्चारुलोचनाः ॥ २३ ॥
इदानीं मलिना जाता मम शोकविवर्द्धनाः ।
कथयध्वं ममात्मानमत्रतस्तदनन्तरम् ॥ २४ ॥

---

१. ( ग ) पुस्तके इतः पूर्वं गोकर्ण उवाच इति पाठो वर्तते, स तु न सङ्गच्छते ।
२. रुरोद मुखरं दीनेति ( ग ) ।

ज्येष्ठा सोवाच तस्याग्रे पुष्पजात्या स्वलङ्कृताः।
वयमारामसंस्थाश्च स्वामिना परिपालिताः ॥ २५ ॥
हृद्यवेषाः सुचार्वङ्ग्यः पुष्पवृद्धिरताः सदा।
पूर्वं दृष्टाः स्वरूपाश्च विपर्ययमथो शृणु ॥ २६ ॥
राजलोकैः पीडिताश्च छेदनोन्मूलनेन च।
पीडिता भृशमुद्विग्नास्तेनेदानीं सकल्मषाः ॥ २७ ॥
पुष्पमालाविहीनाश्च मूलस्कन्धावशोषिताः।
एवंविधाश्च सम्भूता नष्टसंज्ञाः स्थिता वयम् ॥ २८ ॥
यो देवस्तत्र पाषाणो मृत्पिण्डेष्टकयन्त्रितः।
सोऽत्र सत्त्वमयः साक्षी तस्य पुण्यस्य कर्मणि ॥ २९ ॥
पुण्यं सोदकपूर्णोऽयं तस्यारामस्य सेचकम्।
सरश्चोत्पलपूर्णञ्च कलहंसैर्युतं सदा ॥ ३० ॥
ये ते वृक्षाः फलोपेतास्ते सौवर्णाश्च सत्तम।
एता रक्षन्ति सततमारामं सुखदं नृणाम्।
तस्या नाशाद्यथा नोऽत्र जातेयञ्च विरूपता ॥ ३१ ॥

गोकर्ण उवाच

आरामकर्त्तुः किञ्चात्र फलं भवति यादृशम्।
करणात्कूपदेवानां तस्य पुण्यफलं वद ॥ ३२ ॥

ज्येष्ठोवाच

इष्टापूर्त्तं द्विजातीनां प्रथमं धर्मसाधनम्।
इष्टेन लभते स्वर्गं पूर्त्ते मोक्षञ्च विन्दति ॥ ३३ ॥
वापीकूपतडागानि देवतायतनानि च।
पतितान्युद्धरेद्यस्तु स पूर्त्तफलमश्नुते ॥ ३४ ॥
भूमिदानेन ये लोका गोदानेन च कीर्त्तिताः।
ते लोकाः प्राप्यते पुंभिः पादपानां प्ररोहणे ॥ ३५ ॥
अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दशपुष्पजातिः।
द्वे द्वे तथा दाडिममातुलिङ्गे पञ्चाम्ररोपी[१] नरकं न याति ॥ ३६ ॥
यथा सुपुत्रः कुलमुद्धरेद्धि यथाऽतिकृच्छ्रान्नियमप्रयत्नात्।
तथाऽत्र वृक्षाः फलपुष्पभूताः स्वं स्वामिनं नरकादुद्धरन्ति ॥ ३७ ॥

गोकर्ण उवाच

इन्धनार्थं यदानीतमग्निहोत्रं तदुच्यते।
छायाविश्रामपथिकैः पक्षिणां निलयेन च ॥ ३८ ॥

१. पञ्चाम्रवापीति वा पाठः।

पत्रमूलत्वगादिश्च औषधार्थं तु देहिनाम् ।
उपकुर्वन्ति वृक्षस्य पञ्चयज्ञः स उच्यते ॥ ३९ ॥
गृहकृत्यानि काष्ठानि क्षुद्रजन्तुगृहास्तथा ।
यत्र निर्वर्त्तनं प्रोक्तं भिक्षा पत्रैः समीकृता ॥ ४० ॥
फलन्ति वत्सरे मध्ये द्विवारं शकुनादयः ॥ ४१ ॥
सांवत्सरं पितुर्मातुरुपकारं फलैः कृतम् ।
एवं पुत्र समारोपा एवं तत्त्वविदो विदुः ॥ ४२ ॥

वराह उवाच

एवमुक्तस्तया देव्या मालत्या पुष्पजातया ।
हा कष्टं कथमित्येवं मुमोह च पपात च ॥ ४३ ॥
ताभिराश्वासितो धीमान् ससंज्ञो वारिणोक्षितः ।
आत्मानं कथयास्माकं यस्माच्च त्वमुपागतः ॥ ४४ ॥

गोकर्ण उवाच

वृद्धौ च मातापितरौ साधुभार्याचतुष्टयम् ।
मथुरायां ममैवैतदुद्यानं देवतागृहम् ॥ ४५ ॥
यदि तत्र गतश्चाहं पितृराज्ञोस्तु सन्निधौ ।
इमामापदमापन्ना यूयं तद्वै निवेदये ॥ ४६ ॥
ज्येष्ठा प्रोवाच नेष्यामि यदि ते रोचतेऽनघ ।
अद्यैव मथुरां देवीमवेक्ष्यामोऽधिगम्यताम् ॥ ४७ ॥
विमानप्रतिमाकारं यानमारुह्य सत्वरः ।
दिव्यानीमानि रत्नानि भूषणानि फलानि च ।
गृह्णीष्वोपायनं राज्ञे तस्मै त्वं देह्यनर्घ्यकम् ॥ ४८ ॥
आरुह्य स तथेत्युक्त्वा नमस्कृत्य हरिं च ताः ।
उत्पपात ततः स्थानाद् यत्र राजा व्यवस्थितः ॥ ४९ ॥
राज्ञे निवेदयामास रत्नानि सुबहूनि च ।
राजा दर्शनमात्रेण सन्तुष्टः सन् ब्रवीदिदम् ॥ ५० ॥
स्वागतं ते महाभाग परिपूज्य सुमान्य[1] च ।
अर्द्धासने कृतः प्रीत्या रत्नदो धनदो यथा ॥ ५१ ॥
अस्मात्स्थानादिदानीञ्च अपसर्प्य क्षणान्तरे ।
आश्चर्यं दर्शयिष्यामि कथयिष्यामि चापि भोः ॥५२॥

---

१. स्वमान्य चेति ( ग )।

स तथेति प्रतिश्रुत्य सेनापतिमुवाच ह ।
मुहूर्त्तार्द्धाद्यथा याति सैन्यं तच्च तथा कुरु ॥ ५३ ॥

क्षिप्रं तत्प्रतिपद्यस्व न कालोऽत्यभ्यगाद्यथा ।
कृतं तेन तथा सर्वं यथा राज्ञा प्रभाषितम् ॥ ५४ ॥

ता देव्यो दिव्यरूपाश्च विमानकृतरूपकाः ।
साधु साध्विति गोकर्णं प्रशशंसुः पुनः पुनः ।
वरं दत्त्वा यथाकामं स्वस्तीत्युक्त्वा दिवं ययुः ॥ ५५ ॥

गोकर्णस्तु तदाचख्ये तत्सर्वं नृपतेः सुखी ।
सर्वं तच्चात्मचरितं पूर्त्तधर्मस्य यत् फलम् ॥ ५६ ॥

राज्ञा तस्मै प्रदत्ताश्च ग्रामाश्चैव पुराणि च ।
वस्त्राणि च गजाश्चैव वाजिनोऽन्यद्धनं बहु ॥ ५७ ॥

आश्चर्यं परमं धर्ममारामस्य महत् फलम् ।
श्रुत्वा सर्वं चकारासौ सार्वभौमो महीपतिः ॥ ५८ ॥

इति वाराहपुराणे गोकर्णमाहात्म्ये
द्विसप्तत्यधिकशततमोऽध्यायः ।



## त्रयःसप्तत्यधिकशततमोऽध्यायः

वराह उवाच

तत्र स्थित्वा यथान्यायं गोकर्णः सर्वमङ्गलम् ।
शुकञ्च मातापितरं साधुभार्याचतुष्टयम् ॥ १ ॥
सम्मान्य पूजयामास यथाविभवशक्तितः ।
मथुरावासिभिर्लोकैरुद्यानं कारयत्तदा ॥ २ ॥
स्वयञ्च कृतवांस्तत्र अविघ्नस्य महामखम् ।
भक्ष्यभोज्ये ब्राह्मणेभ्यो ददौ दानानि नित्यशः ॥ ३ ॥
गीतवादित्रमाङ्गल्यं पुत्रवृद्धौ यथोचितम् ।
तत्सर्वं कृतवाँल्लोको गोकर्णस्य महात्मनः ॥ ४ ॥
एकैकञ्च परिष्वज्य प्रणिपत्य यथाक्रमम् ।
मातापित्रोः प्रणम्याथ शिरसा पादवन्दनाम्[1] ॥ ५ ॥
शुकं हृदि समालोक्य प्ररुरोद स वै वणिक् ।
यस्य प्रसादाज्जीवश्च धर्मश्चानुत्तमा गतिः ॥ ६ ॥
विशिष्टेन मया प्राप्तो राज्ञो लाभः सुपुष्कलः ।
शुकपुत्रान्मया प्राप्तमिहलोके परत्र च ॥ ७ ॥
एवं वसन् सुखं तत्र गोकर्णः सह बन्धुभिः ।
शुकनाम्ना कृतं तेन शिवस्यायतनं महत् ॥ ८ ॥
शुकेश्वरं प्रतिष्ठाप्य दिव्यं सत्रं चकार ह ।
ब्राह्मणानां शते द्वे च मिष्टान्नवरभोजने ॥ ९ ॥
शुकसत्रमिति ख्यातं मृतो मुक्तिमवाप सः ।
विमानवरमारुह्य स्वर्गलोकं गतः शुकः ॥ १० ॥
शुकप्रदाने गोकर्णः फलं स्नानस्य सङ्गमात् ।
श्राद्धं सुवर्णं गोदानं कृत्वा तस्मै ददौ च सः ॥ ११ ॥

---

१. पादबन्धनमिति ( ग ) ।

शबरस्य सभार्यस्य तेन स्वर्गं गतस्य ह ।
शुकोदरेण सहितो विमानवरमास्थितः ॥ १२ ॥
एतत्ते कथितं सर्वं मथुरायां महत्फलम् ।
सरस्वतीसङ्गमस्य गोकर्णस्य शिवस्य च ॥ १३ ॥
गोकर्णस्य तु सन्तानमक्षयं धर्मतोऽव्ययम् ।
सम्भूतं स सुखं भुक्त्वा ततो मोक्षमवाप्नुयात् ॥ १४ ॥

इति वाराहपुराणे गोकर्णमाहात्म्ये
त्रयःसप्तत्यधिकशततमोऽध्यायः ।



## चतुःसप्तत्यधिकशततमोऽध्यायः

वराह उवाच

पुनरन्यत्प्रवक्ष्यामि महापातकनाशनम् ।
सङ्गमस्य प्रभावं हि पापिनामपि मुक्तिदम् ॥ १ ॥

अत्रैव श्रूयते पूर्वं ब्राह्मणः संशितव्रतः ।
महानामेति विख्यातः स्थितोऽसौ वनमाश्रितः ॥ २ ॥
स्वाध्याययुक्तो होमे च नित्ययुक्तः स योगवित् ।
जपहोमपरो नित्यं स्वकालं क्षयते च सः ॥ ३ ॥
एवं कर्माणि कुर्वन्स ब्रह्मलोकजिगीषया ।
बहून्यब्दान्यतीतानि ब्राह्मणस्य बने तदा ॥ ४ ॥
तस्य बुद्धिरियं जाता तीर्थाभिगमनं प्रति ।
पुनस्तीर्थजलैरेतत्क्षालयामि कलेवरम् ।
प्रयातो विधिवत् साक्षात् सूर्यस्योदयनं प्रति ॥ ५ ॥
असिकुण्डादितः कृत्वा दक्षिणां कोटिकां ततः ।
तथा चोत्तरकोष्ठ्यां तु तथा मन्माथुरञ्च यत् ॥ ६ ॥
क्रमेण सर्वतीर्थानि स्नात्वा मामपि पुष्करम् ।
गत्वा सर्वाणि तीर्थानि स्नात्वा पूतो भवाम्यहम् ॥ ७ ॥
इति कृत्वा मथुराया निर्जगामाथ स द्विजः ।
कृतपूजानमस्कारः अध्वानं प्रत्यपद्यत ॥ ८ ॥
अध्वप्रपन्नो ददृशे पञ्च प्रेतान् सुभीषणान् ।
अरण्ये कण्टकवृते निर्जने शब्दवर्जिते ॥ ९ ॥
तान्दृष्ट्वा विकृताकारानतितीव्रभयङ्करान् ।
ईषदुत्रस्तहृदयोऽतिष्ठदुन्मील्य चक्षुषी ॥ १० ॥
आलम्ब्य स ततो धैर्यं त्रासमुत्सृज्य दूरतः ।
पप्रच्छ मधुरालापः के यूयं रौद्रमूर्त्तयः ॥ ११ ॥
भवन्तः कर्मणा केन दुष्कृतेन भयावहाः ।
एकस्थानात्सदा यूयं प्रस्थिताः कुत्र वा सदा ॥ १२ ॥

प्रेता ऊचुः

क्षुत्पिपासातुरा नित्यं बहुदुःखसमन्विताः ।
दुर्बुद्ध्या च वृताः सर्वे हीनज्ञाना विचेतसः ॥ १३ ॥

न जानीमो दिशं काञ्चिद्विदिशं चापि चाध्वनि ।
नान्तरिक्षं महीं चापि जानीमो दिवसं तथा ॥ १४ ॥

यद्येतद्दुःखमापन्नं सुखोदर्कफलं भवेत् ।
अप्रकाममिदं भाति भास्करोदयनं प्रति ॥ १५ ॥

अहं पर्युषितो नाम सूचिमुखस्ततः परः ।
शीघ्रगो रोधकश्चैव पञ्चमो लेखकस्तथा ॥ १६ ॥

ब्राह्मण उवाच

प्रेतानां कर्मजातानां नाम्नां वै सम्भवः कुतः ।
किं तत्कारणमेतद्धि यूयं सर्वे सनामकाः ॥ १७ ॥

प्रेत उवाच

अहं स्वादु सदाश्नामि दद्मि पर्युषितं द्विजे ।
एतत्कारणमुद्दिश्य नाम्न पर्युषितं द्विज ॥ १८ ॥

सूचिता बहवोऽनेन विप्राश्चान्नादिकाङ्क्षिणः ।
एतत्कारणमुद्दिश्य सूचिमुखस्ततः परः ॥ १९ ॥

समर्थितो द्विजेनैव शीघ्रं याति यतो हि सः ।
एतत्कारणमुद्दिश्य शीघ्रगस्तेन सोच्यते ॥ २० ॥

एको गृहस्य मध्ये तु भुङ्क्ते द्विजभयेन हि ।
समारुह्योद्विग्नमना रोधकस्तेन चोच्यते ॥ २१ ॥

मौनेनापि स्थितो नित्यं याचितोऽपि लिखेन्महीम् ।
अस्माकमपि पापिष्ठो लेखकस्तेन नाम वै ॥ २२ ॥

मदेन लेखको याति रोधकस्तु ह्यवाक्शिराः ।
शीघ्रगः पङ्गुतां प्राप्तः सूचिमुखस्ततः परम्[१] ॥ २३ ॥

उपितः केवलग्रीवो लम्बौष्ठो बृहतोदरः ।
बृहद्वृषणशुष्काङ्ग पापादेव प्रजायते ॥ २४ ॥

एतत्ते सर्वमाख्यातमात्मवृत्तान्तसम्भवम् ।
यदि ते श्रवणे श्रद्धा पृच्छ चान्यद्यदिच्छसि ॥ २५ ॥

ब्राह्मण उवाच

ये जीवा भुवि तिष्ठन्ति सर्वे आहारजीविनः ।
युष्माकमपि चाहारं श्रोतुमिच्छामि तत्त्वतः ॥ २६ ॥

---

१, एतदर्द्धं ( ग ) पुस्तके नास्ति ।

प्रेता ऊचुः

चतुःचाहारमस्माकं सर्वभूतदयापर।
यच्छ्रुत्वा निन्दसे नित्यं भूयोभूयश्च नित्यशः॥ २७॥

श्लेष्ममूत्रपुरीषेण योषितानां समन्ततः।
गृहाणि त्यक्तशौचानि प्रेता भुञ्जन्ति तत्र वै॥ २८॥

बलिमन्त्रविहीनानि दानहीनानि यानि च।
गुरवो नैव पूज्यन्ते स्त्रीजितानि गृहाणि च॥ २९॥

यानि प्रकीर्णभाण्डानि प्रकीर्णोच्छेषणानि च।
नित्यं च कलहो यत्र प्रेता भुञ्जन्ति तत्र वै॥ ३०॥

अपात्रे प्रतिदत्तानि विधिहीनानि यानि च।
निन्दितानां द्विजातीनां जुगुप्सितकुलोद्भवे॥ ३१॥
जातानां विहितानां च कर्मदुष्कृतकारिणाम्।
तेभ्यो दत्तं तदस्माकमुपतिष्ठति भोजने॥ ३२॥

एतत्पापतरं चान्यद्भोजनं दुष्टकर्मिणा।
निर्विण्णाः प्रेतभावेन पृच्छामः सुदृढव्रत।
प्रेतो यथा न भवति तथा ब्रूहि तपोधन॥ ३३॥

ब्राह्मण उवाच

एकरात्रित्रिरात्रेण कृच्छ्रचान्द्रायणादिभिः।
व्रतैरभ्युद्यतः पूतो न प्रेतो जायते नरः॥ ३४॥
मिष्टान्नपानदाता च सततं श्रद्धयान्वितः।
यतीनां पूजको नित्यं न प्रेतो जायते नरः॥ ३५॥

त्रिरद्भिः पञ्च चैकं वा प्रतिनित्यं तु पोषयेत्।
सर्वभूतदयालुश्च न प्रेतो जायते नरः॥ ३६॥
देवातिथिषु पूजासु गुरुपूजासु नित्यशः।
रतो वै पितृपूजायां न प्रेतो जायते नरः॥ ३७॥

जितक्रोधो ह्यमात्सर्यस्तृष्णासङ्गविवर्जितः।
क्षमायुक्तो दानशीलो न प्रेतो जायते नरः॥ ३८॥
एकादशीं सितां कृष्णां सप्तमीं वा चतुर्दशीम्।
उपवासपरो नित्यं न स प्रेतोऽभिजायते॥ ३९॥

गां ब्राह्मणं च तीर्थानि पर्वतांश्च नदीस्तथा।
देवांश्च वन्दते नित्यं न प्रेतो जायते हि सः॥ ४०॥

प्रेता ऊचुः

त्वत्तस्तच्छ्रुतमस्माभिर्यो न प्रेतोऽभिजायते ।
प्रेतस्तु जायते केन[1] तद्वद त्वं महामुने ॥ ४१ ॥

विप्र उवाच

शूद्रान्नेन तु भुक्तेन ब्राह्मणो म्रियते यदि ।
तेनैव उदरस्थेन स प्रेतो जायते ध्रुवम् ॥ ४२ ॥
नग्नकापालिपाषण्डमेलनासनभोजनैः[2] ।
मनुष्यः प्रेततां याति स्पर्शेन सुतरां तथा[3] ।
पूर्वपुण्यं विनश्येत प्रेतो भवति नित्यशः[4] ॥ ४३ ॥
पाषण्डाश्रमसंस्थश्च मद्यपः पारदारिकः ।
वृथामांसरतो नित्यं स च प्रेतोऽभिजायते ॥ ४४ ॥
देवस्वं ब्राह्मणस्वञ्च गुरोर्द्रव्यं हरेत्तु यः ।
कन्यां ददाति शुल्केन स च प्रेतोऽभिजायते ॥ ४५ ॥
मातरं पितरं भ्रातृभगिन्यौ[5] च स्त्रियं सुतम् ।
अदुष्टान् यस्त्यजेत् सोऽपि प्रेतो भवति च ध्रुवम् ॥४६॥
अयाज्ययाजनाच्चैव याज्यानां परिवर्जनात् ।
रतो वा[6] शूद्रसेवायां स प्रेतो जायते नरः ॥ ४७ ॥
ब्रह्महा च कृतघ्नश्च गोघ्नोऽतिपञ्चपातकी ।
भूमिकन्याहृती चैव[7] स प्रेतो जायते नरः ॥ ४८ ॥
गुरोर्धर्मोपदेष्टुश्च नित्यं हितमभीप्सतः ।
न करोति वचस्तस्य स प्रेतो जायते नरः ॥ ४९ ॥
असद्भ्यः प्रतिगृह्णाति नास्तिकेभ्यो विशेषतः ।
स पापो जायते प्रेत आहारादिविवर्जितः ॥ ५० ॥

प्रेता ऊचुः

य एतत्कर्म कुर्वन्ति मूढाऽधर्मपरायणाः ।
विरुद्धकारिणः पापास्तेषां काञ्चिद्गतिं वद ॥ ५१ ॥

---

१. केव ( को वा ? ) इति ( ग )। २. संलापासनभोजनैः' इति ( ग )।
३. संस्पर्शेन सुदांस्तथेति ( ग )।
४. न संशय इति वा ( छन्दोदोषयुक्तः ) पाठान्तरः ।
५. भ्रातॄन् भगिनीश्चेति ( ग )। ६. रतो वै इति ( ग )।
७. भूमिकन्यापहृति चेति ( ग )।

ब्राह्मण उवाच

ये धर्मविमुखा मूढा दयादानविवर्जिताः ।
तेषां गतिर्भवेदेका मथुरायां तु सङ्गमे ॥ ५२ ॥
श्रवणद्वादशीयोगे मासि भाद्रपदे तथा ।
वामनं तत्र देवं तु पूजयेज्जुहुयात्तथा ।
सुवर्णमन्नं वस्त्रं च छत्रोपानहसंयुतम् ॥ ५३ ॥

तत्र स्नात्वा पितॄंस्तर्प्य दत्त्वा करकमेव च ।
न ते प्रेता भविष्यन्ति मार्गस्थो यो नमस्यते ।
विमानवरमारुह्य विष्णुलोकं स गच्छति ॥ ५४ ॥

तत्र तीर्थे नरः स्नातो हृष्टपुष्टो यथाश्रुतः ।
ध्यातश्च कीर्त्तितो वापि तेन गङ्गावगाहिता ॥ ५५ ॥
तीर्थस्यैव तु माहात्म्यं प्रेतो भूत्वा शृणोति यः ।
तस्याक्षयपदं विष्णोर्भवतीति मया श्रुतम् ॥ ५६ ॥

प्रेता ऊचुः

अस्माकं वद कल्याणं व्रतस्यास्य विधिं परम् ।
येन वै क्रियमाणेन प्रेतत्वं च विमुच्यते[1] ॥ ५७ ॥

ब्राह्मण उवाच

एवमेव व्रतस्यास्य विधानं कर्मसंहितम् ।
पुराणं कथितं राज्ञे मान्धात्रे पृच्छते पुरा ॥ ५८ ॥

वसिष्ठेन महाभागा शृणुध्वं कथयाम्यहम् ।
प्रेतानां मोक्षणं पुण्यं गतिप्रवरदायकम् ॥ ५९ ॥
मासि भाद्रपदे शुद्धा द्वादशी श्रवणान्विता ।
तस्यां दत्तं हुतं स्नानं सर्वं लक्षगुणं भवेत् ॥ ६० ॥

सङ्गमे च पुनः स्नात्वा पूजयित्वा तु वामनम् ।
कलशं विधिना दत्त्वा तस्य पुण्यफलं शृणु ॥ ६१ ॥
कपिलानां शतं दत्त्वा हिरण्योपस्कराञ्चितम् ।
तेन यत्फलमाप्नोति तद्द्वादश्यामखण्डितम्[2] ॥ ६२ ॥

राक्षसत्वं न गच्छेत श्रवणद्वादशीव्रतात् ।
स्वर्गे च वसते तावद्यावदिन्द्राश्चतुर्दश ॥ ६३ ॥

---

१. प्रेतभावश्च मुच्यते इति ( ग ) ।
२. हिरण्योपस्करान्वितम् इति ( ग ) ।

ततः स्वर्गात्परिभ्रष्टो ब्राह्मणो वेदपारगः।
जातिस्मरो महायोगी मोक्षमार्गपरायणः[1] ॥ ६४ ॥
ध्यानयोगेन भावेन मुक्तो यात्यपुनर्भवम्।
करकञ्च सुसम्पीतं सान्नं रत्नसमन्वितम् ॥ ६५ ॥
यथालाभोपपन्नेन सौवर्णो वामनः कृतः।
उपानच्छत्रसंयुक्तो विधिमन्त्रपुरःसरः ॥ ६६ ॥
कृत्वा च विधिवत्तस्य स्नानपूजादिकं नरः।
मन्त्रैस्तथाविधैर्होमैर्ब्राह्मणं चोपपादयेत् ॥ ६७ ॥

आवाहनम्

आगच्छ वरदानं तु श्रीपते मदनुग्रहात्।
सर्वगोपिनिजांशेन स्थानमेतदलङ्कुरु ॥ ६८ ॥

नक्षत्रम्

यत्त्वं नक्षत्ररूपेण द्वादश्यां नभसि स्थितः।
तन्नक्षत्रमहं वन्दे मनोवाञ्छितसिद्धये ॥ ६९ ॥

स्नानम्

नमः कमलनाभाय कमलालय केशव।
कमूर्त्ते सर्वतोऽव्यापि नारायण नमोऽस्तु ते ॥ ७० ॥

पूजा

सर्वव्यापिजगद्योने नमः सर्वमयाच्युत।
श्रवणाद्वादशीयोगे पूजां गृह्णीष्व केशव ॥ ७१ ॥

धूपः

धूपोऽयं देवदेवेश शङ्खचक्रगदाधर।
अच्युतानन्त गोविन्द वासुदेव नमोऽस्तु ते ॥ ७२ ॥

दीपः

तेजसा सर्वलोकाश्च विवृताः सन्तु तेऽव्ययः।
त्वं हि सर्वगतं तेजो जनार्दन नमोऽस्तु ते ॥ ७३ ॥

नैवेद्यम्

अदितेर्गर्भमाधाय वैरोचनिशमाय च।
त्रिभिः क्रमैर्जिता लोका वामनाय नमोऽस्तु ते ॥ ७४ ॥

अर्घ्यम्

देवानां सम्मतश्चापि योगिनां परमा गतिः।
जलशायी जगद्योने अर्घ्यं मे प्रतिगृह्यताम् ॥ ७५ ॥

---

१. मोक्षधर्मपरायण इति ( ग )।

होमः

हव्यभुक् हव्यकर्ता त्वं होता हव्यं त्वमेव च ।
सर्वमूर्त्ते जगद्योने नमस्ते केशवाय इति स्वाहा ॥७६॥

दक्षिणायाम्

हिरण्यमन्नं त्वं देव जलवस्त्रमयो भवान् ।
उपानच्छत्रदानेन प्रीतो भव जनार्द्दन ॥ ७७ ॥

वामनस्तुतौ

पर्ज्जन्यो वरुणः सूर्यः सलिलं केशवः शिवः ।
अग्निर्वैश्रवणो देवः पापं हरतु मेऽव्ययः ॥ ७८ ॥

करकदाने

अन्नं प्रजापतिर्विष्णुरुद्रेन्द्रचन्द्रभास्कराः ।
अन्नं त्वष्टा यमोऽग्निश्च[1] पापं हरतु मेऽव्ययः ॥ ७९ ॥

यजमाने

वामनोबुद्धिदाता च द्रव्यस्थो वामनः स्वयम् ।
वामनस्तारकोभाभ्यां वामनाय नमोऽस्तु ते ॥ ८० ॥

द्विजप्रतिग्रहे

वामनं प्रतिगृह्णानि वामनो मे प्रयच्छति ।
वामनस्तारकोभाभ्यां वामनाय नमो नमः ॥ ८१ ॥

गोदाने

कपिलाङ्गेषु तिष्ठन्ति भुवनानि चतुर्द्दश ।
दत्त्वा कामदुघां लोका भवन्ति सफला नृणाम् ॥ ८२ ॥

विसर्जनम्

मम पापच्छिदे तुभ्यं देवगर्भा सुपूजिता ।
मया विसर्जितो देव स्थानमन्यदलङ्कुरु[2] ॥ ८३ ॥

एवं विद्वांस्तु द्वादश्यां यो नरः श्रद्धयान्वितः ।
यत्र तत्र नमस्ते तु कृत्वा फलमवाप्यते ॥ ८४ ॥

ब्राह्मण उवाच

यस्तु सारस्वते तीर्थे यमुनायाश्च सङ्गमे ।
करोति विधिनानेन तस्य पुण्यं शतोत्तरम् ॥ ८५ ॥
मयापि श्रद्धया चैतत्कालं तीर्थस्य सेवनम् ।
क्षेत्रसंन्यासरूपेण कृतं भक्तिसमन्वितम् ।
तेन यूयं न शक्ता मां बाधितुं पापकर्मिणः ॥ ८६ ॥

---

१. अन्नं त्वष्टयमाग्निश्चेति ( ग ) । २. 'स्थानमेतदलङ्कुरु' इति ( ग )।

श्रवणद्वादशीयोगे व्रतं तिथिसमन्वितम् ।
तावद्व्रतं तु कर्त्तव्यं यावदेकं क्षयं व्रजेत् ॥ ८७ ॥
तीर्थस्यैव प्रभावो हि प्रत्यक्षमिह दृश्यते ।
श्रवणाद्वो गतिः साक्षात्साधु लक्ष्यामहेऽधुना ॥ ८८ ॥

वराह[1] उवाच

एवं ब्रुवति विप्रे तु आकाशे दुन्दुभिस्वनः ।
पुष्पवृष्टिः पतद्भूमौ देवैर्मुक्ता सहस्रशः ॥ ८९ ॥
प्रेतानां तु विमानानि आगतानि समन्ततः ।
देवदूत उवाचेदं प्रेतानां शृण्वतां तदा ॥ ९० ॥
अस्य विप्रस्य सम्भाषात्पुण्यसत्कीर्त्तितेन च ।
प्रेतभावविमुक्ताः स्थ तीर्थस्य श्रवणादपि ॥ ९१ ॥
तस्मात्सर्वप्रयत्नेन [2]सता सम्भाषणं वरम् ।
कर्त्तव्यतीर्थभावश्च व्रतभावश्च भाविनि[3] ॥ ९२ ॥
तीर्थाभिषेकिपुरुषाद्यथा तेषां दुरात्मनाम् ।
प्रेतानामक्षयः स्वर्गः सरस्वत्याश्च सङ्गमात् ॥ ९३ ॥
प्राप्तं तीर्थप्रभावस्य श्रवणान्मुक्तिदं फलम् ।
तिलकं सर्वधर्माणां पञ्च प्रेतत्वमुक्तिदम् ॥ ९४ ॥
यः पठेत्परया भक्त्या शृणुयाद्‌ भक्तितत्परः ।
करोति श्रद्धया युक्तो न प्रेतो जायते नरः ॥ ९५ ॥
पिशाचसंज्ञकं नाम तीर्थं त्रैलोक्यविश्रुतम् ।
यस्य श्रवणमात्रेण न प्रेतो जायते नरः ॥ ९६ ॥

इति वाराहपुराणे सर्वतीर्थे यमुनासङ्गमप्रभावो नाम
चतुःसप्तत्यधिकशततमोऽध्यायः ।



---

१. 'श्रीवराह' इति ( ग ) । २. 'सतां' इति तु समीचीनः ।
३. भामिनीति ( ग ) ।

## पञ्चसप्तत्यधिकशततमोऽध्यायः

वराह[1] उवाच

शृणु चान्यद्वरारोहे कृष्णगङ्गासमुद्भवम् ।
यमुनास्रोतसि स्नात्वा कृष्णद्वैपायनो मुनिः ॥ १ ॥
ध्यात्वा मनसि गङ्गां तां कालिन्दीं पापहारिणीम्।
नित्यकालं च[2] कुरुते तत्र तीर्थजलाप्लुतिम् ॥ २ ॥
सोमवैकुण्ठयोर्मध्ये कृष्णगङ्गेति कथ्यते ।
यत्रातप्यत स व्यासो मथुरायां स्थितोऽमलः ॥ ३ ॥
तत्राश्रमपदं दिव्यं मुनिप्रवरसेवितम् ।
आगच्छन्ति सदा तत्र चातुर्मास्यमुपासितुम् ।
मुनयो वेदतत्त्वज्ञा ज्ञानिनः शंसितव्रताः ॥ ४ ॥
श्रौतस्मार्त्तपुराणेषु सन्देहो यस्य कस्यचित् ।
व्यासोऽपनोदयामास नानावाक्यैः सतां गतिः ॥५ ॥
कालञ्जरे महादेवं तत्र तीर्थपतिं शिवम् ।
यस्य सन्दर्शनादेव कृष्णगङ्गाफलं भवेत् ॥ ६ ॥
तत्र स्थितो द्वादशाब्दव्रती सङ्गविवर्जितः ।
पक्षाहारी च फलभुग् दर्शे वै पौर्णमासिके ॥ ७ ॥
गत्वा हिमालयं चासौ बदरीमभितो गतः ।
व्यासश्चर्यापरस्तत्र ध्यानयोगपरायणः ।
त्रिकालदर्शी शुद्धात्मा सिद्धत्वं प्राप्नुयात्प्रभुः ॥ ८ ॥
तस्याश्रमपदस्थस्य यद्दृष्टं ज्ञानचक्षुषा ।
प्रत्यक्षं कृष्णतीर्थे तु पाञ्चाल्यकुलतन्तुना ॥ ९ ॥
पाञ्चाल्योऽथ द्विजः कश्चिन्नाम्ना वसुरिति श्रुतः।
दुर्भिक्षपीडितोऽत्यन्तं सभार्यो दक्षिणाङ्गतः ॥ १० ॥
शिवनद्या दक्षिणे तु कूले सुवरपत्तने ।
निवासमकरोत्तत्र ब्राह्मणीं वृत्तिमाश्रितः ॥ ११ ॥
तत्रस्थस्य तदा पञ्च पुत्रा कन्याभवत्तदा ।
ब्राह्मणाय च दत्ता सा धनधान्यसमन्विता ॥ १२ ॥

---

१. श्रीवराह इति ( ग ) । २. 'तु' इति ( ग ) ।

स द्विजः कालसम्पन्नः सभार्यस्तत्र संस्थितः ।
कन्याऽस्थीनि तु संगृह्य मथुरामाजगाम ह ॥ १३ ॥
श्रुत्वा पुराणे पतितमर्द्धचन्द्रेऽस्थिपातनम् ।
स्वर्गे वसति स नित्यं यस्यास्थि ह्यर्द्धचन्द्रके ॥ १४ ॥
तीर्थयात्राप्रसङ्गेन लोकैः प्रचलिता बहिः ।
तेन सार्थेन सा कन्या मथुरायां जगाम च ॥ १५ ॥
कनिष्ठा भगिनी तेषां बालरण्डा बभूव ह ।
सुरूपा सुकुमाराङ्गी नीलकुञ्चितमूर्द्धजा ॥ १६ ॥
कदलीकाण्डसङ्काशे तस्या ऊरू समांसले ।
सुश्लिष्टाङ्गुलिपादा तु नखास्ताम्रोज्ज्वलाः शुभाः॥ १७॥
गम्भीरा दक्षिणावर्त्ता नाभिस्त्रिवलिशोभिता ।
क्षामोदरी समकुक्षिः पीनोन्नतपयोधरा ॥ १८ ॥
कम्बुग्रीवा संवृतास्या सुदती स्वधराहनुः ।
सुनखी स्वक्षिणी सुभ्रूः सुप्रमाणसुभाषिणी ॥ १९ ॥
तेन तेनैव सम्पूर्णरूपेण च तिलोत्तमा ।
यं यं पश्यति चार्वङ्गी यस्तांश्चैव प्रपश्यति ।
स स चित्र इव न्यस्तो विचेता जायते नरः ॥ २० ॥
एवंविधा तत्र तत्र तीर्थस्नानपरायणा ।
दृष्टा वेश्यासमूहेन प्रागल्भेन तदा क्वचित् ॥ २१ ॥
कान्यकुब्जाधिपो राजा क्षत्रधर्मे व्यवस्थितः ।
तस्य सत्रं सर्वकालं देवगर्त्तेश्वरे शिवे ॥ २२ ॥
प्रवर्त्तते सुवित्ताढ्यं प्रेक्षणीयं मनोरमम् ।
वादित्राणि च गीतानि शक्रस्य भवने यथा ॥ २३ ॥
तस्य देवस्य या वेश्यास्ताभिः सा प्रतिलोभिता ।
गीतनृत्यादिषु रता तासां धर्ममुपागता ॥ २४ ॥
अल्पैर्दिवसैः सा[1] साध्वी असाध्वीभिः परीवृता ।
एवं वसति सा बाला देवस्यास्य परिग्रहा ।
यथासुखं समेताभिर्विहरन्ती दिने दिने ॥ २५ ॥

इति वाराहपुराणे मथुरामाहात्म्ये कृष्णगङ्गाकालिञ्जर-
प्रभावे पञ्चसप्तत्यधिकशततमोऽध्यायः ।



---

१. 'ततोऽल्पैर्दिवसैः' इति ( ग ) ।

# षट्सप्तत्यधिकशततमोऽध्यायः

वराह उवाच

पञ्चानां तु कनिष्ठो यः पञ्चालो ब्राह्मणात्मजः ।
वाणिज्यभाण्डमादाय समूहस्य प्रसङ्गतः ॥ १ ॥
सार्थेन निष्ठितः सोऽथ धनवान् रूपवांस्ततः[१] ।
क्रमेण ते सर्वदेशान्विषयान् पर्वतान्नदीः ॥ २ ॥
आक्रम्य तत्र संप्राप्ता यत्र सा मथुरा पुरी ।
आवासं कारयामासुः प्रभूतयवसेन्धने ॥ ३ ॥
तस्मिन्स्थाने स पाञ्चालः[२] प्राप्तस्तु पुरुषैः सह ।
तस्मिंस्तीर्थवरे स्नाप्य वस्त्रालङ्कारभूषितः ॥ ४ ॥
ऐश्वर्यमदभावेन यानेन महता तदा ।
देवतादर्शनं कृत्वा दत्त्वा दानान्यनेकशः ॥ ५ ॥
कौतुकार्थं ततो गत्वा देवं गर्त्तेश्वरं तदा ।
तिलोत्तमायास्तद्रूपं दृष्ट्वा मोहवशं गतः ॥ ६ ॥
धात्रेयिकायास्तस्याश्च बहुमानपुरःसरम् ।
वस्त्राणि बद्धरूपाणि कटकानां शतानि च ।
हारा रत्नमयास्तद्वद्ददौ लोभविमोहितः ॥ ७ ॥
ददौ अगुरुसारं च सकर्पूरं सचन्दनम् ।
तस्या गृहवरे तत्र वसति स्म दिने दिने ॥ ८ ॥
प्रहरार्द्धे[३] दिने जाते ततः स्वशिविरं ययौ ।
स्नात्वा तीर्थे समीपे च कृष्णगङ्गोद्भवे सदा ॥ ९ ॥
एवं नित्यं प्रसक्तो हि करोति द्रव्यगर्वितः ।
एवं तु कुर्वतस्तस्य मासषट्कं ततो गतम् ॥ १० ॥
अथैकदा समायातः स्नातुं तत्र सुमन्तुना ।
स्वाश्रमस्थेन दृष्टः स कृमियुक्तः समागतः ॥ ११ ॥
कृमयो रोमकूपेभ्यः पतमाना अनेकशः ।
यावत्स्नानं स कुरुते पतते राशिमात्रकः ।
स्नाने कृते नश्यति च सुरूपश्चाभिजायते ॥ १२ ॥

---

१. 'दर्पवांस्ततः' इति वा पाठः । २. पाश्चात्य इति ( ग ) ।
३. 'अथ दीर्घे' इति वा पाठः ।

एवं सुमन्तुना दृष्टमाश्चर्यं बहुवासरम् ।
सुमन्तुस्तर्कयामास कोऽयं कस्यात्मजो युवा ।
इति चिन्तासमायुक्तस्तमपृच्छद्विशङ्कितः ॥ १३ ॥
कस्त्वं कस्यासि सुभग का जातिः कश्च ते पिता ।
किं करोषि दिवारात्रौ ब्रूहि त्वं पृच्छतो मम ॥ १४ ॥

पाञ्चाल उवाच

पाञ्चालो ब्राह्मणसुतो वाणिज्यं च समाश्रितः ।
दक्षिणापथदेशाच्च मथुरायां समागतः ॥ १५ ॥
निशामुषित्वा शिविरे प्रातस्तीर्थं समाश्रितः ।
स्नात्वा महेश्वरं दृष्ट्वा त्रिगर्त्तेश्वरसंज्ञितम् ।
कालिञ्जरं भवत्पादौ गच्छामि शिविरं ततः ॥ १६ ॥

सुमन्तुरुवाच

आश्चर्यं तव देहेऽस्मिन्नित्यं पश्यामि निःसृतम् ।
अस्नाते कृमिसम्पूर्णं स्नाते निर्मलवर्चसम् ॥ १७ ॥
अस्ति किञ्चिन्महत्पापं तव प्रच्छन्नसम्भवम् ।
अस्यां तीर्थप्रभावेण स्नानाद्गच्छति दूरतः ।
कालिञ्जरस्य संस्पर्शाच्छुद्धं देहश्च दृश्यते ॥ १८ ॥
निरूप्य कथयास्माकं यत्ते प्रच्छन्नकिल्बिषम् ।
तीर्थमाहात्म्यभावं च दृष्ट्वा पृच्छामि ते हितम्॥१९॥
इति तस्य मुनेः श्रुत्वा त्रिकालज्ञस्य भाषितम् ।
किञ्चिन्नोवाच पृष्टोऽपि एवमेव गतः पुनः ॥ २० ॥
तस्यामासीत्[1] स एकान्ते तां तु पप्रच्छ सादरम् ।
का त्वं कस्यासि सुभगे कश्च देशः प्रियंवदे ।
किं तत्कारणमुद्दिश्य वसस्यत्र सुखं सदा ॥ २१ ॥
इति निर्बन्धपृष्टा सा किञ्चिन्नोवाच तं प्रति ।
पुनः पुनश्च पप्रच्छ सा प्रोवाच न किञ्चन ॥ २२ ॥
किञ्चित्कालं समास्थाय तेनोक्तं हि प्रियां प्रति ।
त्यक्ष्यामि हि प्रियान् प्राणान् यदि सत्यं न वक्ष्यसि ॥२३॥
निर्बन्धं तस्य तज्ज्ञात्वा दुःखेनोवाच तं प्रति ।
पितरौ भ्रातरश्चेति देशं ज्ञातिं ततः कुलम् ॥ २४ ॥

---

१. 'तस्यां रात्र्यामिति' वा पाठः ।

पञ्चालनगरी रम्या गङ्गायाश्चोत्तरे तटे ।
तस्यां तौ पितरौ मह्यं वसतश्च यदृच्छया ॥ २५ ॥
दुर्भिक्षपीडिते राष्ट्रे गतौ तौ दक्षिणापथम् ।
नर्मदादक्षिणे कूले ब्राह्मणानां पुरोत्तमे ॥ २६ ॥
तस्मिन् स्थाने पितुर्मह्यं पञ्च पुत्रा मया सह ।
जातास्तेषामहं षष्ठी कनिष्ठा विधवाऽभवम् ॥ २७ ॥
योऽसौ कनिष्ठको भ्राता मम ज्येष्ठश्च पञ्चमः ।
बाल एव गतो देशं धनतृष्णाप्रलोभितः ॥ २८ ॥
तस्मिन् गतेऽथ पितरौ कालधर्ममुपेयतुः ।
तीर्थेऽस्मिन्नस्थिपातार्थमहं सार्थैः सहागता ॥ २९ ॥
अत्र स्नानपरा नित्यं देवब्राह्मणवन्दनम् ।
कुर्वन्ती वशमापन्ना आसां यस्या ममेदृशम् ।
आश्रिता कुलटाधर्मं कुलनाशो मया कृतः ॥ ३० ॥
कुलद्वये[1] च पुरुषा एकविंशतिसंख्यया ।
नीता नरकमत्युग्रं मया पापिष्ठया भृशम् ॥ ३१ ॥
एवं सा तस्य तत्सर्वं कथयित्वा तिलोत्तमा ।
रुरोद सुस्वरं दीना स्मृत्वा पूर्वं कुलं वरम् ।
विलप्य बहुधा रात्रौ संस्मृत्य स्वं विचेष्टितम् ॥ ३२ ॥
तस्या विलपितं श्रुत्वा स्त्रीजनः स तदागतः ।
सान्त्वयामास तां बालां किं भद्रे रुदितं तव ॥ ३३ ॥
एतच्छ्रुत्वा स पाञ्चाल्यो मूर्च्छितो धरणीं गतः ।
ताः स्त्रियस्तं समाश्वास्य पाञ्चाल्यं परिवार्य च ॥ ३४ ॥
तैस्तैरुपायैर्विविधैर्जीवयित्वा च तं नरम् ।
लब्धप्राणं तु तं दृष्ट्वा पप्रच्छुर्मोहकारणम् ॥ ३५ ॥
ततस्तेन सवृत्तान्तं कथितं च कुलं महत् ।
तिलोत्तमासहायानां स्त्रीणामग्रे सविस्तरम् ॥ ३६ ॥
ततः स विमना जातो अगम्यागमनेन च ।
प्रायश्चित्ते मतिरभून्निर्विण्णस्य दुरात्मनः ॥ ३७ ॥
ब्रह्महा च सुरापश्च[2] ब्राह्मणो यदि जायते ।
प्रायश्चित्तं विनिर्दिष्टं मुनिभिर्देहनाशनम् ॥ ३८ ॥
मातरं गुरुपत्नीञ्च स्वसारं पुत्रिकां वधूम् ।
गत्वा तु प्रविशेदग्निं नान्या शुद्धिर्विधीयते ॥ ३९ ॥

१. कुलटयेति पाठान्तरम् । २ सुरापी चेति (ग) ।

ब्रह्मघ्नश्च सुरापश्च स्त्रीघ्नश्च गुरुतल्पगः ।
अगम्यागमनं कृत्वा एषां स समतामियात् ॥ ४० ॥
इति श्रुत्वा तु पाञ्चाली ज्येष्ठभ्रातरमेव तम् ।
द्विजेभ्यः प्रददौ सर्वमङ्गलग्नं विभूषणम् ॥ ४१ ॥
रत्नं वस्त्रं धनं धान्यं यत्किञ्चित्तत्र संस्थितम् ।
तत्सर्वं ब्राह्मणेभ्यश्च दत्त्वाशेषं ददौ धनम् ॥ ४२ ॥
कालिञ्जरस्य भूषार्थमारामार्थं विशेषतः ।
कृष्णगङ्गोद्भवे तीर्थे चितां कृत्वा विधानतः ।
आत्मनश्च विशुद्ध्यर्थं प्रजज्वाल हुताशनम् ॥ ४३ ॥
इति निश्चित्य तत्रैव स्नात्वा देवं प्रणम्य च ।
पञ्चालोऽपि विधानेन नमस्कृत्य मुनिं गुरुम् ॥ ४४ ॥
सुमन्तुं च महाभागमुपविश्याग्रतश्च सः ।
मरणायोपयोग्यानि कृत्वा कर्माणि तत्र च ॥ ४५ ॥
माथुरान् स समाहूय दत्त्वा दानानि सर्वशः ।
क्रीत्वा ग्रामांश्च तत्रैव ब्राह्मणेभ्यो ददौ तदा ॥ ४६ ॥
ईशावास्यं जपं दिव्यं जापकेभ्यः शृणोति च ।
तेभ्योऽपि प्रददौ द्रव्यं सत्रार्थं च विभागशः ॥ ४७ ॥
और्ध्वदेहिकभागार्थं कल्पयित्वा यथाविधि ।
स्नात्वा तीर्थे च कृष्णस्य देवं दृष्ट्वा प्रणम्य च ।
कालिञ्जरस्य पूजार्थं सत्रार्थं परिकल्प्य च ॥ ४८ ॥
देवालयं च तत्रैव कृत्वा सन्दिश्य सार्थकान् ।
सुमन्तोः प्रवरस्याथ पादौ जग्राह धर्मवित् ॥ ४९ ॥
देवज्ञानं च ते दिव्यमद्भुतं लोमहर्षणम् ।
अगम्यागमनादेव[1] पापं जातं मम प्रभो ॥ ५० ॥
आगतोऽहं यदारभ्य मथुरायां ततो गुरो ।
भगिन्या सह संयोगो जातोऽयं कुलनाशकः ॥ ५१ ॥
त्वया निर्मलदृष्ट्या च वीक्षितोऽहं पुरा मुने ।
कृमयो मम गात्रात्तु निर्गच्छन्तो हि नित्यदा ॥ ५२ ॥
कृष्णगङ्गाप्रभावेण पुनर्निर्मलतां गतम् ।
तत्सर्वं हि त्वया दृष्टं पृष्टश्चाहं पुनः पुनः ।
तत्सत्यं मम सञ्जातमगम्यागमपातकम् ॥ ५३ ॥

---

१. अगम्यागमनादेवमिति ( ग ) ।

तत्पापस्य विशुद्ध्यर्थं देहत्यागं करोमि वै ।
अनुज्ञां देहि भो स्वामिंस्तव पादाभिवन्दने ॥ ५४ ॥
विश्राव्य तस्य तत्पापं[1] चिता दीप्य घृतोक्षिताम् ।
प्रवेष्टुकामं तत्राग्नौ खे प्रोवाचाशरीरिणी ॥ ५५ ॥
मैवं कार्षीः साहसं च विपाप्मानौ सतश्च वः ।
कस्माद्वा कस्य सन्त्रासान्मरणे कृतनिश्चयौ ॥ ५६ ॥
यत्र कृष्णस्य सञ्चारः क्रीडितं च यथासुखम् ।
चक्राङ्कितपदा तेन स्थानं ब्रह्मसमं शुभम् ॥ ५७ ॥
अन्यत्र हि कृतं पापं तीर्थमासाद्य गच्छति ।
तीर्थे च यत्कृतं पापं वज्रलेपो भविष्यति ॥ ५८ ॥
द्वावेतौ च यथावश्यं गङ्गासागरसङ्गमे ।
सकृदेव नरः स्नात्वा मुच्यते ब्रह्महत्यया ॥ ५९ ॥
पृथिव्यां यानि तीर्थानि सर्वाण्येवाभिषेचनात् ।
तत्पञ्चतीर्थस्नानेन समं नास्त्यत्र संशयः ॥ ६० ॥
एकदश्यां च विश्रान्तौ द्वादश्यां सौकरे तथा ।
त्रयोदश्यां नैमिषे च प्रयागे च चतुर्दशीम् ॥ ६१ ॥
कार्त्तिक्यां पुष्करे चैव कार्त्तिकस्य सितासिते ।
कालेष्वेषु नरः स्नात्वा सर्वपापं व्यपोहति ॥ ६२ ॥
मथुरायां च तीर्थेभ्यो विश्रान्तः पञ्चसंज्ञके ।
सरस्वत्यामसिकुण्डे तथा कालिञ्जरस्य च ॥ ६३ ॥
पञ्चतीर्थाभिषेकाच्च यत्फलं लभते नरः ।
कृष्णगङ्गादशगुणं लभते च दिने दिने ॥ ६४ ॥
ज्ञानतोऽज्ञानतो वापि यत्पापं समुपार्जितम् ।
सुकृतं दुष्कृतं चापि मथुरायां प्रणश्यति ॥ ६५ ॥
वराहेण पुरा चेदं पृथिव्यै कथितं शुभम् ।
तीर्थानां गुणमाहात्म्यं महापातकनाशनम् ॥ ६६ ॥
सर्वदेवमयो योऽसौ सर्ववेदमयस्तथा ।
अनन्तश्चाप्रमेयश्च यस्य चान्तो न विद्यते ॥ ६७ ॥
यस्य श्रोत्रैकदेशे तु आकाशो लेशमात्रकः ।
विलीनो नैव ज्ञायेत तस्य देवस्य का कथा ॥ ६८ ॥
तथा नयनयोः प्रान्ते तेजो लीनं न दृश्यते ।
निःश्वासे च विलीनोऽसौ वायुर्नष्टो न दृश्यते ॥६९॥

---

[1] 'एवं विश्राव्य तत्पापमिति' ( ग ) ।

खुराग्रेषु तथा लीनाः समुद्राः सप्त च प्रभोः ।
दृश्यन्ते स्वेदसङ्काशा नाममात्रा यथा पुरा ॥ ७० ॥
रोमकूपान्तरे लग्ना सशैलवनकानना ।
नष्टा पृथ्वी न लभ्येत तस्य देवस्य कोऽधिकः॥ ७१ ॥
सोऽत्र तीर्थपरित्राणं कुर्वन् देवः स्वयं प्रभुः ।
वराहः संस्थितः साक्षात्पुराणं येन सूचितम् ॥ ७२ ॥
पृथिव्याः सर्वसन्देहान् स्फोटयामास योऽव्ययः ।
तस्य सन्दर्शनादेव सर्वपापविवर्जितः ।
तत्क्षणादेव जायेत नात्र कार्या विचारणा ॥ ७३ ॥
ज्यैष्ठशुक्लस्य नवम्यां स्नात्वा गङ्गोदके नरः ।
शूकरे तु[१] त्रिरात्रं च मानवो दीपदः सकृत् ।
दत्त्वा दानं यथाशक्त्या सर्वपापैः प्रमुच्यते ॥ ७४ ॥
कलिञ्जरे च द्वादश्यां स्नात्वा पूज्य च देवताम् ।
द्वादशादित्यसङ्काशो विमाने च समास्थितः ।
विष्णुना समनुज्ञातो विष्णुलोके महीयते ॥ ७५ ॥

वराह उवाच

एवं सुखदशब्देन देववाण्या प्रचोदितः[२] ।
पाञ्चालसंज्ञकस्तत्र सुमन्तुं पर्यपृच्छत ।
अस्मद्गुरुः पिता त्वं च ब्रूहि किं करवाणि वै ॥ ७६ ॥
पावकालम्भनं मे स्यादुताहो तीर्थसेवनम् ।
त्रिरात्रं कृच्छ्रपाराकं चान्द्रायणमथापि वा ।
तव पादाङ्किते वापि स्थित्वा मोक्षमवाप्नुयाम् ॥ ७७ ॥

सुमन्तुरुवाच

आकाशभारती यत्तु तत्सत्यं [३]नानृतं क्वचित् ।
मया प्रत्यक्षतः पूर्वं तव गात्रेषु पातकम् ॥ ७८ ॥
दिने दिने च स्नानात् प्राक् प्रतिगच्छति नित्यशः ।
आश्रमे त्वं स्थितश्चात्र निर्मलश्च शशी यथा ॥७९॥
तिष्ठोपरमितः पापाद् यावत्कालं च जीवसि ।
इयं तु भगिनी पापादुपावृत्ता सती परम् ।
सगतिश्च विपापा च भविष्यति न संशयः ॥ ८० ॥

---

१. 'शूकरेऽपि' इति ( ग ) । २. प्रबोधित इति ( ग ) ।
३. आकाशवाग्वदति यत् तत्सत्यमिति ( ग ) ।

वराह उवाच

एवं प्रभावस्तीर्थस्य मथुरायां वसुन्धरे।
कृष्णगङ्गोद्भवस्यापि तथा कालिञ्जरस्य च ॥ ८१ ॥

शूकरस्य च माहात्म्यं यथा ते वर्णितं पुरा।
यः शृणोति वरारोहे श्रद्धया परया युतः।
पठते प्रातरेवापि न स पापेन लिप्यते ॥ ८२ ॥

सप्तजन्मकृतं पापं तस्य सर्वं व्यपोहति।
फलं च गोशतस्यापि दत्तस्य समवाप्नुयात्।
अमृतत्वं च लभते स्वर्गलोकं च गच्छति ॥ ८३ ॥

इति वाराहपुराणे कृष्णगङ्गोद्भवमाहात्म्यं नाम
षट्सप्तत्यधिकशततमोऽध्यायः।



## सप्तसप्तत्यधिकशततमोऽध्यायः

वराह उवाच

शृणु चान्यद्वरारोहे कृष्णस्यान्यद्विचेष्टितम् ।
द्वारकां वसमानस्य साम्बशापादिकं शृणु ॥ १ ॥
सुखासीनस्य कृष्णस्य पुत्रदारसुतैः सह ।
आगतो नारदस्तत्र यदृच्छागमनो मुनिः ॥ २ ॥
पाद्यमर्घ्यं चासनं च मधुपर्कं सभाजनाम् ।
गां च दत्त्वा यथान्यायं कृतं संवादमुत्तमम् ॥ ३ ॥
एकान्ते प्राप्य कृष्णं च विज्ञप्तिमकरोत् प्रभुः ।
कृष्ण किञ्चिद्वक्तुकामस्तत्त्वं शृणु महामते[1] ॥ ४ ॥
शाम्बनामा तव पुत्रो युवा वाग्मी तु रूपवान् ।
स्पृहणीयः सदा कान्तः स्त्रीजनस्य सुरेश्वर ॥ ५ ॥
एतास्तु वरनार्यो वै क्रीडार्थं हि पुरेश्वरः ।
देवयोन्यो ददुस्तुभ्यं सहस्राणि च षोडश ।
शाम्बं दृष्ट्वा च सर्वासां क्षुभ्यते च मनः प्रभो ॥ ६ ॥
एतत्तु ब्रह्मलोके च गीयते दैवतैः स्वयम् ।
त्वत्प्रियार्थं समायातः कथितुं ते सुरोत्तम ॥ ७ ॥
श्रूयते चार्थविद्रूपः श्लोको द्वैपायनेन वै ।
कृतिमतः स्वर्गवासी नरकस्तद्विपर्ययात् ॥ ८ ॥
पुण्यरूपं तु यत्कर्म दिशो भूमिं च संस्पृशेत् ।
यावत्स शब्दो भवति तावत्पुरुष उच्यते ॥ ९ ॥
पुरुषश्चाविनाशी च कथ्यते शाश्वतोऽव्ययः ।
नरके पुरुषः प्रोक्तो विपरीतो मनीषिभिः ॥ १० ॥
तस्माच्छाम्बं समाहूय तथा देवीगणं च तम् ।
आसनेषूपविष्टानां तासां क्षोभं च तत्त्वतः ।
लक्षयिष्याम्यहं सर्वं सत्यं चासत्यमेव च ॥ ११ ॥
तावत्सभ्यासनान्येव स्वास्तीर्य च विभागशः ।
सर्वास्तास्तु समाहूय आसने चोपवेश्य च ॥ १२ ॥

---

१. 'वदामि ते' इति ( ग ) ।
२. भवितेति ( ग ) ।

पश्चाच्छाम्बः समायातस्तस्याग्रे करसम्पुटम् ।
कृत्वा स्थितो मुहूर्त्तं तु किमाज्ञापयसि प्रभो ॥ १३ ॥
दृष्ट्वा रूपमतीवास्य साम्बस्यैव वरस्त्रियः ।
चुक्षुभुः सकला देव्यः कृष्णस्यैव तु पश्यतः ॥ १४ ॥
उत्तिष्ठत प्रियाः सर्वा गच्छत स्वं निवेशनम् ।
कृष्णवाक्यात्तदा देव्यो जग्मुः स्वं स्वं निवेशनम् ॥ १५ ॥
शाम्बस्तत्रैव संतस्थौ वेपमानः कृताञ्जलिः ।
स कृष्णो नारदं वीक्ष्य लज्जयावाङ्मुखोऽभवत् ॥ १६ ॥
कृष्णस्तु कथयामास नारदाय सविस्तरम् ।
स्त्रीस्वभावं चरित्रं च आश्चर्यं पापकारकम् ॥ १७ ॥
क्षणं नास्ति रहो नास्ति नास्ति कृत्ये विभावना ।
तेन नारद नारीणां सतीत्वमुपजायते ॥ १८ ॥
एकवासास्तथा गौरी श्यामा वा वरवर्णिनी ।
मध्यगता प्रगल्भा च वयोऽतीतास्तथा स्त्रियः ॥ १९ ॥
सुरूपं पुरुषं दृष्ट्वा क्षरन्ति मुनिसत्तम ।
स्वभाव एष नारीणां शाम्बस्य शृणु कारणम् ॥ २० ॥
अतीव मानी तेजस्वी धार्मिकोऽतिगुणान्वितः ।
रूपकारणमुद्दिश्य गतः क्षोभं कथञ्चन ॥ २१ ॥
नारदस्त्वेवमेवं च प्रतिपूज्य हरेर्वचः ।
अन्तरज्ञ उवाचेदं शाम्बशापकरं तथा ॥ २२ ॥
यथा एकेन चक्रेण रथस्य न गतिर्भवेत् ।
पुरुषास्वादनाच्चैवं क्षरन्ति सततं स्त्रियः ।
पुंसः सुदृष्टिपातेन कृतकृत्या भवन्ति ताः ॥ २३ ॥
प्रद्युम्नं वीक्ष्य नार्यस्तु लज्जामापुः सुपुष्कलाम् ।
शाम्बं[1] दृष्ट्वैव ताः सर्वा अनङ्गेन प्रपीडिताः ॥ २४ ॥
उद्दीपनविभावोऽयं तासां गन्धादिकं यथा ।
तस्माच्छाम्बस्तु दुष्टात्मा तव स्त्रीणां विनाशकृत् ॥ २५ ॥
सत्यलोके प्रवादो यस्तव जातो दुरत्ययः ।
मया श्रुतस्तु लोकेभ्यो ब्रह्मर्षिभ्यो मुहुर्मुहुः ॥ २६ ॥
शाम्बत्यागात् प्रमार्ष्टुं त्वमयशः कीर्त्तिनाशकम् ।
कर्त्तुमर्हस्यमेयात्मन्मया ते कथितं हितम् ॥ २७ ॥

---

१. क्वचित् पुस्तके 'साम्ब' इति दृश्यते ।

इत्युक्त्वा वचनं तत्र नारदो मौनमास्थितः ।
कृष्णः शशाप शाम्बं तु विरूपस्त्वं भविष्यसि ॥ २८ ॥
शापयुक्तः स शाम्बस्तु कुष्ठयुक्तोऽभवत्क्षणात् ।
शरीरात्तु गलद् रक्तं पूतिगन्धयुतं सदा ।
पशुवत्कर्तितो यस्तु तद्वद्देहोऽस्य दृश्यते ॥ २९ ॥
ततस्तु नारदेनैव शाम्बशापविनाशकः ।
समादिष्टो महान्धर्म आदित्याराधनं प्रति ॥ ३० ॥
शाम्ब शाम्ब महाबाहो शृणु जाम्बवतीसुत ।
उदयाचले च पूर्वाह्णे उद्यन्तं तु विभावसुम् ॥ ३१ ॥
नमस्कुरु यथान्यायं वेदोपनिषदादिभिः ।
त्वयोदितं रविः श्रुत्वा तुष्टिं यास्यति नान्यथा ॥ ३२ ॥

शाम्ब उवाच

अगम्यागमनात्पापाद्व्याप्तो यः पुरुषो भवेत् ।
तस्य देवः कथं तुष्टो भविष्यति स वै मुने ॥ ३३ ॥

नारद उवाच

भविष्यत्पुराणमिति च[1] तव वादाद्भविष्यति ।
ब्रह्मलोके पठिष्यामि ब्रह्मणोऽग्रे त्वहं सदा ।
सुमन्तुर्मर्त्यलोके च मनोः प्रकथयिष्यति ॥ ३४ ॥

शाम्ब उवाच

कथं पूर्वाचले गत्वा मांसपिण्डोपमः प्रभो ।
त्वत्प्रसादान्महद् दुःखं प्राप्तस्त्वहमकल्मषः ॥ ३५ ॥

नारद उवाच

यथोदयाचले देवमाराध्य लभते फलम् ।
मथुरायां तथा गत्वा षट्सूर्ये लभते फलम् ॥ ३६ ॥
मध्याह्ने च तथा देवं फलप्रियमकल्मषम् ।
मथुरायां च मध्याह्ने मध्यन्दिनरवौ तथा ।
अस्तं गते तथा देवं सद्यो राज्यफलं भवेत् ॥ ३७ ॥
मथुरायां तथा पुण्यमुदयास्तं रवेर्जपम् ।
मध्याह्ने प्रयतो वाग्भिः[2] जपन्मुच्यति पातकात् ॥ ३८ ॥
कृष्णगङ्गोद्भवे स्नात्वा सूर्यमाराध्य यत्नतः ।
सर्वपापविनिर्मुक्तः कुष्ठादिभ्यो विमुच्यते ॥ ३९ ॥

---

१. भविष्यं पुराणमिति चेति ( ग ) । २. वाग्मीति ( ग ) ।

वराह उवाच

ततः शाम्बो महाबाहुः कृष्णाज्ञप्तो ययौ पुरीम् ।
मथुरां मुक्तिफलदां रवेराराधनोत्सुकः ॥ ४० ॥
नारदोक्तेन विधिना शाम्बो जाम्बवतीसुतः ।
षट्सूर्यात् पूजयामास उदयन्तं दिवाकरम् ॥ ४१ ॥

कृत्वा योगेन आत्मानं शाम्बस्याग्रे रविस्तदा ।
वरं वृणीष्व भद्रं ते मद्व्रतख्यापनाय च ।
यस्तोषितो नारदेन तद्वदस्व ममाग्रतः ॥ ४२ ॥

शाम्ब पञ्चाशकैः श्लोकैर्वेदगुह्यपदाक्षरैः ।
यः स्तुतोऽहं त्वया वीर तेन तुष्टोऽस्मि ते सदा ॥ ४३ ॥
स्पृष्टो देवेन सर्वाङ्गे तत्क्षणाद्दीप्तसच्छविः ।
व्यक्ताङ्गावयवः साक्षाद्द्वितीयोऽभूद्रविर्यथा ॥ ४४ ॥

मध्याह्ने याज्ञवल्क्यस्य यज्ञं माध्यन्दिनीयकम् ।
अध्यापयच्छाम्बसहितो रविर्मध्यन्दिनोऽभवत् ॥ ४५ ॥
वैकुण्ठपश्चिमे पार्श्वे तीर्थं माध्यन्दिनीयकम् ।
स्नात्वा माध्यन्दिनं दृष्ट्वा सर्वपापैः प्रमुच्यते ॥ ४६ ॥

उदयास्ते ततो देवः शाम्बेन सहितो विराट् ।
सायाह्ने कृष्णगङ्गाया दक्षिणे संस्थितस्तदा ॥ ४७ ॥
तत्र दृष्ट्वा तु सायाह्ने रविमस्तोदयं प्रभुम् ।
सर्वपापविशुद्धात्मा परं ब्रह्माधिगच्छति ॥ ४८ ॥

वराह उवाच

एवं शाम्बस्य तुष्टेन मध्याह्ने तु नभस्तलात् ।
द्विधाकृतात्मयोगेन शाम्बकुष्ठमपोहत ।
शाम्बप्रख्याततीर्थे तु तत्रैवान्तरधीयत ॥ ४९ ॥
शाम्बस्तु सह सूर्येण रथस्थेन दिवानिशम् ।
रविं पप्रच्छ धर्मात्मा पुराणं सूर्यभाषितम् ॥ ५० ॥

भविष्यत्पुराणमिति ख्यातं कृत्वा पुनर्नवम् ।
शाम्बः सूर्यप्रतिष्ठां च कारयामास तत्त्ववित् ॥ ५१ ॥
उदयाचले च संश्रितो यमुनायाश्च दक्षिणे ।
मध्ये कालप्रियं देवं मध्यान्हे स्थाप्य चोत्तमम् ॥५२॥
मूलस्थानं ततः पश्चादस्तमानाचले रविम् ।
स्थाप्य त्रिमूर्त्तिं शाम्बस्तु प्रातर्मध्यापराह्णिकम् ॥५३॥

मथुरायां तथा चैकं स्थाप्य शाम्बो वसुन्धरे ।
स्वनाम्ना स्थापयामास पुराणविधिना स्वयम् ।। ५४ ।।

एवं शाम्बपुरं नाम मथुराणां कुलेश्वरम् ।
रथयात्रां तथा कृत्वा रविणा कथिता यदा ।
माघमासस्य सप्तम्यां देवं शाम्बपुरं नराः ।। ५५ ।।

रथयात्रां प्रकुर्वन्ति सर्वद्वन्द्वविवर्जिताः ।
गच्छन्ति तत्पदं शान्तं सूर्यमण्डलभेदकम् ।। ५६ ।।

एतत्ते कथितं देवि शाम्बशापसमुद्भवम् ।
पापप्रशमनाख्यानं महापातकनाशनम् ।। ५७ ।।

इति वाराहपुराणे शाम्बवचनत्रयसूर्यप्रतिष्ठानं नाम
सप्तसप्तत्यधिकशततमोऽध्यायः ।



## अष्टसप्तत्यधिकशततमोऽध्यायः

वराह उवाच

शत्रुघ्नेन पुरा घोरो लवणः सूदितो यथा ।
द्विजानुग्रहकामार्थमन्नमुग्रस्वरूपिणम् ॥ १ ॥

द्वादश्यां मार्गशीर्षस्य उपोस्य नियतः[1] शुचिः ।
यः करोति वरारोहे शत्रुघ्नचरितं यथा ।
द्विजानां प्रीणनं कृत्वा स्वधान्नपटुभोजनैः[2] ॥ २ ॥

लवणस्य वधादेव शत्रुघ्नस्य[3] शरीरके ।
हर्षस्तु सुमहान् जातो रामस्याक्लिष्टकर्मणः ॥ ३ ॥

अयोध्यायाः समायातो रामः सबलवाहनः ।
महोत्सवं च कर्त्तुं स शत्रुघ्नस्य महात्मनः ॥ ४ ॥

सितामाग्रहणीं प्राप्य मथुरां लवणान्तकः ।
एकादश्यां सोपवासः स्नात्वा विश्रान्तिसंज्ञके ॥ ५ ॥

कृत्वा महोत्सवं तत्र कुटुम्बसहितः पुरा ।
तस्मिन् भुक्त्वा यथाकामं ब्राह्मणान्वै प्रतर्प्य च ॥६॥

तस्मिन्नहनि तत्रैव यः कुर्यात्स महोत्सवम् ।
सर्वपापविनिर्मुक्तः पितृभिः सह मोदते ।
स्वर्गलोके चिरं कालं यावत्स्थित्यन्तजन्मनः ॥ ७ ॥

इति वाराहपुराणे मथुरामाहात्म्ये शत्रुघ्नलावणेरामतीर्थ-
यात्रायाम् अष्टसप्तत्यधिकशततमोऽध्यायः ।



---

१. 'उषस्यभियत' इति वा पाठः ।

२. 'बहुभोजनैः इति ( ग ) ।

३. शत्रुघ्नश्चेति पाठान्तरम् ।

# ऊनाशीत्यधिकशततमोऽध्यायः

धरण्युवाच

तवापराधाद्देवेश वर्ज्या ये वैष्णवेन च ।
निरपराधो मनुजः सापराधश्च जायते ॥ १ ॥
कर्मणाचरणेनैवाकरणेन जुगुप्सितम् ।
तच्च पूजाफलं सर्वं ज्ञायते तद्वदस्व मे ॥ २ ॥

वराह उवाच

कर्मणा मनसा वाचा ये पापरुचयो जनाः ।
भक्षणं दन्तकाष्ठस्य राजान्नस्य तु भोजनम् ॥ ३ ॥
मैथुनं शवसंस्पर्शं पुरीषोत्सर्गमेव च ।
सूतक्युदक्याप्रेक्षा च स्पर्शनं मेहनं तथा ॥ ४ ॥
अभाष्यभाषणं कोषं पिण्याकस्य च भक्षणम् ।
रक्तपारक्यमलिनवस्त्रधारित्वनीलिजम् ॥ ५ ॥
गुरोश्चालीकनिर्बन्धः पतितान्नस्य भक्षणम् ।
अभक्ष्यभक्षणं चैव तुन्दुलीयविभीतकम् ॥ ६ ॥
अदानं तु वरान्नस्य जालपादवराकयोः ।
भक्षणं देवतागारे सोपानत्कोपसर्पणम् ॥ ७ ॥
तथैव देवपूजायां निषिद्धकुसुमार्च्चनम् ।
अनुत्तार्य च निर्माल्यं पूजा क्षीणान्धकारयोः ॥ ८ ॥
पानं सुरायाः देवस्य अन्धकारे प्रबोधनम् ।
तावत्कर्मार्च्चने विष्णोरनमस्करणं तथा ॥ ९ ॥
अपराधास्त्रयस्त्रिंशत्समाख्याता मया धरे ।
एभिर्युक्तस्तु पुरुषो विष्णुं नैव प्रपश्यति ॥ १० ॥
दूरस्थो न नमस्कारं कुर्यात्पूजा तु राक्षसी ।
एकरात्रं द्विरात्रं वा त्रिरात्रं स्नानमेव च ।
सवासाः पञ्चगव्याशी मलसंवस्त्रकं क्रमात्[1] ॥ ११ ॥
नीलीरक्षापनोदार्थं गोमयेन प्रघर्षणम् ।
प्राजापत्येन शुद्धिः स्यान्नीलीवस्त्रस्य धारणात् ॥ १२ ॥

---

१. मलवस्त्रान्तिकं क्रमादिति ( ग ) ।

चान्द्रायणद्वयं कुर्याद् गुरोः क्षयितमुत्तमम् ।
चान्द्रायणं पराकञ्च पतितान्नस्य भक्षणात् ॥ १३ ॥
चान्द्रायणं पराकञ्च प्राजापत्यं तथैव च ।
गोप्रदानञ्च भोज्यञ्च अभक्षस्य च भक्षणे ।
उपवासस्तु पञ्चाहं पञ्चगव्येन शुद्धयति ॥ १४ ॥
सोपानत्कश्चरेत्पादं कृच्छ्रस्य द्विरभोजनम् ।
पुष्पाभावेऽर्चनं स्नानं देवस्पर्शञ्च कारयन् ।
अनिर्माल्यनमस्कारं स्नानं पञ्चामृतेन तु ॥ १५ ॥
सुरापाने द्विजातीनां चान्द्रायणचतुष्टयम् ।
तथैव द्वादशाब्दं तु प्राजापत्यत्रयञ्चरेत् ।
ब्रह्मकूर्चेन शुद्धिः स्याद्गोप्रदानत्रयेण च ॥ १६ ॥
त्रयाणामेकरात्रेण पञ्चामृतनिषेवणात् ।
मुच्यते त्वपराधैस्तु तथा विष्णोः स्तव पठन् ॥ १७ ॥
एतत्ते कथितं गुह्यं किमेतच्छ्रोतुमिच्छसि ।
पुनः पुनरुवाचेदं देवदेवो जनार्दनः ।
मोहं गता तु शृणुते नष्टसंज्ञेव लक्ष्यते ॥ १८ ॥
मुहूर्त्तमात्रे सा देवी संज्ञां प्राप्येदमब्रवीत् ।
अपराधे कृते देव सूतकी हि प्रजायते ॥ १९ ॥
प्रायश्चित्तानि भूरीणि कृतानि तु नरैः सदा ।
तेन मे मनसो मोहो दुःखदो यः समभ्ययात् ॥ २० ॥
अस्ति कश्चिदुपायोऽत्र येन त्वं नृषु तुष्यसि ।
पूजितः सफलश्चासि अपराधविशोधनम् ॥ २१ ॥

वराह उवाच

संवत्सरस्य मध्ये तु तीर्थे सौकरवे मम ।
कृतोपवासः स्नानेन गङ्गायां शुद्धिमाप्नुयात् ।
मथुरायां तथाप्येवं सापराधः शुचिर्भवेत् ॥ २२ ॥
अनयोस्तीर्थयोरेवं यः सेवेत सकृन्नरः ।
सहस्रजन्मनि जातानपराधाञ्जहाति सः ॥ २३ ॥
स्नानात्पानात्तथा ध्यानात्कीर्त्तनाद्धारणात्तथा ।
श्रवणान्मननाच्चैव दर्शनाद्याति पातकम् ॥ २४ ॥

पृथिव्युवाच

मथुरा सूकरं चैव द्वावेतौ तव वल्लभौ ।
विशिष्टमनयोः किं च सत्यं ब्रूहि सुरेश्वर ॥ २५ ॥

वराह उवाच

पृथिव्यां यानि तीर्थानि आसमुद्रसरांसि च ।
कुब्जाम्रकं प्रशंसन्ति सदा मद्भावभाविताः ।। २६ ।।

तस्मात्कोटिगुणं गुह्यं सौकरं तीर्थमुत्तमम् ।
एकाहं मार्गशीर्ष्यां च द्वादश्यां सितवैष्णवम् ।। २७ ।।

गङ्गासागरिकं नाम पुराणेषु च पठ्यते ।
गुह्याद् गुह्यतरं गुह्यं माथुरं मम मण्डलम् ।
फलं परार्द्धगुणितं सिततीर्थान्न संशयः ।। २८ ।।

अटित्वा सर्वतीर्थानि कुब्जाम्रादीनि नित्यशः।
अघो[1] विनश्यते क्षिप्रं मथुरामागतस्य च ।। २९ ।।

विश्रमणाच्च विश्रान्तिस्तेन संज्ञा वरा मम ।
सारात्सारतरं स्नानं गुह्यानां गुह्यमुत्तमम् ।
गतिरन्वेषणीयानां मथुरा परमा गतिः ।। ३० ।।

कुब्जाम्रके सौकरे च मथुरायां विशेषतः ।
विना सांख्येन योगेन मुच्यते नात्र संशयः ।। ३१ ।।

या गतिर्योगयुक्तस्य ब्राह्मणस्य मनीषिणः ।
सा गतिस्त्यजतः, प्राणान्मथुरायां न संशयः ।। ३२ ।।

एतत्ते कथितं सारं मया सत्येन सुव्रते ।
न तीर्थं मथुराया हि न देवः केशवात्परः ।। ३३ ।।

इति वाराहपुराणे अपराधप्रायश्चित्तमाहात्म्यं नाम
ऊनाशीत्यधिकशततमोऽध्यायः ।



---

१. श्रम इति (ग)।

## अशीत्यधिकशततमोऽध्यायः

वराह उवाच

पुनरन्यत्प्रवक्ष्यामि पितृणां तृप्तिकारकम् ।
ध्रुवतीर्थे पुरा वृत्तं तच्छृणुष्व वसुन्धरे ॥ १ ॥
अस्यां पुर्यां तु राजासीद्धार्मिकः सत्यविक्रमः ।
चन्द्रसेनेति नाम्ना च यज्वा दानहिते रतः ॥ २ ॥
तस्य नार्यः शते द्वे तु कुलशीलवयोयुते ।
तासां मध्येऽधिका चैका यतिव्रतपरायणा ।
नाम्ना चन्द्रप्रभा चैव वीरसूर्वीरपुत्रका ॥ ३ ॥
तस्या दासीशतस्यैका दासी नाम्ना प्रभावती ।
तस्याः परिग्रहास्त्वेकोद्दिष्टाचारविहीनकाः ॥ ४ ॥
तस्याः पितृगणाः सर्वे अतीताः शतसंख्यया ।
स्वदोषैः पतिताः सर्वे नरकं प्रति भामिनि ।
सङ्करो नरकायैव कुलघ्नानां कुलस्य हि ॥ ५ ॥
कदाचिदपि तस्याथो भ्रष्टः प्राणिजनो महान् ।
सूक्ष्मः प्राणिसमूहो हि ध्रुवतीर्थे तदापतत् ॥ ६ ॥
कृष्णरूपाश्चङ्क्रमन्तो मशकाकारसन्निभाः ।
दृष्टास्ते ऋषिणा तत्र त्रिकालज्ञेन भाविनि[1] ।
षष्ठान्नकालभोक्ता च पयोव्रतमहात्मना ॥ ७ ॥
मौनव्रतेन सा देवि सूर्यगत्या स्थितेन च ।
तस्मिन् क्षणे[2] न च कृतं व्रतजप्यं विमोहनात् ॥ ८ ॥
कृपया परिभूतस्य कौतुकेन निरीक्षता ।
चतुर्थांशावशेषश्च दिवसः पर्यवर्त्तत ॥ ९ ॥
एके तत्र समायान्ति पितरो नभसोऽवनिम् ।
अन्ये पूर्वोत्तरादेशाद्दक्षिणात्पश्चिमात्तथा ॥ १० ॥
केचित् स्वभावतो हृष्टाः केचित्पुत्रैः स्वधाकृताः।
हृष्टास्तुष्टाः सुपुष्टाङ्गा गच्छन्तो दिवि सङ्घशः ॥११॥
तपस्विनः स्नानरता रूक्षाक्षामशरीरिणः ।
वस्त्रालङ्कारपुष्टाङ्गा हृष्टा गच्छन्ति सङ्घशः ॥ १२ ॥

---

१. भमिनि इति ( ग ) । २. तस्मिन् दिने इति ( ग ) ।

तथाऽपरे नग्नदेहाः सुपुष्टा यान्ति तत्र वै ।
अन्ये यथागतं यान्ति आयान्ति पुनरेव हि ॥ १३ ॥
यानैरुच्चावचैः केचिन्नानारूपैः खगैस्तथा ।
समागच्छन्ति गच्छन्ति ईरयन्नाशिषो मुदा ॥ १४ ॥
केचिद्यथागता यान्ति क्रुद्धाः शापप्रदायिनः ।
निर्गतोदरसूक्ष्माश्च गच्छन्ति सुविमानिताः ।
सम्मानितास्तथान्ये तु पितरः श्राद्धपूजिताः ॥ १५ ॥
महोत्सवमिवालक्ष्य विस्मितो मुनिरुत्थितः ।
गते पितृगणे पुत्राः सकलत्रा गृहान् ययुः ।
निर्जनं ध्रुवतीर्थं तु वृत्तवेलमिवाभवत् ॥ १६ ॥
तत्रैकान्ते कृशाङ्गोऽथ क्षुत्क्षामो गतिविह्वलः ।
वेपथुः कोटराक्षश्च पृष्ठलग्न इवोदरः ॥ १७ ॥
ऊरुचर्मास्थिरुक्त्रस्तो[1] जृम्भमाणो भृशं कृशः ।
न वाचा श्रूयते तस्य क्षुद्रपक्षिभिरिवोदिता ॥ १८ ॥
को भवान् विकृताकारो वेष्टितो मशकैर्बहु ।
न गच्छसि यथास्थानमागतस्तु निरुद्यमः ।
यथावत्पृच्छते मह्यं कथयात्मविचेष्टितम् ॥ १९ ॥
ममाद्य नैत्यकं कर्म तीर्थेऽस्मिन्नश्यतेऽनिशम् ।
इमानुच्चावचान् जन्तून् दृष्ट्वा मां मोह आविशत् ॥२०॥
त्वां दृष्ट्वेदृक्स्वरूपं च क्रिया मे सा गता त्वयि ।
विश्रब्धः कथयास्माकं करोमि च हितं तव ॥ २१ ॥

जन्तुरुवाच

बृहन्निमित्तमद्यैव पितॄणां तृप्तिकारकम् ।
ध्रुवतीर्थे च यः श्राद्धं पुनः कुर्यात्तिलोदकम् ।
तिलतृप्ता दिवं यान्ति पितरस्तेन पुत्रिणः ॥ २२ ॥
सोऽहं स्वान्तरिकादत्तस्तृप्त्यर्थस्तु बुभुक्षितः ।
योनिसङ्करदोषेण नरकं समुपाश्रितः ॥ २३ ॥
आशापाशशतैर्बद्धः शतवर्षैरिहागतः ।
अगतिर्गमने मे स्यात्ते त्रितापैः समागतः ॥ २४ ॥
सन्तानैः पुष्टवपुषो दत्तश्राद्धैः कृतोदकैः ।
बलयुक्ता ययुः स्वर्गं निर्बलस्य कुतो गतिः ॥ २५ ॥

---

1. रुक् शब्द इति ( ग ) ।

येषां सन्ततिरक्षय्या तिष्ठतीह[1] प्रजावती ।
ते स्वधापूजितैः पुत्रैर्गच्छन्ति परमां गतिम् ॥ २६ ॥
अद्य राज्ञस्तु पितरश्चन्द्रसेनस्य पूजिताः ।
दृष्टास्त्वया त्रिकालज्ञ दिव्यदृष्ट्या दिवं गताः ॥ २७ ॥
ब्राह्मणानां च वैश्यानां शूद्राणां पितरस्तथा ।
प्रतिलोमानुलोमानां शूद्राणां श्राद्धकर्मिणाम् ।
सर्वेषां च त्वया दृष्टं येषां सन्ततिरव्यया ॥ २८ ॥
एवं पृष्टः स विप्रेण कथयामास कारणम् ।
पुनः पप्रच्छ तं जन्तुः कौतूहलसमन्वितः ॥ २९ ॥
तवापि सन्ततिस्तात नास्ति दैवाद्यथोचिता[2] ।
यदि कश्चिदुपायोऽत्र मया तव हितैषिणा ।
वद सर्वं करिष्यामि यदि शक्यं भवेन्मम ॥ ३० ॥
ततः स कथयामास दुःस्थः पितृगणैर्वृतः ।
इमे ये मम देहे तु भवन्ति मशकाः कृशाः ॥ ३१ ॥
सन्तानप्रक्षयादेते मम देहं समाश्रिताः ।
तन्तुमन्त्रमहं तेषां मम तन्तुमयी सकृत् ॥ ३२ ॥
आस्ते नगर्या मध्ये तु चन्द्रसेनस्य वेश्मनि ।
महिष्याः प्रेषणे नित्यं दासी नाम्ना प्रभावती ॥ ३३ ॥
तस्या दासी कर्मकरी विरूपनिधिनामतः ।
अस्माकं सन्ततेस्तन्तुरतस्या श्राद्धकृते वयम् ॥ ३४ ॥
आशया बद्धहृदयाः श्राद्धतर्पणहेतवः ।
स्थिता एतावदेवं तु कालं यास्यामहेऽम्बुधौ ॥ ३५ ॥
नरके त्वप्रतिष्ठे तु निराशाः स्वेन कर्मणा ।
श्रुत्वैतत्स त्रिकालज्ञो मोहाविष्टोऽब्रवीदिदम् ॥ ३६ ॥
कथं निकृष्टयोन्या यद्दत्तं चापद्यते हविः ।
विधिरत्र कथं तस्या येन यूयं सपुत्रिणः ॥ ३७ ॥
प्रोवाच स त्रिकालज्ञं ज्ञानक्लिष्टं कृपान्वितम् ।
पूर्वकर्मविपाकेन यां यां गतिमधोमुखीम् ।
ऊर्ध्वां याश्चापि पितरः पुत्रिणः पुत्रमीहते ॥ ३८ ॥
श्राद्धं पिण्डोदकं दानं नित्यनैमित्तिकं तथा ।
नान्या गतिः पितॄणां स्यात्पितरस्तेन पुत्रिणः ॥ ३९ ॥
इति स्मृतिः ।

---

१. 'तिष्ठती च' इति वा पाठः । २. 'यथोदिता' इति (ग) ।

अपि स्यात् स कुलोऽस्माकं यो नो दद्याज्जलाञ्जलिम् ।
नदीषु बहुतोयासु शीतलासु विशेषतः ॥ ४० ॥
विशेषात्तीर्थमध्ये तु तिलमिश्रं जलाञ्जलिम् ।
रौप्यजुष्टजलेनाथ[1] नाभिदघ्ने जले स्थितः ॥ ४१ ॥
दर्भपाणिस्त्रिस्त्रिगोत्रे पितृनाम समुच्चरन् ।
नाम शर्म तृप्यत्वेवं स्वधाकारमुदाहरन् ॥ ४२ ॥

आदावेकाञ्जलिर्द्वे तु निस्त्रोते तर्पणे स्मृताः ।
देवर्षिपितृणां चैव क्रमाज्ज्ञेयं विचक्षणैः ॥ ४३ ॥
तृप्यध्वमिति चान्ते वै मन्त्रं मन्त्रप्रतिक्रियाः ।
उदीरतामङ्गिरस आयन्तु न इत्युत ॥ ४४ ॥
पित्रे प्रथमतो दद्यान्मात्रे दद्यात्तथा चरन् ।
गोत्रं माता नाम देवी तृप्यत्वेवं स्वधोच्चरन् ॥ ४५ ॥

एवं मातामहः शर्मा गोत्रे पितामहस्तथा ।
ऊर्ध्वं पितृभ्यो ये चेह ते पितर इहोच्यते ॥ ४६ ॥
मधुवातेत्यृचं तद्वत्पूर्ववत्समुदीरयेत् ।
पितामहीं प्रपितामहीं मातृवत्पतिना सह ॥ ४७ ॥

एवं मातामहानां च पूर्ववत्क्रमशो बुधः ।
नमो व इति मन्त्रेण प्रत्येकं त्रितयं त्रिषु ।
गोत्रोच्चारं प्रकुर्वीत असूर्यान्नाशयामहे ॥ ४८ ॥
गोत्राय पित्रे महाय शर्मणे चेदमासनम् ।
गोत्रायै मात्रे मह्यै तु देव्यै चासनकर्मणि ॥ ४९ ॥
गोत्रः पितामहः शर्मा गोत्रा मातामही मही ।
अर्घपात्रसङ्कल्पे तु पिण्डदानेऽवनेजने ॥ ५० ॥

गोत्रस्य पितुर्महस्य शर्मणोक्तस्य कर्मणि ।
गोत्रायै मातुर्महायै देव्याश्चाक्षयकर्मणि ॥ ५१ ॥
आवाहने द्वितीया च चतुर्थी पूज्यकर्मणि ।
प्रथमा चाशिषि प्रोक्ता दत्तस्याक्षयकारका ॥ ५२ ॥

श्राद्धपक्षे तथा षष्ठी अक्षयासनयोः स्मृता ।
पितुरक्षयकाले तु पितृणां दत्तमक्षयम् ॥ ५३ ॥
एवमेतत्तु पुत्रेण भक्तिपूर्वं द्विजेन तु ।
वार्यपि श्रद्धया दत्तं तदानन्त्याय कल्पते ॥ ५४ ॥

---

१. रौप्यस्पृष्टजनेनाथेति (ग)।

श्रद्धया ब्राह्मणेनैव यथा श्राद्धविधिक्रिया ।
कृत्वा श्राद्धं तु पितरो हृष्टा मुमुदिरे सदा ॥ ५५ ॥
जोषमास्स्व त्रिकालज्ञ गच्छामो नरकाय वै ।
पूर्वकर्मविपाकेन चिरं तु वसितुं मुने ॥ ५६ ॥

त्रिकालज्ञ उवाच

ये मया चागता दृष्टा तीर्थेऽस्मिन् पितरोऽथ वै ।
बहवः स्वस्थमनसो बहवो दुःस्थमानसाः ॥ ५७ ॥
पुत्रदत्तं तथा श्राद्धं जग्मासोद्विग्नरूपिणः[1] ।
मौनेन गच्छतां तेषां किमेतद्वद निश्चयम् ॥ ५८ ॥

अगस्तिरुवाच

अत्र यन्निश्चयं श्राद्धे पुत्रस्य विफलं भवेत् ।
नरस्य करणं किञ्चित्तन्मे निगदतः शृणु ॥ ५९ ॥
अदेशकाले यद्दत्तं विधिहानमदक्षिणम् ।
अपात्रे मलिनं द्रव्यं महत्पापाय जायते ॥ ६० ॥
अश्राद्धेयमपात्रेयं दुष्टप्रेक्षितमीक्षितम् ।
तिलमन्त्रकुशैर्हीनमासुरं तद्भवेदिति ॥ ६१ ॥
वैरोचनाय देवेन वामनेन विभूतये ।
सच्छूद्रस्य च श्राद्धस्य फलं दत्तं पुरा किल ॥ ६२ ॥
तथा दाशरथी रामो हत्वा राक्षसमीश्वरम् ।
रावणं सगणं घोरं तुष्टेन सह सीतया ।
श्रुत्वा भक्तिं च राक्षस्यास्त्रिजटायास्त्रिलोककृत् ।
सीतावाक्यप्रतुष्टेन तस्यै प्रादाद्वरं विभुः ॥ ६३ ॥
अशुचीनि गृहाण्येव तथा श्राद्धहवींषि च ।
क्रोधाविष्टानि दानानि विधिपात्रयुतानि च ॥ ६४ ॥
पादशौचमनभ्यङ्गप्रतिश्रयमभोजनम् ।
त्रिजटे त्वत्प्रयच्छामि यच्च श्राद्धमदक्षिणम् ॥ ६५ ॥
तथैव शम्भुना दत्तं नागराजाय भक्तितः ।
वासुकये सुतुष्टेन तन्मे निगदतः शृणु ॥ ६६ ॥
अनुज्ञाप्य व्रतं जन्तुर्वार्षिकी सकला क्रिया ।
यज्ञस्य योचिता देया दक्षिणा नाददद् द्विजः ॥ ६७ ॥
वृथाशपथकारी यो देवब्राह्मणसन्निधौ ।
अश्रोत्रियाणि श्राद्धानि क्रिया मन्त्रैर्विहीनका ।
सरात्रिवाससा स्नानं यथासत्त्वस्वरूपतः ॥ ६८ ॥

---

१. नग्ना: सोद्विग्नरूपिणः ।

यः शिष्यो न नमेद्भक्त्या गुरुं ज्ञानप्रदायकम् ।
तथैव प्राकृतं धर्ममग्रे गेयं करिष्यतः ।
सर्वं तुभ्यं मया दत्तं नागराजाय वार्षिकम् ॥ ६९ ॥
इत्येतद्वै पुराणेषु सेतिहासेषु पठ्यते ।
तद्वदलीककरणं श्राद्धं दानं व्रतं तथा ।
नोपतिष्ठति तेषां वै तेन नग्नादयस्त्वमी ॥ ७० ॥
मुषिताच्छिद्रकरणैस्तद्दानफलभोक्तृभिः ।
यथा गतास्तथा ते तु श्राद्धे हूतास्तु निष्फलाः ॥ ७१ ॥
मौनव्रतधरा यान्ति पुनः प्राप्यार्थहेतवे ।
एवमेतन्महाप्राज्ञ यन्मां त्वं परिपृच्छसि ॥ ७२ ॥

त्रिकालज्ञ उवाच

षट्काले भोजनं त्वद्य नाहं भोक्तुमिहोत्सहे ।
यावत्तृप्तिर्न ते भूयाद् दृष्ट्वा हन्त स्थिरो भव ॥ ७३ ॥
तावत्कालं प्रतीक्षस्व यावदागमनं मम ।
अस्मिंस्तीर्थे सदैवाहं दिवारात्रमतन्द्रितः ॥ ७४ ॥
सोऽहमद्य व्रतं त्यक्त्वा तव कारुण्यपूरितः ।
गत्वाहमानयिष्यामि त्वयोक्तां तां वरां स्त्रियम् ॥ ७५ ॥
अनया कारयिष्यामि श्राद्धं तु विधिना सह ।
एवमुक्त्वा स षष्ठाशी मौनवाक् संययौ द्रुतम् ॥ ७६ ॥
राजा समीपगं दृष्ट्वा अकस्मादागतं ऋषिम् ।
क्षित्यास्तले विलुलित[1] पादौ कृत्वा तु मूर्द्धनि ॥ ७७ ॥
धन्योऽस्म्यनुगृहीतोऽस्मि यद्भवान्गृहमागतः ।
सदा यज्ञं करिष्यामि गृहमागमने तव ।
अद्य मे सफलं जन्म यद्भवांस्त्वमिहागतः ॥ ७८ ॥
इदं पाद्यमिदं चार्घ्यं मधुपर्कमिमां च गाम् ।
गृहाण मुनिशार्दूल येनाहं शान्तिमाप्नुयाम् ॥ ७९ ॥
तस्य तत्प्रतिगृह्याशु स मुनिस्त्वरितोऽब्रवीत् ।
मदीयागमने राजन् शृणु त्वं कारणं महत्
तच्छ्रुत्वा कुरु तत्सर्वं येनाहं तोषितोऽभवम् ॥ ८० ॥
एवमुक्तस्तु राजर्षिरब्रवीत्तं तपोधनम् ।
किं तद्वद यथा कार्यं येन सिद्धिर्भवेदिदम् ॥ ८१

---

१. 'विलुलितौ'—इति ( ग ) ।

त्रिकालज्ञ उवाच

या सा ते राजमहिषी तामानय वराननाम् ।
तस्या दासी वरारोहा प्रभावत्यपि विश्रुता ।
सापि देव्या तु सहिता आयातु मम सन्निधौ ॥ ८२ ॥
ततश्चान्तःपुराद्देवी सदासी तत्र चागता ।
क्षितौ विलुलिता साध्वी प्रणाममकरोद्दषेः ॥ ८३ ॥
समासीनां च विप्रेन्द्रः प्रोवाच विनताननाम् ।
ध्रुवतीर्थं मयाश्चर्यं यद्दृष्टं कथयामि वः ॥ ८४ ॥
ये केचित्पितरो लोके लोकानां सर्वतः स्थिताः ।
ते पूजिताः श्राद्धकृद्भिः पुत्रैः प्रीता दिवं ययुः ॥ ८५ ॥
एको वृद्धो नरस्तत्र सूक्ष्मप्राणिभिरावृतः ।
क्षुत्क्षामदेहः शुष्कास्यो निर्गतोदरसूक्ष्मदृक् ।
निराशो गन्तुकामश्च पुनः स निरयेऽशुचौ ॥ ८६ ॥
कारुण्यात् स मया पृष्टः कस्त्वं ब्रूहि किमिच्छसि ।
तेनात्मकर्मजनितं मम कर्म निवेदितम् ॥ ८७ ॥
ततस्तत्रैव तच्छ्रुत्वा तस्य कारुण्ययन्त्रितः ।
तव दास्याश्च या दासी तस्य तन्तुः किलोच्यते ।
नाम्ना विरूपकनिधिस्तामानय वरानने ॥ ८८ ॥
इति श्रुत्वानवद्याङ्गी तस्या आनयनेऽत्वरत् ।
प्रेषयामास सर्वत्र तस्या आनयने बहून् ॥ ८९ ॥
सा चैकान्ते च दिवसे पानमांसरता सदा ।
पुरुषेण सहासीना शय्यायां मदविह्वला ।
सेवकैः सा करे गृह्य आनाती मुनिसन्निधौ ॥ ९० ॥
तां दृष्ट्वा मदिरामत्तां स मुनिः प्राह धर्मवित् ।
प्रत्ययार्थं तु तस्या वै मुनिः प्राह क्रियां प्रति ॥ ९१ ॥
पितॄणां च कृते दत्तं दानं वारि न वा स्वधा[1] ।
तर्पणं चापि नो दत्तं पितॄणां चातिमुक्तिदम् ॥ ९२ ॥
सा नैवमित्युवाचेदं तं मुनिं संशितव्रतम् ।
न जानामि पितॄन् स्वान्वै क्रियां कार्यञ्च वै विभो ॥ ९३ ॥
इति ब्रुवाणां तां दासीं त्रिकालज्ञोऽभ्युवाच ह ।
पत्नी च मथुरेशस्य नृपः सपुरसज्जनः ।
सर्वे द्रक्ष्यथ माहात्म्यं पितॄणां सन्ततेः फलम् ॥ ९४ ॥

१. 'त्वया पितॄणां च कृते दत्तं न वा वारि न वा स्वधा' इति ( ग )

सकौतुका महाभागाः श्राद्धदानं च चैव ह ।
नगरस्थापि ते सर्वे ब्राह्मणा भावपूजिताः ।
राज्ञानीतास्तत्र तीर्थे श्राद्धार्थं मुनिना सह ॥ ९५ ॥
लोकैः परिवृतो राजा ध्रुवतीर्थं गतः प्रभुः ।
तत्र दृष्टः स वै जन्तुर्नष्टतन्तुर्विचेतनः ।
मशकैर्वेष्टितः क्षुद्रैः क्षुधया चातिपीडितः ॥ ९६ ॥
उवाच तं तदा विप्रोऽभवत्सन्तानजाः स्त्रियः ।
आनीतास्तव पुष्ट्यर्थं यदिच्छसि तथा कुरु ॥ ९७ ॥

अगस्त्य उवाच

स्नात्वैषा ध्रुवतीर्थे तु ब्रह्मणोक्तक्रमेण च ।
करोतु तर्पणं चास्मिन् पूर्वोक्तविधिना त्वियम् ॥ ९८ ॥
ततः श्राद्धं सरौप्यं च सवस्त्रं सविलेपनम् ।
अर्चित्वा पिण्डदानेन करोत्वेषा च भक्तितः ॥ ९९ ॥
अत्रैव भवतः सर्वे मामीक्षथ सुखान्वितम् ।
कारयित्वा यथा सर्वं श्राद्धदानं हि तन्तुना ॥ १०० ॥
तस्य तद्वचनं श्रुत्वा राजपत्नी यशस्विनी ।
कारयामास दास्या वै श्राद्धं सुबहुदक्षिणम् ॥ १०१ ॥
पट्टवस्त्रं तथा धूपं कर्पूरागुरुचन्दनम् ।
तिलोत्तरं तथान्नं च बहुरूपं सपिण्डकम् ॥ १०२ ॥
कृते श्राद्धे पिण्डदाने स जन्तुः सुकृती यथा ।
दिव्यकान्तिरदीनात्मा तथाभूतः पृथक् पृथक् ।
वेष्टितः शुशुभेऽतीव दीक्षितोऽवभृथे यथा ॥ १०३ ॥
स्वर्गागतैर्विमानैश्च छादितं तत्र वै नभः ।
तेषां मशकगात्राणां सुगात्राणां सुरूपिणाम् ॥ १०४ ॥
ततस्तुष्टमना जन्तुर्विमानं प्रेक्ष्य चागतम् ।
गन्तु स्वर्गमुवाचेदं त्रिकालज्ञं मुनिं नृपम् ॥ १०५ ॥
शृण्वन्तु वचनं सर्वे मदीयं पितृतुष्टिदम् ।
तीर्थानि सरितः श्रेष्ठाः पर्वताश्च सरांसि च ॥ १०६ ॥
कुरुक्षेत्रं गया चैव स्थानान्यायतनानि च ।
पितृणां मुक्तिदं चान्यन्न भूत न भविष्यति ॥ १०७ ॥
आषाढ्याः पञ्चमे पक्षे प्रतिपत्प्रभृतिस्तथा ।
शुक्लप्रतिपदान्तञ्च तीर्थं प्राप्य ससत्वराः ।
पितरः श्राद्धपिण्डोदा आश्विने ध्रुवमास्थिताः ॥ १०८ ॥

कृत्वा प्रेतपुरीं शून्यां स्वर्गं पातालमेव च ।
ईहमानाः स्वकं पुत्रं गोत्रतन्तुमथानुजम् ।। १०९ ।।

कन्यां गते सवितरि यः श्राद्धं संप्रदास्यति ।
तर्पणं ध्रुवतीर्थे ते पितृणां षोडशान्तरे ।
सुतृप्ताः स्मो वयं शश्वद्यास्यामः परमां गतिम् ।। ११० ।।

एष एव प्रभावोऽत्र ध्रुवस्य कथितो मया ।
दृष्टो भवद्भिः सर्वं यदस्माकं सुदुरत्ययम् ।
दुस्तरं तरितं पापं त्वत्प्रसादान्महामुने ।। १११ ।।

इति विश्राव्य वचनं राजानं सऋषिं जनान् ।
राजपुत्रीं तथा दासीं स्वां सुतां शिवमस्तु वः ।
आरुह्य वरयानं ते गताः स्वर्गं वृताः सुरैः ।। ११२ ।।

वराह उवाच

ततः स राजशार्दूलः सगणः परिवारकः ।
दृष्ट्वा तीर्थस्य माहात्म्यं प्रणम्य ऋषिसत्तमम् ।
प्रविष्टो नगरीं रम्यां संस्मरन्नित्यमच्युतम् ।। ११३ ।।
एतत्ते कथितं भद्रे माहात्म्यं मथुराभवम् ।
स्मरणाद् यस्य पापानि नश्यन्ते पूर्वजन्मनि ।। ११४ ।।

पठति श्रद्धया युक्तो ब्राह्मणानाञ्च सन्निधौ ।
स पितॄंस्तर्पयेत्सर्वानभिगम्य गयाशिरे ।। ११५ ।।
एतत्त्वयान्तव्रतिने न चाशुश्रुषवे तथा ।
कथनीयं महाभागे यश्च नार्च्चयते हरिम् ।। ११६ ।।

तीर्थानां परमं तीर्थं धर्माणां धर्ममुत्तमम् ।
ज्ञानानां परमं ज्ञानं लाभानां लाभमुत्तमम् ।
कथनीयं महाभागे पुण्यान् भागवतान् सदा ।। ११७ ।।

सूत उवाच

एतच्छ्रुत्वा प्रभोर्वाक्यं धरणी विस्मयान्विता ।
पप्रच्छ मुदिता देवी प्रतिमास्थापनं प्रति ।। ११८ ।।

इति वाराहपुराणे भगवच्छास्त्रे मथुरावर्णनं नाम
अशीत्यधिकशततमोऽध्यायः ।



## एकाशीत्यधिकशततमोऽध्यायः

सूत उवाच

एवं श्रुत्वा परं स्थानं सा मही संशितव्रता ।
सर्वक्षेत्रविभागेषु यश्च वै परमो विधिः ।
संश्रुत्वा विस्मयाविष्टा प्रत्युवाच वसुन्धरा ॥ १ ॥

धरण्युवाच

अहो क्षेत्रप्रभावो वै यस्त्वया समुदाहृतः ।
यं श्रुत्वा देव तत्त्वेन जातास्मि विगतज्वरा ॥ २ ॥
एकं मे परमं गुह्यं यन्नित्यं हृदि वर्त्तते ।
मम प्रीत्यर्थमखिलं तद्विष्णो वक्तुमर्हसि ॥ ३ ॥
कथं तिष्ठसि काष्ठेषु शैलमृण्मयजेषु च ।
ताम्रे कांस्ये च रौप्ये च कथं तिष्ठसि स्थापितः[1] ॥ ४ ॥
सौवर्णेषु च सर्वेषु स्थापितस्तिष्ठसे कथम् ।
ब्रह्मचारी समासाद्य कथं तिष्ठसि माधव ।
दन्तरत्ने समासाद्य कथं सन्तिष्ठसे भवान् ॥ ५ ॥
कथं तिष्ठसि वा सैव्ये भित्तिसंस्थो जनार्द्दनः।
भूमिसंस्थो महाभाग विविदृष्टेन कर्मणा ॥ ६ ॥
एवं धरावचः श्रुत्वा प्रत्युवाचादिशूकरः ॥ ७ ॥

वराह उवाच

प्रतिमा यस्य कर्त्तव्या तदानीय वसुन्धरे ।
प्रतिमां कारयेच्चैव लक्षणोक्तां वसुन्धरे ॥ ८ ॥
अर्चाशुद्धिं ततः कृत्वा प्रतिष्ठाप्य विधानतः ।
ततः सम्पूजयेद्देवि संसारभवमुक्तये ॥ ९ ॥
तत्र काष्ठेषु मधुकमानीय च वसुन्धरे ।
कृत्वा तत्प्रतिमां चैव प्रतिष्ठाविधिनार्चयेत् ॥ १० ॥
तान् तु दद्यात्तु गन्धांश्च ये मया समुदाहृताः ।
कर्पूरं कुङ्कुमं चैव त्वचं चागुरुमेव च ॥ ११ ॥
रसं च चन्दनं चैव सिल्हकोशीरकं तथा ।
एतैर्विलेपनं दद्यादर्चितस्तु विचक्षणः ॥ १२ ॥

---

१. स्थापितस्तिष्ठसे कथम्—इति वा पाठः ।

स्वस्तिकं वर्द्धमानं च श्रीवत्सं कौस्तुभं तथा ।
विधानपूर्वकं चैव मङ्गल्यं चैव पायसम् ।
वर्त्तिस्तिलफलं चैव कर्मण्यानि न संशयः ॥ १३ ॥

एवं सर्वं ततो दद्यात्पूजायां विहितं शुभम् ।
कर्मणा विधिदृष्टेन शुद्धो भागवतः शुचिः ।
प्राणायामं ततः कृत्वा इमं मन्त्रमुदीरयेत् ॥ १४ ॥

योऽसौ भवांस्तिष्ठते सर्वयोगप्रधानतः ।
ससम्भ्रमं लोके सुप्रतीतस्तिष्ठ काष्ठे स त्वं भुवि ॥ १५ ॥

एवं संस्थापनं कृत्वा काष्ठस्य प्रतिमासु च ।
पुनः प्रदक्षिणीकृत्य[1] शुद्धैर्भागवतैः सह ॥ १६ ॥

प्रज्वाल्य दीपं तत्रैव अर्च्चायाः सम्मुखं स्थितः ।
नोदूर्ध्वं न तिर्यगीक्षेत कामक्रोधविवर्जितः ॥ १७ ॥

नमो नारायणायेति इमं मन्त्रमुदीरयेत् ।
कुर्यात् संस्करणं तेषां विधिदृष्टेन कर्मणा ॥ १८ ॥

मन्त्रः

योऽसौ भवान् सर्वजनप्रवीर गतिः प्रभुस्त्वं वससि ह्यमोघ ।
अनेन मन्त्रेण च लोकनाथ संस्थापितस्तिष्ठतु वासुदेव ॥ १९ ॥

सर्वामेवं ततः कृत्वा मम संस्थापनक्रियाम् ।
पूज्या भागवताः सर्वे ये तत्र समुपागताः ॥ २० ॥

गन्धमाल्यैरर्चयित्वा उपलेपैश्च[2] भोजनैः ।
कुर्यात् संस्करणं तेषां विधिदृष्टेन कर्मणा ॥ २१ ॥

एतत्कर्मविधानेन मधुकाष्ठस्य सुन्दरि ।
धर्मसंस्थापनार्थाय एतत्ते कथितं मया ॥ २२ ॥

ये त्वनेन विधानेन अर्चां काष्ठस्य स्थापयेत् ।
ते न गच्छन्ति संसारं मम लोके च गच्छति ॥ २३ ॥

इति वाराहपुराणे भगवच्छास्त्रे मधुकाष्ठार्चास्थापनं
नाम एकाशीत्यधिकशततमोऽध्यायः ।

---

१. 'प्रदक्षिणं कृत्वा' इति ( ग ) ।
२. उपपन्नैश्चेति ( ग ) ।

## द्वयशीत्यधिकशततमोऽध्यायः

वराह उवाच

पुनरन्यत्प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
यथा तिष्ठामि शैलेषु प्रतिमायामितस्ततः ॥ १ ॥
सुरूपां च शिलां दृष्ट्वा निशल्यां सुपरीक्षिताम्।
तत्र दक्षं रूपकारं शीघ्रं च विनियोजयेत् ॥ २ ॥
शीघ्रमालिख्य तं तत्र श्वेतवर्त्तिकतया[1] नरः।
प्रदक्षिणां ततः कृत्वा पूजयेदक्षतादिभिः ॥ ३ ॥
दीपकं च ततो दद्याद् बलिं दध्यौदनेन च।
नमो नारायणायेति उक्त्वा मन्त्रमुदीरयेत् ॥ ४ ॥

मन्त्रः

योऽसौ भवान् सर्वजनप्रवीरः सोमाग्नितेजा समतिप्रधानः।
एतेन मन्त्रेण तु वासुदेव प्रतिष्ठितः कीर्त्तिं च वर्द्धयस्व ॥ ५ ॥

प्रवर अयुतवराह जय जय वर्द्धस्व।

अनेनैव तु मन्त्रेण कर्त्तव्यं यस्य यादृशम्।
एवं रूपं ततः कृत्वा देवं नारायणं प्रभुम्।
ततो वै स्थापयेत्तत्र पूर्वाभिमुखमेव तु ॥ ६ ॥
अहोरात्रमुषित्वैवं शुक्लवस्त्रेण भूषितः।
शुक्लयज्ञोपवीती च कृत्वा वै दन्तधावनम्।
सर्वगन्धोदकं गृह्य इमं मन्त्रमुदाहरेत् ॥ ७ ॥

मन्त्रः

योऽसौ भवांस्तिष्ठति सर्वरूप मायाबलं सर्वजगत्स्वरूपम्।
एतेन मन्त्रेण जगत्स्वरूप सम्पूजितस्तिष्ठसि लोकनाथ ॥ ८ ॥

करणधारणप्रबध्यमुदाहरणमपराजितमजरामर संपूज्य स्नापयात्मानमनेन मन्त्रेण–ओं नमो वासुदेवाय।

एवं तु स्थापनं कृत्वा शिलायां मम सुन्दरि।
ततोऽधिवासनं कार्यं पूर्वं प्रोष्ठपदासु च ॥ ९ ॥
यो मां[2] संस्थापयेद् भूमे मम कर्मपरायणः।
स याति वैष्णवं लोकं नात्र कार्या विचारणा ॥ १० ॥

---

१. 'तया वर्तिकया नरः' इति वा पाठः।

२. 'पूर्वं संस्थापयेद्' इति वा पाठः।

यावकं पायसं भुक्त्वा अहोरात्रं समापयेत् ।
ततः पश्चिमसन्ध्यायां दद्याच्चत्वारि दीपकान् ॥ ११ ॥
पञ्चगव्यं च गन्धं च वारिणा सह मिश्रयेत् ।
चतुरः कलशांश्चैव स्थापयेत् पादमूलतः ॥ १२ ॥
गीतवादित्रघोषेण उत्सवं तत्र कारयेत् ।
ब्राह्मणैः सामगैस्तत्र वेदघोषं तु कारयेत् ॥ १३ ॥
ब्रह्माक्षरसहस्राणि पठतां ब्रह्मवादिनाम् ।
येषां पठितशब्देन शुभगीतस्वरेण च ।
आगमिष्याम्यहं देवि मन्त्रपाठो मम प्रियः ॥ १४ ॥
निःशब्दं च ततः कृत्वा स्थाप्यो भागवतैः सह ।
पुनरावाहनं कुर्यान्मन्त्रेणानेन सुव्रतः ॥ १५ ॥

आगच्छ हे देव समन्त्रयुक्तः पञ्चेन्द्रियैः षट्सु तथा प्रधानः ।
एतेषु भूतेषु च संविधाता आवासिता तिष्ठसि लोकनाथ ॥ १६ ॥

अनेनैव तु मन्त्रेण समित्तिलघृतेन च ।
मधुना चैव होतव्यमष्टोत्तरशताहुतीः ।
एवं कृते विधानेऽथ तत्र सन्निहितोऽभवम् ॥ १७ ॥
व्यतीतायां तु शर्वर्यां प्रभाते विमले ततः ।
पञ्चगव्यं ततः प्राश्य मन्त्रेण विधिपूर्वकम् ॥ १८ ॥
सर्वगन्धैश्च लाजैश्च पञ्चगव्यजलं तथा ।
ततः प्रासादे स्थाप्योऽहं गीतवादित्रमङ्गलैः ।
सर्वगन्धांस्ततो गृह्य इमं मन्त्रमुदाहरेत् ॥ १९ ॥

मन्त्रश्च

योऽसौ भवाँल्लक्षणलक्षितश्च लक्ष्म्या च युक्तः सततं पुराणः ।
अत्र प्रासादे सुसमिद्धतेजाः प्रवेशमायाहि नमो नमस्ते ॥ २० ॥

तत एतेन मन्त्रेण प्रासादं प्रविवेशयेत् ।
प्रतिमा स्थापितव्या मे मध्ये न तु विपार्श्वतः ॥ २१ ॥
एवं संस्थापनं कृत्वा दद्यादुद्वर्त्तनं विभोः ।
चन्दनं कुङ्कुमं चैव मिश्रं कालेयकेन च ।
एवं चोद्वर्त्तनं कृत्वा इमं मन्त्रमुदाहरेत् ॥ २२ ॥

योऽसौ भवान् सर्वजगत्प्रधानः सम्पूजितो ब्रह्मबृहस्पतिभ्याम् ।
प्रबन्दिनः कारणं मन्त्रयुक्ताः सुस्वागतं[1] तिष्ठ सुलोकनाथ ॥ २३ ॥

---

१. 'सुखागतम्' इति (ग)।

३४

एवं संस्थापनं कृत्वा गन्धमाल्यैश्च पूजयेत् ।
शुक्लवस्त्राणि मे दद्यादिमं मन्त्रमुदाहरेत् ॥ २४ ॥

मन्त्रः

वस्त्राणि देवेश गृहाण तानि मया सुभक्त्या रचितानि यानि ।
इमानि सन्धारय विश्वमूर्त्ते प्रसीद मह्यञ्च नमो नमस्ते ॥ २५ ॥

एवं वस्त्राणि मे दद्याद्विधिदृष्टेन कर्मणा ।
धूपनं मे ततो दद्यात्कुङ्कुमागुरुमिश्रितम् ।
एवञ्च धूपनं दद्यादिमं मन्त्रमुदीरयेत्[1] ॥ २६ ॥

मन्त्रः

असावनादिः पुरुषः पुराणो नारायणः सर्वजगत्प्रधानः ।
गन्धं च माल्यानि च धूपदीपौ गृहाण देवेश नमो नमस्ते ॥ २७ ॥

एवं पूजां ततः कृत्वा प्रापणं च निवेदयेत् ।
पूर्वोक्तेन विधानेन प्रापणं चोपकल्प्य च ।
पूर्वोक्तेनैव मन्त्रेण दद्यात्प्रापणकं बुधः ॥ २८ ॥
प्रापणान्ते चाचमनं दद्याद्देहविशुद्धये ।
शान्तिजाप्यं ततः कार्यं सर्वकार्यार्थसिद्धिदम् ॥ २९ ॥

मन्त्रः

ओं शान्तिर्भवान्कुर्वतु लोकनाथ राज्ञः सराष्ट्रस्य च ब्राह्मणानाम् ।
बालेषु वृद्धेषु गवाङ्गणेषु कन्यासु शान्तिश्च पतिव्रतासु ॥ ३० ॥
रोगा विनश्यन्तु च सर्वतश्च कृषीबलानां च कृषिः सदा स्यात् ।
सुभिक्षयुक्ताश्च सदा हि लोकाः काले सुवृष्टिर्भविता च शान्तिः ॥ ३१ ॥

एवं विधिं ततः कृत्वा विधिदृष्टेन कर्मणा ।
संपूज्य तत्र देवेशं ब्राह्मणान् भोजयेद् व्रती ।
दीनानाथान्प्रतर्प्याथ यथाविभवशक्तितः ॥ ३२ ॥
य एतेन विधानेन कुर्यात्संस्थापनं मम ।
यावन्तो मम गात्रेषु जायन्ते जलबिन्दवः ।
तावद्वर्षसहस्राणि मम लोकेषु तिष्ठति ॥ ३३ ॥
यो मां संस्थापयेद् भूमे सर्वाहङ्कारवर्जितः ।
तारितं च कुलं तेन सप्त सप्त च सप्ततिः ॥ ३४ ॥
एतत्ते कथितं भद्रे शैलिकास्थापनं मम ।
धर्मसन्धारणार्थाय मम भक्त सुखाय च ॥ ३५ ॥

इति वाराहपुराणे शैलार्चास्थापनं नाम
द्व्यशीत्यधिकशततमोऽध्यायः ।

१. मुदाहरेदिति ( ग ) ।

## त्र्यशीत्यधिकशततमोऽध्यायः

वराह उवाच

पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे।
तिष्ठामि मृण्मयाश्चापि प्रतिमां पूजनेच्छया ॥ १ ॥
अर्चां च मृण्मयां कृत्वा अस्फुटां चाप्यखण्डिताम्।
नाधिकां वामनां चापि न वक्रां कारयेद् बुधः ॥ २ ॥
ईदृशीं प्रतिमां कृत्वा मम कर्मपरायणः।
भूमे सर्वाणि कर्माणि यथा वा रोचते तथा ॥ ३ ॥
काष्ठानामप्यलाभे तु मृण्मयां तत्र कारयेत्।
शैलजां वा ततो भूमे मम कर्मपरायणः ॥ ४ ॥
ताम्रेण कांस्यरौप्येण सौवर्णत्रपुरीतिकान्।
कुर्वन्ति शुभकर्माणः कोविदोऽहमहं भवम् ॥ ५ ॥
अर्चनं त्वपरं वेद्यां मम कर्मपरिग्रहात्।
केचिल्लोकापवादेन ख्यात्यै कुर्वन्ति केचन।
गृहं चालोच्य कश्चिन्मां पूजयेत् कामनापरः ॥ ६ ॥
पूजयेद् यदि वा चक्रं मम तेजोंऽशसम्भवम्।
भूमे एवं विजानीहि स्थापितोऽहं न संशयः।
सर्वसम्पत्प्रयच्छामि पूजितोऽहं धराधरे ॥ ७ ॥
मन्त्रैर्वा विधिपूर्वेण यो मे कर्माणि कारयेत्।
यं यं फलं समुदिश्य मां पूजयति मानवः ॥ ८ ॥
तत्तत्फलं प्रयच्छामि प्रसन्नेनान्तरात्मना।
मम चैव प्रसादेन प्राप्नोति गतिमुत्तमाम् ॥ ९ ॥
मद्भक्तः सततं नित्यं कर्मणा परिवेष्टितः।
स वै मत्परितोषार्थं मनस्येव प्रपूजयेत्।
दद्याज्जलाञ्जलिं मह्यं तेन मे प्रीतिरुत्तमा ॥ १० ॥
तस्य किं सुमनोभिश्च जाप्येन नियमेन किम्।
मह्यं चिन्तयतो नित्यं निभृतेनान्तरात्मना ॥ ११ ॥
तस्य कामान् प्रयच्छामि दिव्यान् भोगान्मनोरमान्।
एतत्ते सर्वमाख्यातं सुगोप्यञ्च प्रयत्नतः ॥ १२ ॥
मृण्मयीं प्रतिमां कृत्वा मम कर्मसु निष्ठितः।
श्रवणे चैव नक्षत्रे कुर्यात्तस्याधिवासनम् ॥ १३ ॥

पूर्वोक्तेन विधानेन स्थापयेन्मन्त्रपूर्वकम् ।
पञ्चगव्यं च गन्धैश्च वारिणा सह मिश्रयेत् ।
ततो मे स्नपनं कार्यमिमं मन्त्रमुदाहरेत् ।। १४ ।।

मन्त्रः

योऽसौ भवान् सर्वजगत्प्रकर्त्ता यस्य प्रसादेन भवन्ति लोकाः ।
स त्वं कुरुष्वाच्युत मत्प्रसादं सन्तिष्ठ अर्चासु च मृण्मयीषु ।। १५ ।।

कारणकारणं ह्यप्रतेजसं द्युतिमन्तं महापुरुषं नमो नमः । अनेन मन्त्रेण वेश्मनि प्रविश्य स्थापनां कुर्यात् ।

अनेनैव[1] तु मन्त्रेण स्थापयेन्मां समाहितः ।
पूर्ववत्स्थापयेत्तत्र चतुरः कलशान् पुरा ।
चतुरस्तान् गृहीत्वा च इमं मन्त्रमुदाहरेत् ।। १६ ।।

मन्त्रः

ओं वरुण समुद्रो लब्ध्वा संपूजितो ह्यात्मप्रतिप्रसन्नः ।
एतेन मन्त्रेण ममाभिषेकं प्राप्तं वरिष्ठं हि स ऊर्द्ध्वबाहुः ।
अग्निश्च भूमिश्च रसाश्च सर्वे भवन्ति यस्मात्सततं नमस्ये ।। १७ ।।

एवमास्नाप्य विधिवन्मम कर्मपरायणः ।
पूर्वोक्तविधिना चैव गन्धमाल्यैश्च पूजयेत् ।। १८ ।।
अगुरुं चैव धूपं च सकर्पूरं सकुङ्कुमम् ।
नमो नारायणायेति उक्त्वा धूपं प्रकल्पयेत् ।। १९ ।।
धूपं दत्त्वा यथान्यायं पीतं वस्त्रं तु दापयेत् ।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ।। २० ।।

मन्त्रः

वस्त्रेण पीतेन सदा प्रसन्नो यस्मिन् प्रसन्ने तु जगत्प्रसन्नम् ।
गृह्णातु वस्त्रं सुमुखः प्रसन्नो देवः सदा पातु भवस्य बन्धात् ।। २१ ।।

तत एतेन मन्त्रेण वस्त्रं दद्याद् यथोचितम् ।
धूपदीपादिभिः पूज्य प्रापणं परिकल्पयेत् ।। २२ ।।
पूर्वोक्तेन विधानेन दद्यात् प्रापणकं नरः ।
पश्चादाचमनं दद्यान्मन्त्रपूर्वं प्रयत्नतः ।। २३ ।।

मन्त्रः

शान्तिर्भवतु देवानां ब्राह्मणक्षत्रिणां तथा ।
शान्तिर्भवतु वृद्धानां बालानां शान्तिरुत्तमा ।
देवो वर्षतु पर्जन्यः पृथिवी शस्यपूरिता ।। २४ ।।

---

१. एतेनैवेति ( ग )।

अनेनैव तु मन्त्रेण शान्तिं कृत्वा विधानतः ।
पश्चाद्भागवतान् पूज्य ततो ब्राह्मणपूजनम् ।। २५ ।।

शिरसा वन्दनं कार्यं दक्षिणाभिः प्रपूज्य च ।
अच्छिद्रं वाच्य पश्चाच्च कुर्यादेवं विसर्जनम् ।। २६ ।।

एवं विसर्जनं कृत्वा ये च तत्र समागताः ।
पूजयेत्तांश्च विधिवद्वस्त्रालङ्कारभूषणैः ।
पूजयीत गुरुं तत्र यदीच्छेन्मम सात्म्यताम् ।। २७ ।।

यो गुरुं पूजयेद्भक्त्या विधिदृष्टेन कर्मणा ।
तेनाहं पूजितो नित्यं देवि सत्यं ब्रवीमि ते ।। २८ ।।

तुष्टो ददाति कृच्छ्रेण ग्राममात्रं नराधिपः ।
आब्रह्मपदपर्यन्तं हेळया यच्छते गुरुः ।। २९ ।।

तथैव मम शास्त्रेषु ममैव वचनाच्छुभे ।
सर्वशास्त्रेषु कल्याणि गुरुपूजा व्यवस्थिता ।। ३० ।।

य एतेन विधानेन कुर्यात् संस्थापनं मम ।
तारितानि कुलान्येव त्रीणि त्रिंशच्च सप्ततिः ।। ३१ ।।

पूजायां मम मार्गेषु पतन्ति जलबिन्दवः ।
तावद्वर्षसहस्राणि मम लोकेषु मोदते ।। ३२ ।।

एवं ते कथितं भूमे स्थापनं मृण्मयस्य तु ।
कथयिष्यामि ते ह्यन्यत्सर्वभागवतप्रियम् ।। ३३ ।।

इति वाराहपुराणे मृण्मयार्चास्थापनं नाम
त्र्यशीत्यधिकशततमोऽध्यायः ।



## चतुरशीत्यधिकशततमोऽध्यायः

वराह उवाच

ताम्रेण प्रतिमां कृत्वा सुरूपां चैव भास्वराम् ।
उचितेनोपचारेण वेश्ममध्य उपानयेत् ॥ १ ॥
ततो वेश्मन्युपागम्य स्थापयित्वा उदङ्मुखः ।
चित्रायां चैव नक्षत्रे कुर्याच्चवाधिवासनम् ॥ २ ॥
जलं च सर्वगन्धेन पञ्चगव्येन मिश्रितम् ।
स्नापयेच्च ततो मां वै इमं मन्त्रमुदाहरेत् ॥ ३ ॥

मन्त्रः

योऽसौ भवांस्तिष्ठसि सारभूतः स ताम्रके तिष्ठसि नेत्रभूतः ।
आगच्छ मूर्त्तौ सह पञ्चभूतैर्मया च पात्रैः सह विश्वधामेति ॥ ४ ॥
अनेनैव तु मन्त्रेण स्थापयित्वा यशस्विनि ।
पूर्वन्यायेन कर्त्तव्यमधिवासनपूजनम् ॥ ५ ॥
व्यतीतायाञ्च शर्वर्यामुदिते च दिवाकरे ।
ऋचः शुद्धिं विधायाऽथ स्नापयेन्मन्त्रपूर्वकम् ॥ ६ ॥
ब्राह्मणा वेदपाठांश्च कुर्युस्तत्र समागताः ।
बहूनि मङ्गलान्यत्र मण्डपे स्थापयेत्ततः ॥ ७ ॥
सुगन्धद्रव्यसंयुक्तं जलं चादाय पूजकः ।
ततो मे स्नपनं कार्यमिमं मन्त्रमुदाहरेत् ॥ ८ ॥

मन्त्रः

ओं योऽसौ भवान्सर्ववरः प्रभुश्च मायाबलो योगबलप्रधानः ।
आगच्छ शीघ्रञ्च मम प्रियाय सन्तिष्ठ ताम्रेष्वपि लोकनाथ ॥ ९ ॥

ज्वलन पवन प्लावन भावन तपन श्वासन स्वयं तिष्ठ भगवन् पुरुषोत्तम ओम् । इति सूत्रम् ।

ततो द्वारमुपागम्य वेश्म शीघ्रं प्रवेशयेत् ।
आसने चापि मां स्थाप्य पूजयेद्भक्तिपूर्वकम् ।
मन्त्रेणानेन मां स्थाप्य गन्धपुष्पादिदीपकैः ॥ १० ॥

स्थापनामन्त्रः

ओं आकाशप्रकाश जगत्प्रकाश विज्ञानमयानन्दमय त्रैलोक्यनाथात्रागच्छ इह सन्तिष्ठतु भवान् पुरुषोत्तम मामव इति सूत्रम् ।

अनेन स्थापनं कृत्वा मम शास्त्रानुसारतः।
शुक्लवस्त्रं समादाय इमं मन्त्रमुदाहरेत् ॥ ११ ॥

मन्त्रः

ओं शुद्धस्त्वमात्मा पुरुषः पुराणो जगत्सु तत्त्वं सुरलोकनाथ।
वस्त्राणि गृह्णीष्व मम प्रियाणि नमोऽस्तु तस्मै पुरुषोत्तमाय ॥ १२ ॥

वस्त्रैर्विभूषितं कृत्वा मम कर्मपरायणः।
यथान्यायेन मे शीघ्रमर्चनं तत्र कारयेत् ॥ १३ ॥
अर्चनालङ्कृतं कृत्वा गन्धधूपादिभिः प्रभुम्।
सम्पूज्य विधिवन्मां तु नैवेद्यं परिकल्पयेत्।
दत्त्वा स्वादु च नैवेद्यं शान्तिपाठं तु कारयेत् ॥ १४ ॥

मन्त्रः

शान्तिर्भवतु देवानां विप्राणां शान्तिरुत्तमा।
शान्तिर्भवतु राज्ञां च सराष्ट्राणां तथा विशाम् ॥१५॥
बालानां व्रीहिपण्यानां[1] गर्भिणीनाञ्च देहिनाम्।
शान्तिर्भवतु देवेश त्वत्प्रसादान्ममाखिला ॥ १६ ॥
एवं शान्तिं पठित्वा तु ब्राह्मणांस्तत्र पूजयेत्।
गुरुं भागवतं चैव मर्चयेच्च यथाविधि ॥ १७ ॥
ब्राह्मणान् भोजयेत्तत्र यथोत्पन्नेन माधवि।
विशेषेण गुरुं पूज्य वस्त्रालङ्कारभोजनैः ॥ १८ ॥
तेनाहं पूजितो भूमे सत्यमेतद् ब्रवीमि ते।
गुरुर्यस्य न तुष्टो वै तस्माद् दूरतरो ह्यहम् ॥ १९ ॥
य एतेन विधानेन कुर्यात् संस्थापनं मम।
तारितञ्च कुलं तेन नवभिः सप्तविंशतिः ॥ २० ॥
एतत्ते कथितं भद्रे ताम्रार्चास्थापनं मम।
कथयिष्यामि ते ह्येवं कार्त्स्न्येन प्रतिमार्चनम् ॥ २१ ॥
जलस्य बिन्दवो यावन्मम स्नाने च सुन्दरि।
तावद्वर्षसहस्राणि मम लोके महीयते ॥ २२ ॥

इति वाराहपुराणे ताम्रार्चास्थापनं नाम
चतुरशीत्यधिकशततमोऽध्यायः।



---

१. 'बालानां हि विपन्नानाम्' इति वा पाठः।

## पञ्चाशीत्यधिकशततमोऽध्यायः

वराह उवाच

कांस्येन प्रतिमां कृत्वा सुरूपां सुप्रतिष्ठिताम् ।
सर्वाङ्गावयवैर्युक्तां विमलां कर्मनिर्मिताम् ।
ज्येष्ठायां चैव नक्षत्रे मम वेश्मन्युपानयेत् ॥ १ ॥
गीतवादित्रशब्देन बहुभिर्मङ्गलैस्तथा ।
अर्घ्यं गृह्य यथान्यायमिमं मन्त्रमुदाहरेत् ॥ २ ॥

योऽसौ भवान् सर्वयज्ञेषु पूज्यो ध्येयो गोप्ता विश्वकामो महात्मा ।
प्रसन्नात्मा भगवान् मे प्रसन्नः सुपूजितस्तिष्ठ हि लोकनाथ ॥ ३ ॥

अर्घ्यं दत्त्वा यथान्यायं स्थापयेत्तदुदङ्मुखः ।
यथान्यायेन संस्थाप्य कुर्याच्चैवाधिवासनम् ॥ ४ ॥
चतुरः कलशांश्चैव पञ्चगव्यसमन्वितान् ।
सर्वगन्धैश्च लाजैश्च मधुना च विशेषतः ॥ ५ ॥
चतुरः कलशान् पूर्य स्नानार्थं मे समन्त्रकम् ।
ततश्चास्तंगते सूर्ये शुद्धैर्भागवतैः सह ॥ ६ ॥
कुर्यात्संस्थापनं तत्र ममार्चायास्तु पूजकः ।
गृहीत्वा कलशांस्तत्र शुद्धान् भागवतांस्तथा ।
नमो नारायणेत्यु उक्त्वा इमं मन्त्रमुदाहरेत् ॥ ७ ॥

मन्त्रः

आदिर्भवान् ब्रह्मयुगान्तकल्पः सर्वेषु कालेष्वपि कल्पभूतः ।
एको भवान्नास्ति कश्चिद्द्वितीय उपागतस्तिष्ठ हि लोकनाथ ॥ ८ ॥

विकार अविकार अकार सकार शकार षकार स्वच्छन्दरूपः क्षरमक्षरं धृतिरूपः अरूपमिति नमः पुरुषोत्तमायेति सूत्रम् ।

व्यतीतायां तु शर्वर्यामुदिते च दिवाकरे ।
अश्वेन[1] च मुहूर्त्तेन प्राप्ते मूलेषु चोत्तरे ॥ ९ ॥
पूर्वोक्तेषु विधानेन मम शास्त्रानुदर्शिनाम् ।
स्थापयेद्द्वारमूले तु मम वेश्मस्य सुन्दरि ॥ १० ॥
सर्वशान्त्युदकं गृह्य सर्वगन्धफलानि च ।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ॥ ११ ॥

---

१. श्वेतेनेति ( ग ) ।

मन्त्रः

ओं इन्द्रो भवांस्त्वञ्च यमः कुबेरो जलेश्वरः सोमबृहस्पती च ।
शुक्रः शनैश्चरबुधौ सह सैंहिकेय-केतू रविश्चैव धरात्मजस्त्वम् ॥ १२ ॥

तथैव सर्वौषधयो जलानि वायुश्च पृथ्वी च सवायुसारथिः ।
नागाः सयक्षाश्च दिशश्च सर्वास्तस्मै नमस्ते पुरुषोत्तमाय ॥ १३ ॥
—इति सूत्रम् ।

अनेनैव तु मन्त्रेण कृत्वा कर्म सुपुष्कलम् ।
मम तां प्रतिमां गृह्य ततो वेश्मन्युपानयेत् ॥ १४ ॥

एकान्ते स्नापयेन्मां च जलैः पूर्वाभिमन्त्रितैः ।
प्रगृह्य कलशेभ्यश्च जलं गन्धसमन्वितम् ।
गात्रसंशोधनार्थाय इमं मन्त्रमुदाहरेत् ॥ १५ ॥

मन्त्रः

सरांसि ये ते च समस्तसागरा नद्यश्च तीर्थानि च पुष्कराणि ।
आयान्तु तान्येव तव प्रसादाच्छुद्धय च मे स्युः पुरुषोत्तमाय ॥ १६ ॥
—इतिसूत्रम् ।

एवं मां स्नाप्य विधिना मम कर्मानुसारिणः ।
एवं न्यायेन मां तत्र अर्चयित्वा यथोचितम् ॥ १७ ॥
गन्धधूपादिभिश्चैव यथाविभवशक्तितः ।
पश्चाद्वस्त्राणि मे दद्यान्मम गात्रसुखानि च ॥ १८ ॥
तान्यानयित्वा वस्त्राणि ममाग्रे स्थापयेन्नरः ।
उभौ तौ चरणौ नत्वा इमं मन्त्रमुदाहरेत् ॥ १९ ॥

मन्त्रः

ओं वस्त्राणि देवेन्द्र मयाहृतानि सूक्ष्माणि सौम्यानि सुखावहानि ।
गात्रस्य सन्तुष्टिकराणि तुभ्यं गृह्णीष्व देवेश सुलोकनाथ ॥ २० ॥

वेदोपवेद ऋग्वेद यजुर्वेद सामवेद अथर्ववेद संस्तुत इति नमः परम्परायेति सूत्रम् ।

अर्चितालङ्कृतं कृत्वा पूर्वन्यायेन सुन्दरि ।
पश्चान्मे प्रापणं दद्यान्मन्त्रवद्विधिपूर्वकम् ॥ २१ ॥
दत्त्वा प्रापणकं तत्र दद्यादाचमनं ततः ।
शान्तिपाठश्च वै कार्यो मन्त्रेणानेन सुन्दरि ॥ २२ ॥

विद्याः सर्वे ब्रह्म च ब्राह्मणाश्च ग्रहाः सर्वे सरितः सागराश्च ।
इन्द्राद्यष्टौ लोकपालाश्च सर्वे पूर्वोक्ता ये सर्वशान्तिश्च कुर्युः ॥ २३ ॥

आयामः[1] यमः कामः दमः वाम ओं नमः पुरुषोत्तमायेति सूत्रम् ।
वृत्तेष्वेवोपचारेषु मम कुर्यात् प्रदक्षिणम् ।
अभिवादनं स्तुतिं चापि कृत्वा भागवतान् शुचीन् ।
सम्पूज्य ब्राह्मणान्पश्चाद्भोजयेत्पायसादिभिः ॥ २४ ॥

तेभ्यः शान्त्युदकं गृह्य द्विजेभ्यः कमलेक्षणे ।
दद्यादभ्युक्षणं मह्यं तेनाहं पूजितोऽभवम् ॥ २५ ॥

सर्वान्विसर्जयित्वा तु कुर्याद्वै गुरुपूजनम् ।
अङ्गुलीयकवासोभिर्दानसम्माननादिभिः ॥ २६ ॥

यो गुरुं पूजयेद् भूमे भक्तियुक्तेन चेतसा ।
तेनाहं पूजितो देवि एवमेतन्न संशयः ॥ २७ ॥

ब्राह्मणान्मम भक्तांश्च गुरूंश्चैव हि निन्दति ।
नाशयिष्यामि तं देवि सत्यमेतद् ब्रवीमि ते ॥ २८ ॥

जलस्य बिन्दवो यावन्मम गात्रेषु तिष्ठति ।
तावद्वर्षसहस्राणि मम लोकेषु तिष्ठति ॥ २९ ॥

य एतेन विधानेन स्थापयिष्यति मां नरः ।
तारितं च कुलं तेन पितृजं मातृजं तथा ॥ ३० ॥

एतत्ते कथितं भद्रे कांस्येन स्थापनं मम ।
कथयिष्यामि ते ह्येवं रौप्येण स्नापनं मम ॥ ३१ ॥

इति वाराहपुराणे कांस्यप्रतिमास्थापनविधिर्नाम
पञ्चाशीत्यधिकशततमोऽध्यायः ।



१. आमामयेति ( ग ) ।

## षडशीत्यधिकशततमोऽध्यायः

वराह उवाच

राजतीं प्रतिमां कृत्वा सुरूपां निर्मलां शुचिम् ।
अश्लिष्टां चैव निर्दोषां सर्वतः परिनिष्ठिताम् ॥ १ ॥

चन्द्रपाण्डुरसङ्काशां सुश्लक्ष्णां निर्घृणा शुभाम् ।
श्रिया युक्तां मनोज्ञां च दीप्यमानां दिशो दश ॥ २ ॥

ईदृशीं प्रतिमां कृत्वा मम कर्मपरायणः ।
गीतवादित्रशब्देन शङ्खदुन्दुभिनिस्वनैः ॥ ३ ॥

स्तुतिभिर्मङ्गलैश्चैव मम वेश्मन्युपानयेत् ।
अर्घ्यपाद्यादिकं गृह्य इमं मन्त्रमुदाहरेत् ॥ ४ ॥

मन्त्रः

ओं यः सर्वलोकेष्वपि सर्वमर्घ्यः पूज्यश्च मान्यश्च दिवौकसामपि ।
उपागतो गृह्य इदं ममार्घ्यं प्रसीद मां तिष्ठ सुलोकनाथ ।
यो राजते यज्ञपतिश्च यज्ञे सूर्योदये मम कर्माग्निहोत्रम् ॥ ५ ॥

मन्दश्चेति आदिमध्यस्वरूपायेति सूत्रम् ।

तत एतेन मन्त्रेण अर्घ्यं दत्त्वा यथाविधि ।
सुस्नातोऽलङ्कृतश्चैव स्थापयेत्तामुदङ्मुखः ॥ ६ ॥

अश्लेषासु च नक्षत्रे राशौ कर्कटके स्थिते ।
अस्तङ्गते दिनकरे स्वजने यजति स्थिते ।
अधिवासनं तत्र कुर्याद्विधिवन्मन्त्रपूर्वकम् ॥ ७ ॥

चत्वारः कलशास्तत्र चन्दनोदकमिश्रिताः ।
सर्वौषधिसमायुक्ताः सहकारविभूषिताः ॥ ८ ॥

ततस्ते कर्मिणः सर्वे मम शास्त्रानुसारिणः ।
गुरोस्तु वचनाद्देवि मनोज्ञान् सुखशीतलान् ।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ॥ ९ ॥

मन्त्रः

योऽसौ भवान् सर्वलोकैककर्त्ता सर्वाध्यक्षः सर्वरूपैकरूपः ।
आयातु मूर्त्तौ सहितो मया च ध्रुवादिभिर्लोकपालैस्तु पूज्यः ॥ १० ॥

नमोऽनन्तायेति सूत्रम् ।

व्यतीतायां तु शर्वर्यामुदिते सूर्यमण्डले ।
दिशासु च प्रसन्नासु द्वारमूले उपानयेत्[1] ॥ ११ ॥
एवं संस्थापनं कृत्वा मम कर्मानुसारिणः ।
घटैः पूर्णैर्यथान्यायं कुर्यात्तत्राभिषेचनम् ॥ १२ ॥
अभिषिच्य[2] ततः पश्चात्स्थापयेत विधानतः ।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ॥ १३ ॥

मन्त्रः

गङ्गादिभ्यो नदीभ्यश्च सागरेभ्यो मया हृतम् ।
स्नानाय ते सुरश्रेष्ठ कर्पूरावासितं जलम् ॥ १४ ॥
एवं स्नाप्य विधानेन गृहस्याभ्यन्तरं नयेत् ।
स्थापना तत्र मे कार्या मन्त्रेणानेन सुन्दरि ॥ १५ ॥

मन्त्रः

वेदैर्वेद्यो वेदविद्भिश्च पूज्यो यज्ञात्मको यज्ञफलप्रदाता ।
यज्ञार्थं त्वामाहूये देवदेव मूर्त्तावस्यान्तिष्ठ सुलोकनाथ ॥ १६ ॥

धनजन रूप्यस्वर्ण अनन्ताय नम इति सूत्रम् ।

एवं संस्थापनं कृत्वा प्रहृष्टेनान्तरात्मना ।
अर्चयित्वा यथान्यायं पूर्वोक्तविधिना नरः ।
नीलवस्त्राणि मे दद्यात्प्रियाणि मम भूषणम् ॥ १७ ॥
ततो वस्त्राण्युपादाय जानुभ्यां पतितो भुवि ।
नमो नारायणायेति उक्त्वा काममुदाहरेत्[3] ॥ १८ ॥

मन्त्रः

योऽसौ भवांश्चन्द्ररश्मिप्रकाशः शङ्खेन कुन्देन समानवर्णः ।
क्षीरोज्ज्वलः कौमुदवर्ण देव वस्त्राणि गृह्णीष्व मम प्रियाय ॥

वेषः सुवेषः अनन्तः अमरः मारणः कारणः सुलभः दुर्लभः श्रेष्ठा सुवर्चा इति सूत्रम् ।

अनेनैव तु मन्त्रेण दत्त्वा वस्त्राणि मे शुचिः ।
ततो मे प्रापणं दद्याद्भक्तियुक्तेन चेतसा ।
नमो नारायणायेति इमं मन्त्रमुदाहरेत् ॥ १९ ॥

---

१. द्वारमूले तु स्थापयेदिति ( ग ) । २. 'अभिषेच्य' इति ( ग ) ।
३. 'मन्त्रमुदाहरेत्' इति ( ग ) ।

शाल्यन्नं पायसैर्युक्तं सितया च घृतेन च ।
प्रापणं गृह्यतां देव अनन्त पुरुषोत्तम ।। २० ।।
दत्वा तु मम नैवेद्यं दद्यादाचमनं बुधः ।
सर्वलोकहितार्थाय शान्तिपाठमुदाहरेत् ।। २१ ।।
ओं शान्तिं करोति ब्रह्मा च रुद्रो विष्णुर्हि भास्करः ।
रात्रिश्चैव तु सन्ध्ये द्वे नक्षत्राणि ग्रहा दिशः ।। २२ ।।

अचल चञ्चल सचल खेचल प्रचल अरविन्दप्रभ उद्भव चेति नमः संस्थापितानां वासुदेव इति सूत्रम् ।

कृत्वा वै शान्तिकं तत्र सर्वपापप्रणाशनम् ।
पूज्य भागवतांस्तत्र यथाविभवशक्तितः ।
ब्राह्मणान् भोजयेत्तत्र[1] गुरुं मन्त्रेण पूजयेत् ।। २३ ।।
तेभ्यः शान्त्युदकं गृह्य कुर्यादभ्युक्षणं ततः ।
ब्राह्मणान् स्वजनं चैव अभिवाद्य कृताञ्जलिः ।
शीघ्रं विसर्जयेत्तांश्च ये तत्र समुपागताः ।। २४ ।।
ततो गुरुं च संपूज्य दानमानादिभिर्विभुम् ।
गुरौ सम्पूजिते तत्र मम पूजा कृता भवेत् ।। २५ ।।
जलस्य बिन्दवो येऽन्नभोजनान्ते पतन्ति हि ।
तावद्वर्षसहस्राणि विष्णुलोके स मोदते ।। २६ ।।
य एतेन विधानेन पूजयेन्मतिमान्नरः ।
उद्धृतञ्च कुलं तेन पितृजं मातृजं तथा ।। २७ ।।
अनेन विधिना देवि[2] रौप्यार्चास्थापनं मम ।
सुवर्णस्य प्रवक्ष्यामि स्थापनं मम सुप्रियम् ।। २८
यथैव राजतीं कुर्यात्तथैव च सुवर्णिकाम् ।
तेनैव विधिना सर्वं कुर्यादावाहनादिकम् ।। २९
यत्फलं दारुशैलादिनाम्ना कांस्यादिराजते ।
तत्फलं कोटिगुणितं सौवर्णस्य प्रपूजने[3] ।। ३० ।।
कुलानि तारयेत् सुभ्रु अयुतान्येकविंशतिम् ।
याति मल्लयतां भूमे पुनरावृत्तिवर्जितः ।। ३१ ।।
एतत्ते कथितं भूमे यत्त्वया परिपृच्छितम् ।
रहस्यं विपुलश्रोणि किमन्यत्कथयामि ते ।। ३२ ।।

---

१. ( ग ) पुस्तके कृत्वा वै शान्तिकं तत्र इत्यनन्तरं चरणचतुष्टयं नास्ति तच्च २२ श्लोकादनन्तरं दृश्यते ।
२. एतत्ते कथितं देवीति ( ग ) ३. 'सौवर्णस्य च स्थापने' इति वा पाठः ।

भूमिरुवाच

उक्ता याः प्रतिमाः सर्वाः सुवर्णादिविनिर्मिताः ।
तासु तिष्ठसि सर्वासु शालग्रामे च सर्वदा ॥ ३३ ॥
कति पूज्या गृहादौ च अविशेषस्तु पूजने ।
विशेषो वा भवेत्तन्मे रहस्यं वद माधव ।
शिवादिपूजने के वा संख्याता[1] स्तच्च मे वद ॥ ३४ ॥

वराह उवाच

गृहे लिङ्गद्वयं नार्च्यं शालग्रामत्रयं तदा ।
द्वे चक्रे द्वारकायास्तु नार्च्यं सूर्यद्वयं तथा ।
गणेशत्रितयं नार्च्यं शक्तित्रितयमेव च ॥ ३५ ॥
शालग्रामयुगाः पूज्या युग्मेषु द्वितयं न हि ।
विषमा नैव पूज्याः स्युर्विषमे एक एव हि ॥ ३६ ॥
गृहेऽग्निदग्धा भग्ना वा नैव पूज्या वसुन्धरे ।
आसां तु पूजनाद् गेहे उद्वेगं प्राप्नुयाद् गृही ॥ ३७ ॥
शालग्रामशिला भग्ना पूजनीया सचक्रका ।
खण्डिता स्फुटिता वापि शालग्रामशिला शुभा ॥ ३८ ॥
शिला द्वादश वै देवि शालग्रामसमुद्भवा ।
विधिवत्पूजिता येन तस्य पुण्यं वदामि ते ॥ ३९ ॥
कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः ।
यत्स्याद् द्वादशकल्पैस्तु दिनैकेन हि तद्भवेत् ॥ ४० ॥
यः पुनः पूजयेद्भक्त्या शालग्रामशिलाशतम् ।
तत्फलं नैव शक्तोऽहं वक्तुं वर्षशतैरपि ॥ ४१ ॥
सर्वैर्वर्णैस्तु सम्पूज्याः प्रतिमाः सर्वदेवताः ।
लिङ्गान्यपि तु पूज्यानि मणिभिः कल्पितास्तथा ॥४२॥
शालग्रामो न स्प्रष्टव्यो हीनवर्णैर्वसुन्धरे ।
स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको[2] मतः ॥ ४३ ॥
मोहाद्यः संस्पृशेच्छूद्रो योषिद्वापि कदाचन ।
शयते नरके घोरे यावदाभूतसंप्लवम् ॥ ४४ ॥
यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुन्धरे ।
दूरादेवास्पृशन् पूजां कारयेत् सुसमाहितः ॥ ४५ ॥

---

१. को वा संख्यात इति ( ग )। २. संस्पर्शैर्वज्रस्पर्शाधिक इति ( ग )।

चरणामृतपानेन सर्वपापक्षयो भवेत् ।
अभक्ष्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलायोगात् पावनं तद्भवेत् सदा ॥ ४६ ॥

दद्याद्भक्ताय यो देवि शालग्रामशिलां नरः ।
सुवर्णसहितां तस्य यत्पुण्यं तच्छृणुष्व मे ॥ ४७ ॥

सुवर्णसहिता भूमिः सपर्वतवनाकरा ।
ससमुद्रा भवेद्दत्ता सत्पात्राय वसुन्धरे ॥ ४८ ॥

शालग्रामशिलायास्तु मूल्यमुद्घाटयेत्क्वचित् ।
विक्रेता क्रयकर्त्ता च नरके नीयते ध्रुवम् ।
पूजा फलं न शक्येत वक्तुं वर्षशतैरपि ॥ ४९ ॥

एतत्ते कथितं गुह्यं प्रतिमास्थापनं प्रति ।
शालग्रामे विशेषश्च लिङ्गादीनां च यो भवेत् ।
पूजनादौ विधिश्चापि किमन्यच्छ्रोतुमिच्छसि॥ ५० ॥

इति वाराहपुराणे प्रागितिहासे भगवच्छास्त्रे रौप्यसौवर्णार्चा-स्थापनं नाम षडशीत्यधिकशततमोऽध्यायः ।



## सप्ताशीत्यधिकशततमोऽध्यायः

सूत उवाच

एवं नारायणाच्छ्रुत्वा सा मही शंसितव्रता ।
कराभ्यामञ्जलिं कृत्वा माधवं पुनरब्रवीत् ॥ १ ॥

धरण्युवाच

श्रुतमेतन्मयाख्यानं क्षेत्रस्य च महत्फलम् ।
एकं मे परमं गुह्यं तद्भवान्वक्तुमर्हसि ॥ २ ॥

पितृयज्ञस्य माहात्म्यं सोमदत्तो नराधिपः ।
मृगयां समुपारभ्य यत्त्वया पूर्वभाषितम् ॥ ३ ॥

को गुणः पितृयज्ञस्य कथमेव प्रयुज्यते ।
केन चोत्पादितं श्राद्धं कस्मिन्नर्थे किमात्मकम् ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण वदस्व मे ॥ ४ ॥

वराह उवाच

साधु भूमे महाभागे यन्मां त्वं परिपृच्छसि ।
मोहितासि वरारोहे भाराक्रान्ता वसुन्धरे ।
दिव्या ददामि ते बुद्धिं शृणु सुन्दरि तत्त्वतः ॥ ५ ॥
कथयिष्यामि ते ह्येवं[1] श्राद्धोत्पत्तिविनिश्चयम् ।
आदौ स्वर्गस्य चोत्पत्तिं देवानां च वरानने ॥ ६ ॥

निष्प्रभेऽस्मिन्निरालोके सर्वतस्तमसावृते ।
स्रष्टुं वै बुद्धिरुत्पन्ना त्रैलोक्यं सचराचरम् ॥ ७ ॥
सोऽहं च शेषपर्यङ्के एकश्चैव पराङ्मुखः ।
स्वपामि च वरारोहे अनन्तशयने ह्यहम् ॥ ८ ॥

निद्रां मायामयीं कृत्वा जागर्मि च स्वपामि वा[2] ।
विष्णुमायामयं कृत्वा जानासि त्वं न धारिणि ॥९॥
युगं युगसहस्राणि यास्यन्ति च गतानि च ।
न त्वं मम विजानासि ज्ञातुं मायां यशस्विनि ॥ १० ॥
धारितं मम सुश्रोणि दिवा पञ्चशतानि च ।
वाराहं रूपमादाय न जानासि हि भामिनि ॥ ११ ॥

---

१. ते हीदमिति ( ग ) । २. स्वपानि चेति ( ग ) ।

यन्मां पृच्छसि वै ज्ञातुमात्मानञ्च यशस्विनि ।
एकमूर्त्तिस्त्रिधा जातो ब्रह्मविष्णुहरात्मकः ॥ १२ ॥
क्रोधहेतोर्मया सृष्ट ईश्वरोऽसुरनाशनः ।
मम नाभ्यां भवत्पद्मं पद्मगर्भः पितामहः ॥ १३ ॥
एवं त्रयो वयं देवाः कृत्वा ह्येकार्णवां महीम् ।
तिष्ठामः परमप्रीत्या मायां कृत्वा तु वैष्णवीम् ॥ १४ ॥
सर्वं तज्जलपूर्णं तु न प्रज्ञायत किञ्चन ।
वटमेकं वर्जयित्वा विष्णुमूलं यशोद्रुमम् ।
तिष्ठामि वटवृत्तेऽहं मायया बालरूपधृक् ॥ १५ ॥
पश्यामि च जगत्सर्वं त्रैलोक्यं यन्मया कृतम् ।
धारयामि वरारोहे जानासि त्वं धरे शुभे ॥ १६ ॥
कालेन तु तदा देवि कृत्वा वै वडवामुखम् ।
विनिःसृतं जलं तत्र मायया तदनन्तरम् ॥ १७ ॥
प्रलये च विनिर्वृत्ते ब्रह्मा लोकपितामहः ।
मुहूर्त्तं ध्यानमास्थाय भाषितं वचनं मया ।
शीघ्रमुत्पादय ब्रह्मन् दैवतासुरमानुषान् ॥ १८ ॥
एवमुक्तो मया देवि गृह्य तत्र कमण्डलुम् ।
उपस्पृश्य शुचिर्भूत्वा ब्रह्मा चोत्पादयत्सुरान् ॥ १९ ॥
आदित्या वसवो रुद्रा अश्विनौ च मरुद्गणाः ।
तारणार्थं च सर्वेषां ब्राह्मणान् भुवि देवतान् ॥ २० ॥
बाहुभ्यां क्षत्रमुत्पन्नं वैश्या ऊरुविनिःसृताः ।
पद्भ्यां विनिःसृताः शूद्राः सर्ववर्णोपचारकाः ॥ २१ ॥
दैवताश्चासुरा देवि जातास्ते ब्रह्मणस्तथा ।
देवता ह्यसुराः सर्वे तपोवीर्यबलान्विताः ॥ २२ ॥
आदित्या वसवो रुद्रा अश्वनौ च मरुद्गणाः ।
देवतास्तु त्रयस्त्रिंशददित्या जनयत्पुरा ।
दित्या च जनिताः पुत्रा असुराः सुरशत्रवः ॥ २३ ॥
प्रजापतिश्चाजनयदृषयश्च तपोधनान् ।
तेजसा भास्कराकाराः सर्वे शास्त्रविदो द्विजाः ।
तेषां पुत्राश्च पौत्राश्च जनिता ब्रह्मसूनुना ॥ २४ ॥
निमेस्तु वंशसम्भूतो आत्रेय इति विश्रुतः ।
जातमात्रो महात्मा स श्रीमांश्चापि तपोनिधिः ।
एकचित्तं समाधाय तपश्चरति निश्चलः ॥ २५ ॥

पञ्चाग्निर्वायुभक्षश्च एकपादोदूर्ध्वबाहुकः ।
शीर्णपर्णाम्बुभक्षश्च शिशिरे च जलाशयः ॥ २६ ॥
स कृच्छ्रे फलभक्षश्च पुनश्चान्द्रायणञ्चरन् ।
वर्षाणां च सहस्राणि तपस्तप्त्वा वसुन्धरे ।
मृत्युकालमनुप्राप्तस्ततः पञ्चत्वमागतः ॥ २७ ॥

नष्टं च तं सुतं दृष्ट्वा निमेः शोक उपाविशत् ।
पुत्रशोकाभिसंयुक्तो दिवा रात्रौ च चिन्तयन् ॥ २८ ॥

निमिः कृत्वा ततः शोकं विधानात्तत्र माधवि ।
तं मनोगतसङ्कल्पं[1] त्रिरात्रे प्रत्यपद्यत ॥ २९ ॥

तस्य प्रति विशुद्धस्य माघमासे तु द्वादशीम् ।
मानसं सृज्य विषयं बुद्धिविस्तारगामिनी ।
स निमिश्चिन्तयामास श्राद्धकल्पं समाहितः ॥ ३० ॥

यानि तस्यैव भोज्यानि मूलानि च फलानि च ।
यानि कानि च भक्ष्याणि नवश्च रससम्भवः ।
यानि तस्यैव चेष्टानि सर्वमेतदुदाहरेत् ॥ ३१ ॥

आमन्त्र्य ब्राह्मणं पूर्वं शुचिर्भूत्वा समाहितः ।
दक्षिणावृततः सर्वं ऋषिः स्वयमकुर्वत ॥ ३२ ॥

सप्तकृत्वा ततस्तत्र युगपत्समुपाविशत् ।
दत्त्वा तु मांसशाकानि मूलानि च फलानि च ॥ ३३ ॥

पूजयित्वा तु विप्रान् स सप्तकृत्वश्च सुन्दरि ।
कृत्वा तु दक्षिणाग्रांश्च कुशांश्च प्रयतः शुचिः ।
प्रददौ श्रीमतेः पिण्डं नामगोत्रमुदाहरन् ॥ ३४ ॥

तत्कृत्वा स मुनिश्रेष्ठो धर्मसङ्कल्पमात्मनः ।
एवं दिने गते भद्रे अस्तं प्राप्ते दिवाकरे ।
ब्रह्म कर्मोत्तमं दिव्यं भावसाध्यमुपासत ॥ ३५ ॥

एकाकी यतचित्तात्मा निराशी निष्परिग्रहः ।
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्चं नातिनीचं च चैलाजिनकुशोत्तरम् ॥ ३६ ॥

तत्रैकाग्रं मनः कृत्वा यतचित्तो जितेन्द्रियः ।
उपविश्यासनेऽयुञ्जद् योगमात्मविशुद्धये ॥ ३७ ॥

---

१. तमेव गतसङ्कल्पमिति ( ग ) ।

समकायशिरोग्रीवं धारयन्नचलं स्थितः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ।
प्रकाशात्मा विगतभीर्ब्रह्मचारी व्रते स्थितः ॥ ३८ ॥
संयम्य मयि चित्तं भो युक्त आसीत मत्परः ।
प्रयुञ्जीत सदात्मानं मद्भक्तो नान्यमानसः ॥ ३९ ॥
एवं सन्ध्यां निवृत्तायां ततो रात्रिरुपागता ।
पुनश्चिन्तितुमारब्धः शोकसंविग्नमानसः ।
कृत्वा तु पिण्डसङ्कल्पं पश्चात्तापमकुर्वत ॥ ४० ॥
अकृतं मुनिभिः सर्वं किं मया तदनुष्ठितम् ।
निवापकर्म ह्यशुचिः पुत्रार्थे विनियोजितम् ।
अहो स्नेहप्रभावेण मया चाकृतबुद्धिना ॥ ४१ ॥
कथं ते मुनयः शापात्प्रदहेयुर्न मामिति ।
सदेवासुरगन्धर्वपिशाचोरगराक्षसाः ।
किं वक्ष्यन्ति च मां सर्वे ये वै पितृपदे स्थिताः ॥ ४२ ॥
एवं विचिन्त्यमानस्य गता रात्रिर्वसुन्धरे ।
पूर्वसन्ध्यानुसम्प्राप्ता उदिते च दिवाकरे ।
सन्ध्याविधिं विनिर्वर्त्य हुत्वाग्नीन्द्विजसत्तमः ॥ ४३ ॥
पुनश्चिन्ताप्रपन्नः स आत्रेयो ह्यतिदुःखितः ।
एकाकी भाषते तत्र शोकपीडितमानसः ॥ ४४ ॥
धिग्वयो धिक च मे कर्म धिग्बलं धिक् च जीवितम् ।
पुत्रं सर्वसुखैर्युक्तं जीवितं हि न दृश्यते ॥ ४५ ॥
नरकं पूतिकाख्यातं हृदि दुःखं विदुर्बुधाः ।
परित्राणं ततः पुत्रादिच्छन्तीह परत्र च ॥ ४६ ॥
पूजयित्वा तु देवांश्च दत्त्वा दानं त्वनेकशः ।
हुत्वाग्निं विधिवच्चैव स्वर्गं तु लभते नरः ॥ ४७ ॥
पुत्रेण लभते येन पौत्रेण च पितामहाः ।
अथ पुत्रस्य पौत्रेण मोदन्ते प्रपितामहाः ।
पुत्रेण श्रीमता हीनं नाहं जीवितुमुत्सहे ॥ ४८ ॥
एतस्मिन्नन्तरे देवि नारदो द्विजसत्तमः ।
जगाम तापसारण्यमृष्याश्रमविभूषितम् ।
सर्वकामयुतं रम्यं बहुपुष्पफलोदकम् ॥ ४९ ॥
यत्प्रविश्याश्रमपदं भ्राजमानं स्वतेजसा ।
तं दृष्ट्वा पूजयामास स्वागतेनाथ धर्मवित् ॥ ५० ॥

अर्घ्यं पाद्यं तस्य दत्त्वा आसने चोपवेश्य च ।
उपविश्यासने देवि नारदो वाक्यमब्रवीत् ॥ ५१ ॥

नारद उवाच

निमे शृणु महाप्राज्ञ शोकमुत्सृज्य दूरतः ।
अशोच्यमनुशोचस्त्वं प्रज्ञावान्नावबुध्यसे ॥ ५२ ॥

गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः[1] ।
मृतं वा यदि वा नेष्टं यो यान्तमनुशोचति ।
अमित्रास्तस्य हृष्यन्ति स चापि न निवर्त्तते ॥ ५३ ॥

अमरत्वं न पश्यामि त्रैलोक्ये सचराचरे ।
देवतासुरगन्धर्वा मानुषा [2]मृगपक्षिणः ।
सर्वे कालवशं यान्ति सर्वे कालमुदिष्यते ॥ ५४ ॥

जातस्य सर्वभूतस्य कालो मृत्युरुपस्थितः ।
अवश्यं चैव गन्तव्यं कृतान्तविहितेन च ॥ ५५ ॥

तव पुत्रो महात्मा वै श्रीमान्नाम श्रियो निधिः ।
पूर्णं वर्षसहस्रं तु तपः कृत्वा सुदुश्चरम् ॥ ५६ ॥
मृत्युकालमनुप्राप्य गतो दिव्यां परां गतिम् ।
एतत्सर्वं विदित्वा तु नानुशोचितुमर्हसि ॥ ५७ ॥

नारदेनैवमुक्ते तु श्रुत्वा स द्विजसत्तमः ।
प्रणम्य शिरसा पादौ निमिरुद्विग्नमानसः ॥ ५८ ॥

भीतो गद्गदया वाचा निश्वसंश्च मुहुर्मुहुः ।
सव्रीडो भाषते विप्रः कारुण्येन समन्वितः ॥ ५९ ॥
अहो मुनिवरश्रेष्ठ अहो धर्मविदां वर ।
सान्त्वितोऽस्मि त्वया विप्र वचनैर्मधुराक्षरैः ॥ ६० ॥

प्रणयात्सौहृदाद्वापि स्नेहाद्वक्ष्यामि तच्छृणु ।
शोको निरन्तरं चित्ते[3] ममैतद्धृदि वर्त्तते ॥ ६१ ॥
कृतस्नेहस्य पुत्रार्थे मया सङ्कल्प्य यत्कृतम् ।
तर्पयित्वा द्विजान् सप्त अन्नाद्येन फलेन च ॥ ६२ ॥
पश्चाद्विसर्जितं पिण्डं दर्भानास्तीर्य भूतले ।
उदकानयनं चैव ह्यपसव्येन वासितम् ॥ ६३ ॥

---

१. तु० श्रीमद्भगवद्गीता २.११ । २. 'गावपक्षिणः' इति वा पाठः ।
३. शोकस्य निरतं चित्तं ( शोकश्च नियतं चित्ते ? ) इति ( ग ) ।

शोकस्य तु प्रभावेण एतत्कर्म मया कृतम् ।
अनार्यंजुष्टमस्वर्ग्यमकीर्तिकरणं द्विज[1] ।
नष्टबुद्धिस्मृतिसत्त्वो ह्यज्ञानेन विमोहितः ॥ ६४ ॥
न च श्रुतं मया पूर्वं न देवैऋर्षिभिः कृतम् ।
भयं तीव्रं प्रपश्यामि मुनिशापात्सुदारुणात् ॥ ६५ ॥

नारद उवाच

न भेतव्यं द्विजश्रेष्ठ पितरं शरणं व्रज ।
अधर्मं न च पश्यामि धर्मो नैवात्र संशयः ॥ ६६ ॥
नारदेनैवमुक्तस्तु निमिर्ध्यानमुपाविशत् ।
कर्मणा मनसा वाचा पितरं शरणं गतः ॥ ६७ ॥
ततोऽतिचिन्तयामास वंशकर्त्तारमात्मनः ।
ध्यायमानस्ततोऽप्याशु आजगाम तपोधनम् ॥ ६८ ॥
पुत्रशोकेन सन्तप्तं पुत्रं दृष्ट्वा तपोधनम् ।
पुत्रमाश्वासयामास वाग्भिरिष्टाभिरव्ययैः ॥ ६९ ॥
निमे संकल्पितस्तेऽयं पितृयज्ञस्तपोधन ।
पितृयज्ञेति निर्दिष्टो धर्मोऽयं ब्रह्मणा स्वयम् ॥ ७० ॥
ततो ह्यतितरो धर्मः क्रतुरेकः प्रतिष्ठितः ।
कृतः स्वयम्भुवा पूर्वं श्राद्धं यो विधिवत्तमः ॥ ७१ ॥
शृण्वतो नारदस्यापि विधिं विधिविदां वरः ।
श्राद्धकर्मविधिं चैव प्रेतकर्म च या क्रिया ॥ ७२ ॥
शृणु सुन्दरि तत्त्वेन यथा दाता सपुत्रकः ।
मम चैव प्रसादेन तस्य बुद्धिं ददाम्यहम् ॥ ७३ ॥
जातस्य सर्वभूतस्य कालमृत्युरुपस्थितः ।
अवश्यमेव गन्तव्यं धर्मराजस्य शासनात् ॥ ७४ ॥
अमरत्वं न पश्यामि पिपीलादीनि जन्तवः ।
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च[2] ।
मोक्षः कर्मविशेषेण प्रायश्चित्तेन च ध्रुवम् ॥ ७५ ॥
सत्त्वं रजस्तमश्चैव त्रयः शारीरजाः स्मृताः ।
अल्पायुषो नराः पश्चाद्भविष्यन्ति युगक्षये ॥ ७६ ॥
सात्त्विकं नाऽवबुद्ध्यन्ति कर्मदोषेण तामसः ।
तामसं नरकं विद्यात्तिर्यग्योनिं च राक्षसीम् ॥ ७७ ॥

---

१. भगवद्गीतायां तु—'अनार्यंजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन' ।
२. तु० श्रीमद्भगवद्गीता ।

सात्त्विकं मुक्तियानाय यान्ति वेदविदो जनाः ।
धर्मज्ञानं तथैश्वर्यं वैराग्यमिति सात्त्विकम् ॥ ७८ ॥
क्रूरो भीरुर्विषादी च हिंसको निरपत्रपः ।
अज्ञानान्धश्च पैशाचमेतेषां तामसा गुणाः ॥ ७९ ॥
तामसं तद्विजानीयादुच्यमानो न बुद्ध्यति ।
दुर्मदोऽश्रद्दधानश्च विज्ञेयास्तामसा नराः ॥ ८० ॥
प्रबलो वाचि युक्तश्च कलबुद्धिः सदायतः ।
शूरः सर्वेषु व्यक्तात्मा विज्ञेया राजसा नराः ॥ ८१ ॥
क्षान्तो दान्तो विशुद्धात्मा विज्ञेयः श्रद्धयान्वितः ।
तपः स्वाध्यायशीलश्च एतेषां सात्त्विका गुणाः ॥ ८२ ॥
एवं सञ्चिन्तयानस्तु न शोकं कर्त्तुमर्हसि ।
त्यज शोकं महाभाग शोकः सर्वविनाशनः ।
शोको दहति गात्राणि बुद्धिः शोकेन नश्यति ॥ ८३ ॥
लज्जा धृतिश्च धर्मश्च श्रीः कीर्त्तिश्च स्मृतिर्नयः ।
त्यजन्ति सर्वधर्मश्च शोकेनोपहतं नरम् ।
एवं शोकं त्यजित्वा तु निःशोको भव पुत्रक ॥ ८४ ॥
मूढः स्नेहप्रभावेण कृत्वा हिंसानृते तथा ।
पच्यते नरके घोरे ह्यात्मदोषैर्वसुन्धरे ॥ ८५ ॥
स्नेहं सर्वेषु संयम्य बुद्धिं धर्मे नियोजयेत् ।
धर्मलोकहितार्थाय शृणु सत्यं ब्रवीम्यहम् ॥ ८६ ॥
चतुर्वर्णस्य वक्ष्यामि यच्च स्वायम्भुवोऽब्रवीत् ।
नेमिप्रभृतीनामेवं येन श्राद्धं प्रवर्त्तते ॥ ८७ ॥
कण्ठस्थानं गते जीवे भीतिविभ्रान्तमानसः ।
ज्ञात्वा च विह्वलं तत्र शीघ्रं निःसारयेद्गृहात् ॥ ८८ ॥
कुशास्तरणशायी च दिशः सर्वा न पश्यति ।
लब्धस्मृतिर्मुहूर्त्तं तु यावज्जीवो न पश्यति[1] ॥ ८९ ॥
अर्चयेत्स्नेहभावेन भूमिदेवा द्विजातयः ।
सुवर्णं च हिरण्यं च यथोत्पन्नेन माधवि ॥ ९० ॥
परलोकहितार्थाय गोप्रदानं विशिष्यते ।
सर्वदेवमया गाव ईश्वरेणावतारिताः ॥ ९१ ॥

---

१. 'न नश्यति'—इति ( ग ) ।

अमृतं क्षरयन्त्यश्च प्रचरन्ति महीतले।
एतासां चैव दानेन शीघ्रं मुच्यति किल्विषात् ॥ ९२ ॥
पश्चाच्छ्रुतिपथं दिव्यमुत्कर्णेन च श्रावयेत्।
यावत्प्राणान् प्रमुञ्चेत कृत्वा कर्म सुदुष्करम् ॥ ९३ ॥
दृष्ट्वा सुविह्वलं ह्येनं मम मार्गानुसारिणम्।
प्रयाणकाले तु नरो मन्त्रेण विधिपूर्वकम् ॥ ९४ ॥
मन्त्रेणानेन कर्त्तव्यं सर्वसंसारमोक्षणम्।
मधुपर्कं त्वरन् गृह्य इमं मन्त्रमुदाहरेत् ॥ ९५ ॥

मन्त्रः

ओं गृहाण वै मे मधुपर्कमाद्यं संसारनाशनकरं त्वमृतेन तुल्यम्।
नारायणेन रचितं भगवत्प्रियाणां दाहे च शान्तिकरणं सुरलोकपूज्यम् ॥९६॥

तत एतेन मन्त्रेण दद्याद्वै मधुपर्ककम्।
पुरुषो मृत्युकाले तु परलोकसुखावहम्।
एवं विनिःसृतात्प्राणात्संसारं च न गच्छति ॥ ९७ ॥
नष्टसंज्ञं समुद्दिश्य ज्ञात्वा मृत्युवशं गतम्।
महावनस्पतिं गत्वा गन्धांश्च विविधानपि ॥ ९८ ॥
घृततैलसमायुक्तं कृत्वा वै देहशोधनम्।
तेजोऽव्ययकरं चास्य तत्सर्वं परिकल्प्य च ॥ ९९ ॥
दक्षिणायां शिरः कृत्वा सलिले तन्निधाप्य च।
तीर्थाद्यावाहनं कृत्वा स्नापनं तस्य कारयेत् ॥ १०० ॥
गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः।
कुरुक्षेत्रं च गङ्गा च यमुना च सरिद्वरा ॥ १०१ ॥
कौशिकी च पयोष्णी च सर्वपापप्रणाशिनी।
गण्डकी भद्रनामा च सरयूर्बलदा तथा ॥ १०२ ॥
वनानि नव वाराहे तीर्थे पिण्डारके तथा।
पृथिव्यां यानि तीर्थानि चत्वारः सागरास्तथा।
सर्वाणि मनसा ध्यात्वा स्नानमेवं तु कारयेत् ॥ १०३ ॥
प्राणहतं तु तं ज्ञात्वा चितां कृत्वा विधानतः।
तस्या उपरि तं स्थाप्य दक्षिणाग्रं शिरस्तथा ॥ १०४ ॥
दिव्यानग्निमुखान्ध्यात्वा गृह्य हस्ते हुताशनम्।
प्रज्वाल्य विधिवत्तत्र मन्त्रमेतदुदाहरेत् ॥ १०५ ॥
कृत्वा सुदुष्करं कर्म जानता वाप्यजानता।
मृत्युकालवशं प्राप्य नरः पञ्चत्वमागतः ॥ १०६ ॥

धर्माधर्मसमायुक्तो लोभमोहसमावृतः ।
दह एतस्य गात्राणि देवलोकाय गच्छतु[1] ॥ १०७ ॥

एवमुक्त्वा ततः शीघ्रं कृत्वा चैव प्रदक्षिणाम् ।
ज्वलमानं तदा वह्निं शिरःस्थाने प्रदापयेत् ॥ १०८ ॥

चातुर्वर्ण्येषु संस्कारमेवं भवति पुत्रक ।
गात्राणि वाससी चैव प्रक्षाल्य विनिवर्त्तयेत् ॥ १०९ ॥

मृतं नाम ततोद्दिश्य दद्यात्पिण्डं महीतले ।
तदाप्रभृति चाशौचं देवकर्म न कारयेत् ॥ ११० ॥

इति वाराहपुराणे भगवच्छास्त्रे श्राद्धोत्पत्तौ
सप्ताशीत्यधिकशततमोऽध्यायः ।



१. गच्छतीति ( ग )

## अष्टाशीत्यधिकशततमोऽध्यायः

धरण्युवाच

देवदेवोऽसि देवानां लोकनाथोऽपरिग्रहः ।
आशौचकर्म विधिवच्छ्रोतुमिच्छामि माधव ॥ १ ॥

वराह उवाच

आशौचं शृणु कल्याणि यथा शुध्यन्ति मानवाः ।
गतायुषस्तृतीयेन स्नातव्या स्रोतसा नदी ।
पिण्डं सञ्चूरणं[1] दद्यात् त्रीणि दद्याज्जलाञ्जलीन् ॥२॥

चतुर्थे पञ्चमे षष्ठे पिण्डमेकं जलाञ्जलिम् ।
अन्यस्थानेषु दातव्यं स्नानात्त्वहनि सप्तमे ॥ ३ ॥

एवं प्रतिदिनं कार्यं यावच्च दशमं दिनम् ।
क्षारादिना वस्त्रशौचं दिने च दशमे तथा ॥ ४ ॥

तिलामलकस्नेहेन गोत्रजैः स्नानमाचरेत् ।
पिण्डदानं विवर्त्याथ क्षौरकर्म तु कारयेत्[2] ।
स्नानं कृत्वा विधानेन ज्ञातिभिः स्वगृहं व्रजेत् ॥ ५ ॥

एकादशे च दिवसे एकोद्दिष्टं यथाविधि ।
स्नात्वा चैव शुचिर्भूत्वा प्रेतं विप्रेषु योजयेत् ॥ ६ ॥

एकोद्दिष्टं मनुष्याणां चातुर्वर्णस्य माधवि ।
यथा कं द्रव्यसंयुक्तं स्वं विप्रं भोजयेत्तदा ।
स्नात्वा चैवं शुचिर्भूत्वा प्रेतं प्रेतेषु योजयेत् ॥ ७ ॥

एकोदिष्टं तु द्रव्याणां चातुर्वर्ण्यस्य माधवि ।
अपाकद्रव्यं संगृह्य ब्रह्मणो वचनं यथा ॥ ८ ॥

त्रिषु वर्णेषु कर्तव्यं पाकभोजनमित्युत ।
शुश्रूषया विपन्नानां शूद्राणां च वरानने ॥ ९ ॥

त्रयोदशे दिने प्राप्ते पाकेन भोजयेद् द्विजान् ।
मृतस्य नाम चोद्दिश्य यस्यार्थे [3]च प्रयोजितः ॥ १० ॥

---

१. पिण्डसंक्रमणमिति (ग)। २. 'समाचरेत्' इति (ग)।
३. 'विप्रयोजितः' इति (ग)।

स्वरितस्येति[1] सङ्कल्प्य कृत्वा ब्राह्मणमन्दिरम् ।
गत्वा निमन्त्रितं विप्रं नम्रो भूत्वा समाहितः ।
मन्त्रेणानेन भो देवि मनस्येव पठन्ति तम् ॥ ११ ॥
गतोऽसि दिव्यलोके त्वं कृतान्तविहितेन च ।
मनसा वायुभूतस्त्वं विप्रमेनं समाश्रय ॥ १२ ॥
अस्तंगते तथादित्ये गत्वा ब्राह्मणमन्दिरम् ।
दत्त्वा तु पाद्यं विधिवन्नमस्कृत्य द्विजोत्तमम् ॥ १३ ॥
पादसंवाहनं कार्यं प्रेतस्य हितकाम्यया ।
प्रेतभोगशरीरे तु ब्राह्मणस्य च सुन्दरि ॥ १४ ॥
यावत्तु तिष्ठते तत्र प्रेतभोगमुदीक्षते ।
तावन्न संस्पृशेद्भूमे मम गात्रं प्रतिष्ठितम् ॥ १५ ॥
प्रभातायां तु शर्वर्यामुदिते च दिवाकरे ।
श्मश्रुकर्म प्रकर्त्तव्यं विप्रस्य तु यथाविधि ।
स्नापनाभ्यञ्जनं कार्यं प्रेतसन्तोषदायकम् ॥ १६ ॥
गृहीत्वा भूमिभागं च स्थण्डिलं तत्र कारयेत् ।
निपातदेशं संगृह्य शुचिदेशे समाहितः ॥ १७ ॥
नदीकूले निखाते वा प्रेतभूमिं विनिर्दिशेत् ।
चतुःषष्टिकृतं भागं यथावत्सुकृतं भवेत् ॥ १८ ॥
ततो दक्षिणपूर्वेषु दिग्विभागेषु सुन्दरि ।
छायायां कुञ्जरस्यापि नदीकूलद्रुमे तथा ।
चाण्डालादिप्रहीणे तु प्रेतकार्यं समाचरेत् ॥ १९ ॥
यं देशं च न[2] पश्यन्ति कुक्कुटः श्वानशूकराः ।
श्वा चापोहति रावेण गर्जितेन च शूकरः ।
कुक्कुटपक्षवातेन चाण्डालश्च यथा धरे ॥ २० ॥
तत्र कुर्वन्ति ये श्राद्धं पितॄणां बन्धनप्रदम् ।
वर्जनीया बुधैरेते प्रेतकार्येषु सुन्दरि ॥ २१ ॥
देवतासुरगन्धर्वाः पिशाचोरगराक्षसाः ।
नागा भूतानि यक्षाश्च ये च स्थावरजङ्गमाः ॥ २२ ॥
स्नानं कृत्वा यथा देवि तव पृष्ठे प्रतिष्ठिताः ।
धारयिष्यामि सुश्रोणि विष्णुमायाततं जगत् ॥ २३ ॥
चण्डालमादितः कृत्वा नराणां तु शुभाशुभम् ।
स्नानं कुर्वन्तु ते भूमे स्थण्डिले तदनन्तरे ॥ २४ ॥

---

१. स्वः करिष्येति (ग)। २. 'यं देशं नैव' इति वा पाठः।

अकृत्वा पृथिवीभागं निवापं ये तु कुर्वते ।
त्वदधीनं जगद्भद्रे तवोच्छिष्टं हतं भवेत् ॥ २५ ॥
न देवाः पितरस्तस्य गृह्णन्तीह कदाचन ।
पतन्ति नरके घोरे तेनोच्छिष्टेन सुन्दरि ॥ २६ ॥
स्थण्डिले प्रेतभागं तु दद्यात्पूर्वाह्णिकं तु तम् ।
कृत्वा तु पिण्डसंकल्पं नामगोत्रेण माधवि ॥ २७ ॥
पश्चादश्नन्ति गोत्राणि कुलजाश्चैकभोजनाः ।
न दद्यादन्यगोत्रेभ्यो ये न भुञ्जन्ति तत्र वै ॥ २८ ॥
चतुर्णामपि वर्णानां प्रेतकार्येषु सुन्दरि ।
एवं दत्तेन प्रीयन्ते प्रेतलोकगता नराः ॥ २९ ॥
अदत्त्वा प्रेतभागं तु भुङ्क्ते यस्तत्र मानवः ।
गत्वा महानदीं सोऽपि सचैलं स्नानमाचरेत् ॥ ३० ॥
तीर्थानि मनसा गत्वा त्रिभिरभ्युक्षयेद्भुवम् ।
एवं शुद्धिं ततः कृत्वा ब्राह्मणान् शीघ्रमानयेत् ॥ ३१ ॥
आगतांश्च द्विजान्दृष्ट्वा कर्त्तव्या स्वागतक्रिया ।
अर्घ्यं पाद्यं ततो दद्याद् धृष्टपुष्टेन माधवि ।
आसनं चोपकल्पेत मन्त्रेण विधिपूर्वकम् ॥ ३२ ॥

मन्त्रः

इदं ते आसनं दत्तं विश्रामं क्रियतां द्विज ।
कुरुष्व मे प्रसादं च सुप्रसीद द्विजोत्तम ॥ ३३ ॥
उपवेश्यासने विप्रं छत्रं सङ्कल्पयेत्पुनः ।
निवारणार्थमाकाशे भूतागमनचारिणः ।
देवगन्धर्वयक्षाश्च सिद्धसङ्घा महासुराः ॥ ३४ ॥
धारणार्थं तथाकाशे छत्रं तेजस्विनां कृतम् ।
प्रेतस्य च हितार्थाय धारयेत वसुन्धरे ॥ ३५ ॥
पूर्वं[1] संहृष्टतुष्टेन प्रेतभागं च दापयेत् ।
छत्रमावरणार्थं तु दद्याच्चैव द्विजातये ॥ ३६ ॥
आकाशे तत्र पश्यन्ति देवाः सिद्धपुरोगमाः ।
गन्धर्वा ह्यसुराः सिद्धा राक्षसाः पिशिताशिनः॥ ३७ ॥
पश्यमानेषु सर्वेषु प्रेतः संक्रीडितो भवेत् ।
क्रीडमानं ततो दृष्ट्वा हसन्त्यसुरराक्षसाः ॥ ३८ ॥

---

१. एवमिति ( ग ) ।

एवं निवारणं छत्रमादित्येन कृतं पुरा ।
प्रेतलोकगतानां च सर्वदेवर्षिणा पुरा ॥ ३९ ॥
अग्निवर्षं शिलावर्षं तप्तं तत्र जलोदकम् ।
भस्मवर्षं ततो घोरमहोरात्रेण माधवि ।
एवं निवारणं छत्रं दद्याद्विप्राय माधवि ॥ ४० ॥
पश्चादुपानहौ दद्यात्पादस्पर्शकरे शुभे ।
उपानहे च वक्ष्यामि दत्ते भवति यत्फलम् ।
पादौ च तौ न दह्येते यमस्य विषयं गते ॥ ४१ ॥
तमोऽन्धकारविषयं दुर्गमं घोरदर्शनम् ।
एकाकी दुःसहं लोके पथा येन स गच्छति ॥ ४२ ॥
कालो मृत्युश्च दूतश्च यष्टिमुद्यम्य पृष्ठतः ।
अहोरात्रेण घोरेण प्रेतं नयति माधवि ।
दद्यात्तदर्थं विप्राय परत्र[1] च सुखावहम् ॥ ४३ ॥
तप्तबालुमयी भूमिः कण्टकैरुपसंस्तृता ।
तेन दुर्गाणि तरति दत्तेनोपानहेन तु ॥ ४४ ॥
पश्चाद्धूपं च दीपं च दद्याद्वै मन्त्रपूर्वकम् ।
याति येन विजानीयात्पृथक् प्रेतेन योजयेत् ॥ ४५ ॥
नामगोत्रमुदाहृत्य प्रेताय तदनन्तरम् ।
शीघ्रमावाहयेद्भूमे दर्भपात्रे च भूतले ॥ ४६ ॥

मन्त्रः

इहलोकं परित्यज्य गतोऽसि परमां गतिम् ।
गृह्ण गन्धं मुदा युक्तो[2] भक्त्या प्रेतोपपादितम् ॥ ४७ ॥

गन्धमन्त्रः

सर्वगन्धं सर्वपुष्पं धूपं दीपं तथैव च ।
प्रतिगृह्णीष्व विप्रेन्द्र प्रेतमोक्षप्रदो भव ॥ ४८ ॥
एवं वस्त्राणि विप्राय सर्वाण्याभरणानि च ।
पुनः पुनश्च पक्वान्नं प्रयच्छेत वसुन्धरे ।
एवमादीनि द्रव्याणि प्रेतभागानि सर्वशः ॥ ४९ ॥
पादशौचादि त्रिःकृत्वा चातुर्वर्णस्य माधवि ।
एवं विधिः प्रयोक्तव्यः शूद्राणां मन्त्रवर्जितम् ।
अमन्त्रस्य च शूद्रस्य विप्रो मन्त्रेण गृह्णति ॥ ५० ॥

---

१. दत्ते च सुखावहे इति वा पाठः । २. भक्त्या मे प्रतिपादितमिति (ग) ।

एतत्सर्वं विनिर्वर्त्य पक्वान्नं भोजयेद्विजम् ।
भोक्ष्यमाणेन विप्रेण ज्ञानशुद्धेन सुन्दरि ॥ ५१ ॥
प्रेताय प्रथमं दद्यान्न स्पृशेत परात्परम् ।
सर्वं व्यञ्जनसंयुक्तं प्रेतभागं प्रकल्पयेत् ॥ ५२ ॥
देवत्वं ब्राह्मणत्वं च प्रेतपिण्डे प्रदीयते ।
मानुषत्वं निवापेषु ज्ञातव्यं सततं बुधैः ॥ ५३ ॥
पितृस्थाने प्रदातव्यं विधानान्मन्त्रसंयुतम्[1] ।
एवं विप्रेषु प्रेतेषु एककालो न विद्यते ॥ ५४ ॥
हस्तशौचं पुनः कृत्वा उपस्पृश्य यथाविधि ।
समन्त्रं प्रतिगृह्णाति पक्वान्नं भक्ष्यभोजनम् ॥ ५५ ॥
भुज्यमानस्य विप्रस्य प्रेतभागं च नित्यशः ।
ज्ञातिवर्गेषु गोत्रेषु सम्बन्धिस्वजनेषु च ।
भागस्तत्र प्रदातव्यस्तस्यार्थे यस्य विद्यते ॥ ५६ ॥
विप्रस्य दीयमाने तु वारणीय न कस्यचित् ।
निवारयति यो दत्तं गुरुहत्याफलं लभेत् ॥ ५७ ॥
न देवाः प्रतिगृह्णन्ति नाग्नयः पितरस्तथा ।
एवं विलुप्यते धर्मः प्रेतस्तत्र न तुष्यति ।
एवं विचिन्त्यमानस्य यथा धर्मो न लुप्यते ॥ ५८ ॥
ज्ञातिसम्बन्धिमध्ये तु यो दद्यात्प्रेतभोजनम् ।
हृष्टेन मनसा विप्रे प्रेतभागं विशेषतः ॥ ५९ ॥
कूटवत्प्रतितिष्ठेत दृष्ट्वा तृप्तिं न गच्छति ।
एवं तु प्रेतभावेन शीघ्रं मुञ्चति किल्विषात् ॥ ६० ॥
तृप्तिं ज्ञात्वा तु विप्रस्य पक्वान्नेन तु माधवि ।
दातव्यमुदकं तस्य पाणावभ्युक्षणं ततः ॥ ६१ ॥
दृष्ट्वा तु प्रोषितं तेन उच्छिष्टं न विसर्जयेत् ।
ब्राह्मणेनाप्यनुज्ञातः शीघ्रं संरम्भयेत्ततः ॥ ६२ ॥
दातव्यं तत्र उच्छिष्टं येन हेतुमगर्हितम् ।
उपस्पृश्य विधानेन मम तीर्थगतेन च ॥ ६३ ॥
शुचिर्भूत्वा तु विधिवत्कृत्वा शान्त्युदकानि तु ।
प्रणम्य शिरसा देवि निवापस्थानमागतः ।
मन्त्रैस्तुतिस्तु कर्त्तव्या तव भक्त्या व्यवस्थितः ॥ ६४ ॥

---

१. विधिना मन्त्रसंयुतमिति ( ग ) ।

नमो नमो मेदिनि लोकमातः उर्व्यै महाशैलशिलाधरायै[1]।
नमो नमो धारिणि लोकधात्रि जगत्प्रतिष्ठे वसुधे नमोऽस्तु ते ॥ ६५ ॥

एवं निवापदानेन तव भक्तेन सुन्दरि।
दद्यात्तिलोदकं तस्य नामगोत्रमुदाहरेत् ॥ ६६ ॥
जानुभ्यामवनिं गत्वा नमस्कृत्वा द्विजोत्तमान्।
पाणिं संगृह्य हस्तेन मन्त्रेणोत्थापयेद् द्विजान्।
दद्याच्छय्यासनं देवि तथैवाञ्जनकङ्कणम् ॥ ६७ ॥

अञ्जनं कङ्कणं गृह्य शय्यामाक्रम्य स द्विजः।
मुहूर्त्तं तत्र विश्रम्य निवापस्थानमागतः।
गवां लाङ्गूलमुद्धृत्य दद्याद्ब्राह्मणहस्तके ॥ ६८ ॥
पात्रेणोदुम्बरस्थेन कृत्वा कृष्णतिलोदकम्।
उदाहरेत्तु मन्त्रान्वै सौरभेयान्द्विजातयः ॥ ६९ ॥
मन्त्रपूतं तदा तोयं सर्वपापप्रणाशनम्।
उद्धृत्य तच्च लाङ्गूलं तोयेनाभ्युक्ष्य वै ततः ॥ ७० ॥

पश्चात्प्रेतं विसर्ज्यैवं दद्याद्दानं द्विजातये।
निवापमन्नमशुचि दद्याद्वायसतर्पणम् ॥ ७१ ॥
गत्वा तु ब्राह्मणेभ्योऽपि स्वगृहं यत्र तिष्ठति।
पक्वान्नं भोजयेत्सर्वं न तिष्ठेत्प्रतिवासिकम् ॥ ७२ ॥

पिपीलिकादिभूतानि प्रेतभागं च सर्वशः।
कृत्वा तु तर्पणं देवि यस्यार्थे तस्य कल्पयेत् ॥ ७३ ॥
भुक्तेषु तेषु सर्वेषु दीनानाथान् प्रतर्प्य च।
प्रेतराजपुरं गत्वा प्रयच्छति स माधवि।
सर्वान्नमक्षयं तस्य दत्तं भवति सुन्दरि ॥ ७४ ॥

कर्त्तव्य एवं संस्कारः प्रेतभावविशोधनः।
नेमिप्रभृतिभिः शौचं चातुर्वर्ण्यस्य सर्वतः।
भविष्यति न सन्देहो दृष्टपूर्वं स्वयम्भुवा ॥ ७५ ॥
कृत्वा तु धर्मसङ्कल्पं प्रेतकार्यं विशेषतः।
न भेतव्यं त्वया पुत्र प्रेतकार्ये कृते सति ॥ ७६ ॥
विस्तरेण मया प्रोक्तं प्रत्यक्षं नारदस्य च।
त्वया वत्स सुतस्यार्थे क्रतुरेकः प्रतिष्ठितः।
तस्मात्प्रभृति लोकेषु पितृयज्ञो भविष्यति ॥ ७७ ॥

---

१. शिलाधरा चेति (ग)।

एवं यास्यसि वत्स त्वं न शोकं कर्त्तुमर्हसि ।
शिवलोकं ब्रह्मलोकं विष्णुलोकं न संशयः ॥ ७८ ॥
एवमुक्त्वा तदात्रेयः पितृकर्म यथाविधि ।
दातव्यं तु तृतीये च मासे सप्त नवेषु च ।
एकादशे तथा मासे दद्यात्सांवत्सरीं क्रियाम् ॥ ७९ ॥

प्रेतस्यावाहनं कृत्वा शुचिर्भूत्वा समाहितः ।
पक्वान्नं भोजयेत्तत्र प्रेतभागं यथाविधि ॥ ८० ॥
मन्त्रयुक्तोपचारेण चातुर्वर्णस्य सर्वतः ।
वृषलानाममन्त्राणां प्रयोक्तव्यं यथाविधि ॥ ८१ ॥
प्रेतकार्ये निवृत्ते तु पूर्णे संवत्सरे तथा ।
प्रयान्ति जन्तवः केचिद्गत्वा गच्छन्ति चापरे ॥ ८२ ॥

पितामहः स्नुषा भार्या ज्ञातिसम्बन्धिबान्धवाः ।
यद्येते बहवः सन्ति स्वप्नोपममिदं जगत् ॥ ८३ ॥
स्वयं मुहूर्तं रोदित्वा ततो याति पराङ्मुखः ।
स्नेहपाशेन बद्धो वै[1] क्षणार्द्धान्मुच्यते ततः ॥ ८४ ॥
कस्य माता पिता कस्य कस्य भार्या सुतास्तथा ।
युगे युगेषु वर्त्तन्ते मोहपाशेन बध्यते[2] ।
स्नेहभावेन कर्त्तव्यः संस्कारो हि मृतस्य च ॥ ८५ ॥

मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि[3] कस्य ते कस्य वा वयम् ॥ ८६ ॥
स्वयम्भुवा विधिः प्रोक्तः प्रेतसंस्कारलक्षणः[4] ।
प्रेतकार्ये निवृत्ते तु पितृत्वमुपजायते ।
मासि मासि ह्यमायां वै कर्त्तव्यं पितृतर्पणम् ॥ ८७ ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
जुहुयाद् ब्राह्मणमुखे तृप्तिर्भवति शाश्वती ॥ ८८ ॥
एवमुक्त्वा स आत्रेयः पितृयज्ञविनिश्चयम् ।
मुहूर्त्तं ध्यानमास्थाय तत्रैवान्तरधीयत ॥ ८९ ॥

नारद उवाच

श्रुत्वा तु मृतसंस्कारमात्रेयोक्तं यथाविधि ।
चातुर्वर्णस्य सर्वस्य त्वया धर्मः प्रतिष्ठितः ॥ ९० ॥

---

१. नद्धो वै इति ( ग ) । २. बद्धत इति ( ग ) ।
३. अनुभूतस्येति ( ग ) । ४. प्रेतसंसारलक्षण इति ( ग ) ।

पितृयज्ञमुपश्राद्धे मासि मासि दिने तथा ।
वर्त्तयन्ति यथान्यायमृषयश्च तपोधनाः ।
निर्दिष्टं ब्राह्मणानां वै शूद्राणां मन्त्रवर्जितम् ॥ ९१ ॥

नेमिना च कृतं श्राद्धं ततः प्रभृति वै द्विजाः ।
कुर्वन्ति सततं श्राद्धं नेमिश्राद्धं तदुच्यते ॥ ९२ ॥

स्वस्त्यस्तु ते महाभाग यास्यामि मुनिसत्तम ।
एवमुक्त्वा मुनिश्रेष्ठो नारदो द्विजसत्तमः ।
तेजसा द्योतयन्सर्वं गतः शक्रपुरं प्रति ॥ ९३ ॥

एवं च पिण्डसङ्कल्पं श्राद्धोत्पत्तिं च माधवि ।
आत्रेयेणैव मुनिना स्थापितं ब्राह्मणेषु च ॥ ९४ ॥

इति वाराहपुराणे भगवच्छास्त्रे पिण्डकल्पश्राद्धोत्पत्तिर्नाम
अष्टाशीत्यधिकशततमोऽध्यायः ।



## ऊननवत्यधिकशततमोऽध्यायः

धरण्युवाच

श्रुतं श्राद्धं यथावृत्तं शौचाशौचांश्च सर्वशः।
चतुर्णामपि वर्णानां प्रेतभोज्यं यथाविधि।
उत्पन्नं संशयं मेऽद्य भगवन्वक्तुमर्हसि ॥ १ ॥

चातुर्वर्ण्येषु सर्वेषु दद्याद् दानं द्विजोत्तमे।
प्रतिगृह्णन्ति ये तत्र प्रेतभागं विशेषतः ॥ २ ॥

अनिष्टं गर्हितं तत्र प्रेतेन सह भोजनम्।
भुक्त्वा तेषां द्विजो देव मुच्यते केन कर्मणा ॥ ३ ॥

कथं ते तारयिष्यन्ति दातारं पुरुषोत्तम।
प्रणयात्स्त्रीस्वभावेन पृच्छामि त्वां जनार्दन ॥ ४ ॥

एवमुक्तोऽपि भूम्याऽसौ शङ्खदुन्दुभिनिस्वनः।
वराहरूपी भगवान्प्रत्युवाच वसुन्धराम् ॥ ५ ॥

वराह उवाच

साधु भूमे वरारोहे यन्मां त्वं परिपृच्छसि।
कथयिष्यामि ते देवि तारयन्ति यथा द्विजाः ॥ ६ ॥

भुक्त्वा तु प्रेतभोज्यानि ब्राह्मणो ज्ञानदुर्लभः।
विशोधनार्थं देहस्य उपवासं तु कारयेत् ॥ ७ ॥

अहोरात्रोषितो भूत्वा विप्रो ज्ञानेन संयुतः।
पूर्वसन्ध्यां विनिर्वर्त्य कृत्वा चैवाग्नितर्पणम् ॥ ८ ॥

तिलहोमं प्रकुर्वीत शान्तिमङ्गलपाठकः।
प्राक्स्रोतां च नदीं गत्वा स्नानं कृत्वा विधानतः ॥ ९ ॥

पञ्चगव्यं ततः पीत्वा मधुपर्केण संयुतम्।
औदुम्बरे च पात्रे च कृत्वा शान्त्युदकानि च।
प्रोक्षयेच्च गृहं सर्वं यत्रातिष्ठत्स्वयं द्विजः ॥ १० ॥

देवाश्चाग्निमुखाः सर्वे तर्पयित्वा विभागशः।
भूतानां च बलिं दद्याद्ब्राह्मणानां च भोजनम्।
एका गौस्तु प्रदातव्या पापक्षयकरी तदा ॥ ११ ॥

एवं तु कुरुते यश्च स याति परमां गतिम् ।
प्रेतान्नं चोदरस्थे तु कालधर्ममुपागतः ।
आकल्पं नरके घोरे वसमानः सुदुःखितः ।
प्राप्नोति राक्षसत्वं वै ततो मुच्यति किल्विषात् ॥१२॥

प्रायश्चित्तं तु कर्त्तव्यं दातृभोक्तृसुखावहम् ।
गावो हस्त्यश्व-आदीनि सागरान्तानि माधवि ॥ १३ ॥
प्रतिगृह्णन्ति ये विप्रा मन्त्रेण विधिपूर्वकम् ।
प्रायश्चित्तं चरेद्यस्तु स तारयति निश्चितम् ॥ १४ ॥
द्विजो ज्ञानेन सम्पन्नो वेदाभ्यासरतः सदा ।
स तारयति चात्मानं दातारं नैव संशयः[1] ।
ब्राह्मणो नावमन्तव्यस्त्रिभिर्वर्णैर्धराधरे ॥ १५ ॥

दैवे च जन्मनक्षत्रे श्राद्धकाले च पर्वसु ।
प्रेतकार्येषु सर्वेषु परीक्ष्य निपुणं द्विजम् ॥ १६ ॥
वेदविद्याव्रतस्नातं बहुधर्मनिरन्तरम्[2] ।
शीलयुक्तं सुसंन्तुष्टं धर्मज्ञं सत्यवादिनम् ॥ १७ ॥

क्षमायुक्तं च शास्त्रज्ञमहिंसायां रतं तथा ।
एभिर्गुणैस्तु संयुक्तं ब्राह्मणं प्राप्य सत्वरः ।
दद्याद्दानानि विप्राय स वै तारयितुं क्षमः ॥ १८ ॥
कुण्डगोलेषु यद्दत्तं निष्फलं तत्तु जायते ।
कुण्डगोलः प्रतिग्राही दातारं चाप्यधो नयेत् ॥ १९ ॥
पित्र्ये कर्मणि चैकं तु कुण्डं वा गोलकं तथा ।
दृष्ट्वा तं पितरो यान्ति निराशा निरयं द्रुतम् ॥ २० ॥
दैवे कर्मणि चैवं तु तेषां दत्तं सुनिष्फलम् ।
तस्माद् दानं न दातव्यमपात्राय यशस्विनि ।
अत्रार्थे यत्पुरा वृत्तं तच्छृणुष्व वसुन्धरे ॥ २१ ॥
अवन्तीविषये कश्चिद्राजा अत्यन्तधार्मिकः ।
नाम्ना मेधातिथिश्चैव मनुवंशविवर्द्धनः ॥ २२ ॥
राज्ञः पुरोहितश्चासीच्चन्द्रशर्मा द्विजोत्तमः ।
आत्रेयगोत्रे चोत्पन्नो वेदवादरतः सदा ॥ २३ ॥
स राजा ब्राह्मणेभ्यश्च गा ददाति दिने दिने ।
शतं दत्त्वा विधानेन पश्चाद्भुङ्क्ते नराधिपः ॥ २४ ॥

---

१. नात्र संशय इति ( ग ) । २. षट्कर्मनियतं शुचिमिति ( ग ) ।

गते बहुतिथे काले राज्ञो मेधातिथेः पितुः ।
श्राद्धस्य दिवसः प्राप्तो वैशाखे वरवर्णिनि ॥ २५ ॥

स विप्रानाह्वयामास पितुर्वै श्राद्धकारणात् ।
आगतान्ब्राह्मणान्दृष्ट्वा मेधातिथिरकल्मषः ।
विप्रान्नत्वा गुरुं चैव श्राद्धारम्भमथाकरोत् ॥ २६ ॥

श्राद्धं कृत्वा तु विधिवत्पिण्डान्निर्वाप्य यत्नतः ।
श्राद्धसङ्कल्पितं चान्नं विप्रेभ्यः प्रददौ बहु ॥ २७ ॥

तन्मध्ये ब्राह्मणः कश्चिद्गोलकोऽवस्थितस्तदा[1] ।
श्राद्धे सङ्कल्पितं चान्नं तस्मै दत्तं विधानतः[2] ॥ २८ ॥

तेनैव श्राद्धदोषेण राज्ञस्तु पितरस्तदा ।
स्वर्गाद्भ्रष्टा लम्बन्ते स्म वने कण्टकसंयुते ।
क्षुत्पिपासार्दिता नित्यं क्रन्दन्ते च पुनः पुनः ॥ २९ ॥

कदाचिद्दैवयोगेन राजा मेधातिथिः स्वयम् ।
मृगयार्थं गतस्तत्र द्वित्रैः परिजनैर्वृतः ॥ ३० ॥

तत्रावलम्बतो दृष्ट्वा तानपृच्छद्द्विजप्रियः ।
के भवन्तोऽत्र संप्राप्ता दशामेतां सुदुःखिताः ।
केन कर्मविपाकेन भवन्तः कथयन्तु मे ॥ ३१ ॥

पितर ऊचुः

अस्मद्वंशकरो नित्यं नाम्ना मेधातिथिः प्रभुः ।
वयं तस्यैव पितरो नरकं गन्तुमुद्यताः ॥ ३२ ॥

तेषां तु वचनं श्रुत्वा राजा दुःखसमन्वितः ।
उवाच तान् पितॄन् सर्वान् सान्त्वपूर्वमिदं वचः ॥ ३३ ॥

मेधातिथिरुवाच

मेधातिथिरहं नाम्ना भवन्तः पितरो मम ।
केन वै कर्मदोषेण निरयं गन्तुमुद्यताः ॥ ३४ ॥

पितर ऊचुः

श्राद्धं सङ्कल्पितं चान्नं दत्तं तद्गोलकाय वै ।
तेनैव कर्मदोषेण प्रयाता नरकं वयम् ।
तत्र दुःखं महद्भुक्त्वा पुनर्गच्छामि वै दिवम् ॥ ३५ ॥

---

१. तथेति ( ग ) । २. विप्रेभ्यः प्रददौ बहु इति ( ग ) ।

पुत्र त्वं चैव दाता च सर्वलोकहिते रतः।
असंख्यातास्त्वया दत्ता गावः सुबहुदक्षिणाः ॥ ३६ ॥
तेन पुण्येन गच्छामः स्वर्गं ह्यतिसुखप्रदम्।
तत्र चान्नं न विद्येत येन तृप्तिर्भविष्यति।
पुनः श्राद्धं त्वया कार्यं पितॄणां तृप्तिदायकम् ॥ ३७ ॥
तेषां तु वचनं श्रुत्वा मेधातिथिरगाद् गृहम्।
आहूय चन्द्रशर्माणं गुरुं वचनमब्रवीत् ॥ ३८ ॥

मेधातिथिरुवाच

चन्द्रशर्मन्पुनः श्राद्धं करिष्ये पितुरद्य वै।
आहूयन्तां द्विजाः सर्वे कुण्डगोलकवर्जिताः ॥ ३९ ॥
इत्युक्तमात्रे वचने चन्द्रशर्मा पुरोहितः।
आहूतवान्द्विजान् सर्वान्वेदपाठकृतश्रमान्।
साधून्क्षान्तान् कुलीनांश्च सुशीलान्मानवर्जितान् ॥४०॥
राज्ञा तु कारयामास श्राद्धं विधिविदां वरः।
कृते श्राद्धे ततः पश्चात्पिण्डान्निर्वाप्य यत्नतः।
ब्राह्मणान् भोजयामास दक्षिणाभिः प्रपूज्य च ॥ ४१ ॥
पश्चाद्विसर्जयामास स्वयं तु बुभुजे नृपः।
भुक्त्वा पुनर्वनं गत्वा दृष्टवांश्च स्वकान् पितॄन्।
हृष्टान् पुष्टान् बलैर्युक्तान् राजा तु मुमुदे भृशम् ॥ ४२ ॥
दृष्ट्वा तु पितरश्चैवं राजानं पितृवत्सलम्।
ऊचुर्विनयसम्पन्नाः प्रीतिपूर्वमिदं वचः ॥ ४३ ॥
स्वस्ति तेऽस्तु गमिष्यामः स्वर्गलोकं प्रति प्रभो।
इदानीं च त्वया कार्यमस्मद्धितमनुत्तमम् ॥ ४४ ॥
गोलकाय न दातव्यं दैवं पित्र्यमथापि वा।
तयोर्दत्तं तु यच्छ्राद्धं निष्फलं तत्स्मृतं बुधैः ॥ ४५ ॥
दैवे कर्मणि पित्र्ये च ब्राह्मणो नैव लभ्यते।
सङ्कल्पयित्वा अन्नं तु गोभ्यो देयं यथाविधि ॥ ४६ ॥
गवामभावे नद्यां वा क्षिपेदन्नं प्रयत्नतः।
अपात्राय न दातव्यं नास्तिकाय गुरुद्रुहे।
गोलकाय न दातव्यं कुण्डाय च विशेषतः ॥ ४७ ॥
इत्युक्त्वा पितरः सर्वे गताः स्वर्गाय भामिनि।
मेधातिथिरपि प्रायात्स्वपुरं ब्राह्मणैर्वृतः।
यदुक्तं पितृभिः सर्वं तच्चकार मुदा युतः ॥ ४८ ॥

तस्मात्ते कथितं देवि एकोऽपि ब्राह्मणोत्तमः ।
सन्तारयति दुर्गेभ्यो विषमेभ्यो न संशयः ॥ ४९ ॥

एकोऽपि तारितुं शक्तो यथा नावा महज्जलम् ।
तस्माद्दानं प्रदातव्यं ब्राह्मणाय वसुन्धरे ॥ ५० ॥

देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
सर्वे श्राद्धं करिष्यन्ति नेमिप्रभृति माधवि ।
मासे मासे च वै पश्चात्पितृपक्षे तपोधनाः ॥ ५१ ॥

इति वाराहपुराणे भगवच्छास्त्रे पिण्डकल्पोत्पत्तिर्नाम
ऊननवत्यधिकशततमोऽध्यायः ।



## नवत्यधिकशततमोऽध्यायः

धरण्युवाच

देवमानुषतिर्यक्षु प्रेतेषु नरकेषु च।
आयान्ति जन्तवः केचिद् भूत्वा गच्छन्ति चापरे॥ १॥
स्वप्नोपममिमं लोकं ह्यात्मकर्म शुभाशुभम्।
वर्त्तते तिष्ठते देव तव मायाबलैर्जगत्॥ २॥
क एते पितरो देव श्राद्धं भोक्ष्यन्ति योगतः।
आत्मकर्मवशाल्लोके गतिः पञ्चसु वर्त्तते॥ ३॥
कथं तं पिण्डसंकल्पं मासे मासे नियोजयेत्।
के भवन्ति च भोक्तारः श्राद्धे पिण्डान् पितृक्रियाः।
निश्चयं श्रोतुमिच्छामि परं कौतूहलं हि मे॥ ४॥
पृथिव्या एवमुक्तस्तु देवो नारायणो हरिः।
वराहरूपी भगवान्प्रत्युवाच वसुन्धराम्॥ ५॥

वराह उवाच

साधु भूमे वरारोहे सर्वधर्मव्यवस्थिते।
कथयिष्यामि ते देवि यन्मां त्वं परिपृच्छसि॥ ६॥
ये ते भवन्ति भोक्तारः पितृयज्ञेषु माधवि।
पिता पितामहश्चैव तथैव प्रपितामहः।
क्रियते पिण्डसङ्कल्पो मासे ह्येकदिने तथा॥ ७॥
ज्ञात्वा नक्षत्रसंयोगं पितृपक्षे ह्युपागते।
तिथिं पर्व विजानीयाद् येषु दत्तं महत्फलम्॥ ८॥
करिष्यन्ति च ये श्राद्धं श्रद्धया ज्ञानिनो जनाः।
तत्सर्वं कथयिष्यामि श्रूयतां शुभलोचने॥ ९॥
केचिद् यजन्ति यज्ञं वै ब्रह्मयज्ञं द्विजातयः।
केचिद् यजन्ति सुभगे देवयज्ञं हुताशने॥ १०॥
केचिच्च भूतयज्ञेन वर्त्तयन्ति सुमध्यमे।
केचिन्मनुष्ययज्ञेन पूजयन्ति गृहाश्रमे।
पितृयज्ञं च भो देवि शृणु वक्ष्यामि निश्चयम्॥ ११॥
ये यजन्ति वरारोहे क्रतूनेकशतैरपि।
सर्वे ते मयि वर्त्तन्ते सत्यमेतद्ब्रवीमि ते॥ १२॥

अग्निर्मुखं च देवानां हव्यकव्येषु माधवि ।
उत्तरोऽग्निरहं चैव दक्षिणाग्निरहं तथा ॥ १३ ॥
अहमाहवनीयोऽग्निः सर्वयज्ञेषु सुन्दरि ।
पावनः पावकश्चैव अहमेव व्यवस्थितः ॥ १४ ॥
सर्वेष्वेव तु कार्येषु देवसत्रेषु माधवि ।
वैश्वदेवे नियुञ्जीत ब्रह्मचारी शुचिः सदा ॥ १५ ॥
भिक्षुको देवतीर्थेषु वानप्रस्थो यतिस्तथा ।
एतान्न भोजयेच्छ्राद्धे देवतार्थेषु पूजयेत्[1] ॥ १६ ॥
व्रतस्थान् संप्रवक्ष्यामि श्राद्धमर्हन्ति ये द्विजाः ।
उत्तमो गृहसन्तुष्टः क्षान्तो दान्तो जितेन्द्रियः ॥ १७ ॥
उदासीनः सत्यसन्धयः श्रोत्रियो धर्मपाठकः ।
वेदविद्याव्रतस्नातो सुविमृष्टान्नभोजकः ।
ईदृशान् भोजयेच्छ्राद्धे पितृयज्ञेषु माधवि ॥ १८ ॥
दत्त्वा हुताशनायादौ देवतीर्थेषु सुन्दरि ।
पश्चाद्ब्राह्मणमुखे दद्यात्पित्रर्थं च यथाविधि ॥ १९ ॥
चतुर्णामेव वर्णानां[2] यद्यथा श्राद्धमर्हति ।
तथा विधिः प्रयोक्तव्यः पितृयज्ञेषु सुन्दरि ॥ २० ॥
यन्न पश्यन्ति ते भोज्यं श्वानः कुक्कुटशूकराः ।
ब्राह्मणाश्चाप्यपांक्तेया नराः संस्कारवर्जिताः ॥ २१ ॥
सर्वकर्मकरा ये च सर्वभक्षाश्च ये नराः ।
एतान् श्राद्धे न पश्येत पितृयज्ञेषु सुन्दरि ।
एते पश्यन्ति यच्छ्राद्धं तच्छ्राद्धं राक्षसं विदुः ॥ २२ ॥
मया प्रकल्पितो भागो बलये पूर्वमेव तु ।
हृतं यदा तु त्रैलोक्ये शक्रस्यार्थे त्रिविक्रमे ॥ २३ ॥
एवं श्राद्धं प्रतीक्षन्ति मन्त्रहीनमविक्रियम् ।
वर्जनीया बुधैरेते पितृयज्ञेषु सुन्दरि ॥ २४ ॥
प्रच्छन्नं भोजयेच्छ्राद्धे तर्पयित्वा द्विजं शुचिः ।
पितॄंस्तत्राह्वयेद्भूमे मन्त्रेण विधिपूर्वकम् ।
पिण्डास्त्रयः प्रदातव्याः सह व्यञ्जनसंयुताः ॥ २५ ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
अपसव्येन दातव्यं मासि मासि तिलोदकम् ॥ २६ ॥

---

१. एतान् भोजयेच्छ्राद्धेषु देवतीर्थेषु पूजयेदिति वा पाठः ।
२. चतुर्णामेकवर्णानामिति ( ग ) ।

प्रणम्य शिरसा देवीर्निवापस्य च धारिणीः ।
वैष्णवी काश्यपी चेति अजया चेति नामतः ।
एवं दत्तेन प्रीयन्ते पितरश्च न संशयः ॥ २७ ॥
परमात्मा शरीरस्थो देवतानां मया कृतः ।
त्रयस्तत्र वरारोहे देवगात्राद्विनिःसृताः ।
पितृदेवा भविष्यन्ति भोक्तारः पितृपिण्डकान् ॥ २८ ॥
देवतासुरगन्धर्वा यक्षराक्षसपन्नगाः ।
छिद्रं श्राद्धेऽस्य पश्यन्ति वायुभूता न संशयः ॥ २९ ॥
पितृयज्ञं विशालाक्षि ये कुर्वन्ति विदो जनः ।
आयुः कीर्त्तिं बलं तेजो धनपुत्रपशुस्त्रियः ।
ददन्ति पितरस्तस्य आरोग्यं नात्र संशयः ॥ ३० ॥
आत्मकर्मवशाल्लोकान् प्राप्नुवन्तीह शोभनान् ।
तिर्यक्षु च विमुच्यन्ते[1] प्रेतभावेन मानवाः ॥ ३१ ॥
नरके पच्यमानानां त्राता भवति मानवः ।
पूजकः पितृदेवानां सर्वकालं गृहाश्रमे ॥ ३२ ॥
द्विजातींस्तर्पयित्वा तु पूर्णेन विधिना नरः ।
अक्षयं तस्य मन्यन्ते पितरः श्राद्धतर्पिताः ॥ ३३ ॥
नरा ये पितृभक्तास्ते प्राप्नुवन्ति परां गतिम् ।
सात्त्विकं शुक्लपन्थानमेते यान्ति विदो जनाः ॥३४॥
पुनरन्यत्प्रवक्ष्यामि शृणु तत्त्वेन सुन्दरि ।
अज्ञानतमसारूढा निकृतिज्ञाः शठास्तथा ।
स्नेहपाशशतेनैव पच्यन्ते नरके नराः ॥ ३५ ॥
कल्पान्तं पच्यमानापि ये न त्रायन्ति मानवाः ।
तेषां पुत्राश्च पौत्राश्च कदाचिदपि सुन्दरि ॥ ३६ ॥
मुच्यन्ते जलबिन्दूंश्च अमां प्राप्य जलाशये ।
तेनैव भविता तृप्तिस्तेषां निरयगामिनाम् ॥ ३७ ॥
ये वै श्राद्धं प्रकुर्वन्ति तर्पयित्वा द्विजातयः ।
दत्त्वा तिलोदक पिण्डान् पितृभ्यो भक्तिभावतः ।
निरयात्तेऽपि मुच्यन्ते तृप्तिर्भवति चाक्षया ॥ ३८ ॥
गृह्य चौदुम्बरं पात्रं कृत्वा तत्र तिलोदकम् ।
विप्राणां वचनं कृत्वा यथाशक्त्या च दक्षिणा ।
देया तेषां तु विप्राणां पितृणां मोक्षणाय च ॥ ३९ ॥

---

१. तिर्यक्षु न च मुच्यन्ते इति वा पाठः ।

देयो नीलो वृषस्तत्र नरकार्त्तिविनाशनः ।
नीलषण्डस्य लाङ्गूले तोयमभ्युद्धरेद्यदि ।
षष्टिवर्षसहस्राणि पितरस्तेन तर्पिताः ॥ ४० ॥

मुक्तमात्रेण शृङ्गेण नीलषण्डेन सुन्दरि ।
उद्धृतो यदि सुश्रोणि पङ्कः शृङ्गेण तेन च ॥ ४१ ॥
बान्धवाः पितरस्तस्य निरये पतितास्तु ये ।
तानुद्धृत्य वरारोहे सोमलोकं प्रयच्छति ॥ ४२ ॥

मुक्तेन नीलषण्डेन यत्पुण्यं जायते भुवि ।
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
सोमलोकेषु मोदन्ते क्षुत्तृड्भ्यां च विवर्जिताः ॥ ४३ ॥
एष धर्मो गृहस्थानां पुत्रपौत्रसमन्विताः ।
त्रातारश्च भविष्यन्ति वर्त्तयन्तो यथासुखम् ॥ ४४ ॥

पिपीलिकादिभूतानि जङ्गमाश्च विहङ्गमाः ।
उपजीवन्ति सुश्रोणि गृहस्थेषु न संशयः ॥ ४५ ॥

एवं गृहाश्रमो मूलं धर्मस्तत्र प्रतिष्ठितः ।
मासि मासि तु ये श्राद्धं प्रवर्त्तन्ति गृहाश्रमे ।
तिथौ पर्वणि ये चैव स्वपितॄंस्तारयन्ति वै ॥ ४६ ॥

न यज्ञदानाध्ययनोपवासैस्तीर्थाभिषेकैरपि चाग्निहोत्रैः ।
दानैरनेकैर्विधिसम्प्रदत्तैर्न तत्फलं श्राद्धगृहस्थधर्मे ॥ ४७ ॥

पितरो निर्गतास्तत्र ब्रह्मविष्णुशरीरगाः ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥ ४८ ॥
एवं क्रमेण वै तत्र पितृदेवा वसुन्धरे ॥ ४९ ॥
देवताः कश्यपोत्पन्नाः श्राद्धेषु विनियोजिताः ।

तत एते न जानन्ति देवाः शक्रपुरोगमाः ॥ ५० ॥
ईश्वरश्च न जानाति आत्मदेहविनिःसृताः ।
न च ब्रह्मा विजानाति निःसृतो मम मायया ॥ ५१ ॥
एवं मायामयौ भूमौ ब्रह्मरुद्रौ बहिष्कृतौ ।

पुनश्चान्यत्प्रवक्ष्यामि पितृयज्ञेषु सुन्दरि ॥ ५२ ॥
दद्याद्वै ब्राह्मणमुखे नाग्नौ तु जुहुयात्क्वचित् ।
कृत्वा वै पिण्डसङ्कल्पं दर्भानास्तीर्य भूतले ॥ ५३ ॥
तेन ते पितृपिण्डेन पितृदेवा वसुन्धरे ।
अजीर्णेनाभिपीड्यन्ते भुज्यन्ते न च सुन्दरि ॥ ५४ ॥

ततो दुःखेन सन्तप्ताः सोममेवाभिपद्यते ।
दृष्टाः सोमेन सुश्रोणि देवताजीर्णपीडिताः ।
स्वागतेनाथ वाक्येन पूजितास्तदनन्तरम् ॥ ५५ ॥

सोम उवाच

देवताः कस्य चोत्पन्ना दुःखिताः केन हेतुना ।
एवं तु भाषमाणस्य सोमस्य तदनन्तरम् ।
ऊचुस्ते सोममेवापि[1] वाक्यं नः श्रूयतामिति ॥ ५६ ॥

त्रयस्तु पितरो देवा ब्रह्मविष्णुहरोद्भवाः ।
श्राद्धे नियोजितास्तैस्तु पितृपिण्डेन तर्पिताः ।
अजीर्णं जायते सोम तेन वै दुःखिता वयम् ॥ ५७ ॥

सोम उवाच

सखा चाहं भविष्यामि त्रयाणां च चतुर्थकः ।
सहितास्तत्र गच्छामो यथा श्रेयो भविष्यति ॥ ५८ ॥
एवमुक्तास्तु[2] सोमेन पितृदेवास्तदन्तरे ।
सोमं सोमेन[3] गच्छन्ति श्रेयस्कामा वसुन्धरे ॥ ५९ ॥

शरण्यं शरणं देवं ब्रह्माणं पद्मसम्भवम् ।
मेरुशृङ्गे सुखासीनं ब्रह्मर्षिगणसेवितम् ॥ ६० ॥
दृष्ट्वा पितामहं देवं प्रणम्य सहसा क्षितौ ।
अत्रिपुत्रेण सोमेन भाषितो वै पितामहः ॥ ६१ ॥

य एते पितरो देव दुःखिताजीर्णपीडिताः ।
आगताः शरणं चात्र सोमं सोमेन सत्तम ।
यथा नश्यन्त्यजीर्णानि तथा कुरु पितामह ॥ ६२ ॥

मुहूर्तं ध्यानमास्थाय ईश्वरं च ददर्श ह ।
उवाच वचनं तत्र ब्रह्मा योगीश्वरं प्रति ॥ ६३ ॥
एते ते पितरो देव दुःखिताजीर्णपीडिताः ।
आगताः शरणं चात्र सोमेन सहिता मम ।
आचक्ष्व निर्मिता येन यथा श्रेयो भवेत्तव ॥ ६४ ॥

ब्रह्मणा चैवमुक्तस्तु ईश्वरं परमेश्वरः ।
मुहूर्तं ध्यानमास्थाय दिव्यं योगं च माधवि ॥ ६५ ॥

---

१. सोममेवाथेति ( ग ) । २. एवमुक्तास्ते इति ( ग ) ।
३. 'सोममेवान्तम्'—इति पाठान्तरम् ।

पश्यते ईश्वरं तत्र योगवेदाङ्गनिर्मितम् ।
विस्मयं परमं गत्वा ब्रह्माणं वाक्यमब्रवीत् ॥ ६६ ॥
निर्मिता विष्णुना ब्रह्मन् वैष्णव्या मायया च ते ।
प्रथमं पितरो देवा ये च श्रेष्ठा भवन्ति ते ॥ ६७ ॥
पिता तु ब्रह्मदैवत्यो मम गात्राद्विनिर्मितः ।
पितामहो विष्णुदेवो विष्णुगात्राद्विनिर्मितः ।
प्रपितामहो रुद्रदेवो मम गात्राद्विनिर्मितः ॥ ६८ ॥
श्राद्धे नियोजितास्तेऽत्र मर्त्त्येषु पितृदेवताः ।
ब्राह्मणानां हितार्थाय निर्मिता विष्णुमायया ॥ ६९ ॥
तर्पिताः पितृयज्ञेषु पितरोऽजीर्णपीडिताः ।
आगताः शरणं ब्रह्मन् सोमेन सहिता यदि ॥ ७० ॥
येन नश्यत्यजीर्णं च पितॄणां च सुखं भवेत् ।
शृणु तत्त्वं प्रवक्ष्यामि ब्रह्मन् लोकपितामह ॥ ७१ ॥
शाण्डिल्यपुत्रस्तेजस्वी धूम्रकेतुर्विभावसुः ।
श्राद्धे तु प्रथमं तस्य दातव्यं मानुषेषु वा ।
सह तेनैव भोक्तव्यं पितृपिण्डविसर्जितम् ॥ ७२ ॥
ईश्वरेणैवमुक्तस्तु ब्रह्मा कमलसम्भवः ।
आहूय मनसा चैव आगतो हव्यवाहनः ।
प्रदीप्तस्तेजसा वह्निः सर्वभक्षो हुताशनः ॥ ७३ ॥
योजितः पञ्चयज्ञेषु ब्रह्मणा मम मायया ।
ब्रह्माग्निं भाषते तत्र शृणुष्व च हुताशन ॥ ७४ ॥
भोक्तव्यं प्रथमं ब्रह्मन् पितृपिण्डविसर्जितम् ।
त्वया मुक्तेति भोक्ष्यन्ति देवताः समरुद्गणाः ॥ ७५ ॥
भोक्तव्यं मध्यमं श्राद्धं पथ्यमन्नं च वै सह ।
पश्चाद्दत्तं तु तं पिण्डं सह सोमेन भुञ्जते ॥ ७६ ॥
ब्रह्मणा ह्येवमुक्तास्तु पितृदेवहुताशनाः ।
प्रस्थिताः सह सोमेन देवतास्ता वसुन्धरे ॥ ७७ ॥
पितृयज्ञं वरारोहे भोक्ष्यन्ति सहिताः सदा[1] ।
एवं तु प्रथमं श्राद्धं दद्यादग्नेर्वसुन्धरे ॥ ७८ ॥
उद्दिश्य च पितॄन्देवि तर्पयित्वा द्विजातयः ।
पश्चात्पिण्डान् विसर्जीत दर्भानास्तीर्य भूतले ॥ ७९ ॥

---

१. सहितास्तदेति ( ग )।

प्रथमं ब्रह्मणोंऽशाय दद्यात्पिण्डं विधानतः ।
पितामहाय रुद्रांशसम्भूताय तु मध्यमम् ॥ ८० ॥
प्रपितामहाय विष्णोस्तु दद्यात्पिण्डं महीतले ॥ ८१ ॥

विधिना मन्त्रपूर्वेण श्राद्धं कुर्वन्ति ये नराः ।
तेषां वरं प्रयच्छन्ति पितरः श्राद्धतर्पिताः ॥ ८२ ॥
मम मायाबलेनैव कृतं श्राद्धं द्विजातिभिः ॥ ८३ ॥

अपांक्तेयांस्तथा विप्रान् प्रवक्ष्यामि वसुन्धरे[1] ।
नपुंसकाश्चित्रकरा वसुपालविनिन्दकाः ॥ ८४ ॥
कुनखाः श्यावदन्ताश्च काणाश्च विकटोदराः ।
नर्त्तका गायनाश्चैव तथा रङ्गोपजीविनः ॥ ८५ ॥

वेदविक्रयिणश्चैव सर्वयाजनयाजकाः ।
राजोपसेवकाश्चैव वाणिज्ये क्रयविक्रयाः ॥ ८६ ॥
ब्रह्मयोन्यां समुत्पन्नाः सङ्कीर्णाः पतिताश्च ये ।
असंस्कारप्रवृत्ताश्च शूद्रकर्मोपजीविनः ॥ ८७ ॥

शूद्रकर्मकरा ये च गणका ग्रामयाजकाः ।
दीक्षितः काण्डपृष्ठश्च यश्च वार्धुषिको द्विजः ॥ ८८ ॥

विक्रेतारो रसानां च ये च वैश्योपजीविनः ।
तस्करा लेखकाराश्च याजका रङ्गकारकाः ॥ ८९ ॥

शैलिका गिरिका ये च दाम्भिका ये च माधवि ।
सर्वकर्मकरा ये च सर्वविक्रयिणस्तथा ॥ ९० ॥

एतान्न भोजयेच्छ्राद्धे पित्रर्थे च वसुन्धरे ।
दूराध्वनिगता ये च तत्र कर्मोपजीविनः ॥ ९१ ॥

रसविक्रयिणश्चैव शैलूषस्तिलविक्रयी ।
श्राद्धकालमनुप्राप्तं राजसं तं विदुर्बुधाः ॥ ९२ ॥
अन्ये ये दूषिता देवि द्विजरूपेण राक्षसाः ।
एतान्न पश्येच्छ्राद्धेषु पितृपिण्डेषु माधवि ॥ ९३ ॥

अपांक्तेयांस्तथा विप्रान् भुञ्जतः पश्यतो द्विजान् ।
पितरस्तस्य षण्मासं दुःखमृच्छन्ति दारुणम् ॥ ९४ ॥

न्यस्तपात्रं द्रुतं कुर्यात् प्रायश्चित्तमुभौ धरे ।
घृतं तु जुहुयादग्नावादित्यं चावलोकयेत् ॥ ९५ ॥

---

१ प्रवक्ष्यामि च सुन्दरीति ( ग )

पुनरावपनं कृत्वा पितरं च पितामहान् ।
गन्धपुष्यं च धूपं च दद्यादर्घ्यं तिलोदकम् ॥ ९६ ॥
यथाविधि च विप्राय भोजयेच्च पुनः शुचिः ।
पुनश्चान्यत्प्रवक्ष्यामि शृणु तत्त्वेन सुन्दरि ॥ ९७ ॥
ज्ञानशुद्धेन विप्रेण मन्त्रशुद्धिं यथाविधि ।
मृतान्नं ये न भुञ्जन्ति कदाचिदपि माधवि ॥ ९८ ॥
वैश्वदेवेषु दातव्यं श्राद्धेषु च न योजयेत् ।
प्रेतान्नं भुञ्जमानास्तु श्राद्धमर्हन्ति ये द्विजाः ॥ ९९ ॥
तेषां दोषं प्रवक्ष्यामि भुक्तं भोजयते तु सः ।
दम्भकारकृतोच्छिष्टं कृत्वा तु नरकं व्रजेत् ॥ १०० ॥
प्रायश्चित्तं प्रवक्ष्यामि यथा शुध्यन्ति ते नराः ।
माघमासे तु द्वादश्यां सर्पिर्युक्तं तु पायसम् ॥ १०१ ॥
स लिहेत् मधुमांसेन तर्पयित्वा द्विजातयः ।
सवत्सां कपिलां दद्यादात्मनः शुद्धिमिच्छता ॥ १०२ ॥
पुनः श्राद्धं प्रकुर्वीत आत्मनः शुभमिच्छता ।
स्नानोपलेपनं भूमे कृत्वा विप्रान् प्रमन्त्रयेत्[1]॥ १०३ ॥
दन्तकाष्ठं विसर्जीत ब्रह्मचारी शुचिर्भवेत् ।
यत्नेन मिथुनं श्राद्धे भोजयित्वा विसर्जयेत् ॥ १०४ ॥
अमायां च विशालाक्षि दन्तकाष्ठं न खादयेत् ॥ १०५ ॥
अमायां तु च यो मूर्खो दन्तकाष्ठं हि खादति ।
हिंसितो भवते सोमो देवताः पिततरस्तथा ॥ १०६ ॥
प्रभातायां तु शर्वर्यामुदिते च दिवाकरे ।
दिवाकृत्यं ततो गृह्य विप्रस्य विधिपूर्वकम् ।
श्मश्रुकर्म च कर्त्तव्यं नखानां छेदनानि च ॥ १०७ ॥
स्नापनाऽभ्यञ्जने दद्यात्पितृभक्तेन सुन्दरि ।
पक्वान्नं तत्र वै कार्यं सुविमृष्टञ्च शुद्धितः ॥ १०८ ॥
वृत्ते तु तत्र मध्याह्ने श्राद्धारम्भं तु कारयेत् ।
स्वागतं च तथा कृत्वा पाद्यार्थं सलिलं[2] शुचिः ॥ १०९ ॥
पाद्यं दत्त्वा तु विप्राय गृहस्याभ्यन्तरं नयेत् ।
आसनं कल्पयित्वा तु आवाह्य तदनन्तरम् ॥ ११० ॥

---

१. निमन्त्रयेदिति (ग)। २. मण्डलम् इति (ग)।

अर्घ्यं दत्त्वा विधानेन गन्धमाल्यैः प्रपूज्य च ।
धूपं दीपं तथा वस्त्रं तिलोदकमथापि वा ॥ १११ ॥
पात्रं च भोजनस्यार्थे विप्राग्रे धारयेत्तथा ।
भस्मना मण्डलं कार्यं पङ्क्तिदोषनिवारकम् ॥ ११२ ॥
अग्निकार्यं ततः कृत्वा अन्नं च परिवेषयेत् ।
तत्र कार्यो न सङ्कल्पः पितॄनुद्दिश्य सुन्दरि ॥ ११३ ॥
यथासुखेन भोक्तव्यमिति ब्रूयाद्द्विजं प्रति ।
रक्षोघ्नमन्त्रपाठांश्च श्रावयेत विचक्षणः ॥ ११४ ॥
तृप्तं तु ब्राह्मणं दत्त्वा दद्याद्वै विकिरं ततः ।
उत्तरीयासनं दत्त्वा पिण्डप्रश्नं तु कारयेत् ॥ ११५ ॥
दक्षिणाभिमुखो भूत्वा दर्भानास्तीर्य भूतले ।
पिण्डदानं प्रकुर्वीत पित्रादित्रितये तथा ॥ ११६ ॥
पिण्डानां पूजनं कार्यं तं तु वृद्धयै यथाविधि ।
ब्राह्मणस्य च हस्ते तु दद्यादक्षय्यमात्मवान् ॥ ११७ ॥
दक्षिणाभिः प्रतोष्यापि स्वस्तिवाच्यं विसर्जयेत् ।
पिण्डास्त्रयस्तु वसुधे यावत्तिष्ठन्ति भूतले ॥ ११८ ॥
आप्यायमानाः पितरस्तावत्तिष्ठन्ति वै गृहे ।
उपस्पृश्य शुचिर्भूत्वा दद्याच्छान्त्युदकानि च ॥ ११९ ॥
प्रणम्य शिरसा भूमौ निवापस्य च धारिणीः[1] ।
वैष्णवी काश्यपी चेति अक्षया चेति नामतः ॥ १२० ॥
भक्षयेत्प्रथमं पिण्डं पत्न्यै देयं तु मध्यमम् ।
तृतीयमुदके दद्याच्छ्राद्धे एवं विधिः स्मृतः ॥ १२१ ॥
पितृदैवान्विसर्जीत ततश्च प्रणमेत्तु तान् ।
एवं दत्तेन तुष्यन्ति पितृदेवा न संशयः ।
दीर्घायुष्यं प्रयच्छन्ति पुत्रपौत्रधनानि च ॥ १२२ ॥
ज्ञानोत्तमेषु विप्रेषु दद्याच्छ्राद्धं विधानतः ।
अन्यथा तत्तु वै श्राद्धं निष्फलं नास्ति संशयः ॥ १२३ ॥
मन्त्रहीनं क्रियाहीनं यः श्राद्धं कुरुते द्विजः ।
मद्भक्तस्यासुरेन्द्रस्य फलं भवति भागतः ॥ १२४ ॥

---

१. धारिणि इति ( ग ) ।

उद्धरेद् यदि पात्रं तु ब्राह्मणो ज्ञानवर्जितः ।
राक्षसैर्ह्रियते तच्च भुञ्जतस्तस्य सुन्दरि ॥ १२५ ॥
एतत्ते कथितं भद्रे पितृकार्यमनुत्तमम् ।
उत्पत्तिश्चैव दानं तु यत्पुण्यं कथितं तव[1] ।
अपरं चापि[2] वसुधे किमन्यच्छ्रोतुमिच्छसि ॥ १२६ ॥

इति वाराहपुराणे श्राद्धपितृयज्ञनिश्चयो नाम
नवत्यधिकशततमोऽध्यायः ।



---

१. कथितं मयेति ( ग ) । २. अतः परञ्च इति ( ग ) ।

# एकनवत्यधिकशततमोऽध्यायः

सूत उवाच

एवं श्रुत्वा बहून् धर्मान् धर्मशास्त्रविनिश्चयात् ।
वाराहरूपिणं देवं पुनः पप्रच्छ मेदिनी ॥ १ ॥

धरण्युवाच

एवं शास्त्रं मया देव तव वक्त्राद्विनिःसृतम् ।
श्रुतं सुबहुशश्चैव तृप्तिर्मम न विद्यते ॥ २ ॥

ममैवानुग्रहार्थाय रहस्यं वक्तुमर्हसि ।
कीदृशो मधुपर्कश्च किं पुण्यं का च देवता ॥ ३ ॥

कानि द्रव्याणि कस्मै च देयो विष्णो वदस्व मे ।
इति भूम्या वचः श्रुत्वा देवदेवो जनार्द्दनः ।
वराहरूपी भगवान् प्रत्युवाच वसुन्धराम् ॥ ४ ॥

वराह उवाच

शृणु भूमे प्रयत्नेन मधुपर्को यथा कृतः ।
उत्पत्तिं चैव दानं च सर्वो यस्य च हीयते ॥ ५ ॥
अहं ब्रह्मा च रुद्रश्च कृत्वा लोकस्य संक्षयम् ।
अव्यक्तानि च भूतानि यानि कानि च सर्वथा ॥ ६ ॥

ततो भूमे दक्षिणाङ्गात्पुरुषो मे विनिःसृतः ।
रूपवान् द्युतिमांश्चैव श्रीमान् ह्रीकीर्त्तिमान्नरः ॥ ७ ॥

तत्र पप्रच्छ मां ब्रह्मा मम गात्राद्विनिःसृतः ।
य एव तिष्ठते विष्णो त्रयाणां च चतुर्थकः ॥ ८ ॥

स रहश्च लघुर्देव एतत्तव न युज्यते ।
ब्रह्मणो वचनं श्रुत्वा मयाप्येवं प्रभाषितम् ॥ ९ ॥
एष च मे समुत्पन्नः सर्वकर्मसु निष्ठितः ।
मधुपर्केति विख्यातो भक्तानां भवमोक्षणः ॥ १० ॥

मयात्र शंसितं[1] ब्रह्मन् रुद्रे चापि समासतः ।
साधु विष्णो भागतस्ते[2] एष चापि विनिःसृतः ॥ ११ ॥

---

१. संसृतमिति ( ग ) ।   २. प्रभातस्ते इति ( ग ) ।

उद्भवं मधुपर्कस्य आत्मसम्भवनिश्चयम् ।
ततस्तु मां ब्रवीद् ब्रह्मा कारणं मधुरं वचः ॥ १२ ॥

मधुपर्केण किं कार्यमेतदाचक्ष्व निष्कलम् ।
पितामहवचः श्रुत्वा मयाऽसौ प्रतिभाषितः ॥ १३ ॥

कारणं मधुपर्कस्य दानं सङ्करणं[1] तथा ।
[2]ममार्चनविधिं कृत्वा मधुपर्कं प्रयच्छति ॥ १४ ॥

ब्रह्मन् यात्युत्तरं[3] स्थानं यत्र गत्वा न शोचति ।
तस्य क्रियां प्रवक्ष्यामि मम दानप्रतिग्रहात् ॥ १५ ॥

यस्य दानविधिं प्राप्य यान्ति दिव्यां गतिं मम ।
वृतेष्वेवोपचारेषु ये च ब्रह्मन् मम प्रियाः ।
संगृह्य मधुपर्कं वै इमं मन्त्रमुदाहरेत् ॥ १६ ॥

मन्त्रः

ओं एषो हि देव भगवंस्तव गात्रसूतः संसारमोक्षणकरो मधुपर्कनामा ।
भक्त्या मयायं प्रतिपादितोऽद्य गृहाण देवेश नमो नमस्ते ॥ १७ ॥

पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
यादृशो मधुपर्को वै या च तस्य महत्क्रिया ॥ १८ ॥

घृतं दधि मधुं चैव कारयेत[4] समं तथा ।
विधिना मन्त्रपूतेन यदीच्छेत् सिद्धिमुत्तमाम् ॥ १९ ॥

समासाद्य ततः कृत्वा मम कर्मपरायणः ।
उचितेनोपचारेण यत्त्वया परिपृच्छितम् ॥ २० ॥

इति वाराहपुराणे मधुपर्कोत्पत्तिदानसङ्करणो नाम
एकनवत्यधिकशततमोऽध्यायः ।



---

१. 'स कारणम्' इति ( ग )। २. समार्चनविधिम् इति ( ग )।
३. ब्रह्मन् यात्यपरमिति ( ग )।
४. कार्यीत सममिति ( ग )। करवीत इति ऐ० सो० मुद्रितपाठः।

# द्विनवत्यधिकशततमोऽध्यायः

सूत उवाच

श्रुत्वा तु मधुपर्कस्य उत्पत्तिं दानमेव च ।
पुण्यं चैव फलं चैव कारणं ग्रहणं तथा ॥ १ ॥
विस्मयं परमं गत्वा सा महासंशितव्रता ।
पादौ गृह्य यथान्यायं प्रत्युवाच जनार्दनम् ॥ २ ॥
देव वृत्तोपचारेण तव यन्मनसि प्रियम् ।
किञ्च तत्रैव दातव्यं तव कर्मपरायणैः ।
एतदाचक्ष्व तत्त्वेन तत्र यत्परमं महत् ॥ ३ ॥

वराह उवाच

साधु भूमे महाभागे यन्मां त्वं परिपृच्छसि ।
कथयिष्यामि तत्सर्वं दुःखसंसारमोक्षणम् ॥ ४ ॥
कृत्वा तु मम कर्माणि यत्त्वया पूर्वभाषितम् ।
पश्चाच्छान्तिं च मे कुर्याद् भूमे राष्ट्रसुखावहम् ॥ ५ ॥
सर्वकर्म ततः कृत्वा भूम्यां जानु निपात्य च ।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ॥ ६ ॥

मन्त्रः

ओं नमो नमो वासुदेव त्वं गतिस्त्वं परायणम् ।
शरणं त्वां गतो नाथ . संसारार्णवतारक ॥ ७ ॥
आगतस्त्वं च सुमुख समुचितेन वै पुनः ।
दिशः पश्य अधः पश्य व्याधिभ्यो रक्ष नित्यशः ॥८॥
प्रसीद स्वस्य राष्ट्रस्य राज्ञः सर्वबलस्य च ।
गर्भिणीनां च वृद्धानां व्रीहिणां च गवां तथा ।
ब्राह्मणानां च सततं शान्तिं कुरु शुभं कुरु ॥ ९ ॥
अन्नं कुरु सुवृष्टिं[1] च सुभिक्षमभयं तथा ।
राष्ट्रं प्रवर्द्धतु विभो शान्तिर्भवतु नित्यशः ॥ १० ॥
देवानां ब्राह्मणानां च भक्तानां कन्यकासु च ।
पशूनां सर्वभूतानां शान्तिर्भवतु नित्यशः ॥ ११ ॥

---

१. सुपुष्टिञ्चेति ( ग ) । सवृष्टिमिति ऐ० सो० मुद्रितपाठः ।

एवं शान्तिं पठित्वा तु मम कर्मपरायणः ।
पुनर्जलाञ्जलिं दत्त्वा इमं मन्त्रमुदाहरेत् ॥ १२ ॥

मन्त्रः

योऽसौ भवान् सर्वजगत्प्रसूतो यज्ञेषु देवेषु च कर्मसाक्षी ।
शान्तिं भवान् कुर्वतु वासुदेव संसारमोक्षं च कुरुष्व देव ॥ १३ ॥

एष सिद्धिश्च कीर्त्तिश्च ओजसां तु महौजसम् ।
लाभानां परमो लाभो गतीनां परमा गतिः ॥ १४ ॥
एवं पठति तत्त्वेन मम शान्तिं सुखावहाम् ।
ते तु मल्लयतां यान्ति पुनरावृत्तिवर्जिताः ॥ १५ ॥
एवं शान्तिं पठित्वा तु मधुपर्कं प्रयोजयेत् ।
नमो नारायणायेति उक्त्वा मन्त्रमुदाहरेत् ॥ १६ ॥

मन्त्रः

योऽसौ भवान् देववरप्रसूतो यो वै समर्च्यो मधुपर्कनामा ।
आगच्छ सन्तिष्ठ इमे च पात्रे ममापि संसारविमोक्षणाय ॥ १७ ॥

सर्पिर्दधिमधुश्चैव समं पात्रे उदुम्बरे ।
अलाभे मधुनश्चापि[1] गुडेन सह मिश्रयेत् ॥ १८ ॥
घृतालाभे तु सुश्रोणि लाजैः सह विमिश्रयेत् ।
अलाभे वापि दध्नश्च क्षीरेण सह मिश्रयेत्[2] ॥ १९ ॥
दधि मधु[3] घृतं चैव कारयेत समं तथा ।
अहं दधि मधू रुद्रः सर्पिश्चापि पितामहः ॥ २० ॥
सर्वेषामर्थलाभे तु मम कर्मपरायणः ।
अप एव ततो गृह्य इमं मन्त्रमुदाहरेत् ॥ २१ ॥

मन्त्रः

ओं योऽसौ भवान्नाभिमात्रप्रसूतो यज्ञैश्च मन्त्रैः सरहस्यजप्यैः ।
सोऽयं मया ते परिकल्पितश्च गृहाण दिव्यो मधुपर्कनामा ॥ २२ ॥

यो ददाति महाभागे मयोक्तं विधिपूर्वकम् ।
सर्वयज्ञफलं प्राप्य मम लोकं प्रपद्यते ॥ २३ ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
यो वै प्राणान् प्रमुच्येत मम कर्मपरायणः ।
तस्य चैव इ दातव्यं मन्त्रेण विधिपूर्वकम् ॥ २४ ॥
यावत्प्राणान् प्रमुच्येत कृत्वा कर्म सुपुष्कलम् ।
मद्भक्तेन तु दातव्यः सर्वसंसारमोक्षणः ॥ २५ ॥

---

१. मधुनो वाऽपीति ( ग ) । २. एष श्लोकः ( ग ) पुस्तके नास्ति ।
३. गुडम् इति ( ग ) ।

दृष्ट्वा तु विह्वलौ ह्येनं मम कर्मपरायणः ।
मधुपर्कं परं गृह्य इमं मन्त्रमुदाहरेत् ॥ २६ ॥

मन्त्रः

योऽसौ भवांस्तिष्ठसि सर्वदेहे नारायणः सर्वजगत्प्रधानः ।
गृहाण चैवं सुरलोकनाथ भक्तोपनीतं मधुपर्कसंज्ञम् ॥ २७ ॥

अनेनैव तु मन्त्रेण दद्याच्च मधुपर्ककम् ।
नरस्य मृत्युकाले तु दद्यात् संसारमोक्षणम् ॥ २८ ॥
एषायतिर्महाभागे मधुपर्कस्य कीर्त्तिता ।
एवं कश्चिन्न जानाति मधुपर्कं वसुन्धरे ॥ २९ ॥
एवं हि मधुपर्कश्च देयः सिद्धिमभीप्सुभिः ।
अर्चित्वा देवदेवेशं सर्वसंसारनाशनम् ॥ ३० ॥
ददाति मधुपर्कं यः स याति परमां गतिम् ।
अयं पवित्रो विमलः सर्वकामविशोधनः ॥ ३१ ॥
दीक्षिताय च दातव्यो यश्च शिष्यो गुरुप्रियः ।
न मूर्खाय प्रदातव्यमविनिताय कर्हिचित् ॥ ३२ ॥
शृणोति मधुपर्कस्य आख्यानं पापनाशनम् ।
याति दिव्यां परां सिद्धिं मधुपर्कस्य कारणात् ॥ ३३ ॥
एतत्ते कथितं भद्रे मधुपर्कविभावनम् ।
सर्वसंसारमोक्षार्थं यदीप्सेत् सिद्धिमुत्तमाम्[1] ॥ ३४ ॥
राजद्वारे श्मशाने वा भये च व्यसने तथा ।
ये पठन्ति इमां शान्तिं शीघ्रं कार्यं भविष्यति ॥ ३५ ॥
अपुत्रो लभते पुत्रमभार्यश्च प्रियां लभेत् ।
अपतिर्लभते भर्त्तां बद्धो मुच्येत बन्धनात् ॥ ३६ ॥
एतत्ते कथितं भूमे महाशान्तिसुखावहम् ।
सर्वसंसारमोक्षार्थं रहस्यं परमं महत् ॥ ३७ ॥
यस्त्वनेन विधानेन कुर्याच्छान्तिमनुत्तमाम् ।
सर्वसङ्गान् परित्यज्य मम लोकाय गच्छति ॥ ३८ ॥

इति वाराहपुराणे भगवच्छास्त्रे सर्वशान्तिकरणं नाम
द्विनवत्यधिकशततमोऽध्यायः ।

---

१. रहस्यं परमं महदिति ( ग ) । अतः परं ( ग ) पुस्तके यस्त्वनेन विधानेन कुर्याच्छान्तिमनुत्तमामित्यधिकः पाठः ।

## त्रिनवत्यधिकशततमोऽध्यायः

लोमहर्षण उवाच

व्यासशिष्यं महाप्राज्ञं वेदवेदाङ्गपारगम् ।
द्वारदेशे[1] समासीनं कृतपूर्वाह्णिकक्रियम् ॥ १ ॥
अश्वमेधे तथा वृत्ते राजा वै जनमेजयः ।
ब्रह्मवध्याभिभूतस्य दीक्षां द्वादशवार्षिकीम् ॥ २ ॥
प्रायश्चित्तं चरित्वा तु आगतो गजसाह्वयम् ।
उपगम्य महात्मानं जाह्नवीतीरसंश्रयम् ॥ ३ ॥
ऋषिं परमसम्पन्नं वैशम्पायनमञ्जसा ।
कर्मणा प्रेरितस्तेन चिन्ताव्याकुललोचनः ॥ ४ ॥
कुरूणां पश्चिमो राजा पश्चात्तापेन पीडितः ।
व्यासशिष्यमुपाभ्येत्य प्रश्नमेनमपृच्छत ॥ ५ ॥

जनमेजय उवाच

भगवन् जायते तीव्रं चिन्तयानस्य सुव्रत ।
कर्मपाकफलं यस्मिन् मानुषैरुपभुज्यते ॥ ६ ॥
एतदिच्छाम्यहं श्रोतुं कीदृशं तु यमालयम् ।
किं प्रमाणं च किंरूपं कथं गत्वा स पश्यति ॥ ७ ॥
न गच्छेयं कथं विप्र प्रेतराज्ञो निवेशनम् ।
धर्मराजस्य धीरस्य सर्वलोकानुशासिनः ॥ ८ ॥

सूत उवाच

एवं पृष्टो महातेजास्तेन राज्ञा द्विजोत्तमः ।
उवाच मधुरं वाक्यं राजानं जनमेजयम् ॥ ९ ॥

वैशम्पायन उवाच

शृणु राजन्[2] पुरावृत्तां कथां परमशोभनाम् ।
धर्मवृद्धिकरीं नित्यां यशस्यां कीर्तिवर्द्धिनीम् ॥ १० ॥
पावनीं सर्वपापानां प्रवृत्तौ शुभकारिणीम् ।
इतिहासपुराणानां कथां वै विदुषां प्रियाम् ॥ ११ ॥

---

१. गङ्गाद्वारे इति (ग) । २. महाराज पुरावृत्तमिति (ग) ।

कश्चिदासीत् पुरा राजन्नृषिः परमधार्मिकः ।
उद्दाल इति विख्यातः[१] सर्ववेदाङ्गतत्त्ववित् ॥ १२ ॥
तस्य पुत्रो महातेजा योगमास्थाय बुद्धिमान् ।
नाचिकेत इति ख्यातः सर्ववेदाङ्गतत्त्ववित् ॥ १३ ॥
तेन रुष्टेन शप्तोऽभूत् पुत्रः परमधार्मिकः ।
गच्छ शीघ्रं यमं पश्य मम क्रोधेन दुर्मते ।
तथेत्युक्त्वा महातेजाः पुत्रः परमधार्मिकः ॥ १४ ॥
चिन्तयित्वा मुहूर्त्तं तु योगमास्थाय बुद्धिमान् ।
क्षणेनान्तर्हितो जातः पितरं प्रत्युवाच ह ।
विनयात्पृष्ठतो वाक्यं भावेन च समन्वितम् ॥ १५ ॥
मा भूद्वाक्यं च ते मिथ्या धार्मिकस्य कदाचन ।
गमिष्यामि पुरं रम्यं धर्मराजस्य धीमतः ।
इह चैव पुनस्तावदागमिष्ये न संशयः ॥ १६ ॥

पितोवाच

एकस्त्वमसि वत्सश्च नान्यो बन्धुर्विधीयते ।
अधर्मं चानृतं चास्तु अकीर्त्तिर्वापि पुत्रक ॥ १७ ॥
मिथ्याभिशंसिनं तात यथेष्टं तारयिष्यति ।
रोषेण हि मृषावादी निर्दयः कुलपांसनः ॥ १८ ॥
अप्रवृत्तस्त्वसम्भाष्यो योऽहं मिथ्याप्रयुक्तवान् ।
त्वां वै धर्मसमाचारमभिधानेन शप्तवान् ॥ १९ ॥
अहं पुत्र न सद्वादी न क्षमे धर्मदूषितम् ।
मम त्वं हि महाभाग नित्यं चित्तानुपालकः ॥ २० ॥
धर्मज्ञश्च यशस्वी च नित्यं क्षान्तो जितेन्द्रियः ।
शुश्रूषुरनहंवादी शक्तस्तारयितुं मम ॥ २१ ॥
याचितस्त्वं मया पुत्र गन्तुं वै तत्र नार्हसि ॥ २२ ॥
यदि वैवस्वतो राजा तत्र प्राप्तं यदृच्छया ।
रोषेण त्वां महातेजा विसृजेन्न कदाचन ॥ २३ ॥
विनश्येयमहं पश्य कुलसेतुविनाशनः ।
धिक्कृतः सर्वलोकेन पापकर्त्ता नराधमः ॥ २४ ॥
पूतेति नरकस्याख्या दुःखेन नरकं विदुः ।
पुत्त्रित्राणं भवेत् पुत्रमिहेष्यन्ति परत्र च ॥ २५ ॥

---

१. 'उद्दालक इति ख्यात'–इति ( ग )।

हुतं दत्तं तपस्तप्तं पितरश्चापि पोषिताः ।
अपुत्रस्य हि तत्सर्वं मोघं भवति निश्चयः ॥ २६ ॥
शुश्रूषावान्भवेच्छूद्रो वैश्यो वा कृषिजीवनः ।
सस्यगोप्ता तु राजन्यो ब्राह्मणो वा स्वकर्मकृत् ॥ २७ ॥
तपो वा विपुलं तप्त्वा दत्त्वा दानमनुत्तमम् ।
अपुत्रो नाप्नुयात् स्वर्गं यथा तात मया श्रुतम् ॥ २८ ॥
पुत्रेण लभते जन्म पौत्रेण तु पितामहः ।
पुत्रस्य च प्रपौत्रेण मोदते प्रपितामहः ॥ २९ ॥
न हास्यामीति वत्स त्वां मम वंशविवर्द्धनम् ।
याच्यमानः प्रयत्नेन तत्र गन्तुं न चार्हसि ॥ ३० ॥

वैशम्पायन उवाच

एवं विलपमानं तं पितरं प्रत्युवाच ह ।
हृष्टपुष्टवपुर्भूत्वा[1] पुत्रः परमधार्मिकः ॥ ३१ ॥

पुत्र उवाच

न विषादस्त्वया कार्यो द्रक्ष्यसे मामिहागतम् ।
दृष्ट्वा च तमहं देवं सर्वलोकनमस्कृतम् ॥ ३२ ॥
आगच्छामि पुनश्चात्र न मेऽस्ति[2] मृत्युतो भयम् ।
पूजयिष्यति मां तात राजा त्वदनुकम्पया ॥ ३३ ॥
सत्ये तिष्ठ महाभाग सत्यञ्च परिपालय ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ३४ ॥
सूर्यस्तपति सत्येन वातः सत्येन वाति च ।
अग्निर्दहति सत्येन सत्येन पृथिवी स्थिता ॥ ३५ ॥
उदधिर्लङ्घ्येन्नैव मर्यादां सत्यपालितः ।
मन्त्राः प्रयुक्ताः[3] सत्येन सर्वलोकहितायते ॥ ३६ ॥
सत्येन यज्ञा वर्त्तन्ते मन्त्रपूताः सुपूजिताः ।
सत्येन वेदा गायन्ति सत्ये लोकाः प्रतिष्ठिताः ॥ ३७ ॥
सत्यं गाति तथा साम सर्वं सत्ये प्रतिष्ठितम् ।
सत्यं स्वर्गश्च धर्मश्च सत्यादन्यन्न विद्यते ॥ ३८ ॥
सत्येन सर्वं लभते यथा तात मया श्रुतम् ।
न हि सत्यमतिक्रम्य विद्यते किञ्चिदुत्तमम् ॥ ३९ ॥

---

१. हृष्टपुष्टमना भूत्वेति ( ग ) । २. न च मे मृत्युतो भयमिति ( घ ) ।
३. 'मन्त्रः प्रयुक्तः'—इति वा पाठः ।

देवदेवेन रुद्रेण वेदगर्भः पुरा किल ।
सत्यस्थिते तदेवान्यः परित्यक्तो महात्मना ॥ ४० ॥

दीक्षां धारयते ब्रह्मा स तेनैव सुयन्त्रितः ।
और्वेणाग्निस्तथा क्षिप्तः सत्येन वडवामुखे ॥ ४१ ॥

संवर्त्तेन पुरा तात सर्वे लोकाः सदैवताः ।
देवानामनुकम्पार्थं धृता वीर्यवता तदा ॥ ४२ ॥

पाताले पालयन् सत्यं बद्धो वैरोचनो वसन् ।
वर्द्धमानो महाश्रृङ्गैः शतश्रृङ्गो महागिरिः ॥ ४३ ॥

स्थितः सत्ये महाविन्ध्यो वर्द्धमानो न वर्द्धते ।
सर्वं चराचरमिदं सत्येन ध्रियते[1] जगत् ॥ ४४ ॥

गृहधर्माश्च ये दृष्टा वानप्रस्थाश्च शोभिताः ।
यतीनां च गतिः शुद्धा ये चान्ये व्रतसंस्थिताः ॥ ४५ ॥

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ४६ ॥

सत्येन पाल्यते धर्मो धर्मो रक्षति रक्षितः ।
तस्मात् सत्यं कुरुष्वाद्य रक्ष आत्मानमात्मना ॥ ४७ ॥

एवमुक्त्वा हृष्टपुष्टः[2] स्वेन देहेन सुव्रत ।
तपसा प्राप्तयोगस्तु जितात्मा कृतसंयमः ॥ ४८ ॥

ऋषिपुत्रो महातेजा सत्यवागनसूयकः ।
प्राप्तश्च परमं स्थानं यत्र राज्ञो यमस्य तु ॥ ४९ ॥

इति वाराहपुराणे प्रागितिहासे संसारचक्रे ऋषिपुत्रप्रयाणो नाम त्रिनवत्यधिकशततमोऽध्यायः ।



१. 'ध्रियते' इति ऐ. सो. मुद्रितपाठः । २. ततो हृष्ट इति (म) ।

## चतुर्नवत्यधिकशततमोऽध्यायः

वैशम्पायन उवाच

गतश्च परमं स्थानं यत्र राजा दुरासदः[1]
अर्चितस्तु यथान्यायं दृष्ट्वैव तु विसर्जितः ॥ १ ॥
ततो हृष्टमना राजन् पुत्रं दृष्ट्वा तपोनिधिः ।
परिष्वज्य च बाहुभ्यां मूर्द्धन्याघ्राय यत्नतः ॥ २ ॥
दिवं च पृथिवीं चैव नादयामास हृष्टवत् ।
स संहृष्टमनाः प्रीतस्तानुवाच तपोधनान् ॥ ३ ॥
पश्यन्तु मम पुत्रस्य प्रभावं दिव्यतेजसः ।
यमस्य भवनं गत्वा पुनः शीघ्रमिहागतः ॥ ४ ॥
पितृस्नेहानुभावेन गुरुशुश्रूषयापि च ।
दैवेन हेतुना चायं जीवन्दृष्टो मया सुतः ॥ ५ ॥
लोके मत्सदृशो नास्ति पुमान् भाग्यसमन्वितः ।
एष मृत्युमुखं गत्वा मम पुत्र इहागतः ॥ ६ ॥
कच्चित्त्वं न हतो वत्स नैव बद्धो यमालये ।
कच्चित्ते सशिवः पन्था गच्छतस्तव पुत्रक ॥ ७ ॥
कच्चित्ते व्याधयो घोरा नान्वगच्छन् यमालये ।
किमपूर्वं त्वया दृष्टं कच्चित्तुष्टो महातपाः ॥ ८ ॥
कच्चिद् राजा त्वया दृष्टः प्रेतानामधिपो बली ।
परुषेण न कच्चित्त्वां चक्षुषा पश्यते यमः ॥ ९ ॥
कच्चिन्न तुष्टो भगवांस्त्वां दृष्ट्वा स्वयमागतम् ।
कच्चिच्छीघ्रं विसृष्टोऽसि धर्मराजेन पुत्रक ॥ १० ॥
कच्चिद्द्वौवारिकास्तत्र न रौद्रास्त्वां यमालये ।
कच्चिद् राज्ञा विसृष्टं तु नाबाधन् तेतरे जनाः ॥ ११ ॥
कच्चित्पन्थास्त्वया लब्धो निर्गमो वा यमालये ।
अयं मम सुतः प्राप्तः प्रसन्ना मम देवताः ॥ १२ ॥
ऋषयश्च महाभागा द्विजाश्च सुमहाव्रताः ।
यन्मे वत्सः पुनः प्राप्तो यमलोकाद् दुरासदात् ॥ १३ ॥

---

१. न बाधन्तेतरे इति ऐ० सो० मुद्रितपाठः ।

एवमाभाषमाणं तु श्रुत्वा सर्वे वनौकसः।
त्यक्त्वा व्रतानि सर्वाणि नियमांश्च तथैव च ॥ १४ ॥
जपन्तश्चैव जाप्यानि पूजयन्तश्च देवताः।
उदूर्ध्वबाहवः केचित्तिष्ठन्तोऽन्ये सुदारुणम् ॥ १५ ॥
एकपादेन तिष्ठन्तः पश्यन्तोऽन्ये दिवाकरम्।
एवमेव परित्यज्य नियमान् पूर्वसञ्चितान् ॥ १६ ॥
वैश्वानरा महाभागास्तपसा शंसितव्रताः।
आगतास्त्वरितं द्रष्टुं नाचिकेतं सुतं तदा ॥ १७ ॥
दिग्वाससश्च ऋषयो दन्तोलूखलिनस्तथा।
अश्मकूटाश्च मौनाश्च शीर्णपर्णाम्बुभोजनाः ॥ १८ ॥
धूमपाश्च तथा चान्ये तप्यमानाश्च पावके।
परिवार्य तथा दृष्ट्वा तस्य पुत्रं तपोनिधिम् ॥ १९ ॥
उपविष्टास्तथा चान्ये स्थिताश्चान्ये सुयन्त्रिताः।
ते सर्वे तं तु पृच्छन्ति ऋषयो वेदपारगाः ॥ २० ॥
नाचिकेतकं तं दृष्ट्वा यमलोकादिहागतम्।
भीतास्तत्र स्थिता दृष्टाः[1] केचित्कौतूहलान्विताः॥२१॥
केचिद् विमनसश्चैव केचित्संशयवादिनः।
तमूचुः सहिताः सर्वे ऋषिपुत्रं तपोधनम् ॥ २२ ॥

ऋषय ऊचुः

भो भो सत्यव्रताचार गुरुशुश्रूषणे रत।
नाचिकेत सुत प्राज्ञ स्वधर्मपरिपालक ॥ २३ ॥
ब्रूहि सत्यं त्वया दृष्टं श्रुतञ्च सविशेषकम्।
ऋषीणां श्रोतुकामानां पितुश्चैव विशेषतः ॥ २४ ॥
अपि गुह्यञ्च वक्तव्यं पृष्टे सति विशेषतः।
सर्वस्यापि भयं तीव्रं यद्द्वारा प्रतिदृश्यते ॥ २५ ॥
मृतं नैव परं तात दृश्यते कालमायया।
स्वकर्म भुज्यते तात प्रयत्नेन च मानवैः ॥ २६ ॥
इह चैव कृतं यत्तु तत्परत्रोपभुज्यते।
करोति यदि तत्कर्म शुभं वा यदि वाऽशुभम् ॥ २७ ॥
तथाऽत्र दृश्यते काले कालस्यैव तु मायया।
म्रियते च यथा जन्तुर्यथा गर्भे च तिष्ठति ॥ २८ ॥

---

१. भीतास्त्रस्ताः स्थिता दृष्टेति ( ग )।

तस्य पारं न गच्छन्ति बहवः पारचिन्तकाः ।
तत्र स्थिते जगत्सर्वं लोभमोहतमोवृतम् ॥ २९ ॥

चिन्तयेत न चिन्ताऽत्र मृगयन्ति च यद्धितम् ।
करोति चित्रगुप्तः किं किञ्च जल्पत्यसौ पुनः ॥ ३० ॥

धर्मराजस्य किं रूपं कालो वा कीदृशो मुने ।
किंरूपा व्याधयश्चैव विपाको वापि कीदृशः ॥ ३१ ॥

किञ्च कुर्वन् प्रमुच्येत किं वा कर्म समाचरेत् ।
आस्पदं सर्वलोकस्य तत्कर्म दुरतिक्रमम् ॥ ३२ ॥

क्रोधबन्धनजं क्लेशं कर्षणं छेदनं तथा ।
येन गच्छन्ति विप्रेन्द्र लोके कर्मविदो जनाः ॥ ३३ ॥

सितात्मानः कथं यान्ति कथं गच्छति पापकृत् ।
यथा श्रुतं यथा दृष्टं यथा चैवावधारितम् ॥ ३४ ॥

प्रणयात् सौहृदात् स्नेहादस्माभिरभिपृच्छितम् ।
वद सर्वं महाभाग याथातथ्येन विस्तरम् ॥ ३५ ॥

वैशम्पायन उवाच

ऋषिभिस्त्वेवमुक्तस्तु नाचिकेतो महामनाः ।
यदुवाच महाराज शृणु तज्जनमेजय ॥ ३६ ॥

इति वाराहपुराणे संसारचक्रे ऋषिसम्भाषणो नाम
चतुर्नवत्यधिकशततमोऽध्यायः ।



# पञ्चनवत्यधिकशततमोऽध्यायः

## नाचिकेत उवाच

कथ्यमानं मया विप्राः शृण्वन्तु तपसि स्थिताः ।
प्रणम्य तस्मै देवाय धर्मराजाय धीमते ॥ १ ॥
संसारं तु यथाशक्त्या कथ्यमानं निबोधत ।
असत्यवादिनो ये च जन्तुस्त्रीबालघातकाः ॥ २ ॥

तथा ब्रह्महणः पापा ये च विश्वासघातकाः ।
ये ये शठाः कृतघ्नाश्च लोलुपाः पारदारिकाः ॥ ३ ॥
कन्यानां दूषका ये च ये च पापरता नराः ।
वेदानां दूषितारश्च वेदमार्गविहिंसकाः ॥ ४ ॥

शूद्राणां याजकाश्चैव हाहाभूता द्विजातयः ।
अयाज्ययाजकाश्चैव ये ये कुष्ठयुता नराः[1] ॥ ५ ॥
सुरापो ब्रह्महा चैव यो द्विजो वीरघातकः ।
तथा वार्द्धुषिका ये च जिह्मप्रेक्षाश्च ये नराः ॥ ६ ॥

मातृत्यागी पितृत्यागी यः स्वसाध्वीं[2] परित्यजेत् ।
गुरुद्वेषी दुराचारो दूताश्चाव्यक्तभाषिणः ॥ ७ ॥
गृहक्षेत्रहरा ये च सेतुबन्धविनाशकाः ।
अपुत्राश्चाप्यदाराश्च श्रद्धया च विवर्जिताः ॥ ८ ॥
अशौचा निर्दयाः पापा हिंसका व्रतभञ्जकाः ।
सोमविक्रयिणश्चैव स्त्रीजितः सर्वविक्रयी ॥ ९ ॥

भूम्यामनृतवादी च वेदजीवी च यो द्विजः ।
नक्षत्री च निमित्ती च चाण्डालाध्यापकस्तथा ॥ १० ॥

सर्वमैथुनगामी च अगम्यागमने रतः ।
मायिका रतिकाश्चैव तुलाधाराश्च ये नराः ॥ ११ ॥
सर्वपापसुसङ्गाश्च चिन्तका येऽतिवैरिणः[3] ।
स्वाम्यर्थे न हता ये च ये च युद्धपराङ्मुखाः ॥ १२ ॥

---

१. येज्यबुद्धियुता ( ? ) नरा इति ( ग ) ।
२. यश्च साध्वीं परित्यजेदिति ( ग ) ।
३. चिन्तका ये च वैरिणामिति ( ग ) ।

परवित्तापहारी च राजघाती च यो नरः।
अशक्तः पापघोषश्च तथा ये ह्यग्निजीविनः ॥ १३ ॥
शुश्रूषया च मुक्ता ये लिङ्गिनः पापकर्मिणः।
पात्रगारी चक्रिणश्च[1] नरा ये चाप्यधार्मिकाः ॥ १४ ॥
देवागारांश्च सत्रांश्च तीर्थं विक्रयिणस्तथा।
व्रतविद्वेषिणो ये च तथाऽसद्वादिनो नराः ॥ १५ ॥
मिथ्या च नखरोमाणि धारयन्ति च ये नराः।
कूटा वक्रस्वभावाश्च कूटशासनकारिणः ॥ १६ ॥
अज्ञानादव्रती यश्च यश्चाश्रमबहिष्कृतः।
विप्रकीर्णप्रतिग्राही सूचकस्तीर्थनाशकः।
कलहश्च प्रतर्कश्च निष्ठुरश्च नराधमः ॥ १७ ॥
एते चान्ये च बहवो ह्यनिर्दिष्टाः सहस्रशः।
स्त्रियश्च पुरुषाश्चैव यत्र गच्छन्ति तच्छृणु ॥ १८ ॥
कुर्वन्तीह यथा सर्वे तत्र गत्वा यमालये।
तानि तत्कथयिष्यामि श्रूयतां द्विजसत्तमाः[2] ॥ १९ ॥

वैशम्पायन उवाच

एवं तस्य वचः श्रुत्वा सर्व एव तपोधनाः।
पप्रच्छुर्विस्मयाविष्टा नाचिकेतमृषिं तदा ॥ २० ॥

ऋषय ऊचुः

त्वया सर्वं यथा दृष्टं ब्रूहि तत्र विदां वर।
यथास्वरूपः कालोऽसौ येन सर्वं प्रवर्त्तते ॥ २१ ॥
इह कर्माणि यः कृत्वा पुरुषो ह्यल्पचेतनः।
वारयेत् स तदा तं तु ब्रह्मलोके च स प्रभुः ॥ २२ ॥
कल्पान्तं पच्यमानोऽपि दह्यमानोऽपि वा पुनः।
न नाशो हि शरीरस्य तस्मिन् देशे तपोधनाः ॥ २३ ॥
यस्य यस्य हि यत्कर्म पच्यमानः पुनः पुनः।
अवश्यं चैव गन्तव्यं तस्य पार्श्वं पुनः पुनः ॥ २४ ॥
न तु त्रासाद् द्विजः शक्तस्तत्र गन्तुं हि कश्चन।
न गच्छन्ति च ये तत्र दानेन नियमेन च ॥ २५ ॥
वैतरण्याश्च यद्रूपं किं तोयं च वहत्यसौ।
रौरवो वा कथं विप्र किं रूपं कूटशाल्मलेः ॥ २६ ॥

---

१. पानागारी च चक्री चेति (ग)।  २. 'द्विजसत्तम' इति (ग)।

कीदृशा वा हि ते दूताः किं कार्याः[1] किं पराक्रमाः ।
किञ्च किञ्च तु कुर्वाणाः किञ्च किञ्च समाचरन्॥२७॥

न चेतो लभते जन्तुश्छादितं पूर्वतेजसा ।
धृतिं न लभते किञ्चित्तैस्तैर्दोषैः सुवासिताः ॥ २८ ॥

दोषं सत्यमजानन्तस्तथा मोहेन मोहिताः ।
बोद्धव्यं नावबुध्यन्ते गुणानां तु गुणोत्तरम् ॥ २९ ॥

हाहाभूताश्च चिन्तार्त्ताः सर्वदोषसमन्विताः ।
परं परमजानन्तो रमन्ते कस्य मायया[2] ॥ ३० ॥

क्लिश्यन्ते बहवस्तत्र कृत्वा पापमचेतसः ।
एतत्कथय वत्स त्वं यतः प्रत्यक्षदर्शिवान् ॥ ३१ ॥

इति वाराहपुराणे संसारचक्रे दुष्कृतदेहो नाम
पञ्चनवत्यधिकशततमोऽध्यायः ।



---

१. किं वीर्या इति ( ग ) ।    २. कालमाययेति ( ग )

## षण्णवत्यधिकशततमोऽध्यायः

वैशम्पायन उवाच

तेषां तद्वचनं श्रुत्वा ऋषीणां भावितात्मनाम् ।
उवाच वाक्यं वाक्यज्ञः सर्वं निरवशेषतः ॥ १ ॥

नाचिकेता उवाच

श्रूयतां द्विजशार्दूलाः कथ्यमानं मया द्विजाः ।
योजनानां सहस्रं तु विस्तराद् द्विगुणायतम् ।
द्विगुणं परिवेषेण तद्वै प्रेतपतेः पुरम् ॥ २ ॥
भवनैरावृतं दिव्यैर्जाम्बूनदमयैः शुभैः ।
हर्म्यप्रासादसंबाधमहाट्टालसमन्वितम् ॥ ३ ॥
सौवर्णेनैव महता प्राकारेणाभिवेष्टितम् ।
कैलासशिखराकारैर्भवनैरुपशोभितम् ॥ ४ ॥
तत्र वै[1] विमला नद्यस्तोयपूर्णाः सुशोभनाः ।
दीर्घिकाश्च तथा कान्ता नलिन्यश्च सरांसि च ॥ ५ ॥
तडागाश्चैव कूपाश्च वृक्षखण्डाः सुशोभनाः ।
नरनारीसमाकीर्णा गजवाजिसमाकुलाः ॥ ६ ॥
नानादेशसमुत्थानैर्नानाजातिभिरेव च ।
सर्वबीजैस्तथाकीर्णं तस्य राज्ञः पुरोत्तमम् ॥ ७ ॥
क्वचिद्युद्धं क्वचिद्द्वन्द्वं ते न बद्धो यमालये ।
क्वचिद्गायन् हसंश्चैव क्वचिद्दुःखेन दुःखितः ॥८॥
क्वचित्क्रीडन्यथाकर्म क्वचिद्भुञ्जन् क्वचित्स्वपन् ।
क्वचिन्नृत्यन् क्वचित्तिष्ठन् क्वचिद्बन्धनसंस्थितः ॥ ९ ॥
एवं शतसहस्राणि तस्य राज्ञः पुरोत्तमे ।
स्वकर्मभिः प्रदृश्यन्ते स्थूलाः सूक्ष्माश्च जन्तवः ॥ १० ॥
मया दृष्टा द्विजश्रेष्ठ तस्य राज्ञः पुरोत्तमे ।
अङ्गानि च्यैव सीदन्ति मनो विह्वलतीव मे ॥ ११ ॥
दिव्यं भावाः स्पृशन्त्येते चिन्तयानस्य तत्फलम् ।
तथापि कथयिष्यामि यथा दृष्टं तथा श्रुतम् ॥ १२ ॥

---

१. तत्रैवेति (ग)।

पुष्पोदका नाम तत्र नदीनां प्रवरा नदी ।
दृश्यते न च दृश्येत नानावृक्षसमाकुला ॥ १३ ॥
सुवर्णकृतसोपाना दिव्यकाञ्चनबालुका ।
प्रसन्नेन च तोयेन शीतलेन सुगन्धिना ॥ १४ ॥
पुष्यत्फलवनाकीर्णा नानापक्षिसमाकुला ।
भ्राजते सरितां श्रेष्ठा सर्वपापप्रणाशिनी ॥ १५ ॥

तस्यास्तीरे मया दृष्टाः पादपाश्च सहस्रशः ।
अमराः क्रीडमानाश्च जलक्रीडां पुनः पुनः ॥ १६ ॥
विशालजघना यस्यां गन्धर्वाः सामगा इव ।
भुजङ्गावनताङ्ग्यश्च किन्नर्यश्च सुगायनाः[1] ।
दिव्यभूषणसम्भोगैः क्रीडन्त्यत्र समागताः ॥ १७ ॥

एवं नारीसहस्राणि तत्र दिव्यानि नित्यशः ।
क्रीडन्ति सलिले तत्र प्रासादेषु शुभेषु च ॥ १८ ॥

तत्रापरे वृक्षखण्डा नित्यपुष्पफलान्विताः ।
ते च कामप्रदा नित्यं मत्तद्विजसमायुताः ॥ १९ ॥
प्रमदाश्च जले तत्र कामरूपाः[2] सुमेखलाः ।
रमयन्त्यो नरांस्तत्र यथाकामं यथासुखम् ॥ २० ॥

तां नदीं क्षोभयन्त्यस्ताः क्रीडन्ति सहिताः प्रियैः ।
गायन्ति सलिले काश्चिन्मधुरं मधुविह्वलाः ॥ २१ ॥
जलतूर्यनिनादेन भूषणानां स्वनेन च ।
भाति सा निम्नगा दिव्यरत्नैरलङ्कृता ॥ २२ ॥

वैवस्वती नाम महानदी सा शुभा नदीनां प्रवराऽतिरम्या ।
प्रयाति मध्ये नगरस्य नित्यं मातेव पुत्रं परिपालयन्ती ॥ २३ ॥
तोयानुरूपा च मनोहरा च दिव्येन तोयेन सदैव पूर्णा ।
यस्यास्तु हंसाः पुलिनेषु मत्ताः कुन्देन्दुवर्णाः प्रचरन्ति नित्यम् ॥ २४ ॥

रथाङ्गसाह्वैः प्रवरैश्च पद्मैः प्रतप्तजाम्बूनदकर्णिकाभिः ।
या दृश्यते चैव मनोज्ञरूपा सुवर्णसोपानयुता सुकान्ता ॥ २५ ॥
यस्यास्तु तोयं विमलं सुगन्धि स्वादु प्रसन्नममृतोपमदिव्यरूपम् ।
वृक्षास्तु यस्या वनखण्डजाताः सदा शुभैः पुष्पफलैरुपेताः ॥ २६ ॥
नार्यः सुरूपा मदविह्वलाश्च क्रीडन्ति ता यत्र मनोज्ञरूपाः ।
यस्या जलं क्रीडनताडनाद्यैर्विवर्णतां याति न वै कदाचित् ॥ २७ ॥

---

१. किन्नर्यश्च तु गायना इति ( ग ) । २. कान्तरूपा इति ( ग ) ।

या देवतानामपि पूजनीया तपोनिधीनाञ्च तथा मुनीनाम् ।
या दृश्यते तोयभरेण कान्ता कृतिः कवीनामिव निर्मलार्था ॥ २८ ॥

जलञ्च दत्तं बहुभिर्नरैश्च तस्याः स्वरूपप्रतिमा च निष्ठा ।
प्रासादपङ्क्तिर्ज्वलनप्रकाशा तस्यास्तु तीरे बहुभक्तिरम्या ॥ २९ ॥

वादित्रगीतस्वनतालयुक्ता गायन्ति नार्यः सहिताः सदा हि ।
कन्याकुलानां मृदुभाषितानि मनोहराणां च वनेषु तेषु ॥ ३० ॥

कुर्वन्ति संहर्षमिव स्वनेन मनोज्ञरूपा दिवि देवतानाम् ।
मृदङ्गनादश्च सुतन्त्रियुक्तैर्गीतध्वनिश्चैव सुवंशयुक्तः ॥ ३१ ॥

प्रासादकुञ्जेषु विहार्यमाणा न तृप्तिमेवं बहुधाः[1] प्रयान्ति ।
गन्धः सुगन्धोऽगुरुचन्दनानां वातः शुभो वाति सुशीतमन्दः ।
कचित् सुगन्धः प्रचचार भूयः प्रासादरोधं प्रविरूढमार्गः ॥ ३२ ॥

कचिज्जनाः क्रीडनकावसक्ताः कचिच्च नारीनरगीतशब्दाः ।
तथाऽपरे क्रीडनकाः सकान्ताः सुवर्णवेदीकृतसानुशोभाः ॥ ३३ ॥

विमानभूताः प्रचरन्ति तोये प्रमत्तनारीनरसङ्कुलाश्च ।
शक्यो विभागो न हि रम्यताया ह्यसौ दिनैर्वा बहुभिः प्रवक्तुम् ।
नैषा कथा कर्मसमाधियुक्ता शक्या प्रवक्तुं दिवसैरनल्पैः ॥ ३४ ॥

इति वाराहपुराणे संसारचक्रे धर्मराजपुरवर्णनं नाम
षण्णवत्यधिकशततमोऽध्यायः ।



1. 'बहुताः' इति ऐ० सो० मुद्रितपाठः ।

## सप्तनवत्यधिकशततमोऽध्यायः

ऋषिपुत्र उवाच

दशयोजनविस्तारं ततो द्विगुणमायतम् ।
प्राकारेण परिक्षिप्तं प्रासादशतशोभितम् ।। १ ।।
समालिखन्निवाकाशं प्रदीप्तमिव तेजसा ।
गोपुरं तूत्तमं तत्र प्रासादशतशोभितम् ।। २ ।।
नानायन्त्रैः समाकीर्णं ज्वालामालासमायुतम् ।
देवतानामृषीणाञ्च ये चान्ये शुभकारिणः ।। ३ ।।
प्रवेशस्तत्र तेषां हि विहितो धर्मदर्शिनाम् ।
राजतं गोपुरं सर्वं शारदाभ्रत्रयप्रभम् ।। ४ ।।
मानुषाणां सुकृतिनां प्रवेशस्तत्र निर्मितः[1] ।। ५ ।।
अग्निघर्मसमाकीर्णं सर्वदोषसमन्वितम् ।
आयसंगोपुरं तत्र दक्षिणं भीमदर्शनम् ।। ६ ।।
रौद्रं प्रतिभयाकारं सुतप्तं दुर्निरीक्षणम् ।
प्रवेशो हि ततस्तेन विहितो रविसूनुना ।। ७ ।।
पापिष्ठानां नृशंसानां क्रव्यादानां दुरात्मनाम् ।
पापानां चैव सर्वेषां ये चान्ये घातकारकाः ।। ८ ।।
औदुम्बरमवचीकमुच्चावचमनोकृतम् ।
गोपुरं पश्चिमं तत्र दुर्निरीक्ष्यं समन्ततः ।। ९ ।।
महता वह्निजालेन समालिप्तं भयानकम् ।
दुष्कृतीनां प्रवेशार्थं यमेन विहितं स्वयम् ।। १० ।।
तस्मिन् पुरवरे रम्ये रम्या परमशोभना ।
सर्वरत्नमयी दिव्या वैवस्वतनियोजिता ।। ११ ।।
सभा परमसम्पन्ना धार्मिकैः सत्यवादिभिः ।
जितक्रोधैरलुब्धैश्च वीतरागैस्तपस्विभिः[2] ।। १२ ।।
सा सभा धर्मयुक्तानां सा सभा पापकारिणाम् ।
सा सभा सर्वलोकस्य शुभस्यैवाशुभस्य च ।
कर्मणा सूचितस्याथ सा सभा धर्मसंहिता ।। १३ ।।

---

१. एतदर्धं ( ग ) पुस्तके नास्ति ।

२. जितक्रोधैरलुब्धैस्तु चरितस्याऽथ स सभेति पाठान्तरम् ।

अनिर्वर्त्यं यथा कर्म शास्त्रदृष्टेन कर्मणा ।
निर्विशङ्का निराक्षेपा धर्मज्ञा धर्मपाठकाः ॥ १४ ॥
चिन्तयन्ति च कार्याणि सर्वलोकहिताय ते[1] ।
यथादृष्टं यथाशास्त्रं यथाकालनिवेदकाः ॥ १५ ॥
तथा सर्वं च तत्सर्वं चिन्तयन्ति सुयन्त्रिताः ।
मनुः प्रजापतिश्चैव पाराशर्यो महामुनिः ॥ १६ ॥
अत्रिरौद्दालकिश्चैव आपस्तम्बश्च वीर्यवान् ।
बृहस्पतिश्च शुक्रश्च गौतमश्च महातपाः ॥ १७ ॥
शङ्खश्च लिखितश्चैव अङ्गिरा भृगुरेव च ।
पुलस्त्यः पुलहश्चैव ये चान्ये धर्मपाठकाः ॥ १८ ॥
यमेन सहिताः सर्वे चिन्तयन्ति प्रतिक्रियाम् ।
सर्वे च कामप्रचुरा ये दिव्या ये च मानुषाः ॥ १९ ॥
कुण्डलाभ्यां पिनद्धाभ्यामङ्गदाभ्यां महातपाः ।
भ्राजते मुकुटस्तस्य ब्रह्मदत्तो महाद्युतिः ॥ २० ॥
तेजसा वचसा चैव दुर्निरीक्ष्यो महाबलः ।
एकस्थमिव सर्वेषां तेजस्तेजस्विनां तदा ॥ २१ ॥
तस्य पार्श्वे महादिव्या ऋषयो ब्रह्मवादिनः ।
दीप्यमानाः स्ववपुषा वेदवेदाङ्गपारगाः ॥ २२ ॥
वेदार्थानां विचारज्ञाः सत्यधर्मपुरस्कृताः ।
छन्दःशिक्षाविकल्पज्ञाः सर्वशास्त्रविकल्पकाः ॥ २३ ॥
निरुक्तमतिवादाश्च सामगान्धर्वशोभिताः ।
धातुवादाश्च विविधा निरुक्ताश्चैव नैगमाः ॥ २४ ॥
तत्र चैव मया दृष्टा ऋषयः पितरस्तथा ।
भवने धर्मराजस्य प्रगायन्तः कथाः शुभाः ॥ २५ ॥
तस्य पार्श्वे मया दृष्टः कृष्णवर्णो महाहनुः ।
उत्तमः प्रकृताकार ऊर्ध्वरोमा निराकृतिः ॥ २६ ॥
वामबाहुश्च दण्डेन प्रवरेण समन्वितः ।
विकृतास्यो महादंष्ट्रो नित्यक्रुद्धो भयानकः ॥ २७ ॥
शिक्षार्थे[2] धर्मराजेन सन्दिष्टः स पुनः पुनः ।
शृणोति चैव कालोऽसौ नित्ययुक्तः सनातनः ॥ २८ ॥
तथान्ये चापरे तत्र शासनेषु समाहिताः ।
दृष्टा तत्र मया तात सर्वतेजोमयी शुभा ॥ २९ ॥

१. चेति (ग) । २. 'शिष्ट्यर्थे'–इति वा पाठः ।

यमेन पूज्यमाना सा दिव्यगन्धानुलेपनैः ॥ ३० ॥
संहारः सर्वलोकानां गतीनां च महागतिः ।
अतः परं न कर्त्तव्यं साधनं कथितं बुधैः ॥ ३१ ॥
बिभ्यति ह्यसुरास्तत्र ऋषयश्च तपोधनाः ।
असुराश्च सुराश्चैव योगिनश्च महौजसः ॥ ३२ ॥
नमस्कार्या च पूज्या च मोहनी सर्वसाधनी ।
तस्याङ्गेभ्यः समुद्भूता व्याधयः क्लेशसम्भवाः ॥ ३३ ॥
अपराश्च महाघोराः व्याधयः कालनिर्मिताः ।
पौरुषेण समायुक्ताः सर्वलोकनयायताः ॥ ३४ ॥
प्रकृत्या दुर्विनीतश्च महाक्रोधः सुदारुणः ।
महासत्त्वो महातेजाः जरामरणवर्जितः ॥ ३५ ॥
मृत्युर्दृष्टो दुराधर्षो दिव्यगन्धानुलेपनः ।
गायना हसनाश्चैव सर्वजीवप्रबोधकाः ॥ ३६ ॥
मृत्युना सहिता नित्यं कालज्ञाः कालसम्मताः ।
दिव्याभरणशोभाभिः शोभमानाः सुतेजसः ॥ ३७ ॥
सबालव्यजनच्छन्नैः[1] केचित्तत्र महौजसः ।
पर्यास्तरणसंछन्नेष्वासनेषु तथा परे ॥ ३८ ॥
पूज्यमाना मया दृष्टाः केचित्तत्र महौजसः ।
अनेकाश्च ज्वरास्तत्र[2] वेदनाश्च सुदारुणाः ॥ ३९ ॥
नारीनरस्वरूपाश्च मया दृष्टा अनेकशः ।
कामक्रोधविचारिण्यो नानारूपधराः स्त्रियः ॥ ४० ॥
जीवभक्षकरा[3] घोरास्तीव्ररोषा भयानकाः ।
तासां हलहलाशब्दः सर्वासाञ्च समन्ततः ॥ ४१ ॥
धर्मराजसमीपे तु दारयन्ति धरामिमाम्[4] ।
कूष्माण्डा यातुधानाश्च राक्षसाः पिशिताशनाः ॥ ४२ ॥
एकपादा द्विपादाश्च त्रिपादा बहुपादकाः ।
एकबाहुर्द्विबाहुश्च त्रिबाहुर्बहुबाहुकः ॥ ४३ ॥
शङ्कुकर्णा महाकर्णा हस्तिकर्णास्तथाऽपरे ।
केचित्तु तत्र पुरुषाः सर्वशोभाविशोभिताः ॥ ४४ ॥
केयूरैर्मुकुटैश्चान्ये चित्रैरङ्गैस्तथाऽपरे ।
स्रग्विणो बद्धपादाश्च सर्वाभरणभूषिताः ॥ ४५ ॥

---

१. सुबालव्यजनच्छन्नैरिति ( ग )। २. अथान्ये च ज्वरास्तत्रेति ( ग )।
३. जीवक्षयकरा इति ( ग )। ४. धरामिमा इति ( ग )।

सकुठाराः सकुद्दालाः सचक्राः शूलपाणयः ।
सशक्तितोमराः केचित्सधनुष्का दुरासदाः ॥ ४६ ॥

असिहस्तास्तथा चान्ये तथा मुद्गरपरायणाः ।
सज्जिता दधिहस्ताश्च गन्धहस्ता ह्यनेकशः ॥ ४७ ॥

विचित्रभक्षहस्ताश्च वस्त्रहस्तास्तथैव च ।
धूपान् प्रगृह्य विविधान्वासांसि शुभदर्शनाः ॥ ४८ ॥

शिविकाश्च महाशोभा यानानि विविधानि च ।
वाजिकुञ्जरयुक्तानि हंसयुक्तानि चापरे ॥ ४९ ॥

शरभैः ऋषभैश्चापि हस्तिभिश्च सुदर्शनैः ।
मयूरैः सारसैश्चैव चक्रवाकैश्च वाजिभिः ॥ ५० ॥

एवंरूपा मया दृष्टास्तत्र चान्ये भयानकाः ।
उज्ज्वला मलिनाश्चैव जीर्णवस्त्रा नवांशुकाः ॥ ५१ ॥

सुमनाभिमना मूका मारकाः शतमारकाः ।
समार्जारी काचवर्णा कृष्णा चैव कलिस्तथा ॥ ५२ ॥

धर्महस्ता यशोहस्ताः कीर्त्तिहस्तास्तथापरे ।
एते पुरोगमास्तत्र कृतान्तस्य महात्मनः ॥ ५३ ॥

यद्येतानि यजेद्विप्रो नास्ति तस्य पराभवः ।
नमस्कार्याश्च पूज्याश्च आपन्नेन हि नित्यशः ।
परितुष्य कृता नित्यं विहिताः सार्वलौकिकाः ॥ ५४ ॥

इति वाराहपुराणे संसारचक्रे कृतान्तकालमृत्युकिङ्करवरवर्णनो नाम सप्तनवत्यधिकशततमोऽध्यायः ।



## अष्टनवत्यधिकशततमोऽध्यायः

वर्त्तमानः सभामध्ये राजा प्रेतपुराधिपः ।
मामेकमृषभं[1] तत्र दर्शनं च ददौ यमः ॥ १ ॥
याथातथ्येन मे पूजा कार्येण विधिनाऽकरोत् ।
आसनं पाद्यमर्घ्यं च वेददृष्टेन कर्मणा ॥ २ ॥
अब्रवीच्च पुनर्हृष्टो आस्यतां च वरासने ।
काञ्चने कुशसंच्छन्ने दिव्यपुष्पोपशोभिते ॥ ३ ॥
तस्य वक्त्रं महारौद्रं नित्यमेव भयानकम् ।
पश्यतस्तस्य मां विप्रास्ततः सौम्यतरं बभौ ॥ ४ ॥
लोहिते तस्य वै नेत्रे जल्पतश्च पुनः पुनः ।
पद्मपत्रनिभे चैव जज्ञाते मम सौहृदात् ॥ ५ ॥
ततोऽहं तस्य भावेन भावितश्च पुनः पुनः[2] ।
प्रहृष्टमानसो जातो विश्वासं च परं गतः ॥ ६ ॥
तस्य प्रीतिकरं सद्यः सर्वदोषविनाशनम्[3] ।
कामदं च यशोदं च दैवतैश्चापि पूजितम् ॥ ७ ॥
कालवृद्धिकरं स्तोत्रं क्षिप्रं तत्र उदीरयन् ।
येन प्रीतो महातेजा यमः परमधार्मिकः ॥ ८ ॥

ऋषिपुत्र उवाच

त्वं धाता च विधाता च श्राद्धे चैव हि दृश्यते ।
पितॄणां परमो देवश्चतुष्पाद नमोऽस्तु ते ॥ ९ ॥
कालज्ञश्च कृतज्ञश्च सत्यवादी दृढव्रतः ।
प्रेतनाथ महाभाग धर्मराज नमोऽस्तु ते ॥ १० ॥
कर्ता कारयिता चैव[4] भूतभव्यभवत्प्रभो ।
पावको मोहनश्चैव सङ्क्षेपो विस्तरस्तथा ॥ ११ ॥
दण्डपाणे विरूपाक्ष पाशहस्त नमोऽस्तु ते ।
आदित्यसदृशाकार सर्वजीवहर प्रभो ॥ १२ ॥

---

१. मामेकं मृतकमिति ( ग ) । २. एतदर्धं ( ग ) पुस्तके नास्ति ।
३. तस्य प्रीतिरसो दृष्टः सर्वदोषविनाशन इति पाठान्तरम् ।
४. कर्म कारयिता चैवेति ऐ० सो० मुद्रितपाठः ।

कृष्णवर्ण दुराधर्ष तैलरूप नमोऽस्तु ते ।
मार्तण्डसदृशश्रीमान् मार्तण्डसमतेजसा ॥ १३ ॥
हव्यकव्यवहस्त्वं हि प्रभविष्णो नमोऽस्तु ते ।
पापहन्ता व्रती श्राद्धी नित्ययुक्तो महातपाः ॥ १४ ॥
एकदृग्बहुदृग्भूत्वा काल मृत्यो नमोऽस्तु ते ।
क्वचिद्दण्डी क्वचिन्मुण्डी क्वचित्कालो दुरासदः ॥ १५ ॥
क्वचिद्बालः क्वचिद्वृद्धः क्वचिद्रौद्रो नमोऽस्तु ते ।
त्वया विराजितो लोकः शासितो धर्महेतुना ॥ १६ ॥
प्रत्यक्षं दृश्यते देव त्वद्विना न च सिध्यति ।
देवानां परमो देवस्तपसां परमं तपः ॥ १७ ॥
जपानां परमं जाप्यं त्वत्तश्चान्यो न दृश्यते ।
ऋषयो वा तथा क्रुद्धा हतबन्धुसुहृज्जनाः ॥ १८ ॥
पतिव्रतास्तु या नार्यो दुखितास्तपसि स्थिताः ।
न त्वं शक्त इह स्थानात्पातनाय कदाचन ॥ १९ ॥
तस्मात्त्वं सर्वदेवेषु एको धर्मभृतां वरः ।
कृतज्ञः सत्यवादी च सर्वभूतहिते रतः ॥ २० ॥

वैशम्पायन उवाच

एवं श्रुत्वा स्तवं दिव्यमृषिपुत्रेण भाषितम् ।
परितुष्टस्तदा धर्मो औद्दालकसुतं प्रति ॥ २१ ॥

यम उवाच

परितुष्टोऽस्मि भद्रं ते माधुर्येण तवानघ ।
याथातथ्येन वाक्येन ब्रूहि किं करवाणि ते ॥ २२ ॥
वरं वरय भद्रं ते यं वरं काङ्क्षसे द्विज ।
शुभं वा श्रेयसा युक्तं जीवितं वाप्यनामयम् ॥ २३ ॥

ऋषिपुत्र उवाच

नेच्छाम्यहं महाभाग मृत्युं वा जीवितं प्रभो ।
यदि त्वं वरदो राजन् सर्वभूतहिते रतः ॥ २४ ॥
द्रष्टुमिच्छाम्यहं देव तव देशं यथातथम् ।
पापानां च शुभानां च या गतिस्त्विह दृश्यते ॥ २५ ॥
सर्वं दर्शय मे राजन् यदि त्वं वरदो मम ।
चित्रगुप्तं च तं राजन् कार्यार्थं तव चिन्तकम् ॥ २६ ॥

दर्शयस्व महाभाग सर्वलोकस्य चिन्तक ।
यथा कर्मविशेषाणां दर्शनार्थं करोति सः ॥ २७ ॥
एवमुक्तो महातेजाः द्वारस्थं संदिदेश ह ।
चित्रगुप्तसकाशं तु नय विप्रं सुयन्त्रितम् ॥ २८ ॥
वक्तव्यश्च महाबाहुरस्मिन् विप्रे यथातथम् ।
प्राप्तकालं च युक्तं च तत्सर्वं वक्तुमर्हसि ॥ २९ ॥
ततोऽहं त्वरितो नीतस्तेन दूतेन दर्शितः ।
प्राप्तश्च परया प्रीत्या चित्रगुप्तनिवेशनम् ॥ ३० ॥
प्रत्युत्थितश्च मां दृष्ट्वा चिन्तयित्वा तु तत्त्वतः ।
स्वागतं मुनिशार्दूल यथेष्टं परिगम्यताम् ॥ ३१ ॥
एवं सम्भाष्य मां वीरः स्वान् भृत्यान सन्दिदेशः ह ।
कृताञ्जलिपुटान् सर्वान् घोररूपान् भयानकान् ॥ ३२ ॥

चित्रगुप्त उवाच

भो भो शृणुत मे दूता मम चित्तानुवर्त्तकाः ।
भक्तिमन्तो दुराधर्षा नित्यं व्रतपरायणाः ॥ ३३ ॥
अयं विप्रो मयादिष्टः प्रेतावासं गमिष्यति ।
अस्य रक्षा च गुप्तिश्च भवद्भिः क्रियतामिति ॥ ३४ ॥
नैव दुःखेन खेदः स्यान्न चोष्णेन च शीततः ।
बुभुक्षापि तृषा वापि एष आज्ञापयामि वः ॥ ३५ ॥
एवं दत्तवरो विप्रो गुरुचित्तानुचिन्तकः ।
सर्वभूतदयावांश्च द्रव्यवांश्च स वै द्विजः ॥ ३६ ॥
यथाकाममयं पश्येद् धर्मराजपुरोत्तमम् ।
एवमुक्त्वा महातेजा गच्छ गच्छेति चाब्रवीत् ॥ ३७ ॥

ऋषिपुत्र उवाच

सन्दिष्टाश्च ततो दूताश्चित्रगुप्तेन धीमता ।
धावन्तस्त्वरमाणास्तु गृह्णन्तो घ्नन्त एव च ॥ ३८ ॥
बन्धयन्ति महाकाया निर्दहन्ति महाबलाः ।
पाटयन्ति प्रहारैश्च ताडयन्ति पुनः पुनः ॥ ३९ ॥
वेणुयष्टिप्रहारैश्च प्रहरन्ति ततोऽधिकैः ।
भग्ना भिन्ना विभिन्नाश्च तथा भग्नशिरोधराः ॥ ४० ॥
रुदन्ति करुणं घोरं त्रातारं नाप्नुवन्ति ते ।
नरकेऽपि तथा पूर्णे अगाधे तमसावृते ॥ ४१ ॥

केचिच्च तेषु पच्यन्ते दह्यन्ते पावकेन्धनम् ।
तैलपाके तथा केचित् केचित् क्षारेण सर्पिषा ॥ ४२ ॥
पतन्ति ते दुरात्मानस्तत्र तत्र च कर्मभिः ।
यातनाभिर्दह्यमाना घोराभिश्च ततस्ततः ॥ ४३ ॥
केचिद्यन्त्रमुपारोप्य सम्पीड्यन्ते तिला इव ।
तेषां सम्पीड्यमानानां शोणितं स्रवते बहु ॥ ४४ ॥
ततो वैतरणी घोरा सम्भूता निम्नगा तथा ।
सफेनसलिलावर्त्ता दुस्तरा पापकर्मिणाम् ॥ ४५ ॥
अथान्ये शूल आरोप्य दूताः पादेषु गृह्य वै ।
वैतरण्यां सुघोरायां प्रक्षिपन्ति सहस्रशः ॥ ४६ ॥
नानुष्णे रुधिरे तत्र फेनमालासमाकुलाः ।
दशन्ति सर्पास्तांस्तत्र प्राणिनस्तु सहस्रशः ॥ ४७ ॥
अनुत्तार्य तदा तस्या उच्छ्रिता विकृतावशाः ।
आवर्त्तोर्मयश्चैव उत्तिष्ठन्ति सहस्रशः ॥ ४८ ॥
तत्र शुष्यन्ति ते पापाः सर्वदोषसमन्विताः ।
मज्जन्तश्च वमन्तश्च त्रातारं नाप्नुवन्ति ते ॥ ४९ ॥
अथान्ये बहवस्तत्र बहुभिश्चापि दूतकैः ।
कूटशाल्मलिमारोप्य लोहकण्टकसंवृताम् ॥ ५० ॥
असिशक्तिप्रहारैश्च ताडयन्ति पुनः पुनः ।
तत्र शाखासु घोरासु मया दृष्टाः सहस्रशः ॥ ५१ ॥
कूष्माण्डा यातुधानाश्च लम्बमाना भयानकाः ।
अतिक्रम्य च ते स्कन्धास्तीक्ष्णकण्टकसङ्कुलाः॥ ५२ ॥
वेदनार्त्तास्तु वेगेन शीघ्रं शाखा उपारुहन् ।
तत्र ते निहता घोरा राक्षसाः पिशिताशनाः ॥ ५३ ॥
आरूढगात्राणि घ्नन्ति निःशङ्कं तमसावृतम् ।
संक्रामश्च सुखादन्ति शालायां कपिवद्भृशम् ॥ ५४ ॥
यथा च कुक्कुटं खादेत्कश्चिन्म्लेच्छो निराकृतिः ।
तथा कटकटाशब्दस्तस्मिन्वृत्ते मया श्रुतः ॥ ५५ ॥
पक्वमाम्रफलं यद्वन्नरः खादेद्यथा वने ।
एवं ते मुखतः कृत्वा महावक्त्रा दुरासदाः ॥ ५६ ॥
चूषयित्वा तु तान् सर्वांस्ते च तस्मिन्नगोत्तमे ।
विसृजन्ति क्षितिं यावदस्थिभूतान्नरांस्तथा ॥ ५७ ॥

तती जवेन संयुक्ता वनस्थाश्चूषिताः पुनः ।
आविष्टानि च कर्माणि पुनः शीघ्रमकामयन् ॥ ५८ ॥
अधस्तात्तु पुनस्तत्र पश्यन्तः पापकर्मिणः ।
बहुसंख्येषु पापेषु दारुणेषु सुदुःखिताः ॥ ५९ ॥
विधानं याहि चैवेति वदन्तः परुषं वचः[1] ।
यमदूता निरामर्षाः सूदयन्ति पुनः पुनः ॥ ६० ॥
पाषाणवर्षैः केचित्तु पांशुवर्षैश्च विद्रुताः ।
प्रविशन्ति नगच्छायां ततस्ते प्रज्ज्वलन्ति तु ॥ ६१ ॥
द्रवन्ति च पुनस्तत्र दूतैश्चापि दृढं हताः ।
भुवनेषु च घोरेषु पच्यन्ते ते दृढाग्निना ॥ ६२ ॥
वारिपूर्णं ततः कुम्भं शीतलं च जलं पुनः ।
दीयतां दीयतां चेति ब्रुवते नः प्रसीदथ ॥ ६३ ॥
ततः पानीयरूपेण जलं तप्तं तु दीयते ।
तेन दग्धाश्च आर्त्ताश्च क्रोशन्तश्च परस्परम् ॥ ६४ ॥
आलिङ्ग्यालिङ्ग्य दुःखार्त्ताः केचित्तत्र पतन्ति वै ।
तथान्ये क्षुधितास्तत्र हाहाभूतमचेतसः ॥ ६५ ॥
अन्नानां च सुमिष्टानां भक्ष्याणां च विशेषतः ।
पश्यन्ति राशिं तत्रस्थां सुगन्धां पर्वतोपमाम् ॥ ६६ ॥
दधिक्षीररसांश्चैव कृशरान्पायसं तथा ।
मधुमाधवपूर्णानि सुरामैरेयकस्य च ॥ ६७ ॥
माध्वीकस्य च पानस्य सीधोर्जातिरसस्य च ।
पानानि चैव दिव्यानि शीतलानि सुगन्धि च॥ ६८ ॥
गोरसस्य च पानानि भाजनानि च नित्यशः ।
तपोऽर्जितानि दिव्यानि तिष्ठन्ति सुकृतात्मनाम्॥ ६९ ॥
माल्यानि धूपं गन्धाश्च नानारससमायुताः ।
मनोहराश्च कान्ताश्च भूमिस्थाश्च सहस्रशः ॥ ७० ॥
भोजनेषु च सर्वेषु स्त्रियः कान्ता मनोहराः ।
गृहीतकुम्भमणिकाः सर्वाभरणभूषिताः ॥ ७१ ॥
फलानि कुण्डहस्ताश्च पात्रहस्तास्तथापराः ।
सुमनः पाद्यहस्ताश्च अदीनाः परमाङ्गनाः ॥ ७२ ॥
अन्नदानरताश्चैव भोजयन्ति सहस्रशः ।
नूपुरोज्ज्वलपादाश्च तिष्ठन्ति च मनोहराः ॥ ७३ ॥

१. पुरुषं वच इति वा पाठः ।

उपस्थाप्य महायोग्यमत्र काले च योषितः ।
ब्रुवन्ति सर्वास्ताश्चैव तस्यां तस्य च दक्षिणाः ॥ ७४ ॥

निघ्नन्तश्च हसन्तश्च दूता निष्ठुरवादिनः ।
भो भो कृतघ्ना लुब्धाश्च परदाराभिमर्षकाः ॥ ७५ ॥

पापाः शठा[१] निष्कृतिकाः सर्वदानविवर्जिताः ।
परापवादनिरताः पापैर्बद्धकथानकाः ॥ ७६ ॥

निर्लज्जा गृहका देया याचितुं मनसा हि ताः ।
सुलभानि न दत्तानि विभवे सति लौकिके ॥ ७७ ॥

पानीयमथ काष्ठानि यद्यन्नं सुखमागतम् ।
तेन वध्या भवन्तो वै यातनाभिरनेकशः ॥ ७८ ॥

कर्मणां च क्षयो जातः संसारे यदि पच्यथ ।
विमुक्ता इह लोकात्तु जनिष्यथ सुदुर्गताः ॥ ७९ ॥

कुलेषु सुदरिद्रेषु सञ्जाताः पापकर्मिणः ।
पापैरनुगता घोरैर्मानुषं लोकमाश्रिताः ॥ ८० ॥

वृत्तस्था भुञ्जते होमांश्चातुर्वर्ण्यान्विशेषतः ।
ततः सत्यरताः शान्ता दयावन्तः सुधार्मिकाः ॥ ८१ ॥

इह विश्राम्य ते धीराः किञ्चित्कालं सहानुगाः ।
गच्छन्ति परमं स्थानं पृथिव्यां वा महत्कुले ॥ ८२ ॥

बहुसुन्दरनारीके समृद्धे सुसमाहितः ।
अजायन्त तथा क्षान्ताः प्राप्स्यन्ति परमां गतिम् ॥ ८३ ॥

इति वाराहपुराणे भगवच्छास्त्रे संसारचक्रयातनानां स्वरूपवर्णनो नाम अष्टनवत्यधिकशततमोऽध्यायः ।



१. श 'पापाशया' इति ऐ० सो० मुद्रितपाठः ।

## नवनवत्यधिकशततमोऽध्यायः

ऋषिपुत्र उवाच

तस्मिन् क्षितितलं सर्वमायसैः कण्टकैश्चितम् ।
प्रभवन्ति पुनः केचिद् विषमं तमसाश्रितम् ॥ १ ॥
अथान्ये छिन्नपादास्तु छिन्नपाणिशिरोधराः ।
पापाचारास्तथा देशादुपसर्पत मा चिरम् ॥ २ ॥
ये तु धर्मरता दान्ता वपुष्मन्तो यथा गृहे ।
परिपान्ति क्षितिं सर्वे पात्यन्ते पापकारिणः ॥ ३ ॥
याचमानाः स्थिता नित्यं सुशीतैस्तोयभोजनैः ।
स्त्रियः श्रीरूपसङ्काशाः सुकुमाराः सुभोजनाः ॥ ४ ॥
कृत्वा पूजां परां तत्र प्रतीक्षन्ते परं जनम् ।
अग्नितप्ते सुघोरे च निक्षिप्यन्ते शिलातले ॥ ५ ॥
आलोके च प्रदश्यन्ते[1] वृक्षाश्च भुवनानि च ।
आयान्ति दह्यमानेषु पृष्ठपादोदरेषु च ॥ ६ ॥
तत्र गत्वा तु ते दूताः प्रविशन्ति सुदारुणाः ।
क्लिश्यन्ति बहवस्तत्र त्रातारं नाप्नुवन्ति ते ॥ ७ ॥
अथान्ये तु श्वभिर्घोरैरापादतलमस्तकम् ।
भक्ष्यमाणा रुदन्तश्च क्रोशन्तश्च पुनः पुनः ॥ ८ ॥
अथान्ये तु महारूपा महादंष्ट्रा भयानकाः ।
सूचीमुखं कृताः पापाः क्षुधितास्तृषितास्तथा ॥ ९ ॥
अन्नानि दीयमानानि भक्ष्याणि विविधानि च ।
भोज्यानि लेह्यचोष्याणि यैर्निषिद्धं दुरात्मभिः ॥ १० ॥
असौ सारमयी[2] नारी वह्नितप्ता सुदारुणा ।
आलिङ्गति नरं तत्र धावन्तं चानुधावति ॥ ११ ॥
धावन्तं चानुधावन्ती इदं वचनमब्रवीत् ।
अहं ते भगिनी पाप अहं भार्या सुतस्य ते ।
मातृष्वसा ते दुर्बुद्धे मातुलानी पितृष्वसा ॥ १२ ॥
गुरुभार्या मित्रभार्या भ्रातृभार्या नृपस्य च ।
श्रोत्रियाणां द्विजातीनां जायास्तु धर्षितास्त्वया[3] ॥ १३ ॥

---

१. प्रदर्श्यन्ते इति वा पाठः । २. अयःसारमयीति तु समीचीनः ।
३. श्रोत्रियाण' द्विजानां तु जायास्ता धर्षितास्त्वयेति ( ग ) ।

मोक्ष्यसे न हि पापात्त्वं रसातलगतो यथा।
किं प्रधावसि निर्लज्ज व्यसनैश्चोपपादितः ॥ १४ ॥
वधिष्येऽहं ध्रुवं पाप यथा कर्म त्वया कृतम्।
एवं वै बाधयन्तीह श्रावयन्ति पुनः पुनः ॥ १५ ॥
अभिद्रवन्ति तं पापं घोररूपा भयानकाः।
ज्ञानिनाञ्च सहस्रेषु जातं जातं तथा स्त्रियः ॥ १६ ॥
अनुपीड्य दुरात्मानं धर्षयन्ति सुदारुणम्।
वृषली बहुलैर्दुःखैः किं क्रन्दसि पुनः पुनः ॥ १७ ॥
किं क्रन्दसि सुदुर्बुद्धे परिष्वक्तः स्वयं मया।
दशधा त्वं मया पाप नीयमानः पुनः पुनः ॥ १८ ॥
अञ्जलिं वापि कुर्वाणो याचमानो न लज्जसे।
न मोक्ष्यसे मया पाप कुतो गच्छसि मूढ वै ॥ १९ ॥
यत्र यत्र प्रयासि त्वमिति गत्वा यमालये।
तत्र तत्रैव पाप त्वां न त्यक्ते पारदारिकम् ॥ २० ॥
लोहयष्टिप्रहारैश्च ताडयन्ति पुनः पुनः।
गोपाला इव दण्डेन कालयन्तो मुहुर्मुहुः ॥ २१ ॥
व्याघ्रसिंहश्रृगालैश्च तथा गर्दभराक्षसैः।
भक्ष्यन्ते श्वापदैरन्यैः श्वभिः काकैस्तथाऽपरे ॥ २२ ॥
असितालवनं तत्र धूमज्वालासमाकुलम्।
दावाग्निसदृशाकारं प्रदीप्तं सर्वतोऽर्चिषा ॥ २३ ॥
तत्र क्षिप्ता ततः पापं यमदूतैः सुदारुणैः।
दह्यमानाः सुतप्तांश्च संश्रयन्ते द्रुमान् पुनः ॥ २४ ॥
असिपत्रैस्ततो वृक्षाश्छिन्दन्ति बहुशो नरान्।
तत्र छिन्नाश्च दग्धाश्च हन्यमानाश्च सर्वशः ॥ २५ ॥
विघृष्टा विकृताश्चैव दह्यमाना नदन्ति ते।
असितालवनद्वारि ये तिष्ठन्ति महारथाः ॥ २६ ॥
पापकर्मसमायुक्तांस्तर्जयन्ति सुदारुणाः।
भो भो पापसमाचारा धर्मसेतुविनाशकाः ॥ २७ ॥
अतो निमित्तं पापिष्ठा यातनाभिः सहस्रशः।
अनुभूयेह तत्सर्वं मानुष्यं यदि यास्यथ ॥ २८ ॥
कुलेषु सुदरिद्राणां गर्भवासेन पीडिताः।
भोगैश्च पीडिताः नित्यं उत्पत्स्यथ सुदुर्गताः ॥ २९ ॥

अग्निज्वालानिभास्तत्र अग्निस्पर्शा महारवाः ।
पक्षिणश्चायसैस्तुण्डैर्व्याघ्राश्चैव सुदारुणाः ॥ ३० ॥

तत्र घोरा बहुविधाः क्रव्यादाः श्वादयस्तथा ।
खादन्ति रुषितास्तत्र बहवो हिंसका नरान्[1] ॥ ३१ ॥
ऋक्षद्वीपिसमाकीर्णे बहुकीटपिपीलके ।
असिताळवने विप्रा बहुदुःखसमाकुले ॥ ३२ ॥

तत्र क्षिप्ता मया दृष्टा यमदूतैर्महाबलैः ।
असिपत्रसुभग्नाङ्गाः शूललग्नास्तथाऽपरे ॥ ३३ ॥

तथाऽपरो महादेशो नानारूपो भयानकः ।
पुष्करिण्यश्च वाप्यश्च ह्रदा नद्यस्तथैव च ॥ ३४ ॥
तडागानि च कूपाश्च रुधिरस्य सहस्रशः ।
पूतिमांसकृमीणां च अमेध्यस्य तथैव च ॥ ३५ ॥

अन्यानि च मया तत्र दृष्टानि मुनिसत्तमाः ।
तत्र क्लिश्यन्ति ते पापास्तस्मिन्मध्ये सहस्रशः ॥ ३६ ॥
जिघ्रन्तश्च तथा गन्धं मज्जन्तश्च सहस्रशः ।
अस्थिपाषाणवर्षांश्च रुधिरस्य बलाहकाः ॥ ३७ ॥
अश्मवर्षञ्च ते घोराः पातयन्ति सहस्रशः ।
धावतां प्लवताञ्चैव हा हतोऽस्मीति भाषिणाम् ॥ ३८ ॥

प्राहतानां पुनः शब्दो वध्यताञ्च सुदारुणः ।
क्रन्दतां करुणोन्मिश्रं दिशोऽपूर्यन्त सर्वशः ॥ ३९ ॥
क्वचिद्बद्धः क्वचिद् रुद्धः क्वचिद् बिद्धः सुदारुणैः ।
क्वचित्स्थूलैस्तथाबद्ध उद्बद्धश्च क्वचित्तथा ॥ ४० ॥
हाहा भयानकोन्मिश्रः शब्दोऽश्रूयत दारुणः ।
अपश्यं पुनरन्यत्र यत्स्मृत्वा चोद्विजेन्नरः ॥ ४१ ॥

इति वाराहपुराणे संसारचक्रे यातनास्वरूपवर्णनो नाम
नवनवत्यधिकशततमोऽध्यायः ।



१. अग्निस्पर्शा महारवा इति (ग)।

## द्विशततमोऽध्यायः

ऋषिपुत्र उवाच

तप्तं चैव महातप्तं महारौरवरौरवौ ।
सप्त तालश्च नरको नरकः कालसूत्रकः ॥ १ ॥
अन्धकारश्च नरको अन्धकारपरस्तथा ।
अष्टावेते तु नरकाः पच्यन्ते यत्र पापिनः ॥ २ ॥
प्रथमे प्रथमं विद्याद् द्वितीये द्विगुणं तथा ।
तृतीये त्रिगुणं विद्याच्चतुर्थे तु चतुर्गुणम् ॥ ३ ॥
पञ्चमे तु गुणाः पञ्च षष्ठे षड्गुणमुच्यते ।
सप्तमे तु गुणाः सप्त अष्टमेऽष्टविधा गुणाः ॥ ४ ॥
अहोरात्रेण चाध्वानं प्रेता गच्छन्ति तत्पुरम् ।
दुःखितानां ततो दुःखं दुःखाद् दुःखतरं ततः ॥ ५ ॥
दुःखमेवात्र हि सुखं दुःखैर्दुःखं विवध्यते[1] ।
उपायस्तत्र नैवास्ति येन स्वल्पं सुखं भवेत् ॥ ६ ॥
मुच्यते च मृतस्तत्र मारकास्तत्र दुर्लभाः ।
शब्दे स्पर्शे तथा रूपे रसे गन्धे तु पञ्चमे ॥ ७ ॥
न सुखं तत्र तस्यास्ति किञ्चिदेवात्र विद्यते ।
शारीरैर्मानसैश्चैव दुःखैर्दुःखान्तगामिभिः ॥ ८ ॥
आयसैः कण्टकैस्तीक्ष्णैस्तप्तैस्तप्तावृतः मही ।
अन्तरिक्षं खगानीकैरग्निजिह्वैः समावृतम् ॥ ९ ॥
अतीव च बुभुक्षात्र पिपासा चाप्यतीव हि ।
उष्णमत्युष्णमेवात्र शीतलं चातिशीतलम् ॥ १० ॥
पातुकामश्च पानीयं राक्षसैर्नीयते सरः[2] ।
हंससारससङ्कीर्णं पद्मोत्पलविभूषितम् ॥ ११ ॥
पातुकामश्च पानीयं सहसा तत्र धावति ।
सलिलं प्रक्षते चैव तत्र तप्ततरं तथा ॥ १२ ॥
ततः पक्वानि मांसानि राक्षसैः परिणीयते ।
क्षारोदकेऽपि च तथा क्षिप्यतेऽत्र महाह्रदे[3] ॥ १३ ॥

---

१. 'हि बध्यते' इति पाठान्तरम् ।
२. रस इति ( ग ) । ३. नदे इति वा पाठः ।

तत्र चैव ह्रदे नैका मत्स्याः खादन्ति सर्वशः ।
ततः कालावसाने तु कथञ्चित् प्रपलायिनः ॥ १४ ॥
किञ्चिदन्तरमागम्य वेदनार्थाः पतन्ति हि ।
यातनार्थं पुनस्तत्र मांसं चैवोपजायते ॥ १५ ॥
शिरस्येवोपविष्टस्य प्रस्थितस्य प्रधावतः ।
तस्यार्त्तायामवस्थायां दुःखं भवति दारुणम् ॥ १६ ॥
करीषगर्त्तस्तत्रैव कुम्भीपाकः सुदारुणः ।
पद्मपत्राकृतिस्तस्य पेशी तत्र शरीरज ॥ १७ ॥
पाटयन्ति सुमार्गेण राक्षसाः करपत्रिकाः ।
निपीड्य दशनै रोषं भीमनादाः सुरोषिताः ॥ १८ ॥
असिपत्रवनं चात्र शृङ्गाटकवनं तथा ।
तत्र शृङ्गाटकाश्चैव तप्तबालुकमिश्रिताः ॥ १९ ॥
दह्यते छिद्यते चैव विध्यते भिद्यते तथा ।
पाट्यते पीड्यते चैव कृष्यते च विशस्यते ॥ २० ॥
श्यामाश्च शबलाश्चैव श्वानस्तेऽत्र दुरासदाः ।
खादन्ति च सुसंरब्धाः सर्पवृश्चिकसन्निभैः ॥ २१ ॥
कण्टकैः प्रतिकूलैश्च तत्रान्या कूटशाल्मलिः ।
कर्षन्ति तत्र वै वैनं यावदस्यावशेषितः ॥ २२ ॥
यद्दुःखं तस्य दुर्बुद्धेः प्रतिकूलञ्च तस्य यत् ।
तत्तदोत्पद्यते शीघ्रं यातनार्थाय यत्नतः ॥ २३ ॥
शीतकामस्य वै चोष्णमुष्णकामस्य शीतलम् ।
सुखकामस्य वै दुःखं सुखं नैवाऽत्र विद्यते ॥ २४ ॥
छिन्नाश्च शतधाप्येवं ह्यनिशन्तैः सहस्रशः ।
छिन्नाङ्गाः सर्वगात्रेषु सर्वमेव स विन्दति ॥ २५ ॥
सलिलं च नदीं घोरां व्यालाकीर्णां भयानकाम् ।
तां चैवोत्तार्यते प्रेतो यां दृष्ट्वैव भयं भवेत् ॥ २६ ॥
करम्भबालुका नाम शतयोजनमायता ।
अग्निज्वालासमा घोरा यथा येन स गच्छति ॥ २७ ॥
ततो वैतरणी नाम क्षारोदा तु महानदी ।
योजनानि तु पञ्चाशदधस्तात् पञ्चयोजनम् ॥ २८ ॥
अगाधपङ्का वै तत्र चर्ममांसास्थिभेदना ।
तत्र कर्कटका घोरा वज्रदंष्ट्रा विशन्ति ताम् ॥ २९ ॥

उलूकाश्च धनुर्मात्रा वज्रजिह्वास्थिभेदनाः ।
महाभिषा महाक्रोधा दुर्विषह्याः सुदारुणाः ॥ ३० ॥
समुत्तीर्य तु कृच्छ्रेण तस्माद् योजनकर्दमात् ।
वसन्त्यत्र धरे केचिच्छून्यागारे निराश्रये ॥ ३१ ॥
यत्र वै मूषिकगणा भक्षयन्ति ह्यनेकशः ।
मूषिकैर्जग्धगात्रस्तु अस्थिमात्रावशेषितः ॥ ३२ ॥
प्रभाते वायुना स्पृष्टः पुनर्मांसं स विन्दति ।
शून्यागारप्रवेशात्तु गव्यूती नातिदूरतः ॥ ३३ ॥
सहकारवनं नाम रौद्रा[1] यत्र च पक्षिणः ।
निस्त्वगस्थिस्तु क्रियते निर्मांसश्चैव मानवः ॥ ३४ ॥
निःशिरा जालकश्चैव निरक्षिश्रवणस्तथा ।
वटवृक्षो नातिदूरे दक्षिणे तु त्रियोजनम् ॥ ३५ ॥
सन्ध्याभ्र इव चाभाति प्रदीप्तो नित्यमेव तु ।
दशयोजनविस्तीर्णो अधः शतसमायता ॥ ३६ ॥
यमचुल्लीति विख्याता गम्भीरा सा त्रियोजनम् ।
नित्यं प्रज्वलिता सा तु नित्यं धूमान्धकारिता ॥ ३७ ॥
तत्र प्रेतसहस्राणि प्रयुतान्यर्बुदानि च ।
प्रक्षिप्यन्ते त्वहोरात्रं राक्षसैर्यमकिङ्करैः ॥ ३८ ॥
मासमेकं वसत्यन्ये तस्यां चुल्यां परिभ्रमन् ।
ततः शकुनिका नाम वसामेदोवहा नदी ॥ ३९ ॥
चुल्लीकुक्षौ तु विश्रान्ता वेगिनी वहते तु सा ।
तां समुत्तीर्य कृच्छ्रेण यातनाः सप्तकाः पुनः ॥ ४० ॥
एकैकं दुस्तरं घोरं यथापूर्वं यथाक्रमात् ।
अनुभुङ्क्ते स कृच्छ्रेण दुष्कृती तीव्रवेदनाः ॥ ४१ ॥
दश तत्र लताः शूलाः कुम्भीपाकास्त्रयोदश ।
याति पापमहोरात्रं तस्मिन्नियमितेन तु ॥ ४२ ॥
राक्षसैर्निरनुक्रोशैर्दुर्निरीक्ष्यैस्ततस्ततः ।
अङ्गारेषु विधूमेषु शूलप्रोतस्तु पच्यते ॥ ४३ ॥
शुष्कोदपाने धूमे च अधःशीर्षोऽवलम्बते ।
ज्वाल्यते तीक्ष्णतैले तु कटाह्यां स तु पच्यते ॥ ४४ ॥
करीषगर्त्ते स पुनः पच्यते मेदवह्निना ।
एकैकस्मिन् दशाहं च शूलादिषु स पच्यते ॥ ४५ ॥

---

१. भ्रमरा यत्र पक्षिण इति ( ग ) ।

यातनाः सप्तकास्तस्य निष्क्रान्तस्य त्रियोजने ।
यतो यमनदी नाम तप्तत्रपुजलोर्मिणी ॥ ४६ ॥
समुत्तीर्य तु कृच्छ्रेण दह्यमानस्त्वचेतनः ।
ततो मुहूर्त्तं विश्रान्तः किञ्चिदन्तरमागतः ॥ ४७ ॥
दीर्घिकां मोक्षते कान्तां शीतोदां शीतकाननाम् ।
सर्वकामान् स लभते भगिनी सा यमस्य तु ॥ ४८ ॥
भक्ष्यं भोज्यं च सर्वैस्तु पापिभिस्तत्र लभ्यते ।
स सर्वं विस्मरत्यत्र त्रिरात्रमुषितोऽपि च ॥ ४९ ॥
ततो शूलग्रहो नाम पर्वतः शतयोजनः ।
निराश्रयः स सत्वानामेकपाषाण एव च ॥ ५० ॥
तत्र वर्षति पर्ज्जन्यस्तत्र तप्तजलं सदा ।
तत्र कृच्छ्रेण तरति अहोरात्रेण मानवः ॥ ५१ ॥
शृङ्गारकवनं नाम तत्र पश्यन्ति शाद्वलम् ।
नीलमक्षिकदंशश्च सुव्याप्तं तद्वनं महत् ॥ ५२ ॥
यैस्तु स्पृष्टश्च दष्टश्च कृमिरूपश्च जायते ।
प्रेतो वर्षति मांसासृगस्मात्कृच्छ्रात्तु निर्गतः ॥ ५३ ॥
ततोऽन्यल्लभते चैव यातनार्थं प्रयत्नतः ।
ततः पश्यति पुत्रांस्तु महद्दुःखं सुदारुणम् ॥ ५४ ॥
मातरं पितरं चैव पुत्रान्दारांस्तथा प्रियान् ।
पुरस्ताद् वध्यमानं स क्रन्दमानमचेतनम् ॥ ५५ ॥
हा पुत्र त्राहि त्राहीति क्रन्दमानस्ततस्ततः ।
लगुडैर्मुद्गरैर्दण्डैर्जानुभिर्वेणुभिस्तथा ॥ ५६ ॥
मुष्टिभिश्च कशाभिश्च व्यालैरङ्कगतैरपि ।
तद् दृष्ट्वा तादृशं दुःखं ततो मोहं स गच्छति ॥ ५७ ॥
एवमेवात्मकर्माणि पर्यायेण पुनः पुनः ।
प्राप्नुवन्तीह तेऽत्रैव नरा दुष्कृतकारिणः ॥ ५८ ॥
पातकानि च चत्वारि समाचारेण पञ्चमम् ।
कृत्वा तानि नरा यान्ति तं देशं पापकारिणः ॥ ५९ ॥
तमादिषु च सर्वेषु गुणान्तरपथं गतः ।
यदा भवति स प्रेतस्तदा स्थावरतां व्रजेत् ॥ ६० ॥
तदा वा स्थावरे तेषु जातस्य हि भवेन्नरः ।
क्रमशः स भवेत् प्रेतस्तदा पशुगणेष्वपि ॥ ६१ ॥

षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
गतः स वसति प्रेतो नरके तु पुनः पुनः ॥ ६२ ॥
ततो निवृत्तकर्मा तु स्वेदजः सम्भवेत् पुनः ।
स्वेदजानां ततो नित्यं सर्वसंसारचक्रमात् ॥ ६३ ॥
ततश्च पक्षिणां योनिं सर्वां संसरते पुनः ।
गोयोनौ तु ततो गत्वा पुनर्मानुषतां व्रजेत् ॥ ६४ ॥
मानुषे शूद्रतां याति लब्ध्वा यदि तु तुष्यति ।
ततो विशत्वं गच्छेत कर्मणाऽनेन वेष्टितः ॥ ६५ ॥
वैश्यात्क्षत्रियतां याति तस्माच्च ब्राह्मणो भवेत् ।
ब्राह्मणत्वमपि प्राप्तः पापकर्मा दुरात्मवान् ॥ ६६ ॥
दुःशिक्षितेन मनसा आत्मद्रुहो भवेत्तदा ।
शरीरं मानसं घोरं व्यसनैरुपपादितम् ॥ ६७ ॥
उपयुक्तो नरो जातः पूर्वकर्मभिरन्वितः ।
ज्ञेयश्च ब्रह्महा कुष्ठी काकाक्षः काकतालुकः ॥ ६८ ॥
सुरापः श्यावदन्तश्च पूतिगन्धश्च पापकृत् ।
राजहा पितृहा चैव सुरापश्चापि यो भवेत् ॥ ६९ ॥
सुवर्णहर्ता च नरो ब्रह्मघ्नेन समो हि सः ।
कच्चिच्चात्र विरूपाणां नराणां पापकर्मिणाम् ॥ ७० ॥
यावता कर्मभिस्तैस्तैस्तेषु निर्याणवेश्मसु ।
छिन्नभिन्नविशस्तानां रुधिरेण समन्ततः ॥ ७१ ॥
व्याप्तं महीतलं सर्वमापगाश्चापि निर्गताः ।
अजस्रं क्लिश्यमानानां क्रन्दतां च सुदारुणम् ॥ ७२ ॥
समुत्तस्थौ महानादो हाहाकारसमाकुलः ।
बध्नतो विविधैर्बन्धैर्घातयन्तश्च दारुणम् ॥ ७३ ॥
लौहयष्टिप्रहारैश्च आयुधैश्च सुदारुणैः ।
छेदनैर्भेदनैश्चोग्रैः पीडनाभिश्च सर्वशः ।
श्रान्ताः कर्मकरा दूता मोहेनायत्तचेतसः ॥ ७४ ॥
यदा श्रान्ताश्च खिन्नाश्च हन्तारः पापकर्मिणाम् ।
विज्ञापयंस्तदा[1] दूताश्चित्रगुप्तं महौजसम् ॥ ७५ ॥

इति वाराहपुराणे संसारचक्रे नरकयातनास्वरूपवर्णनो नाम द्विशततमोऽध्यायः ।



१. 'विज्ञापयेत्तदा'—इति ऐ० सो० मुद्रितपाठः ।

## एकाधिकद्विशततमोऽध्यायः

ऋषिपुत्र उवाच

ततस्ते सहिताः सर्वे अन्योऽन्याभिरताः सदा ।
नानावेशधरा दूताः कृताञ्जलिपुटास्तदा ॥ १ ॥

दूता ऊचुः

वयं श्रान्ताश्च क्षीणाश्च अन्यान्योजितुमर्हसि ।
वयमन्यत् करिष्यामः स्वामिन्कार्यं सुदुष्करम् ॥ २ ॥
अन्ये हि तावत्तत्कुर्युर्यथेष्टं तव सुव्रत ।
भगवन्परिक्लिष्टाः स्म त्राहि नः परमेश्वर ॥ ३ ॥

ततो विवृत्तरक्ताक्षस्तेन वाक्येन रोषितः ।
विनिःश्वस्य यथा नागो ह्यपश्यत् सर्वतो दिशम् ॥४॥

अदूरे दृष्टवान् कञ्चित्पुरुषं स ह्यनाकृतिम् ।
स तु वेगेन सम्प्राप्त इङ्गितज्ञो दुरात्मवान् ॥ ५ ॥

निःसृतः स च रोषेण चित्रगुप्तेन धीमता ।
ततः स त्वरितो गत्वा मन्देहो नाम राक्षसः ॥ ६ ॥
नानारूपधरा घोरा नानाभरणभूषिताः ।
विनाशाय महासत्त्वो यत्र तिष्ठन्महायशाः ॥ ७ ॥

चित्रगुप्तो महाबाहुः सर्वलोकार्थचिन्तकः ।
समः सर्वेषु भूतेषु भूतानां च समादिशत् ॥ ८ ॥

ततस्ते विविधाकारा राक्षसाः पिशिताशनाः ।
उपरुह्य तथा सर्वे मातङ्गांश्च हयांस्तथा ॥ ९ ॥

बद्धगोधाङ्गुलित्राणा नानायुधधरास्तथा ।
अग्रतः किङ्करास्तिष्ठन् कृत्वा पादाभिवन्दनम् ॥ १० ॥
ब्रुवन्तश्च पुनर्हृष्टाः शीघ्रमाज्ञापय प्रभो !
तव सन्देशकर्तारः कस्य कुन्ताम जीवितम् ॥ ११ ॥

तेषां तद्वचनं श्रुत्वा चित्रगुप्तो ह्यभाषत ।
रोषगद्गदया वाचा निःश्वसन् वै मुहुर्मुहुः ॥ १२ ॥
भो भो मन्देहका वीराः मम चित्तामुपालकाः !
एतान् बध्नीत गृह्णीत भूतराक्षसपुङ्गवाः ॥ १३ ॥

एवं हत्वा च बद्ध्वा च आगच्छत पुनर्यथा ।
हन्तारः सर्वभूतानां कृतघ्ना हठविक्रमाः ॥ १४ ॥
हत्वा वै पापकानेतान् मम विप्रियकारिणः ।
एतच्छ्रुत्वा वचस्तस्य वचनं चेदमब्रुवन् ॥ १५ ॥

राक्षसा ऊचुः

श्रान्ता वा क्षुधिता वापि दुःखिता वा तपोधनाः ।
अमात्या एव ज्ञातव्या भृत्याः शतसहस्रशः ॥ १६ ॥
एते वधार्थं निर्दिष्टास्त्वयैव च महात्मना ।
न युक्तं विविधाकारा ह्यस्माकं नाशनाय वै[1] ॥ १७ ॥
यथा ह्येते समुत्पन्नाः सर्वधर्मानुचिन्तकाः ।
तथा वयं समुत्पन्नास्तदर्थं हि भवानपि ॥ १८ ॥
मा च मिथ्या परिज्ञातं धर्मिष्ठस्य भवत्विति ।
अस्माकं विग्रहे वीर मुच्यन्ते यदि मन्यसे ॥ १९ ॥
परित्रायस्व नो वीर किङ्कराणां महाबलान् ।
हन्यमानान् हि रक्षोभिरस्मानद्य रणाजिरे ॥ २० ॥
एवमुक्त्वा ततो घोराः व्याधयः कामरूपिणः ।
सन्नद्धास्त्वरितं शूरा भीमरूपा भयानकाः ॥ २१ ॥
गजैरन्ये तथा चाश्वै रथैश्चापि महाबलाः ।
कण्टकैस्तुरगैर्हंसैरन्ये सिंहैस्तथापरे ॥ २२ ॥
मृगैः शृगालैर्महिषैर्व्याघ्रैर्मेषैस्तथापरे ।
गृध्रैः श्येनैर्मयूरैश्च सर्पगर्दभकुक्कुटैः ॥ २३ ॥
एवं वाहनसंयुक्ता नानाप्रहरणोद्यताः ।
समागता महासत्वा अन्योन्यमभिकाङ्क्षिणः ॥ २४ ॥
तूर्यक्ष्वेडितसङ्घुष्टैर्वलितास्फोटितैरपि ।
जयार्थिनो द्रुतं वीराश्चालयन्तश्च मेदिनीम् ॥ २५ ॥
ततः समभवद्युद्धं तस्मिंस्तमसि सन्तते ।
मुकुटैरङ्गदैश्चित्रैः केयूरैः पट्टिशासिकैः ॥ २६ ॥
सकुण्डलैः शिरोभिश्च भ्राजते वसुधातलम् ।
बहुभिश्च सकेयूरैश्छत्रैश्च मणिभूषणैः ॥ २७ ॥
शूलशक्तिप्रहारैश्च यष्टितोमरपट्टिशैः ।
असिखड्गप्रहारैश्च बलप्राणसमीरितैः ॥ २८ ॥

---

१. एष श्लोकः ( ग ) पुस्तके नास्ति ।

अभवद्दारुणं युद्धं तुमुलं लोमहर्षणम् ।
नखैर्दन्तैश्च पादैश्च तेऽन्योऽन्यमभिजघ्निरे ॥ २९ ॥
बाहुभिः समनुप्राप्तः केशाकेशि ततः परम् ।
अयुक्तमतुलं युद्धं तेषां वै समजायत ॥ ३० ॥
ततस्ते राक्षसा भग्ना दूतैर्घोरपराक्रमैः ।
देहि देहि वदन्त्येव भिन्द गृह्णीष्व तिष्ठ च ॥ ३१ ॥
वध्यमानाः पिशाचास्ते ये निवृत्ता रणार्दिताः ।
आह्वयन्त प्रतिभयात् क्रोधसंरक्तलोचनाः ॥ ३२ ॥
तिष्ठ तिष्ठ क यासीति न गच्छामि दृढो भव[1] ।
मया मुक्तमिदं शस्त्रं तव देहविनाशनम् ॥ ३३ ॥
किन्तु मूढ त्वया शस्त्रं न मुक्तं मे रुजाकरम् ।
मया क्षिप्तास्तु इषवः प्रतीच्छ किं पलायसे ॥ ३४ ॥
किं त्वं वदसि दुर्बुद्धे एषोऽहं पारगो रणे ।
मम बाहुविमुक्तस्तु यदि जीवस्यतो वद ॥ ३५ ॥
तत्र ते सहसा घोरा राक्षसाः पिशिताशनाः ।
मन्देहा नाम नाम्ना ते वध्यमानाः सहस्रशः ॥ ३६ ॥
ततो भग्ना यदा ते तु राक्षसाः कामरूपिणः ।
प्रतिपद्यन्त ते मायां तामसीं तमसा वृताः ॥ ३७ ॥
अदृश्याश्चैव दृश्याश्च तद्बलं तमसा वृताः ।
ततस्ते शरणं जग्मुर्ज्वरं परमभीषणम् ॥ ३८ ॥
शूलपाणिं विरूपाक्षं सर्वप्राणिप्रणाशनम् ।
मन्देहा नाम नाम्ना वै राक्षसाः पिशिताशनाः॥ ३९ ॥
खादन्ति चैव घ्नन्ति स्म चित्रगुप्तेन चोदिताः ।
व्याधीनां च सहस्राणि दूतानां च महाबलाः ॥ ४० ॥
वयमद्य महाभाग त्रायस्व जगतः पते ।
ततस्तेषां वचः श्रुत्वा दूतानां कामरूपिणाम् ॥ ४१ ॥
ज्वरः क्रुद्धो महातेजा योधानां तु सहस्रशः ।
कालो मुण्डः केकराक्षो लोहयष्टिपरिग्रहः ॥ ४२ ॥

१. दृढव्रत इति (ग) ।

विविधान् सन्दिदेशाऽत्र पुरुषानग्निवर्चसः ।
बद्धाञ्जलिपुटान् सर्वानिदमाह सुरेश्वरः ॥ ४३ ॥
यात शीघ्रमिमान् पापान् योगेन च बलेन च ।
ततस्ते त्वरितं गत्वा यत्र ते पिशिताशनाः ॥ ४४ ॥
ज्वराज्ञया च ते सर्वे जीमूतघननिस्वनाः ।
बहूंस्ते राक्षसान् घोरान् दर्पोत्सक्तान् सहस्रशः ॥ ४५ ॥
बहुशस्त्रप्रहारैश्च शस्त्रैश्च विविधोज्ज्वलैः ।
तरसा राक्षसा विग्ना रुधिरेण परिप्लुताः ॥ ४६ ॥
मोचयामास सङ्ग्रामं स्वयमेव यमस्ततः ।
राक्षसान् मोचयित्वाऽथ हन्यमानान् समन्ततः ॥ ४७ ॥
गत्वा ज्वरं महाभागं विनयात् सान्त्वयन्मुहुः[1] ।
पूजयन् वै ज्वरं दिव्यं गृह्य हस्ते महायशाः ॥ ४८ ॥
प्रविवेश गृहं स्वं तु सम्भ्रमेणोद्दशेन तु ।
आननं तु समुत्प्रोञ्छ्य स्वेदसङ्ग्रामबिन्दुवत् ॥ ४९ ॥
धर्मराजोऽथ विश्रान्तं कालभूतं महाज्वरम् ।
किं किं वृत्तमिदं देव व्यापिनस्त्वं महातपाः ॥ ५० ॥
रोषायासकरं चैव सर्वलोकनमस्कृतः ।
अहंस्त्वञ्चैव देवेश इमं लोकं चराचरम् ॥ ५१ ॥
शासेम हि यथाकामं यथादृष्टं यथाश्रुतम् ।
त्वया ग्राह्यो ह्यहं देव मृत्युना च सुसंवृतः ॥ ५२ ॥
लोकान् सर्वानहं हन्मि सर्वघाती न संशयः ।
गच्छ गच्छ यथास्थानं युद्धं च शमय स्वयम् ॥ ५३ ॥
राक्षसानां हतास्तत्र षष्टिकोट्यो रणाजिरे ।
अमराश्चाक्षयाश्चैव न हि त्वां प्रापयन्ति वै ॥ ५४ ॥
ततो ह्युपरतं युद्धं धर्मराजो यमः स्वयम् ।
दूतानां चित्रगुप्तेन सख्यमेकमकारयत् ॥ ५५ ॥

---

१. सान्त्वयन् मुनिरिति ( ग ) ।

ततः सम्भाषते दूताश्चित्रगुप्तं तथैव च ।
नियुङ्क्ष्व मया पूर्वं सर्वकर्माणि जन्तुषु ॥ ५६ ॥
स्वकर्मगुणभूतानि ह्यशुभानि शुभानि तु ।
दूताः रुद्रं[1] समागम्य चित्रगुप्तस्य पार्श्वतः ।
उपस्थानं च कुर्वन्ति कालचिन्तकमब्रुवन् ॥ ५७ ॥
यथा लोका यथा राजा यथा मृत्युः सनातनः ।
तदेवोत्तिष्ठ तिष्ठेति क्षम्यतां क्षम्यतां प्रभो ॥ ५८ ॥

इति वाराहपुराणे भगवच्छास्त्रे संसारचक्रे राक्षसकिङ्करयुद्धं नाम एकाधिकद्विशततमोऽध्यायः ।



१. ततो दूताः समागम्येति ( ग ) ।

## द्व्यधिकद्विशततमोऽध्यायः

ऋषिरुवाच

विस्मयस्तु मया दृष्टस्तस्मिन्नद्भुतदर्शनः ।
चित्रगुप्तस्य सन्देशो धर्मराजेन धीमतः ॥ १ ॥
प्राप्नुवन्ति फलं ते वै ये च क्षिप्ताः पुरा जनाः ।
अग्निना वै प्रतप्तास्ते बद्धा बन्धैः सुदारुणैः ॥ २ ॥
सन्तप्ता बहवो ये ते तैस्तैः कर्मभिरुल्बणैः ।
श्यामानां दशनानां च इमं शीघ्रं प्रमापय ॥ ३ ॥
दुराचारं पापरतं निर्घृणं पापचेतसम् ।
श्वानस्तु हिंसका ये च भक्षयन्तु दुरात्मनः ॥ ४ ॥
पितृघ्नो मातृगोघ्नस्तु सर्वदोषसमन्वितः ।
आरोप्य शाल्मलीं घोरां कण्टकैस्तैर्विपाटय ॥ ५ ॥
एनं पाचय तैलस्य घृतक्षौद्रस्य वा पुनः ।
तप्तद्रोण्यां ततो मुञ्च ताम्रतप्तखले पुनः ॥ ६ ॥
नराधममिमं क्षिप्त्वा प्रदीप्ते हव्यवाहने ।
ततो मनुष्यतां प्राप्य ऋणैस्तत्र प्रदीप्यते ॥ ७ ॥
शयनासनहर्त्तारमग्निदायी च[1] यो नरः ।
वैतरण्यामयं चैव क्षिप्यतामचिरं पुनः ॥ ८ ॥
पापकर्मायमत्यर्थं सर्वतीर्थविनाशकः ।
तस्य प्रदीप्तः कीलोऽयं वह्नितप्तोऽतिदुस्पृशः ॥ ९ ॥
आदेश्य उभयोरस्य कर्णयोः[2] कूटसाक्षिणः ।
यो नरः पिशुनः कूटसाक्षी चालाकजल्पकः ॥ १० ॥
ग्रामयाजनकं विप्रमध्रुवं दाम्भिकं शठम् ।
बद्धा तु बन्धने घोरे दीयतां तु न किञ्चन ॥ ११ ॥
जिह्वाऽस्य छिद्यतां शीघ्र वाचा दुष्टस्य पापिनः ।
गम्यागम्यं पुरा येन विज्ञातं न दुरात्मना ॥ १२ ॥
कृतं लोभाभिभूतेन कामसम्मोहितेन च ।
तस्य छित्वा ततो लिङ्गं क्षारमग्निं च दीपय ॥ १३ ॥

---

१. 'शयनासनहर्त्ता च वह्निदायी च यो नरः' इति समीचीनः ।
२. कर्मणोरिति क्वचित् पाठः ।

इमं तु खलकं कृत्वा दुरात्मा पापकारिणम् ।
दायादा बहवो येन अर्थहेतोर्विनाशिताः ॥ १४ ॥
इमं वार्द्धुषिकं विप्रं सर्वत्राङ्गेषु छेदय ।
तथायं यातनां यातु पापं बहु समाचरन् ॥ १५ ॥
सुवर्णस्तेयिनं पापं कृतघ्नं च तथा नरम् ।
क्रूरं पितृहणं चैनं ब्रह्मघ्नेषु समीकुरु ॥ १६ ॥
अस्थि छित्वा ततः क्षिप्रं क्षारमग्निं च दापय ।
इमं तु विप्रं खादन्तु तीक्ष्णदंष्ट्रा. सुदारुणाः ॥ १७ ॥
पिशुनं हि महाव्याघ्राः पञ्च घोराः सुदारुणाः ।
इमं पचत पाकेषु बहुधा मर्मभेदिनम् ॥ १८ ॥
येनाग्निरुज्झितः पूर्वं गृहीत्वा च न पूजितः ।
इमं पापसमाचारं वीरघ्नमतिपापिनम् ॥ १९ ॥
कर्कटस्य तु घोरस्य नित्यक्रुद्धस्य प्रापय ।
इमं घोरे ह्रदे क्षिप्रं सर्वयाजनयाजकम् ॥ २० ॥
सर्वेषां तु पशूनां यो नित्यं धारयते जलम् ।
न त्राता न च दाता च पापस्यास्य दुरात्मनः ॥ २१ ॥
अदानव्रतिनो विप्राः वेदविक्रयिणस्तथा ।
सर्वकर्माणि कुर्युर्ये दीयते न च किञ्चन ॥ २२ ॥
तोयभाजनहर्त्तारं भोजनं योऽनिवारयन् ।
हन्यतां सुदृढैर्दण्डैर्यमदूतैर्महाबलैः ॥ २३ ॥
वेणुदण्डकशाभिश्च[1] लोहदण्डैस्तथैव च ।
जलमस्मै न दातव्यं भोजनं च कथञ्चन ॥ २४ ॥
तस्मा अन्नं[2] च पानं च न दातव्यं कदाचन ।
[3]हतविश्वास्य हन्तारं वह्नौ शीघ्रं प्रपाचय ॥ २५ ॥
ब्रह्मदेयं हृतं येन तं वै शीघ्रं विपाचय ।
बहुवर्षसहस्राणि पातयेत् कर्मविस्तरे ॥ २६ ॥
समुत्तीर्णं ततः पश्चात्तिर्यग्योनौ प्रपातयेत् ।
सूक्ष्मदेहविपाकेषु कीटपक्षिविजातिषु ॥ २७ ॥
क्लिष्टो जातिसहस्रैस्तु जायते मानुषस्ततः ।
तत्र जातो दुरात्मा च कुलेषु विविधेषु च ॥ २८ ॥

---

१. कषाभिश्चेति ( ग ) । २. तस्मादन्नं चेति ( ग ) ।
३. इमं विश्वास्य इति वा पाठः ।

हिंसारूपेण घोरेण ब्रह्मवध्यां प्रदापयेत् ।
राजप्रमारकं घोरं ब्रह्मघ्नं दुष्कृतं तथा ॥ २९ ॥
सुवर्णस्तेयिनश्चैव सुरापश्चैव कारयेत् ।
अनुभूय ततः काले ततो यक्ष्म प्रयोजयेत् ॥ ३० ॥
गोघातको ह्ययं पापः कूटशाल्मलिमारुहेत् ।
कृष्यते विविधैर्घोरै राक्षसैर्घोरदर्शनैः ॥ ३१ ॥
पूतिपाकेषु पच्येत जन्तुभिः सम्प्रयोजितः ।
ब्रह्मवध्याश्चतुर्भागैर्मृगपशुत्वमागतः ॥ ३२ ॥
उद्विग्नवासं पतितं यत्र यत्रोपपद्यते ।
पापकर्मसमुद्विग्नो जातो जातः पुनः पुनः ॥ ३३ ॥
अयं तिष्ठति किं पापः पितृघाती दुरात्मवान् ।
ते तु वर्षशतं साग्रं भक्षयन्तु विचेतसः ॥ ३४ ॥
ततः पाकेषु घोरेषु पच्यतां च नराधमः[1] ।
ततो मानुषतां प्राप्य गर्भस्थो म्रियतां पुनः ॥ ३५ ॥
व्यापन्नो दशगर्भेषु ततः पश्चाद्विमुच्यताम् ।
तत्रापि लब्ध्वा मानुष्यं क्लेशभागी च जायताम्॥ ३६ ॥
बुभुक्षारुग्विकारैश्च सततं तत्र पीड्यताम् ।
पापाचारमिमं घोरं मित्रविश्वासघातकम् ॥ ३७ ॥
यन्त्रेण पीड्यतां क्षिप्रं ततः पश्चाद्विमुच्यताम् ।
दीप्यतां ज्वलने घोरे वर्षाणाञ्च शतद्वयम् ॥ ३८ ॥
जायतां च ततः पश्चाच्छुनां योनौ दुरात्मवान् ।
भ्रष्टोऽपि जायतां तस्मान्मानुषः क्लेशभाजनः ।
प्राप्तवान्विविधान् रोगान् संसारे चैव दारुणान्॥३९॥
ब्रह्मस्वहारी पापोऽयं नरो लवणहारी च ।
वर्षाणां तु शतं पञ्च तत्र क्लिष्टो दुरात्मवान् ॥ ४० ॥
कृमिको जायते पश्चाद्विष्ठायां कृमिकोऽपरः ।
शकुन्तो जायते घोरस्तत्र पश्चाद् वृको[2] भवेत् ॥ ४१ ॥
इममग्निप्रदं घोरं काष्ठाग्नौ सम्प्रतापय ॥ ४२ ॥
स्वकर्मसु विहीनेषु पश्चाल्लब्धगतिस्तथा ।
ततश्चाथ मृगो वापि ततो मानुषतां व्रजेत् ॥ ४३ ॥
तत्रापि दारुणं दुःखमुपभुङ्क्ते दुरात्मवान् ।
सर्वदुष्कृतकार्येषु सह सञ्जातचिन्तकैः ॥ ४४ ॥

---

१. पच्य तावन्नराधम इति ( ग ) । २. वको भवेदिति ( ग ) ।

एवं कर्मसमायुक्तास्ते भवन्तु सहस्रशः ।
परद्रव्यापहाराश्च रौरवे पतितास्तथा ॥ ४५ ॥

कुम्भीपाकेषु निर्दग्धः पश्चाद् गर्दभतां गतः ।
ततो जातस्त्वसौ पापः शूकरो मलभुक् तथा ॥ ४६ ॥
प्राप्नोतु विविधांस्तापान्यथा हृतधनश्च सन् ।
क्षुधातृष्णापराक्रान्तो गर्दभो दशजन्मसु ॥ ४७ ॥

मानुष्यं समनुप्राप्य चौरो भवति पापकृत् ।
परोपघाती निर्लज्जः सर्वदोषसमन्वितः ॥ ४८ ॥
वृक्षशाखावलम्बोऽत्र[1] अधःशीर्षः प्रजायते ।
अग्निना पच्यतां पश्चाल्लुब्धो वै पुरुषाधमः ॥ ४९ ॥
ततो वर्षशते पूर्णे मुच्यते स पुनः पुनः ।
अजितात्मा तथा पापः पिशुनश्च दुरात्मवान् ॥ ५० ॥

पूर्वैश्च शूकरो भूत्वा नकुलो जायते पुनः ।
विमुक्तश्च ततः पश्चान्मानुष्यं लभते चरात् ॥ ५१ ॥
धिक्कृतः सर्वलोकेन कूटसाक्ष्यनृतव्रतः ।
न शर्म लभते क्वापि कर्मणा स्वेन गर्हितः ॥ ५२ ॥
इमं ह्यानृतिकं दुष्टं क्षेत्रहारकमेव च ।
स्वकर्म दुष्कृतं यावत्तावद्दुःखं भुनक्त्वसौ ॥ ५३ ॥

कर्मण्येकैकशश्चायं स तु तिष्ठत्वयं पुनः ।
वर्षलक्षं न सन्देहस्ततस्तिष्ठत्वयं पुनः ॥ ५४ ॥
ततो जातीः स्मरेत्सर्वास्तिर्यग्योनिसमाश्रितः ।
जायतां मानुषः पश्चात्क्षुधया परिपीडितः ॥ ५५ ॥
सर्वकामविमुक्तस्तु सर्वदोषसमन्वितः ।
क्वचिज्जात्यां भवेदन्धः क्वचिद्बधिर एव च ॥ ५६ ॥

क्वचिन्मूकश्च काणश्च क्वचिद्व्याधिसमन्वितः ।
एवं हि प्राप्नुयाद्दुःखं न च सौख्यमवाप्नुयात् ॥ ५७ ॥
जात्यन्तरसहस्राणि प्रयुतान्यर्बुदानि च ।
शान्तिं न लभते चैव भूमे क्षेत्रहरो[2] नरः ॥ ५८ ॥
तीव्रैरन्तर्गतैर्दुःखैर्भूमिहर्ता नराधमः ।
इमं बन्धैर्दृढैर्बद्ध्वा विपाचय तथाचिरम्[3] ॥ ५९ ॥

---

१. अथ इति वा पाठः । २. भूमेः क्षेत्रहरे इति वा पाठः ।
३. तमाचिरमिति ( ग )

प्रबद्धः सुचिरं कालं मम लोकगतो नरः।
जायतां स चिरं पापो मार्जारस्तेन कर्मणा ॥ ६० ॥
तीव्रक्षुधापरिक्लिष्टो बद्धो बन्धनयन्त्रितः।
दुःखान्यनुभवंस्तत्र पापकर्मा नराधमः ॥ ६१ ॥
सप्तधा सप्त चैकां च जातिं गत्वा स पच्यते।
इमं शाकुनिकं पापं श्वभिर्गृध्रैश्च घातय ॥ ६२ ॥
ततः कुक्कुटतां यातु विड्भक्षश्च दुरात्मवान्।
दंशश्च मशकश्चैव ततः पश्चाद्भवेत्तु सः ॥ ६३ ॥
जातिकर्मसहस्रं तु ततो मानुषतां व्रजेत्।
इमं सौकरिकं पापं महिषा घातयन्तु तम् ॥ ६४ ॥
वर्षाणां च सहस्रं तु धावमानं ततस्ततः।
विभिन्नं च प्रभिन्नं च शृङ्गाभ्यां पद्भिरेव च ॥ ६५ ॥
तस्माद्देशात्ततो मुक्तस्ततः शूकरतां व्रजेत्।
महिषः कुक्कुटश्चैव शशो जम्बूक एव च ॥ ६६ ॥
यां यां याति पुनर्जातिं तत्र भक्ष्यो भवेत्तु सः।
कर्मक्षयोऽन्यथा नास्ति मया पूर्वं विनिर्मितम्[1] ॥ ६७ ॥
प्राप्य मानुषतां पश्चात्पुनर्व्याधो भविष्यति।
अन्यथा निष्कृतिर्नास्ति जातिजन्मशतैरपि ॥ ६८ ॥
उच्छिष्टान्नप्रदातारं पापाचारमधार्मिकम्।
अङ्गारैः पचतां[2] चैनं त्रीणि वर्षशतानि च ॥ ६९ ॥
भिन्नचारित्रदुःशीला भर्तुर्व्यलीककारिणी।
आयसान् पुरुषान् सप्त आलिङ्गतु समन्ततः ॥ ७० ॥
ततः शुनी भवेत् पश्चात् सूकरी च ततः परम्।
कर्मक्षये ततः पश्चान्मानुषी दुःखिता भवेत्।
न च सौख्यमवाप्नोति तेन दुःखेन दुःखिता ॥ ७१ ॥
अनेन भृत्या बहवः श्रान्ताः शान्ताः प्रवाहिताः।
भक्ष्यं भोज्यं च पानं च न तेषामुपपादितम्।
अनुमोदेत् प्रजा दृष्ट्वा लिप्समानो दुरात्मवान् ॥ ७२ ॥
एवं कुरुत भद्रं वो मम पार्श्वे तु दुर्मतिः।
रौरवे नरके घोरे सर्वदोषसमन्विते ॥ ७३ ॥

---

१. विनिर्मितमिति वा पाठः, विनिर्मितामिति ( ग )।
२. पच्यतामिति ( ग )।

सर्वकर्माणि कुर्वाणं क्षपयध्वं दुरासदम् ।
वर्षाणां तु सहस्राणि तैस्तैः कर्मभिरावृतम् ॥ ७४ ॥

प्रक्षिप्यतामयं पश्चाद् दस्युजातौ दुरात्मवान् ।
जायतामुरगः पश्चात्ततः कर्म समाश्रयेत् ॥ ७५ ॥

ततः पश्चाद्भवेत्पापश्चेतरः[1] सर्वपापकृत् ।
शूकरस्तु भवेत्पश्चान्मेषश्च जायते पुनः ।
हस्त्यश्वश्च शृगालश्च शूकरो वक एव च ॥ ७६ ॥

ततो जातस्तु सर्वेषु संसारेषु पुनः पुनः ।
वर्षाणामयुतं साग्रं ततो मानुषतां व्रजेत् ॥ ७७ ॥

पञ्चगर्भेषु सापत्सु पञ्च जातो म्रियेत सः ।
अपोगण्डो म्रियेत् पञ्च कर्मशेषक्षये तु सः ।
ततो मानुषतां याति त्वेष कर्मविनिर्णयः[2] ॥ ७८ ॥

पापस्य सुकृतस्याथ प्रजानां विनिपातने ।
भूतानां चाप्यसम्मानं दुष्प्रहारश्च सर्वशः ।
अतः स्वयम्भुवा पूर्वं कर्मपाको यथार्थवत् ॥ ७९ ॥

इति वाराहपुराणे संसारचक्रे कर्मपाको नाम
द्व्यधिकद्विशततमोऽध्यायः ।



१. श्वानर इति ( ग )। २ एककर्मविनिर्णय इति ( ग )।

## त्र्यधिकद्विशततमोऽध्यायः

ऋषिपुत्र उवाच

अन्यानपि तथा पापांश्चित्रगुप्तो दिदेश ह।
व्यामिश्रान् कथ्यमानांश्च शृणुध्वं तान्महौजसः॥ १॥
शीलसंयमहीनानां कृष्णपक्षानुगामिनाम्।
महापापैरुपेतानां कथ्यतां तत्पराभवम्॥ २॥

राजद्विष्टा गुरुद्विष्टाः सर्वे ते वै विगर्हिताः[1]।
अविश्वास्या ह्यसम्भाष्याः कुक्षिमात्रपरायणाः॥ ३॥
हिंसाविहारिणः क्रूराः सूचकाः कार्यदूषकाः।
गवेडकस्य वधका महिषाणामजां तथा॥ ४॥

दावाग्निं ये च मुञ्चन्ति ये च सौकरिकास्तथा।
तत्र कालमसंख्येयं पच्यन्ते पापकारिणः॥ ५॥
कर्मक्षयाद् यदा भूयो मानुष्यं प्राप्नुवन्ति ते।
अल्पायुषो भवन्तीह व्याधिग्रस्ताश्च नित्यशः॥ ६॥

गर्भ एव विपद्यन्ते म्रियन्ते बालकास्तथा।
परिरिङ्गरताः केचिन्म्रियन्ते पुरुषाधमाः॥ ७॥
काष्ठवंशे च शस्त्रे च वायुना ज्वलनेन च।
तोयेन वा पाशबन्धैः पतनेन विषेण वा॥ ८॥

मातापितृवधं कष्टं मित्रसम्बन्धिबन्धजम्।
बहुशः प्राप्नुवन्त्येते विद्रवञ्चाप्यभीक्ष्णशः॥ ९॥
प्राणातिपातनं ते वै प्राप्नुवन्ति यथा तथा।
लोहका कारुकाश्चैव गर्भाणां विनिहिंसकाः॥ १०॥

मूलकर्मकरा ये च गरदाः पुरदाहकाः।
ये च पञ्जरकर्त्तारो ये च शूलोपघातकाः॥ ११॥
पिशुनाः कलहाश्चैव ये च मिथ्याविदूषकाः।
गोकुञ्जरखरोष्ट्राणां चर्मका मांसभेदकाः॥ १२॥

उद्वेजनकराश्चण्डाः पच्यन्ते नरकेषु ते।
तत्र कालं तु सम्प्राप्य यातनाश्च सुदुःसहाः॥ १३॥

---

1. हि गर्हिता इति वा पाठः।

कर्मक्षयो यदा भूयो मानुष्यं प्राप्नुवन्ति ते ।
हीनाङ्गाः सुदरिद्राश्च भवन्ति पुरुषाधमाः ॥ १४ ॥
श्रवणच्छेदनं चैव नासाच्छेदनमेव च ।
छेदनं हस्तपदाभ्यां प्राप्नुवन्ति स्वकर्मणा ॥ १५ ॥

शारीरं मानसं दुःखं प्राप्नुवन्ति पुनः पुनः ।
गलवेदनास्तथोग्राश्च तथा मस्तकवेदनाः ॥ १६ ॥

कुक्ष्यामयं तथा तीव्रं प्राप्नुवन्ति नराधमाः ।
जडान्धबधिरा मूकाः पङ्गवः पादसर्पिणः ॥ १७ ॥
एकचक्षुहताः काणाः कुनखश्चामयाविनः ।
कुब्जाः खञ्जास्तथा हीना विकलाश्च घटोदराः ॥ १८ ॥

गलत्कुष्ठाः श्वित्रकुष्ठा भवन्ति स्वैश्च कर्मभिः ।
वाताण्डाश्चाण्डहीनाश्च प्रमेहमधुमेहिनः ॥ १९ ॥

योनिशूलाक्षिशूलाश्च श्वासहृद्गुह्यशूलिनः ।
पिण्डकावर्त्तभेदैश्च प्लीहगुल्मादिरोगिणः ॥ २० ॥

बहुभिर्दारुणैर्घोरैर्व्याधिभिः समनुद्रुताः ।
इत्येतान्हिंसकान् क्रूरान् घातयन्तु सुदारुणान् ।
मिथ्याप्रलापिनो दूतान् पाचयन्तु यथाक्रमम् ॥ २१ ॥
कर्क्कशाः पुरुषाः सत्या ये च योषा निरर्थकाः ।
एषां चतुर्विधा भाषा या मिथ्याप्यभिधीयते ॥ २२ ॥

हास्यरूपेण या भाषा चित्ररूपेण वा पुनः ।
अरहस्यं रहस्यं वा पैशुन्येन तु निन्दनात् ।
उद्वेगजनना वापि कटुका लोकगर्हिताः ॥ २३ ॥
स्नेहक्षयकरां रूक्षां भिन्नवृत्तविभूषिताम् ।
कदलीगर्भनिःसारां मर्मस्पृक् कटुकाक्षराम् ।
स्वरहीनामसंख्येयां भाषन्ति च निरर्थकाम् ॥ २४ ॥

अयन्त्रितमुखा ये च ये निबद्धाः प्रलापिनः ।
दूषयन्ति हि जल्पन्तोऽनृजवो निष्ठुराः शठाः ।
निन्दया गतलज्जाश्च मूर्खा मर्मविभेदिनः ॥ २५ ॥

न मर्षयन्ति येऽन्येषां कीर्त्त्यमानाञ्छुभान् गुणान् ।
दुर्वाचः परुषांश्चण्डान् बन्धयध्वं नराधमान् ॥ २६ ॥
ततस्तिर्यक् प्रजायन्ते बहुधा कीटपक्षिणः ।
लोके दोषकराश्चैव लोकद्विष्टास्तथापरे ॥ २७ ॥

तत्र कालं चिरं घोरं पच्यन्ते पापकारिणः ।
कर्मक्षयो यदा भूयो मानुष्यं प्राप्नुवन्ति ते ॥ २८ ॥
परिभूता अविज्ञाना नष्टचित्ता अकीर्त्तयः ।
अनर्घाश्चाप्यनर्हाश्च[1] स्वपक्षे ह्यवमानिताः ॥ २९ ॥
त्यक्त्वा मित्राणि मित्रेषु ज्ञातिभिश्च निराकृताः ।
लोकदोषकराश्चैव लोकद्वेष्याश्च ये नराः ॥ ३० ॥
अन्यैरपि कृतं पापं तेषां पतति मस्तके ।
वज्रं शस्त्रं विषं वापि देहाद् देहनिपातनम् ॥ ३१ ॥
मिथ्याप्रलापिनामेषामुक्ता क्लेशपरम्परा ।
स्तेयहारं प्रहारं च नीतिहारं तथैव च ॥ ३२ ॥
स्तेयकर्माणि कुर्वन्ति प्रसह्य हरणानि च ।
करचण्डाशिनो ये च राजशब्दोपजीविनः ॥ ३३ ॥
पीडयन्ति जनान् सर्वान् कृपणान् ग्रामकूटकान् ।
सुवर्णमणिमुक्तानां कूटकर्मानुकारकाः ॥ ३४ ॥
समये कृतहर्त्तारो लोकपीडाकरा नराः ।
अनादिबुद्धयश्चान्ये अर्थातिशयकारिणः ॥ ३५ ॥
भूतनिष्ठाभियोगज्ञा व्यवहारेष्वनर्थकाः ।
भेदकाराश्च धातूनां रजतस्य च कारकाः ॥ ३६ ॥
न्यासार्थहारका ये च सम्मोहनकराश्च ये ।
ये तथोपाधिकाः क्षुद्राः पच्यन्ते तेषु तेष्वथ ॥ ३७ ॥
निरयेष्वप्रतिष्ठेषु दारुणेषु ततस्ततः ।
तत्र कालं तु सुचिरं पच्यन्तां पापकारिणः ॥ ३८ ॥
कर्मक्षयो यदा तेषां मानुष्यं प्राप्नुवन्ति ते ।
तत्र तत्रोपपद्यन्ते यत्र यत्र महद् भयम् ॥ ३९ ॥
यस्मिंश्चौरभयं देशे क्षुद्भयं राजतो भयम् ।
आपद्भयोऽपि भयं यत्र व्याधिमृत्युभयं तथा ॥ ४० ॥
ईतयो यत्र देशेषु लुब्धेषु नगरेषु च ।
क्षयाः कालोपसर्गा वा जायन्ते तत्र ते नराः ॥ ४१ ॥
बहुदुःखपरिक्लिष्टा गर्भवासेन पीडिताः ।
एकहस्ता द्विहस्ता वा कूटाश्च विकृतोदराः ॥ ४२ ॥
शिराविवृतगात्राश्च हीनाङ्गा वातरोगिणः ।
अश्रुपातितनेत्राश्च भार्यां न प्राप्नुवन्ति ते ॥ ४३ ॥

---

१. अहीनाश्चेति वा पाठः ।

तेषामपत्यं न भवेत्तद्रूपं च सुलक्षणम् ।
अतिह्रस्वं विवर्णं च विकृतं भ्रान्तलोचनम् ॥ ४४ ॥
संसारे च यथा पक्वं कृपणं भैरवस्वनम् ।
महतः परिवारस्य तुष्टश्चोच्छिष्टभोजकः ॥ ४५ ॥
रूपतो गुणतो हीनो बलतः शीलतस्तथा ।
राजभृत्या भवन्त्येते पृथिवीपरिचारकाः ॥ ४६ ॥
अनालया निरामर्षा वेदनाभिः सुसंवृताः ।
समकार्यसजात्यानां मित्रसम्बन्धिनां तथा ॥ ४७ ॥
कर्मान्तकारका[1] ह्येते तृणाभूता भवन्ति ते ।
अनर्थो राजदण्डो वा नित्यमुत्पाद्यते वधः ॥ ४८ ॥
कर्मकल्याणकृच्छ्रेषु भृशं चापि विमुह्यति ।
कर्षकाः पशुपालाश्च वाणिज्यस्योपजीविकाः ॥ ४९ ॥
यद्यत् कुर्वन्ति ते कर्म सर्वत्र क्षयभागिनः ।
सत्यमन्विष्यमाणापि नैव ते कीर्त्तिभागिनः ॥ ५० ॥
यत्किञ्चिदशुभं कर्म तस्मिन् देशे समुच्छ्रितम् ।
तस्य देशस्य नैवास्ति वर्जयित्वातुरान्नरान् ॥ ५१ ॥
सुवृष्ट्यामपि तेषां वै क्षेत्रं तत्तु विवर्जयेत् ।
अशनिर्वा पतेत्तत्र क्षेत्रं वापि विनश्यति ॥ ५२ ॥
न सुखं नापि निर्वाणं तेषां मानुषता भवेत् ।
उत्पद्यते नृशंसानां तीव्रः क्लेशः सुदारुणः ॥ ५३ ॥
स्तेयकर्मप्रयुक्तानां मुक्त्वा क्लेशपरम्पराम् ।
परदाराप्रसक्तानामिमां शृणुत यातनाम् ॥ ५४ ॥
तिर्यङ्मानुषदेहेषु यान्ति विक्षिप्तमानसाः ।
विहरन्ति ह्यधर्मेषु धर्मचारित्रदूषकाः ॥ ५५ ॥
तांस्तेनैव प्रदानेन संग्रहे तु ग्रहेण वा ।
मूलकर्मप्रयोगेण राष्ट्रस्यातिक्रमेण वा ॥ ५६ ॥
प्रसह्य वा प्रकृत्या वै ये चरन्ति कुलाङ्गनाः ।
वर्णसङ्करकर्त्तारः कुलधर्मादिदूषकाः ॥ ५७ ॥
शीलशौचादिसम्पन्नं ये जनं धर्मलक्षणम् ।
धर्षयन्ति च ये पापाः श्रूयतां तत्पराभवः ॥ ५८ ॥
निरयं पापभूयिष्ठा अनुभूय महाभयम् ।
बहुवर्षसहस्राणि कर्मणा तेन दुष्कृताः ॥ ५९ ॥

---

१. 'कर्मान्तकास्तथा' इति वा पाठः ।

कर्मक्षये यदा भूयो मानुष्यं यान्ति दारुणम् ।
सङ्कीर्णयोनिजाः क्षुद्रा भवन्ति पुरुषाधमाः ॥ ६० ॥

वेश्यालङ्घककूटानां शौण्डिकानां तथैव च ।
दुष्टपाषण्डनारीणां नैकमैथुनगामिनाम् ॥ ६१ ॥

निर्लज्जाः पण्डकाः केचिद्बद्धपौरुषगण्डकाः ।
स्त्रीबन्धकाः स्त्रीविनाशाः स्त्रीवेषाः स्त्रीविहारिणः ॥ ६२ ॥

स्त्रीणां चानुप्रवृद्धा ये स्त्रीभोगपरिभोगिनः ।
तद्दैवतास्तन्नियमास्तद्द्वेषास्तत्प्रभाषिताः ॥ ६३ ॥

तद्भावास्तत्कथालापास्तद्भोगाः परिभोगिनः ।
विप्रलोभं च दानेषु प्राप्नुवन्ति नराधमाः ॥ ६४ ॥

सौभाग्यपरमासक्ता नरा बीभत्सदर्शनाः ।
अबुद्धैः सह संवासं प्रियं चाविप्रियं तथा ॥ ६५ ॥

शारीरं मानसं दुःखं प्राप्नुवन्ति नराधमाः ।
कृमिभिर्भक्षणं चैव तप्ततैलोपसेचनम्[1] ।
अग्निक्षारनदीभ्यां तु प्राप्नुवन्ति न संशयः ॥ ६६ ॥

परदारप्रसक्तानां भयं भवति निग्रहः ।
सर्वं च निखिलं कार्यं यन्मया समुदाहृतम् ॥ ६७ ॥

इति वाराहपुराणे पापसमूहानुक्रमो नाम
त्र्यधिकद्विशततमोऽध्यायः ।



१. 'तप्ततैलोपसेवनम्' इति वा पाठः ।

## चतुरधिकद्विशततमोऽध्यायः

ऋषिरुवाच

इदं चैवापरं तस्य वदतो हि मया श्रुतम् ।
चित्रगुप्तस्य विप्रेन्द्रा वचनं लोकशासिनः ॥ १ ॥
दूरेऽसाविति किं कार्यं न क्षयोऽस्त्यस्य कर्मणः ।
किं कृपां कुरुते तस्मिन्गृहाण जहि मा व्यथः ॥ २ ॥
व्रीडितः किं भवान् ज्ञातं किं तिष्ठसि पराङ्मुखः ।
किं न गच्छसि वेगेन किं त्वया सुचिरं कृतम् ॥ ३ ॥
गच्छ गच्छ पुनस्तत्र शीघ्रं चैनमिहानय ।
अशक्तोऽस्मीति किं रोषमर्हन्ते दर्पमीदृशम् ॥ ४ ॥
किं त्वं वदसि दुर्बुद्धे विवाहस्तस्य वर्त्तते ।
ऊर्ध्वरेतास्तपस्वीति त्वं मां भाषयसे कथम् ॥ ५ ॥
किं त्वं वदसि गर्जन् वै[1] मुहूर्त्तं परिपालय ।
रमते कान्तया सार्द्धमिति किं त्वं प्रभाषसे ॥ ६ ॥
पतिव्रतेति साध्वीति रहस्यं भाषसे पुनः ।
किं किं वदसि बालो हि निशि चैवागतो गृहम् ॥ ७ ॥
आनीयते कथं ज्ञात्वा भोक्तुकामं कथं हरे ।
जलशायिनं कथं चैव दातुकामं कथं हरे ॥ ८ ॥
धार्मिका यूयमेवात्र अहमेको नृशंसवत् ।
यात यात तथा दृष्ट्वा यथाकालोऽनतिक्रमेत्[2] ॥ ९ ॥
शीघ्रं त्वं भव सर्पो हि व्य घ्रस्त्वं च सरीसृपः ।
जलेग्राहो भव त्वं हि त्वं कृमिस्त्वं सरीसृपः ॥ १० ॥
नरकानुगतस्त्वं हि व्याधिभूतः समाश्रयः ।
अतीसारो भव त्वं हि त्वं छर्दिस्त्वं पुनर्भवः ॥ ११ ॥
कर्णरोगो विसूची च नित्यरोगाश्च सम्भव ।
ज्वरो भव महाघोरो जलेग्राहो दुरासदः ॥ १२ ॥
वातव्याधिस्तथा घोरस्तथैव त्वं जलोदरः ।
उन्मादोऽपस्मरश्च व[3] वातरोगस्तथैव च ॥ १३ ॥

---

१. गर्ह्यश्च इति वा पाठः ।

२. यथाकालो नातिक्रमेत् इति ऐ० सो० मुद्रितपाठः ।

३. उन्मादोऽपस्मारश्चैव इति छन्दोदोषयुक्तः ऐ० सो० पाठः ।

विभ्रमस्त्वं भवेश्छीघ्रं विष्टम्भश्च पुनर्भव ।
व्याधिर्भव महाघोरो ह्ययं तृष्णां तु विन्दतु[1] ॥ १४ ॥
यथाकालं यथादृष्टं तावत्कालोऽत्र तिष्ठतु[2] ।
कालं संहरणे वापि शुभस्यागमनेऽपि वा ॥ १५ ॥
भवन्तः कृतकर्माणस्ततो मोक्षमवाप्स्यथ ।
द्रुतं द्रवत वेगेन सर्वे गच्छत मा चिरम् ॥ १६ ॥
वराज्ञा धर्मराजस्य या मया समुदाहृता ।
एकाहं क्षपयेस्तत्र द्विरात्रं तत्र मा चिरम् ॥ १७ ॥
त्रिरात्रं चतुरात्रं वै षड्रात्रं दशरात्रकम् ।
पक्षं वा मासमेकं वा बहून्मासांस्तथापि वा ॥ १८ ॥
क्षपयित्वा यथाकालं ततो मोक्षमवाप्स्यथ ।
भूतात्मा मूढवांस्तत्र करुणः कष्टमेव च ॥ १९ ॥
यस्मिन् यस्मिंस्तु कालेऽहं यावतश्च श्रयाम्यहम् ।
तस्मिंस्तस्मिन् महाकालं यूयं तत्कर्तुमर्हथ ॥ २० ॥
विनियोगा मया सूक्ता[3] यथापूर्वं यथाश्रुतम् ।
जाग्रतं वा प्रमत्तं वा यथा कालो न सम्पतेत् ॥ २१ ॥
यत्नात् तथा तु कर्त्तव्यं भवद्भिर्मम शासनात् ।
अभयं चात्र यच्छामि ब्राह्मणेभ्यो न संशयः ॥ २२ ॥
तस्माद् यात ऋषिभ्यश्च स्त्रीभ्यश्चैव महाबलाः ।
यातनाया न भेतव्यमहमाज्ञापयामि वः ॥ २३ ॥
यथावाच्यं च कुरुत यथा कालो न गच्छति ।
यथाकामं प्रकुरुत यच्च दृष्टं यथा तथा ॥ २४ ॥
मयाज्ञप्ता विशेषेण मृत्युना सह सङ्गताः ।
यथावीरो महातेजाश्चित्रगुप्तो महायशाः ॥ २५ ॥
यथाब्रवीत् स्वयं रुद्रो यथा शक्रः शचीपतिः ।
यथाज्ञापयते ब्रह्मा चित्रगुप्तस्तथा प्रभुः ॥ २६ ॥

इति वाराहपुराणे संसारचक्रे दूतप्रेषणं नाम
चतुरधिकद्विशततमोऽध्यायः ।



१. विन्दतीति वा पाठः । २. तिष्ठतीति वा पाठः ।
३. युक्ता इति ( ग ) ।

## पञ्चाधिकद्विशततमोऽध्यायः

ऋषिपुत्र उवाच

इदमन्यत्पुरा विप्राः श्रूयतां तस्य भाषितम् ।
यमस्य चित्रगुप्तस्य यच्च तत्र मया श्रुतम् ॥ १ ॥

अयं तु भवतां यातु यातु स्वर्गं महीक्षिताम् ।
अयं वृक्षस्त्वयं तिर्यगयं मोक्षं व्रजेन्नरः ॥ २ ॥

अयं नागो भवेच्छीघ्रमयं तु परमां गतिम् ।
स्वपूर्वकान् पश्यते यमात्मनस्तु पितामहान् ॥ ३ ॥

क्लिश्यतो रुदतश्चैव वदतश्च पुनः पुनः ।
स्वेन दोषेण सर्वे वै अक्षयं नरकं गताः ॥ ४ ॥

दारत्यागी अधर्मिष्ठः पुत्रपौत्रविवर्जितः ।
क्षिप्तं वै रौरवे ह्येनं क्षपयन्तु महौजसः ॥ ५ ॥

मुच्यतां त इमे सर्वे अतीतानागतास्तथा ।
मुच्यतामाशु मुच्यन्तां त एते पापवर्जिताः ॥ ६ ॥

आगमे च विपत्तौ च सर्वधर्मानुपालकाः ।
ते तु कल्पान् बहून् स्वर्गे उषित्वा ह्यनसूयकाः ॥ ७ ॥

बहुसुन्दरिनार्यङ्के[1] ह्यायं परमधार्मिकम् ।
कलौ[2] मानुषतां यातु धर्मस्येह निदर्शनम् ॥ ८ ॥

त्रिविष्टपे परिक्लेशो वासो ह्यस्याक्षयो भवेत् ।
अयमायोधने शत्रुं हत्वा तु निधनं गतः ॥ ९ ॥

ब्राह्मणार्थे गवार्थे वा राष्ट्रार्थे निधनं गतः ।
शक्रस्य ह्यमरावत्यां निवेदयत मा चिरम् ॥ १० ॥

तत्र वैमानिको भूत्वा कल्पमेकं निवत्स्यति ।
तथैवायं महाभागो धर्मात्मा धर्मवत्सलः ॥ ११ ॥

बहुदानरतो नित्यं सर्वभूतानुकम्पकः ।
एनं गन्धैश्च माल्यैश्च शीघ्रमेव प्रपूजय ॥ १२ ॥

---

१. बहुसुन्दरीणामङ्के इति ( ग ) । २. कुले इति वा पाठः ।

अस्मै पूजा भवेद्देया मया दिष्टा महात्मने।
वीज्यतां चामरैरेष रथमस्मै प्रदीयताम् ॥ १३ ॥
प्रेतवासं समुत्सृज्य इतो यातु त्रिविष्टपम्।
इन्द्रस्योर्ध्वं भवेच्चैवं देवदेवस्य धीमतः ॥ १४ ॥
शङ्खतूर्यनिनादेन तत्र वै विजयेन च।
तत्र वै पूजयित्वा च प्रायशो लभतां सुखम् ॥ १५ ॥
अयं गच्छतु भद्रं च इन्द्रदेशं दुरासदन्।
अनेन वै कीर्त्तिमता लोकः सर्वो ह्यलङ्कृतः ॥ १६ ॥
गुणैश्च शतसंख्याकैः शक्र एनं प्रतीक्षते।
तावत् स्थास्यति धर्मात्मा यावच्छक्रस्त्रिविष्टपे ॥ १७ ॥
तावत्स मोदते स्वर्गे यावद्धर्मोऽनुमीयते।
ततश्च्युतश्च कालेन मानुष्ये सुखमश्नुते ॥ १८ ॥
रत्नवेणुप्रदश्चैव सर्वधर्मैरलङ्कृतः।
अश्विनोर्नयलोकं तु सर्वसौख्यसमन्वितम् ॥ १९ ॥
अयं यातु महाभागो देवदेवं सनातनम्।
अतिसृष्टः पुरा येन यथोक्ताः सुखदोहनाः ॥ २० ॥
सर्वशक्त्या समेतेन द्विजेभ्य उपपादिताः।
शुचीनां ब्राह्मणानां च अन्नदानं विशेषतः ॥ २१ ॥
तेन कल्पं वसिष्यन्ति रुद्रकन्या मनोरमाः।
तत्र कल्पं वसेद्गत्वा रुद्रलोकं न संशयः ॥ २२ ॥
तेन दत्तं द्विजातिभ्यो मधुखण्डं पुरःसरम्।
रसैश्च विविधैर्युक्तं सर्वगन्धमनोरमम् ॥ २३ ॥
तरुणी क्षीरसम्पन्ना गौः सुवर्णयुताशुभा।
सवत्सा हेमवासाश्च दत्ताऽनेन महात्मना ॥ २४ ॥
अस्य लेख्यं मया दृष्टं तिस्रः कोट्यस्त्रिविष्टपे।
स्वर्गात् परिच्युतश्चापि ऋषीणां जायते कुले ॥ २५ ॥
सुवर्णस्य प्रदाता च त्रिदशेभ्यो निवेद्यताम्।
त्रिदशानभ्यनुज्ञाप्य[1] यातु देवमुमापतिम् ॥ २६ ॥

---

१. अभ्यनुज्ञात इति वा पाठः।

तत्रैव वै महातेजा यथेष्टं काममाप्नुयात् ।
तत्रैवायमपि प्रेतगणभक्तो महातपाः ॥ २७ ॥

प्रयातु पितृभिः सार्द्धं तर्पिता येन पूर्वजाः ।
दानव्रता दिवं यातु नानालोकनमस्कृताः ॥ २८ ॥

अयं भद्रो महाकामं सर्वभूतहिते रतः ।
सर्वकामैरयं पूज्यः सर्वकामप्रदो नरः ॥ २९ ॥

क्षितिप्रदो द्विजातिभ्यो ह्ययं यातु त्रिविष्टपम् ।
तत्रैव तिष्ठतां वीरो ब्रह्मलोके सहानुगः ॥ ३० ॥

विविधैः कामभोगैस्तु सेव्यमानो नरोत्तमः ।
अक्षयं चाजरं स्थानं पूज्यमानो महर्षिभिः ॥ ३१ ॥

इति वाराहपुराणे भगवच्छास्त्रे संसारचक्रे शुभाशुभफलानुकीर्त्तनं नाम पञ्चाधिकद्विशततमोऽध्यायः ।



# षडधिकद्विशततमोऽध्याय

ऋषिरुवाच

चित्रगुप्तस्य सन्देशो वदतो यो मया श्रुतः ।
श्रूयतां वै महाभागास्तपःसिद्धा द्विजोत्तमाः ॥ १ ॥
इमं सर्वातिथिं दान्तं सर्वभूतानुकम्पकम् ।
समान्नदानदातारं रोषभोजनभोजिनम् ॥ २ ॥
मुञ्च मुञ्च महाभृत्य एष धर्मस्य निर्णयः ।
अहं कालेन सार्द्धं हि मृत्युना प्रकृतस्तथा ॥ ३ ॥
मम स्थास्यन्ति पार्श्वेषु पापा वै विकृतास्तथा ।
एनं गास्यन्ति गन्धर्वा गगनेऽप्सरसस्तथा ॥ ४ ॥
दीयतामासनं दिव्यं तथान्यद्दु यानमेव च ।
अन्यान्यान् कामयेत्कामान् मनसा यानि चेच्छति ॥५॥
तत्तु शीघ्रं प्रदातव्यं धर्मराजस्य शासनात् ।
अक्रियाणि तु दानानि पूर्वं दत्तानि धीमता ॥ ६ ॥
प्रेक्षतां च महाभागो भोक्तुं चैव सहानुगः ।
तिष्ठत्येषोऽत्र वै वीरो ममादेशान्महायशाः ॥ ७ ॥
यावत्स्वर्गाद्विमानानि समागच्छन्ति कृत्स्नशः ।
ततः स प्रवरैर्यानैः सानुगः सपरिच्छदः ॥ ८ ॥
देवानां भवनं यातु दैवतरभिपूजितः ।
तत्रैव रमतां वीरो यावल्लोको हि धार्यते ॥ ९ ॥
स कृतार्थः सदा लोके यत्रैषोऽभिप्रयास्यति ।
तत्र मेध्यं पवित्रं च यत्र स्थास्यत्ययं शुचिः ॥ १० ॥
नैककन्याप्रदातारं नैकयज्ञकृतं तथा ।
पूज्यतां सर्वकामैस्तु पदं गच्छतु वैष्णवम् ॥ ११ ॥
तत्रैव रमतां धीरः सहस्रमयुतं समाः ।
तता वै मानुषे लोके आद्ये वै जायतां कुले ॥ १२ ॥
भूतानुकम्पको ह्येष क्रियतामस्य चार्चनम् ।
वर्षाणामयुतं चायं तत्र तिष्ठतु देववत् ॥ १३ ॥
जायते तु ततः[1] पश्चात्सर्वमानुषपूजितः ।
उपानहौ च छत्रं च जलभाजनमेव च ॥ १४ ॥

---

१. स धीरो जायते इति वा पाठः ।

असकृद् येन दत्तानि तस्मै पूजां प्रयच्छथ ।
सभा यत्र प्रवर्त्तन्ते यस्मिन्देशे सहस्रशः ।। १५ ।।
हस्तेन संस्पृशत्येष मृदुना शीतलेन च ।
विद्याधरस्तथा ह्येष नित्यं मुदितमानसः ।। १६ ।।
महापद्मानि चत्वारि तस्मिंस्तिष्ठन्तु[1] नित्यशः ।
ततश्च्युतश्च कालेन मानुषं लोकमास्थितः ।। १७ ।।
बहुसुन्दरिनारीके[2] कुले जन्म समाप्नुयात् ।
दधि क्षीरं घृतं चैव येनं दत्तं द्विजातिषु ।। १८ ।।
एष वा यातु नः पार्श्वे अस्मै पूजां प्रयच्छथ ।
नीयतां नीयतां शीघ्रं यत्र यत्र न चालयेत् ।। १९ ।।
गोरसस्य तु पूर्णानि भाजनानि सहस्रशः ।
यत्र दत्त्वा च पीत्वा च बान्धवेभ्यो विभागशः ।।२०।।
ततः पश्चादयं यातु यत्र लोकोऽनसूयकः ।
तत्रैव रमतां धीरो बहुवर्षशतान्ययम् ।। २१ ।।
बहुसुन्दरिनारीभिः[3] सेव्यमानो महातपाः ।
अमराख्यो भवेत्तत्र गोलोकेषु समाहितः ।। २२ ।।
इदमेवापरं चैव चित्रगुप्तस्य भाषितम् ।
सर्वदेवमया देव्यः सर्ववेदमयास्तथा ।। २३ ।।
अमृतं धारयन्त्यश्च प्रचरन्ति महीतले ।
तीर्थानां परमं तीर्थमतस्तीर्थं न विद्यते ।। २४ ।।
पवित्रं च पवित्राणां पुष्टीनां पुष्टिरेव च ।
तस्मात् पुरस्तु दातव्यं गवां वै मेध्यकारणात् ।। २५ ।।
दध्ना हि त्रिदशाः सर्वे क्षीरेण च महेश्वरः ।
घृतेन पावको नित्यं पायसेन पितामहः ।। २६ ।।
सकृद् दत्तेन प्रीयन्ते वर्षाणां हि त्रयोदश ।
तां दत्त्वा चैव पीत्वा च प्रीतो मेध्यस्तु जायते ।। २७ ।।
पञ्चगव्येन पीतेन वाजिमेधफलं लभेत् ।
गव्यं तु परमं मेध्यं गव्यादन्यन्न विद्यते ।। २८ ।।
दन्तेषु मरुतो देवा जिह्वायां तु सरस्वती ।
खुरमध्ये तु गन्धर्वा खुराग्रेषु तु पन्नगाः ।। २९ ।।

---

१. तस्मिंस्तिष्ठतु नित्यश इति ( ग ) ।
२. बहुसुन्दरनारी के इति ऐ० सो० मुद्रित पाठः ।
३. बहुसुन्दरनारीभिः इति ऐ० सो० मुद्रितपाठः ।

सर्वसन्धिषु साध्याश्च चन्द्रादित्यौ तु लोचने ।
ककुदे सर्वक्षत्राणि लाङ्गुले धर्म आश्रितः ॥ ३० ॥
अपाने सर्वतीर्थानि प्रस्रावे जाह्नवी नदी ।
नानाद्वीपसमाकीर्णाश्चत्वारः सागरास्तथा ॥ ३१ ॥
ऋषयो रोमकूपेषु गोमये पद्मधारिणी ।
रोमे वसन्ति विद्याश्च त्वक्केशेष्वयनद्वयम् ॥ ३२ ॥
धैर्यं धृतिश्च शान्तिश्च पुष्टिर्वृद्धिस्तथैव च ।
स्मृतिर्मेधा तथा लज्जा वपुः कीर्तिस्तथैव च ॥ ३३ ॥
विद्या क्षान्तिर्मतिश्चैव सन्ततिः परमा तथा ।
गच्छन्तमनुगच्छन्ति एता गावो न संशयः ॥ ३४ ॥
यत्र गावो जगत्तत्र देवदेवपुरोगमाः ।
यत्र गावस्तत्र लक्ष्मीः साङ्ख्यधर्मश्च शाश्वतः ॥ ३५ ॥
सर्वरूपेषु ता गावस्तिष्ठन्त्यभिमतास्तथा ।
भवनेषु विशालेषु सर्वप्रासादपङ्क्तिषु ॥ ३६ ॥
स्त्रियश्च पुरुषाश्चैव रक्षयन्तः सुयन्त्रिताः ।
शयनासनपानेषु उपविष्टाः सहस्रशः ॥ ३७ ॥
क्रीडन्ति विविधैर्भोगैर्भोगेषु च सहस्रशः ।
तत्र पानगृहेष्वन्ये पुष्पमालाविभूषिताः ॥ ३८ ॥
भक्ष्याणां विविधानां च भोजनानां च सञ्चयान् ।
शयनासनपानानि वाजिनो वारणास्तथा ॥ ३९ ॥
अपश्यन् विविधास्तत्र स्त्रियश्च शुभलोचनाः ।
शोभयन्ति स्त्रियः काश्चिज्जलक्रीडागतास्तथा ॥ ४० ॥
उद्यानेषु तथा चान्या भवनेषु च पुण्यतः ।
अनेन सदृशं नास्ति अस्मादन्यत्र विद्यते ॥ ४१ ॥
अहो सूत्रकृतं शिल्पमहो रत्नैरलङ्कृतम् ।
एवं गृहाद् गृहं गच्छन्नहं तत्र ततस्तमः[1] ॥ ४२ ॥
ततस्तु निखिलं सम्यग्दृष्ट्वा कर्म महोदयम् ।
पुनरेवागतः पार्श्वं यमस्य द्विजसत्तमाः[2] ॥ ४३ ॥

इति वाराहपुराणे संसारचक्रे शुभकर्मफलोदयो नाम
षडधिकद्विशततमोऽध्यायः ।



१. महत्तत्र ततस्तम इति (ग) । २. 'द्विजसत्तमः' इति ऐ० सो० मुद्रितपाठः ।

# सप्ताधिकद्विशततमोऽध्यायः

ऋषिपुत्र उवाच

इदमन्यन्महाभागा नारदात् कलहप्रियात् ।
श्रुतं विप्रा यथा तत्र यमस्य सदसि स्वयम् ॥ १ ॥
तथा च पृच्छतस्तस्य पुरावृत्तं महात्मनः ।
आख्यानं कथयामास यदुक्तं चित्रभानुना ॥ २ ॥
यथा च जनको राजा कामान् दिव्यानवाप्तवान् ।
तत्सर्वं कथयिष्यामि श्रूयतां मुनिसत्तम ॥ ३ ॥
अयं तत्र महातेजा नारदो मुनिसत्तमः ।
धर्मराजसभां प्राप्तस्तरसा द्योतितप्रभः ॥ ४ ॥
तत्र राजाऽथ वेगेन तं दृष्ट्वा स्वयमागतम् ।
अर्चयित्वा यथान्यायं कृत्वा चैव प्रदक्षिणम् ॥ ५ ॥
उवाच च महातेजाः सूर्यपुत्रः प्रतापवान् ।
स्वागतं ते द्विजश्रेष्ठ दिष्ट्या प्राप्तोऽसि नारद ॥ ६ ॥
सर्वज्ञः सर्वदर्शी[1] च सर्वधर्मविदां वरः ।
गान्धर्वस्येतिहासस्य विज्ञाता त्वं महामुने ॥ ७ ॥
वयं पूताश्च मेध्याश्च त्वां दृष्ट्वा ह्यागतं विभो ।
अयं देशः पुनः पूतः सर्वतो मुनिसत्तम ॥ ८ ॥
यत्कार्यं येन वा कार्यं यद्वै मनसि वर्त्तते ।
प्रब्रूहि भगवन्नाशु यच्चान्यत्किञ्चिदुत्तमम् ॥ ९ ॥
दुर्लभं त्रिषु लोकेषु यच्च प्रियतरं तव ।
तपोमयानां सर्वेषां द्विजातीनां च सुव्रत ॥ १० ॥
इति धर्मवचः श्रुत्वा नारदः प्राह धर्मवित् ।
अहं ते कथयिष्यामि यत्पृष्टं संशयास्पदम् ॥ ११ ॥

नारद उवाच

भवान् पाता च गोप्ता च नेता धर्मस्य नित्यशः ।
सत्येन तपसा क्षान्त्या धैर्येण च न संशयः ॥ १२ ॥
भावज्ञश्च कृतज्ञश्च त्वदन्यो न हि विद्यते ।
संशयं सुमहत्प्राप्तस्तन्ममाचक्ष्व सुव्रत ॥ १३ ॥

१. सर्वशीलश्चेति वा पाठः ।

अमरत्वं कथं याति व्रतेन नियमेन च ।
केन वा दानधर्मेण तपसा वा सुरोत्तम ॥ १४ ॥
अतुलां च श्रियं लोके कीर्त्तिं च सुमहत्फलम् ।
लभन्ते शाश्वतं स्थानं दुर्लभं विगतज्वराः ॥ १५ ॥
केन गच्छन्ति नरकं पापिष्ठं लोकगर्हणम् ।
सर्वमाख्याहि तत्त्वेन परं कौतूहलं हि मे ॥ १६ ॥

यम उवाच

न गच्छन्ति नरा घोरा बहवो धर्मनिर्मितम् ।
बन्धांश्च सुबहूंस्तत्र प्राप्नुवन्ति तपोधन ॥ १७ ॥
विस्तरेण तु तत्सर्वं ब्रवीमि मुनिसत्तम ।
श्रूयतां तन्महाभाग श्रुत्वा चैवोपधारय ॥ १८ ॥
नाग्निचिन्नरकं याति न पुत्री न च भूमिदः ।
शूरश्च शतवर्षी च वेदानां चैव पारगः ॥ १९ ॥
पतिव्रता न गच्छन्ति सत्यवाक्याश्च ये नराः ।
अजिताश्चाशठाश्चैव स्वामिभक्ताश्च ये नराः ॥ २० ॥
अहिंसका न गच्छन्ति ब्रह्मचर्यव्यवस्थिताः ।
पतिव्रता दानवन्तो द्विजभक्ताश्च ये नराः ॥ २१ ॥
स्वदारनिरता दान्ताः परदारविवर्जकाः ।
सर्वभूतात्मभूताश्च सर्वभूतानुकम्पकाः ॥ २२ ॥
न गच्छन्ति तु तं देशं पापिष्ठं तमसावृतम् ।
यातनास्थानसम्पूर्णं हाहाप्रतिभयाकुलम् ॥ २३ ॥
ज्ञानवन्तो द्विजा ये च ये च विद्यापरं गताः[1] ।
उदासीना न गच्छन्ति स्वाम्यर्थे च हता नराः ॥ २४ ॥
न गच्छन्त्यत्र दातारः सर्वभूतहिते रताः ।
शुश्रूषका मातृपित्रोर्न गच्छन्ति च ये नराः ॥ २५ ॥
तिलान् गां च हिरण्यं च पृथिवीं चापि शाश्वतीम् ।
ब्राह्मणेभ्यः प्रयच्छन्ति न गच्छन्ति न संशयः ॥ २६ ॥
यथोक्तं यजमानाश्च सत्रयाजिन एव च ।
चातुर्मास्यकरा ये च ये द्विजा आहिताग्नयः ॥ २७ ॥
गुरुचित्तानुपालाश्च कृतिनो मौनयन्त्रिताः ।
नित्यस्वाध्यायिनो दान्ताः सदा सभ्याश्च ये नराः ॥२८॥

---

१. पारङ्गता इति वा पाठः ।

मां न पश्यन्ति ते चैव आत्मभावेन भाविताः ।
अपर्वमैथुना[1] ये च न गच्छन्ति जितेन्द्रियाः ।
ब्राह्मणा अमरत्वं च प्राप्नुवन्ति न संशयः ॥ २९ ॥
निवृत्ताः सर्वकामेभ्यो निराशाः सुजितेन्द्रियाः ।
न गच्छन्ति हि तद्घोरं यत्र ते पापकर्मिणः ॥ ३० ॥

नारद उवाच

किं दानं श्रेय आहोस्वित् पात्रेण फलमुच्यते[2] ।
किं वा कर्म महत् कृत्वा स्वर्गलोके महीयते ॥ ३१ ॥
रूपं वा धनधान्यं वा आयुश्च कुलमेव वा ।
प्राप्यते येन दानेन तन्ममाचक्ष्व सुव्रत ॥ ३२ ॥

यम उवाच

न शक्यं विस्तरेणेह वक्तुं वर्षशतैरपि ।
शुभाशुभानां गतयो द्रष्टुं वा प्रष्टुमेव वा ॥ ३३ ॥
किञ्चिन्मात्रं प्रवक्ष्यामि येन यत्प्राप्यते नरैः ।
विविधानि च सौख्यानि प्रायशस्तु गुणागुणैः ॥ ३४ ॥
रहस्यमिदमाख्यानं श्रूयतां मुनिसत्तम ।
या गतिः प्राप्यते येन प्रेत्यभावे न संशयः ॥ ३५ ॥
तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः ।
आयुः प्रकर्षो भोगाश्च भवन्ति तपसैव तु ॥ ३६ ॥
ज्ञानविज्ञानमारोग्यं रूपसौभाग्यसम्पदः ।
तपसा प्राप्यते भोगो मनसा[3] नोपदिश्यते ॥ ३७ ॥
एवं प्राप्नोति पुण्येन मौनेनाज्ञां महामुने ।
उपभोगांस्तु दानेन ब्रह्मचर्येण जीवितम् ॥ ३८ ॥
अहिंसया परं रूपं दीक्षया कुलजन्म च ।
फलमूलाशिनो राज्यं स्वर्गः पर्णाशिनां भवेत् ॥ ३९ ॥
पयोभक्ष्या दिवं यान्ति जायते द्रविणाच्युता[4] ।
गुरुशुश्रूषया नित्यं श्राद्धदानेन संततिः ॥ ४० ॥
गवाद्याः कालदीक्षाभिर्ये तु वा तृणशायिनः ।
स्वयं त्रिषवणाद्ब्रह्म त्वपः[5] पीत्वेष्टलोकभाक् ॥ ४१ ॥

---

१. असर्वमैथुना इति ( ग ) । २. अश्नुते इति ( ग ) ।
३. मनसा यो यदिष्यते इति ( ग ) । ४. द्रविणं तथा इति ( ग ) ।
५. त्वाप इति ( ग ) ।

ऋतुयष्टा[1] दिवं याति उपहारश्च सुव्रत।
कृत्वा तु दशवर्षाणि नीरपानाद्विशिष्यते[2] ॥ ४२ ॥
रसानां प्रतिसंहारात् सौभाग्यमनुजायते।
आमिषस्य प्रतीहाराद् भवत्यायुष्मती प्रजा ॥ ४३ ॥
गन्धमाल्यनिवृत्त्या तु मूर्त्तिर्भवति पुष्कला।
अन्नदानेन च नरः स्मृतिं मेधां च विन्दति ॥ ४४ ॥
छत्रप्रदानेन गृहं वरिष्ठं रथं तथापानहसम्प्रदानात्।
वस्त्रप्रदानेन सुरूपता च धनैश्च पुत्रैश्च भृता भवन्ति ॥ ४५ ॥
पानीयस्य प्रदानेन तृप्तिर्भवति शाश्वती।
अन्नपानप्रदानेन कामभोगैस्तु तृप्यते ॥ ४६ ॥
पुष्पोपगन्धं च फलोपगन्धं यः पादपं स्पर्शयते द्विजाय।
स स्त्रीसमृद्धं हि सुरत्नपूर्णं गृहं हि सर्वोपचितं लभेत ॥ ४७ ॥
वस्त्रान्नपानीयरसप्रदानात् प्राप्नोति तानेव नरः प्रकामम्[3]।
स्रग्धूपगन्धान्यनुलेपनानि पुष्पाणि गृह्याणि मनोरमाणि।
दत्त्वा द्विजेभ्यः स भवेत् सुरूपो रोगांश्च कांश्चिल्लभते न जातु ॥ ४८ ॥
बीजैरशून्यैः शयनाभिरामं दद्याद् गृहं यः पुरुषो द्विजाय।
स स्त्रीसमृद्धं गजवाजिपूर्णं लभेदधिष्ठानवरं वरिष्ठम् ॥ ४९ ॥
धूपप्रदानेन तथा गवाश्व लोकानवाप्नोति नरो वसूनाम्।
गजं तथा गोवृषभप्रदानैः स्वर्गे सुखं शाश्वतमामनन्ति ॥ ५० ॥
घृतेन तेजः सुकुमारतां च प्राणद्युतिः स्निग्धता चापि तैले।
क्षौद्रेण नानारसतृप्ततां च दीपप्रदानाद् द्युतिमाप्नुवन्ति ॥ ५१ ॥
पायसेन वपुः पुष्टिं कृशरात् स्निग्धसौम्यताम्।
फलैस्तु लभते पुत्रं पुष्पैः सौभाग्यमेव च ॥ ५२ ॥
रथैर्दिव्यं विमानं तु शिबिकां चैव मानवः।
प्रेक्षणैरपि सौभाग्यं प्राप्नोतीह न संशयः।
अभयस्य प्रदानेन सर्वकामानवाप्नुयात् ॥ ५३ ॥

इति वाराहपुराणे संसारचक्रे पुरुषविलोभनो नाम
सप्ताधिकद्विशततमोऽध्यायः।



१. ऋतुयष्टेति (ग)। २. वीरयानादिति (ग)।
३. वस्त्रान्नपानीयरसप्रदानात् प्राप्नोति तानेव रसप्रधानानिति (ग), वस्त्रान्नपानीरसधानात् प्राप्नोति तानेव रसप्रदानात्–इति ऐ० सो० मुद्रितपाठः।

## अष्टाधिकद्विशततमोऽध्यायः

ऋषिपुत्र उवाच

मुहूर्त्तस्य तु कालस्य दिव्याभरणभूषितान् ।
प्रयातान् दिवि संप्रेक्ष्य विमानैः सूर्यसन्निभैः ॥ १ ॥
ब्राह्मणास्तपसा सिद्धाः सपत्नीकाः सबान्धवाः ।
सानुरागा ह्युभयतो मन्युनाभिपरिप्लुताः ॥ २ ॥
विवर्णवदनो राजा प्रभातेजोविवर्जितः ।
अचिरादेव सञ्जातः क्रोधेन भृशदुःखितः ॥ ३ ॥
तं तथा निष्प्रभं दृष्ट्वा धर्मराजं तपोधनः ।
नारदश्चाब्रवीत्तत्र ज्ञात्वा तस्य मनोगतम् ॥ ४ ॥
अपि त्वं भ्राजमानस्तु पशोः पतिरिवापरः ।
कस्मात्ते शोभनं वक्त्रं क्षणाद्वैवर्णतां गतम् ॥ ५ ॥
विनिश्वसन्यथा नागः कस्मात्त्वं परितप्यसे ।
राजन् कस्माद्बिभेषि त्वमेतदिच्छामि वेदितुम् ॥ ६ ॥

यम उवाच

विवर्णं जायते वक्त्रं शुष्यते न च संशयः ।
यन्मया ईदृशं दृष्टं श्रूयतां तन्महामुने ॥ ७ ॥
यायावरास्तु ये विप्रा उञ्छवृत्तिपरायणाः ।
दृढस्वाध्यायतपसो ह्रीमन्तो ह्यनसूयकाः ॥ ८ ॥
अतिथिप्रियकाश्चैव नित्ययुक्ता जितेन्द्रियाः ।
ते त्वहंमानिनः सर्वे गच्छन्त्युपरि मे द्विज ॥ ९ ॥
न च मामुपतिष्ठन्ति न चैव वशगा मम ।
मस्तके मम गच्छन्ति सपत्नीकाः सहानुगाः ॥ १० ॥
दिव्यगन्धैर्विलिप्ताङ्गा माल्यभूषितवाससः ।
सृजन्तो मम माल्यानि तेन तप्ये द्विजोत्तम ॥ ११ ॥
मृत्यो तिष्ठसि कस्यार्थे को वा मृत्युः कथं भवेत् ।
किं त्वं न भाषसे मृत्यो ब्रूहि लोके निरर्थकः ॥ १२ ॥
लोभासक्तान्सदा हंसि[1] पापिष्ठान्धर्मवर्जितान् ।
एषां[2] तपसि सिद्धानां नाहं विग्रहवानिह[3] ॥ १३ ॥

---

१. त्वमशक्तान सदा हंसीति ( ग ) । २. येषामिति वा पाठः ।
३. विग्रहवानिवेति ( ग ) ।

निग्रहानुग्रहौ नापि मया शक्यौ महात्मनाम् ।
कर्त्तुं वा प्रतिषेद्धुं वा तेन तप्ये भृशं मुने ॥ १४ ॥
एतस्मिन्नन्तरे तत्र विमानेन महाद्युतिः ।
पतिव्रता समं भर्त्रा सानुगा सपरिच्छदा ॥ १५ ॥
महता तूर्यघोषेण सम्प्राप्ता प्रियदर्शना ।
धर्मराजहितं सर्वं धर्मज्ञा धर्मवत्सला ॥ १६ ॥
साब्रवीत्तु विमानस्था साधयन्ती शुभाङ्गना ।
विचित्रं प्रसृतं वाक्यं सर्वसत्त्वसुखावहम् ॥ १७ ॥

पतिव्रतोवाच

धर्मराज महाबाहो कृतज्ञः सर्वसम्मतः[१] ।
मैत्रमीर्षां कुरुष्व त्वं ब्राह्मणेषु तपस्विषु ॥ १८ ॥
एतेषां तपसां वीर माहात्म्यं बलमेव च ।
अचिन्त्याः सर्वभूतानां ब्राह्मणा वेदपारगाः ॥ १९ ॥
ब्राह्मणाः सततं पूज्या ब्राह्मणाः सर्वदेवताः ।
मात्सर्यं क्रोधसंयुक्त न कर्त्तव्यं द्विजातिषु ॥ २० ॥
त्वया शुभाशुभं कर्म नित्यं पूजा मनस्विनाम् ।
रागो वा रोषमोहौ वा न कर्त्तव्यौ सदा सताम् ।
प्रयाता गगने दृष्टा विद्युत्सौदामिनी यथा ॥ २१ ॥
दृष्ट्वा पतिव्रतां नारीं धर्मराजेन पूजिताम् ।
अब्रवीन्नारदस्तत्र धर्मराजं तथागतम् ॥ २२ ॥

नारद उवाच

का एषा सुमहाभागा सुरूपा प्रमदोत्तमा ।
या त्वया पूजिता राजन्हितमुक्त्वा गता पुनः ॥ २३ ॥
एतदिच्छाम्यहं ज्ञातुं परं कौतूहलं हि मे ।
एतन्मे सुमहाभाग कथयस्व समासतः ॥ २४ ॥

यम उवाच

अहं ते कथयिष्यामि कथां परमशोभनाम् ।
एषा मया यथा तात पूजिताऽपूजि कृत्स्नशः ॥ २५ ॥
पुरा कृतयुगे तात निमिर्नाम महायशाः ।
आसीद्राजा महातेजाः सत्यसन्धेति विश्रुतः ॥ २६ ॥

---

१. सत्यसम्मत इति वा पाठः ।

तस्य पुत्रो मिथिर्नाम जननाज्जनकोऽभवत् ।
तस्य रूपवती नाम पत्नी प्रियहिते रता ॥ २७ ॥
सा चापि शुभकर्माणि पतिभक्ता पतिव्रता ।
प्रीत्या परमया युक्ता भर्त्तुर्वचनकारिणी ॥ २८ ॥
सोऽपि राजा महाभागः सर्वभूतहिते रतः ।
धर्मात्मा च महात्मा च सत्यसन्धो महातपाः ॥ २९ ॥
य इमां पृथिवीं सर्वां धर्मेण परिपालयन् ।
न व्याधिर्न जरा मृत्युस्तस्मिन् राजनि शासति ॥ ३० ॥
ववर्ष सततं देवस्तस्य राष्ट्रे महाद्युतेः ।
एवं बहुगुणोपेतं तस्य राज्यं महात्मनः ॥ ३१ ॥
न कश्चिद्दृश्यते मर्त्यो रुजार्त्तो दुःखितोऽपि वा ।
अथात्र बहुकालस्य राजानं मिथिलाधिपम् ।
उवाच राज्ञी विप्रेन्द्र विनयात् प्रसृतं वचः ॥ ३२ ॥

राज्ञ्युवाच

भृत्यानां च द्विजातीनां तथा परिजनस्य च ।
यदस्ति द्रविणं किञ्चित्पृथिव्यां यद्गृहे च ते ॥ ३३ ॥
विनियुक्तं तु तत्सर्वं सान्निध्यं तु तथा त्वया ।
न च राजन्विजानासि भोजनस्य प्रशंससि ॥ ३४ ॥
नास्ति तन्नियमः कश्चित्पुष्पमूल्य च नास्ति नः ।
न वा गवादिकं किञ्चिन्न च वस्त्राणि कर्हिचित् ॥ ३५ ॥
न चैव वार्षिकः कश्चिद् विद्यते भाजनस्य च ।
दृश्यते हि महाराज मम चैवाथ सुव्रत ॥ ३६ ॥
यत्कर्त्तव्यं मया वापि तन्मे ब्रूहि नराधिप ।
करिष्याम्यहं विशेषेण यद्वाक्यमपि मन्यसे ॥ ३७ ॥

राजोवाच

न शक्यमुपरोधेन वक्तुं भामिनि विप्रियम् ।
न च पश्याम्यहं देवि तव चैव जनस्य च ॥ ३८ ॥
तद्ब्रवीमि यथाशक्त्या यदि मे मन्यसे प्रिये ।
हविष्ये वर्त्तमानानामिदं वर्षशतं गतम् ॥ ३९ ॥
कुद्दालेन हि काष्ठेन क्षेत्रं वै कुर्महे प्रिये ।
ततो धर्मविधिं तत्त्वात् प्राप्नुयां मे न संशयः ॥ ४० ॥
भक्ष्यं भोज्यं च ये ये च ततस्त्वं सुखमाप्स्यसि ।
एवमुक्ता ततो राज्ञी राजानमिदमब्रवीत् ॥ ४१ ॥

देव्युवाच

भृत्यानां तु सहस्राणि तव राजन्निवेशने ।
अश्वानां च गजानां च सौरभानां तथैव च ॥ ४२ ॥
उष्ट्राणां महिषाणां च खराणां च महायशाः ।
एते सर्वे कथं राजन्न कुर्वन्ति तवेप्सितम् ॥ ४३ ॥

राजोवाच

नियुक्तानि हि कर्माणि वार्षिकाणीतराणि च ।
सर्वकर्माणि कुर्वन्ति ये भृत्या मे वरानने ॥ ४४ ॥
बलीवर्द्दाः खरा अश्वा गजा उष्ट्रा ह्यनेकशः ।
सर्वे नियुक्ता मे देवि सर्वकर्मसु शोभने ॥ ४५ ॥
आयसं त्रपुषं ताम्रं राजतं काञ्चनं तथा ।
नियुक्तानि तु सर्वाणि सर्वकर्मस्वनिन्दिते ॥ ४६ ॥
ननु पश्याम्यहं देवि किञ्चिद्धेमं न[1] चायसम् ।
येन कुर्याम्यहं देवि कुद्दालं सुसमाहितः ॥ ४७ ॥
एवमुक्ता महादेवी तेन राज्ञा सुशोभना ।
हृष्टपुष्टमना देवी राजानमिदमब्रवीत् ॥ ४८ ॥
गच्छ राजन् यथाकाममनुयास्यामि पृष्ठतः ।
एवमुक्तः सुनिष्क्रान्तः सभार्यः स नरेश्वरः ॥ ४९ ॥
ततो राजा च देवी च क्षेत्रं मृगयतस्तदा ।
गतौ च परमाध्वानं ततो राजाब्रवीदिदम् ॥ ५० ॥
इदं भद्रं मम क्षेत्रमास्स्वात्र वरवर्णिनि ।
यावद्गुल्मानिमान् भद्रे कण्टकांश्च वरानने ॥ ५१ ॥
अहं छिनद्मि वै देवि त्वमेताञ्छोधय प्रिये ।
एष ते कर्मयोगस्तु ततः प्राप्स्यामि[2] चेप्सितम् ॥ ५२ ॥
एवमुक्ता महादेवी तेन राज्ञा तपोधन ।
उवाच मधुरं वाक्यं प्रहसन्ती नृपाङ्गना ॥ ५३ ॥
वृक्षोऽत्र दृश्यते पार्श्वे सौवर्णो गुल्म एव च ।
पानीयस्य तु सान्निध्यं न किञ्चिदिह दृश्यते ।
कथं क्षेत्रं करिष्यावो हृद्रोगस्य तु कारकम् ॥ ५४ ॥
इयं नदी ह्ययं वृक्ष इयं भूमिः समांसला ।
अस्मिन्वापि कृतं कर्म कथं गुणकरं भवेत् ॥ ५५ ॥

१. च चायसमिति (ग)। २. प्राप्स्याम चेप्सितमिति (ग)।

तस्यास्तद्वचनं श्रुत्वा राजा वचनमब्रवीत् ।
शुभं सानुनयं वाक्यं भूतानां गुणवत्सलः ॥ ५६ ॥
पूर्वग्रहे भवेत्पूर्वं विनियुक्तं तथा प्रिये ।
पानीयस्य तु पार्श्वेन सन्निकृष्टेन सुन्दरि ॥ ५७ ॥
चतुर्थंजनपर्यन्तं[1] न किञ्चिदिह दृश्यते ।
अयं ग्राहो महादेवि न च बाधाऽत्र कस्यचित् ॥ ५८ ॥
ततस्तच्छोधयामास तत्क्षेत्रं भार्यया सह ॥ ५९ ॥
वियन्मध्ये तथोग्रश्च सविता तपते सदा ।
समृद्धश्च तदा[2] तत्र निदाघः काल आगतः ॥ ६० ॥
प्रवृद्धो दारुणो धर्मः कालश्चैवातिदारुणः ।
ततः सा तृषिता देवी क्षुधिता च तपस्विनी ॥ ६१ ॥
स्निग्धौ ताम्रतलौ पादौ तस्यां सन्तापमागतौ ।
गुणप्रवाहरक्तौ तु तस्याः पादौ च सुव्रत ॥ ६२ ॥
सूर्यस्य पादा मध्यान्हे तापयन्त्यग्निसन्निभाः ।
ततः सा व्यथिता देवी भर्त्तारमिदमब्रवीत् ॥ ६३ ॥
तृषितास्मि महाराज उष्णेन पीडिता भृशम् ।
पानीयं दीयतां राजञ्छीघ्रं मम प्रसादतः ॥ ६४ ॥
इत्युक्त्वा पतिता देवी विह्वला दुःखपीडिता ।
पतन्त्या च तया सूर्यो दृष्टो विह्वलया तथा ॥ ६५ ॥
यदृच्छया पतन्त्या तु सूर्यः कोपेन वीक्षितः ।
ततो विवस्वान् भगवान् सन्त्रस्तो गगने तदा ॥ ६६ ॥
दिवं मुक्त्वा महातेजाः पतितो धरणीतले ।
ततो दृष्ट्वा तु राजासौ[3] स्वभावेन च वर्जितम् ॥ ६७ ॥
किमर्थमिह[4] तेजस्विंस्त्यक्त्वा मण्डलमागतः ।
किं करोमि महातेजाः सर्वलोकनमस्कृतः ॥ ६८ ॥
एवं ब्रुवन्तं राजानं सूर्यः सानुनयोऽब्रवीत् ।
पतिव्रता शुभाक्षी च ममैषा रुषिता भृशम् ॥ ६९ ॥
ततोऽहं पतितो राजंस्तव कार्यानुशासनः ।
अनया सदृशी नारी त्रैलोक्ये नैव विद्यते ॥ ७० ॥

---

१. 'चतुर्थं जनपर्यन्तमिति' ऐ० सो० मुद्रितपाठः ।
२. 'तथा' इति (ग) ।
३. ततो दृष्ट्वा तु तं राजेति (ग) ।
४. तेजः स्वमिति वा पाठः ।

पृथिव्यां स्वर्गलोके वा न काचिदिह दृश्यते ।
अहोऽस्याः परमं सत्त्वमहोऽस्याः परमं तपः ॥ ७१ ॥

अहो धैर्यं च शक्तिश्च तवत्रं शंसिता गुणाः ।
तथेयं ते महाभाग तव चित्तानुसारिणी ॥ ७२ ॥

अनुरूपा विशुद्धा च तपसा च वराङ्गना ।
पतिव्रता च साध्वी च नित्यं तव हिते रता ॥ ७३ ॥

सदृशी ते महाभाग शक्रस्येह यथा शची ।
पात्रं पात्रवता प्राप्तं सुकृतस्य महत्फलम् ॥ ७४ ॥
अनुरूपः सुरूपो वा यतो जातः सुयन्त्रितः ।
मा च ते वितथः कामो भवेच्चात्र नराधिप ॥ ७५ ॥

कुरुष्व दयितं चेत्रं यथा मनसि वर्त्तते ।
भोजनार्थं महाराज त्वदन्यो न हि विद्यते ॥ ७६ ॥
फलदं च सुशस्यं च भविष्यति हि कामदम् ।
एवमुक्त्वा ततः सूर्यः ससर्ज जलभाजनम् ॥ ७७ ॥

उपानहौ च छत्रं च दिव्यालङ्कारभूषितम् ।
ददौ च राज्ञे सविता प्रीत्या परमया युतः ॥ ७८ ॥
उपभोक्तुं सुखस्यार्थं सुपुण्यस्य विशेषतः ।
दत्त्वा तत्पुण्यकर्माणं ततः प्राह दिवाकरः ॥ ७९ ॥

एवमुक्त्वा तु भगवांस्तया तत्कृतवान् क्वचित् ।
राज्ञा च जनकेनैव प्रियाया हितकाम्यया ॥ ८० ॥
ततः साप्यायिता देवी तोयेन शुभलक्षणा ।
लब्धसंज्ञा गतभया राजानमिदमब्रवीत् ॥ ८१ ॥

देवी दृष्ट्वा तदाश्चर्यं विस्मयोत्फुल्ललोचना ।
केन दत्तं शुभं तोयं दिव्यं छत्रमुपानहौ ।
एतन्मे संशयं राजन् कथयस्व तपोधन ॥ ८२ ॥

राजोवाच

एष देवो महादेवि विवस्वान्नाम नामतः ।
तवानुकम्पया देवि मुक्त्वाकाशमिहागतः ॥ ८३ ॥
एवमुक्त्वा तु सा देवी भर्त्तारमिदमब्रवीत् ।
करवाण्यस्य कां प्रीतिं ज्ञायतामस्य वाञ्छितम् ॥८४॥
ततो राजा महातेजाः प्रणिपत्य कृताञ्जलिः ।
विज्ञापयामास तदा भगवान् किं करोमि ते ॥ ८५ ॥

एवमुक्तो नरेन्द्रेण सूर्यो वचनमब्रवीत् ।
अभयं मे महाराज स्त्रीभ्यो भवतु मानद ॥ ८६ ॥

तच्छ्रुत्वा वचनं तस्य भास्करस्य तु मानदः ।
तां प्रियां प्रीतहृदयां श्रावयंस्तस्य भाषितम् ॥ ८७ ॥

राज्ञस्तु वचनं श्रुत्वा देवी वचनमब्रवीत् ।
प्रीत्या परमया युक्ता तस्य राज्ञो मनःप्रिया ॥ ८८ ॥

रश्मीनां वारणार्थाय छत्रं दत्त्वा तु कुण्डिकाम् ।
इमौ चोपानहौ दत्त्वा पादस्य शङ्करावुभौ ॥ ८९ ॥

अभयं ते महाभाग यथा त्वं वृतवानसि ।
एवं पतिव्रतां विप्र पूजयामि नमामि च ॥ ९० ॥

इति वाराहपुराणे संसारचक्रे पतिव्रतोपाख्यानं नाम
अष्टाधिकद्विशततमोऽध्यायः ।



## नवाधिकद्विशततमोऽध्यायः

नारद उवाच

कर्मणा केन राजेन्द्र तपसा वा तपोधनाः ।
उत्तमां च गतिं याति कृष्णवासः प्रशंस मे ।
एवमुक्तस्तु धर्मात्मा नारदेनाब्रवीत्तदा ॥ १ ॥

यम उवाच

न तस्या नियमो विप्र तपो नैव च सुव्रत ।
उपवासो न दानं वा न देवो वा महामुने ॥ २ ॥
यादृशी तु भवेद्विप्र शृणु तत्त्वं समासतः ॥ ३ ॥
प्रसुप्ते या प्रस्वपिति जागर्ति विबुधे स्वयम् ।
भुङ्क्ते तु भोजिते विप्र सा मृत्युं जयति ध्रुवम् ॥ ४ ॥
मौने मौना भवेद्या तु स्थिते तिष्ठति या स्वयम् ।
सा मृत्युं जयते विप्र नान्यत्पश्यामि किञ्चन ॥ ५ ॥

एकदृष्टिरेकमना भर्त्तुर्वचनकारिणी ।
तस्या बिभीमहे सर्वे ये तथान्ये तपोधन ।
देवानामपि सा साध्वी पूज्या परमशोभना ॥ ६ ॥
भर्त्रा चाभिहिता यापि न प्रत्याख्यायिनी भवेत् ।
वर्त्तमानापि विप्रेन्द्र प्रत्याख्यातापि वा सदा ॥ ७ ॥
न दैवतं सम्प्रयाति पत्युरन्यं कदाचन ।
सा न मृत्युमुखं याति एवं या स्त्री पतिव्रता ॥ ८ ॥
एवं या तु भवेन्नित्यं भर्त्तुः प्रियहिते रता ।
अनुवेष्टनभावेन भर्त्तारमनुगच्छति ॥ ९ ॥

सा तु मृत्युमुखद्वारं न गच्छेद् ब्रह्मसम्भव ।
एष माता पिता बन्धुरेष मे दैवतं परम् ॥ १० ॥
एवं शुश्रूषते या तु सा मां विजयते सदा ।
पतिव्रता तु या साध्वी तस्यां चाहं कृताञ्जलिः ॥ ११ ॥
भर्त्तारमनुध्यायन्ती भर्त्तारमनुगच्छति ।
भर्त्तारमनुशोचन्ती मृत्युद्वारं न पश्यति ॥ १२ ॥
गीतवादित्रनृत्यानि प्रेक्षणीयान्यनेकशः ।
न शृणोति न पश्येत मृत्युद्वारं न पश्यति ॥ १३ ॥

स्नायन्ती तिष्ठती वापि कुर्वन्ती वा प्रसाधनम् ।
नान्यं या मनसा पश्येन्मृत्युद्वारं न पश्यति ॥ १४ ॥

देवता अर्च्चयन्तं वा भोजमानमपि द्विजान् ।
पति न त्यजते चित्तान्मृत्युद्वारं न पश्यति ॥ १५ ॥

भानौ चानुदिते वापि उत्थाय च तपोधनाः ।
गृहं मार्जयते नित्यं मृत्युद्वारं न पश्यति ॥ १६ ॥

चक्षुर्देहश्च भावश्च यस्या नित्यं सुसंवृतम् ।
शौचाचारसमायुक्ता सापि मृत्युं न पश्यति ॥ १७ ॥

भर्त्तुर्मुखं प्रपश्येद् या भर्त्तुश्चित्तानुसारिणी ।
वर्त्तते च हिते भर्त्तुर्मृत्युद्वारं न पश्यति ॥ १८ ॥

एवं कीर्त्तिमतां लोके दृश्यन्ते दिवि देवताः ।
मानुषाणां च भार्या वै तत्र देशे तु दृश्यते ॥ १९ ॥

कथितैव पुरा विप्र आदित्येन पतिव्रता ।
मया तस्मात्तु विप्रर्षे यथा वृत्तं यथा श्रुतम्[१] ।
गुह्यमेतत्ततो दृष्ट्वा पूजयामि पतिव्रताः ॥ २० ॥

इति वाराहपुराणे संसारचक्रे पतिव्रतामाहात्म्यं नाम
नवाधिकद्विशततमोऽध्यायः ।



१. यथासुखमिति ( ग ) ।

## दशाधिकद्विशततमोऽध्यायः

नारद उवाच

रहस्यं धर्ममाख्यानं त्वयोक्तं तु महायशः।
स्त्रीणां माहात्म्यमुद्दिश्य भास्करस्य मतं यथा ॥ १ ॥
इदं हि सर्वभूतेषु परं कौतूहलं मम।
तदहं श्रोतुमिच्छामि कथयस्व महातपः ॥ २ ॥

ये नरा दुःखसन्तप्तास्तपस्तीव्रं समाश्रिताः।
नानाव्रतशतोपायैः सुखहेतोर्महाप्रभ ॥ ३ ॥
मनसा निश्चितात्मानस्त्यक्त्वा सर्वप्रियाप्रियम्।
काङ्क्षन्ते बहवः केचित् केनचिद्विनिहन्यते ॥ ४ ॥

श्रुता लोके श्रुतिस्तात श्रेयोधर्मा हि नित्यशः।
सम्यकृकृच्छ्राश्रितस्याथ कथं पापे मतिर्भवेत् ॥ ५ ॥
कस्यैतच्चेष्टितं तात कर्त्ता कारयिताऽपि वा।
कः कर्षति जगच्चैकोभूतग्रामं चतुर्विधम् ॥ ६ ॥

कं वा द्वेषं पुरस्कृत्य मतिस्तस्य प्रवर्त्तते[1]।
सुखदुःखादि लोकेऽस्मिन् प्रकरोति सुदारुणम् ॥ ७ ॥
यद्येवं तु मया गुह्यं दुर्विज्ञेयं सुरैरपि।
शक्यं श्रोतुं महाराज तदाख्याहि तपोधनाः ॥ ८ ॥
नारदेनैवमुक्तस्तु धर्मराजो महामनाः।
विनयात् प्रसृतं वाक्यमिदमाह महामुनिः[2] ॥ ९ ॥

यम उवाच

देवर्षे श्रूयतां पुण्यं यद्ब्रवीषि महामुने।
त्वदुक्त्या मे कथयतः शृणुष्वावहितोऽनघ ॥ १० ॥
[3]न कश्चिद्दृश्यते लोके कर्त्ता कारयितापि वा।
यद्वै परमधर्मात्मन् यस्मिन् कर्म प्रतिष्ठितम् ॥ ११ ॥

यस्य वै कीर्त्यते नाम येन [4]चाज्ञाप्यते जगत्।
व्याहरामि वचश्चाहं यः करोति स्वयं कृतम् ॥ १२ ॥

---

१. मतिस्तस्य च वर्तते इति (ग)। २. महामतिरिति (ग)।
३. किं कश्चिदिति वा पाठः। ४. वा ज्ञाप्यते इति (ग)।

दिव्येऽस्मिन् सदसि ब्रह्मन् ब्रह्मर्षिगणसंवृते ।
यथाश्रुतं यथादृष्टं कथयिष्याम्यहं विभो ॥ १३ ॥
स्वकर्म भुज्यते तात सम्भूतैर्यत्कृतं स्वयम् ।
आत्मानं पातयत्यात्मा किञ्चित्कर्म च कारयेत् ॥ १४ ॥
वायुना भाविता संज्ञा संसारे सा दृढीकृता ।
तामेव भजते जन्तुः सुकृतं वाथ दुष्कृतम् ॥ १५ ॥
अभिघाताभिभूतस्तु आत्मनात्मानमुद्धरेत् ।
आत्मा शत्रुश्च बन्धुश्च न कश्चिद्बन्धुरात्मनः ॥ १६ ॥
बन्धुं बन्धुपरिक्लेशं निर्मितं पूर्वकर्मभिः ।
जगत्यामुपभुङ्क्ते वै जीवो योनिशतैरपि ॥ १७ ॥
मिथ्याप्रवृत्तः शब्दोऽयं जगद्भ्रमति सर्वशः ।
यावत् तत्कुरुते कर्म तावत् कर्म स्वयं कृतम् ॥ १८ ॥
यथा यथा क्षयं याति अशुभं पुरुषस्य वै ।
तथा तथा शुभा बुद्धिर्मनुजस्य प्रवर्त्तते ॥ १९ ॥
संसारे प्राप्तदोषस्य जायमानस्य देहिनः ।
पततां च गतो भावः पापकर्मक्षयेन तु ।
शुभाशुभकरीं बुद्धिं लभते पौर्वदैहिकीम् ॥ २० ॥
दुष्कृतैः कर्मभिर्देही शुभैर्वा स्वयमर्जितैः ।
क्लेशक्षयं पापहरं शुभं कर्म करोत्यथ ॥ २१ ॥
शुभाशुभं प्राप्य नरः कर्माकर्म तथैव च ।
विवृते विमले कर्मण्यमरेषु महीयते ॥ २२ ॥
स्वर्गः शुभफलप्राप्तिर्निरयः पापसम्भवः ।
नैव कश्चित्प्रदाता च नाऽपहर्त्ता प्रदृश्यते ॥ २३ ॥

नारद उवाच

यद्येवं स्वकृतं कर्म समन्वेति शुभाशुभम् ।
शुभस्येह भवेद्वृद्धिरशुभस्य क्षयोऽपि वा ॥ २४ ॥
मनसा कर्मणा वापि तपसा चरितेन वा ।
यथा न रोहते जन्तुस्तथा त्वं वक्तुमर्हसि ॥ २५ ॥

यम उवाच

इदं पुण्यं पवित्रं च अशुभानां शुभप्रदम् ।
कीर्त्तयिष्यामि ते सम्यक् पापदोषक्षयं सदा ॥ २६ ॥
प्रणम्य शिरसा सम्यक् पापपुण्यकराय च ।
कर्त्रे जगतो नित्यं विश्वस्य जगतो ह्यहम् ॥ २७ ॥

येन सृष्टमिदं सर्वं त्रैलोक्यं सचराचरम् ।
अनादिमध्यनिधनं दुर्विज्ञेयं सुरासुरैः ॥ २८ ॥
यः समः सर्वभूतेषु जितात्मा शान्तमानसः ।
स पापेभ्यो विमुच्येत ज्ञानवान् सर्ववेदवित् ॥ २९ ॥
तत्त्वार्थं वेत्ति यः सम्यक् पुरुषं प्रकृतिं तथा ।
ज्ञात्वा वा यो न मुह्येत पदं प्राप्नोति शाश्वतम् ॥ ३० ॥
गुणागुणपरिज्ञाता ह्यक्षयस्य क्षयस्य च ।
ध्यानेनैव ह्यसंमूढः स पापेभ्यः प्रमुच्यते ॥ ३१ ॥
स्वदेहे परदेहे च सुखदुःखेन नित्यशः ।
विचारज्ञो भवेद् यस्तु स मुच्येतैनसा ध्रुवम् ॥ ३२ ॥
अहिंस्रः सर्वभूतेषु तृष्णाक्रोधविवर्जितः ।
शुभन्यायं सदा यश्च स पापेभ्यः प्रमुच्यते ॥ ३३ ॥
प्राणायामैश्च निगृह्य अधः सन्धारणानि च ।
व्यवस्थितमना यस्तु स पापेभ्यः प्रमुच्यते ॥ ३४ ॥
निराशः सर्वतस्तिष्ठेदिष्टार्थेषु न लोलुपः ।
परीतात्मा त्यजेत् प्राणान् सर्वपापात् प्रमुच्यते ॥ ३५ ॥
श्रद्दधानो जितक्रोधः परद्रव्यविवर्ज्जकः ।
अनसूयश्च यो मर्त्यः स पापेभ्यः प्रमुच्यते ॥ ३६ ॥
गुरुशुश्रूषया युक्तस्त्वहिंसानिरतश्च यः ।
अक्षुद्रशीलस्तु नरः स पापेभ्यः प्रमुच्यते ॥ ३७ ॥
प्रशस्तानि च यः कुर्यादप्रशस्तानि वर्जयेत् ।
मङ्गलपरमो यश्च स पापेभ्यः प्रमुच्यते ॥ ३८ ॥
योऽभिगच्छति तीर्थानि विशुद्धेनान्तरात्मना ।
पापादुपरतो नित्यं स पापेभ्यः प्रमुच्यते ॥ ३९ ॥
उत्थाय ब्राह्मणं गच्छेन्नरो भक्त्या समन्वितः ।
अभिगम्य प्रदानेन स पापेभ्यः प्रमुच्यते ॥ ४० ॥

नारद उवाच

एतच्छ्रेयो हितं चैव सर्वेषां वै परन्तप ।
उपपन्नं च युक्तं च तत्त्वया समुदाहृतम् ॥ ४१ ॥
विविधैः कारणोपायैः सम्यक्कृत्वार्थदर्शितैः ।
संशयोऽभून्मम पुरा स त्वया नाशितः प्रभो ॥ ४२ ॥
ततोऽप्यल्पतरश्चेत् स्यादुपायो योगवित्तम ।
कथ्यतां मे महाभाग येन पापं प्रणश्यति ॥ ४३ ॥

दुष्करं पूर्वमुक्तं हि योगधर्मस्य साधनम् ।
पापापहरणं लोके यदन्यत् सुखसाधनम् ॥ ४४ ॥
अल्पोपायकरं चैव सुखोपायं च सर्वशः ।
येन पापकृतान् दोषान् वापोहति सुदारुणान् ॥ ४५ ॥
आत्मायताश्च ये नित्यं न च विस्तारविस्तरः ॥ ४६ ॥
गुणैश्च विविधैर्युक्ता इह लोके परत्र च ।
कर्मणामशुभानां च विविधोत्पत्तिजन्मनाम् ।
यः समर्थः स्फोटयितुं तन्मे ब्रूहि महातपः ॥ ४७ ॥

यम उवाच

यथा स भगवानाह धर्ममेतं प्रजापतिः ।
तदहं भावयिष्यामि नमस्कृत्य स्वयम्भुवे ॥ ४८ ॥
लोकानां श्रेयसोऽर्थं तु पापानां तु विनाशनम् ।
क्रियाकारनियोगं च प्राच्यमानं निबोध मे ॥ ४९ ॥
कैवल्यमभिसंपन्नो श्रद्दधानो भवेन्नरः ।
अनन्यमानसः कुर्याद् यथा धर्मानुशासनम् ॥ ५० ॥
प्राप्नुयादीप्सितान् कामान् पापैर्मुक्तो यथासुखम् ।
यः कुर्याद्धर्मसंयुक्तं विशुद्धेनान्तरात्मना ॥ ५१ ॥
यस्तु कारयते रूपं शिशुमारं प्रजापतिम् ।
दृष्ट्वा नमस्येत् प्रयतः स पापेभ्यः प्रमुच्यते ॥ ५२ ॥
यदा तस्य शरीरस्थं सोमं पश्येत् समाहितः ।
महापातकनाशस्तु तदा तस्य विधीयते ॥ ५३ ॥
ललाटे तूत्थितं दृष्ट्वा मुच्यते च स पातकैः ।
कण्ठस्थं पातकैः सर्वैर्हृदिस्थं च कृताकृतैः ॥ ५४ ॥
मनसा कर्मणा वाचा यत्किञ्चित्कलुषं कृतम् ।
उदरस्थं तु तं दृष्ट्वा मुच्यते नात्र संशयः ॥ ५५ ॥
वाङ्मनोभिः कृतानां तु पापानां विप्र मोक्षणम् ।
यदा लाङ्गूलकण्ठे तु स्थितं पश्येद् दिवाकरम् ॥ ५६ ॥
तदा स दुष्कृतान् सर्वान् विनाशयति मानवः ।
यदा सोमं गुरुं सर्वं यः कुर्यात् तु प्रदक्षिणम् ॥ ५७ ॥
ध्यायेत ह्यक्षयं यस्तु स पापेभ्यः प्रमुच्यते ।
भृगुर्बुधः शनैश्चरो लोहिताङ्गश्च वीर्यवान् ॥ ५८ ॥
सौम्यरूपो यदा चन्द्रः कुरुते च प्रदक्षिणाम् ।
हृदि कृत्वा तु तत्पापं यो ध्यायेदक्षरं शुचिः ॥ ५९ ॥

तदा निर्मलतां याति चन्द्रमाः शारदो यथा ।
प्राणायामशतं कृत्वा सर्वपापैः प्रमुच्यते ॥ ६० ॥

जघनस्थं शुचिर्दृष्ट्वा नरश्चन्द्रमसं मुने ।
नमस्येत् प्रयतो भूत्वा सर्वपापैः प्रमुच्यते ॥ ६१ ॥

आर्द्रस्थमार्द्रकर्मा तु ध्यात्वा चाष्टशताक्षरम् ।
यदा चन्द्रश्च सूर्यश्च द्वावन्योऽन्यं प्रपश्यतः ॥ ६२ ॥

सम्पूर्णौ विमलौ सम्यग् भ्राजमानौ[1] स्वतेजसा ।
कृत्वा हृदि तथा पापं यो ध्यायेत् परमाव्ययम् ॥ ६३ ॥

वामनं ब्राह्मणं दृष्ट्वा वाराहं च जलोत्थितम् ।
धरणी चोद्धृता येन सिंहं चापि महामुने ॥ ६४ ॥

नमस्येद्वै पयोभक्षः स पापेभ्यः प्रमुच्यते ।
प्राणायामं च यः कुर्यात् सोऽपि पापात् प्रमुच्यते ॥६५॥

इति वाराहपुराणे भगवच्छास्त्रे संसारचक्रे
दशाधिकद्विशततमोऽध्यायः ।

---

१. भ्राजमान इति ख॰ पाठः ।

## एकादशाधिकद्विशततमोऽध्यायः

ऋषिपुत्र उवाच

एतच्छ्रुत्वा शुभं वाक्यं धर्मराजस्य नारदः।
इमं भावेन भक्त्या च पुनर्वचनमब्रवीत् ॥ १ ॥

नारद उवाच

समः सर्वेषु भूतेषु स्थावरेषु चरेषु च।
धर्मराज महाबाहो पितुस्तुल्यपराक्रम ॥ २ ॥
ब्राह्मणानां हितार्थाय यदुक्तं मे प्रदक्षिणम्।
इदं श्रेयः समाख्यानं श्रुतं श्रुतपरं पदम् ॥ ३ ॥

त्रयो वर्णा महाभाग यज्ञसामान्यभागिनः।
शूद्रा वेदपवित्रेभ्यो ब्राह्मणैस्तु बहिष्कृताः ॥ ४ ॥
यथैव सर्वसमता तव भूतेषु मानद।
तथैव तेषामपि हि श्रेयो वाच्यं महामते।
यथा कर्महितं वाक्यं शूद्राणामपि कथ्यताम् ॥ ५ ॥

यम उवाच

अहं ते कथयिष्यामि चातुर्वर्ण्यस्य नित्यशः।
यद्धितं धर्मयुक्तं च नित्यं भवति सुव्रत ॥ ६ ॥
केवलं श्रुतिसंयोगाच्छ्रद्धया नियमेन च।
करोति पापनाशार्थमिदं वक्ष्यामि तच्छृणु ॥ ७ ॥

गावः पवित्रा मङ्गल्या देवानामपि देवताः।
यस्ताः शुश्रूषते भक्त्या स पापेभ्यः प्रमुच्यते ॥ ८ ॥

सौम्ये मुहूर्त्ते संयुक्ते पञ्चगव्यं तु यः पिबेत्।
यावज्जीवकृतात् पापात् तत्क्षणादेव मुच्यते ॥ ९ ॥

लाङ्गूलेनोद्धृतं तोयं मूर्ध्ना गृह्णाति यो नरः।
सर्वतीर्थफलं प्राप्य सर्वपापैः प्रमुच्यते ॥ १० ॥

प्रस्रवेन च यः स्नायाद् रोहिण्यां मानवे द्विज।
सर्वपापकृतान् दोषान् दहत्याशु न संशयः ॥ ११ ॥

धेनुस्तनाद् विनिष्क्रान्तां धारां क्षीरस्य यो नरः।
शिरसा प्रतिगृह्णाति स पापेभ्यः प्रमुच्यते ॥ १२ ॥

ब्राह्मणस्तु सदा स्नातो भक्त्या परमया युतः ।
नमस्येत् प्रयतो भूत्वा स पापेभ्यः प्रमुच्यते ॥ १३ ॥
उदयाग्निःसृतं सूर्यं भक्त्या परमया युतः ।
नमस्येत् प्रयतो भूत्वा स पापेभ्यः प्रमुच्यते ॥ १४ ॥

दध्यक्षताञ्जलीभिस्तु त्रिभिः पूजयते शुचिः[1] ।
तस्य भानुः प्रसन्नश्च अशुभं यत्समर्जितम् ।
तस्य भानुः स संदह्य दूरीकुर्यात् सदा द्विज ॥ १५ ॥

पावकं दधिमिश्रं तु पात्रे औदुम्बरे स्थितम् ।
सोमाय पौर्णमास्यां हि दत्त्वा पापैः प्रमुच्यते ॥ १६ ॥
अरुन्धतीं बुधं चैव तथा सर्वान् महामुनीन् ।
अभ्यर्च्य वेदविधिना तेभ्यो दत्त्वा च पावकम् ॥ १७ ॥
एकाग्रमानसो भूत्वा यो नमस्येत् कृताञ्जलिः ।
किल्विषं तस्य वै सर्वं तत्क्षणादेव नश्यति ॥ १८ ॥
द्विजं शुश्रूषते यस्तु तर्पयित्वातिभक्तितः ।
नमस्येत् प्रयतो भूत्वा स पापेभ्यः प्रमुच्यते ॥ १९ ॥

विषुवेषु[2] च योगेषु शुचिर्दत्त्वा पयो नरः ।
तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति ॥ २० ॥
प्राचीनाग्रान् कुशान् कृत्वा स्थापयित्वा वृषं नरः ।
द्विजैः सह नमस्कृत्य सर्वपापैः प्रमुच्यते ॥ २१ ॥
दक्षिणावर्तसव्येन कृत्वा प्राक्स्रोतसं नदीम् ।
कृत्वाऽभिषेकं विधिवत् ततः पापात् प्रमुच्यते ॥ २२ ॥

दक्षिणावर्तशङ्खेन कृत्वा चैव करे जलम् ।
शिरसा तद्गृहीत्वा तु विप्रो हृष्टमनाः शुचिः ।
तस्य जन्मकृतं पापं तत्क्षणादेव नश्यति ॥ २३ ॥
प्राक्स्रोतसं नदीं गत्वा नाभिमात्रजले स्थितः ।
स्नात्वा कृष्णतिलैर्मिश्रा दद्यात् सप्ताञ्जलीर्नरः ॥ २४ ॥
प्राणायामत्रयं कृत्वा ब्रह्मचारी जितेन्द्रियः ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥ २५ ॥
अच्छिद्रपद्मपत्रेण सर्वरत्नोदकेन तु ।
त्रिशो यस्तु नरः स्नायात् सर्वपापैः प्रमुच्यते ॥ २६ ॥

---

१. यस्त्रिभिः पूजयेत् शुचिरिति वा पाठः ।
२. विषुवत्येव योगेष्विति पाठान्तरम् ।

अन्यच्च ते प्रवक्ष्यामि गुह्याद् गुह्यतरं मुने।
कार्तिके मलपक्षे तु स्मृता ह्येकादशी तिथिः ॥ २७ ॥
भुक्तिमुक्तिप्रदा या तु नाम्ना ख्याता प्रबोधिनी।
या सा विष्णोः परा मूर्त्तिरव्यक्तानेकरूपिणी।
सा क्षिप्ता मानुषे लोके द्वादशी मुनिपुङ्गव ॥ २८ ॥
ये उपोष्यन्ति विधिवन्नारायणपरायणाः।
न तेषामशुभं किञ्चित् जन्मकोटिकृतं मुने ॥ २९ ॥
एकादशीं समाश्रित्य पुरा पृष्टो महेश्वरः।
वाराहरूपी धरया सर्वलोकहिताय वै ॥ ३० ॥

धरण्युवाच

अस्मिन् कलियुगे घोरे नराः पापरताः प्रभो।
ब्रह्मस्वहरणे युक्ता तथा ब्राह्मणघातकाः ॥ ३१ ॥
गुरुद्रोहरता देव मित्रद्रोहरतास्तथा।
स्वामिद्रोहरताश्चैव परदाराभिमर्शकाः ॥ ३२ ॥
परद्रव्यापहारे हि संसक्ताश्च सुरेश्वर।
अभक्ष्यभक्षणरता वेदब्राह्मणनिन्दकाः ॥ ३३ ॥
दाम्भिका भिन्नमर्यादा नायमस्तीति वादिनः।
असत्प्रतिग्रहे सक्ता अगम्यागमने रताः ॥ ३४ ॥
एतैश्चान्यैश्च पापैश्च संसक्ता ये नरा विभो।
किमासाद्य गतिर्देव तेषां वद सुरेश्वर[1] ॥ ३५ ॥

वराह उवाच

साधु देवि महाभागे यत्पृष्टोऽहं वरानने।
रहस्यं ते प्रवक्ष्यामि लोकानां हितकाम्यया ॥ ३६ ॥
महापातकयुक्ता ये नराः सुकृतवर्जिताः।
तेषां मया हितार्थाय निर्मितं तच्छृणुष्व मे ॥ ३७ ॥
या सा विष्णोः परा शक्तिरव्यक्तानेकरूपिणी।
स मर्त्ये निर्मिता भूमे द्वादशी रूपधारिणी ॥ ३८ ॥
तामुपोष्य नरा भद्रे महापापरताश्च ये।
पुण्यपापविनिर्मुक्ता गच्छन्ति पदमव्ययम् ॥ ३९ ॥
उपायोऽतः परो नान्यो विद्यते हि वसुन्धरे।
एकादशीं विना येन सर्वपापक्षयो भवेत् ॥ ४० ॥

---

१. तेषां देव सुरेश्वर इति वा पाठः।

यथा शुक्ला तथा कृष्णा उपोष्य सा प्रयत्नतः।
शुक्ला भक्तिप्रदा नित्यं कृष्णा मुक्तिं प्रयच्छति ॥ ४१ ॥
तस्मात् सर्वप्रयत्नेन कर्त्तव्या द्वादशी सदा।
यदीच्छेद् वैष्णवं लोकं गन्तुं वै भूतधारिणि ॥ ४२ ॥
वाचा च मनसा चैव कर्मणा समुपार्जितम्।
पापं मासकृतं पुंसां दहत्येकादशी कृता ॥ ४३ ॥
दहन्तीह[1] पुराणानि भूयो भूयो वरानने।
न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ॥ ४४ ॥
यदीच्छथ नरा गन्तुं तद्विष्णोः परमं पदम्।
न भोक्तव्यं न भोक्तव्यं तदा केशववासरे ॥ ४५ ॥
ऊर्द्ध्वबाहुर्विरौम्येष प्रलापं मे शृणुष्व तम्।
आराधयस्व विश्वेशमेकादश्यामतन्द्रितः ॥ ४६ ॥
न शङ्खेन पिबेत् तोयं न हन्यान्मत्स्यसूकरौ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥ ४७ ॥
स ब्रह्महा सुरापश्च स स्तेयी गुरुतल्पगः।
एकादश्यां तु यो भुङ्क्ते पक्षयोरुभयोरपि ॥ ४८ ॥
किं तेन न कृतं पापं दुर्वृत्तेनात्मघातिना।
एकादश्यां विशालाक्षि भुक्तं येन विजानता ॥ ४९ ॥
एकादशीं च यः शुक्लामसमर्थ उपोषितुम्।
तदा नक्तं प्रकर्त्तव्यं तथाऽयाचितमेव वा ॥ ५० ॥
एकभक्तेन दानेन कर्त्तव्यं द्वादशीव्रतम्।
न करोति यदा भूमे व्रतं वा दानमेव वा ॥ ५१ ॥
महापातकभागी स्यात् सुगतिं नाप्नुयात् क्वचित्।
उपवासासमर्थानां तथैव पृथुलोचने ॥ ५२ ॥
एका सा द्वादशी पुण्या सोपोष्या सा प्रबोधिनी।
तस्यामाराध्य विश्वेशं जगतामीश्वरेश्वरम्।
प्राप्नोति सकलं चैतद् द्वादश द्वादशीफलम् ॥ ५३ ॥
पूर्वभद्रपदायोगे सैव या द्वादशी भवेत्।
अतीव महती तस्यां सर्वं कृतमिहाक्षयम् ॥ ५४ ॥
उत्तराभाद्रसहिता यदि सैकादशी भवेत्।
तदा कोटिगुणं पुण्यं केशवाल्लभते फलम् ॥ ५५ ॥

---

१. रटन्तीहेति वा पाठः।

सकृद्देवार्चिते तस्यां लभते भूतधारिणि ॥ ५६ ॥
यथा प्रबोधिनी पुण्या तथा यस्यां स्वपेद्धरिः ।
उपोष्या हि महाभागे अनन्तफलदा हि सा ॥ ५७ ॥
शयने बोधने चैव हरेस्तु परिवर्तने ।
उपोष्यैव विधानेन नरो निर्मलतां व्रजेत् ॥ ५८ ॥
तस्मात् सर्वप्रयत्नेन द्वादशी समुपोषयेत् ।
यदीच्छेत विशालाक्षि शाश्वतीं गतिमात्मनः ॥ ५९ ॥
एकादशी सोमयुता कार्तिके मासि भामिनि ।
उत्तराभाद्रसंयोगे अनन्तफलदा हि सा ॥ ६० ॥
तस्यां यत्क्रियते भद्रे तदनन्तगुणं स्मृतम् ।
एकादशी भौमयुता यदा स्याद् भूतधारिणि ॥ ६१ ॥
स्नात्वा देवं समभ्यर्च्य प्राप्नोति परमं फलम् ।
प्राप्नोति सकलं चैव द्वादशद्वादशीफलम् ॥ ६२ ॥
जलपूर्णं तथा कुम्भं स्थापयित्वा विचक्षणः ।
पञ्चरत्नसमोपेतं घृतपात्रयुतं तथा ॥ ६३ ॥
तस्योपरि न्यसेन्मत्स्यस्वरूपं[1] तु जनार्दनम् ।
[2]निष्कमात्रसुर्णेन घटितं तु वरानने ॥ ६४ ॥
पञ्चामृतेन संस्नाप्य कुङ्कुमेन विलेपितम् ।
पीतवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितम्[3] ।
पूजयेत् कमलैर्देवि मद्भक्तः संयतेन्द्रियः ॥ ६५ ॥
मत्स्यं कूर्मं वराहं च नरसिंहं च वामनम् ।
रामं रामं च कृष्णं च बुद्धं चैव च कल्किनम् ॥ ६६ ॥
एवं दशावतारांश्च पूजयेद्भक्तिसंयुतः ।
पुष्पैर्धूपैस्तथा दीपैर्नैवेद्यैर्विविधैरपि ॥ ६७ ॥
सम्पूज्यैवमलङ्कारैर्विविधैरुपशोभितम् ।
रात्रौ चोत्थापनं कार्यं देवदेवस्य सुव्रते ॥ ६८ ॥
प्रभाते विमले स्नात्वा भक्त्या सम्पूज्य केशवम् ।
पुष्पधूपादिनैवेद्यैः फलैर्नानाविधैः शुभैः ॥ ६९ ॥
ततस्तु पूजयेद् विद्वानाचार्यं भक्तिसंयुतः ।
अलङ्कारोपहारैश्च वस्त्राद्यैश्च स्वशक्तितः[4] ॥ ७० ॥

१. तस्य स्वरूपं तु इति क्वचित्पाठः । २. मासमात्रमिति वा पाठः ।
३. पीतवस्त्रयुगच्छत्र-क्षत्रोपानद्युगान्वितम् इति ( ग ) ।
४. 'सोपहारैश्च वस्त्राद्यैरलङ्कारैः स्वशक्तितः' इति वा पाठः ।

पूजयित्वा विधानेन तं देवं प्रतिपादयेत् ॥ ७१ ॥
जगदादिर्जगद्रूपो जगदादिरनादिमान् ।
जगदादिर्जगद्योनिः प्रीयतां मे जनार्दनः ॥ ७२ ॥
अनेनैव विधानेन कुर्यादेकादशीव्रतम् ।
तस्य पुण्यं भवेद् यत्तु तच्छृणुष्व वसुन्धरे ॥ ७३ ॥
यदि वक्त्रसहस्राणां सहस्राणि भवन्ति हि ।
संख्यातुं नैव शक्यन्ते प्रबोधिन्यास्तथा गुणाः ॥ ७४ ॥
तथाप्युद्देशमात्रेण शक्त्या वक्ष्यामि तच्छृणु ।
चन्द्रतारार्कसङ्काशमधिष्ठायानुजीविभिः ।
सहैव यानमागच्छेन्मम लोकं वसुन्धरे ॥ ७५ ॥
ततः कल्पसहस्रान्ते सप्तद्वीपेश्वरो भवेत् ।
आयुरारोग्यसम्पन्नो जन्मातीतो भवेत्ततः ॥ ७६ ॥
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ।
पापान्येतानि सर्वाणि श्रवणेनैव नाशयेत् ॥ ७७ ॥
पश्येच्च धीमानधनोऽपि भक्त्या स्पृशेन्मनुष्यं इह धीयमानः ।
शृणोति भक्तस्य मतिं ददाति विकल्मषः सोऽपि दिवं प्रयाति ॥ ७८ ॥
दुःस्वप्नः प्रशममुपैति पठ्यमाने माहात्म्ये भवभयहारके नरस्य ।
यः कुर्याद् व्रतवरमेतदन्ययायाः बोधिन्याः किमुत फलं तु तस्य वाच्यम् ॥७९॥
ते धन्यास्ते कृतार्थाश्च तैरेव सुकृतं कृतम् ।
तैरात्मजन्म सफलं कृतं ये व्रतकारकाः ॥ ८० ॥
नारायणाच्युतानन्त वासुदेवेति यो नरः ।
सततं कीर्तयेद् भूमे याति मल्लयतां प्रिये ॥ ८१ ॥
किं पुनः श्रद्धया युक्तः पूजयेन्मामनन्यधीः ।
गुरूपदिष्टमार्गेण याति मल्लयतां नरः ॥ ८२ ॥
तस्य यज्ञवराहस्य विष्णोरमिततेजसः ।
प्रयाणं ये च कुर्वन्ति ते पूज्याः सततं सुरैः ॥ ८३ ॥
तस्मात् सुनियतैर्भाव्यं वैष्णवं मार्गमास्पदम् ।
दुर्लभं वैष्णवत्वं हि त्रिषु लोकेषु सुन्दरि ॥ ८४ ॥
जन्मान्तरसहस्रेषु समाराध्य वृषध्वजम् ।
वैष्णवत्वं लभेत् कश्चित् सर्वपापक्षये सति ॥ ८५ ॥
पापक्षयमवाप्नोति ईश्वराराधने कृते ।
ज्ञानमन्विच्छता रुद्रं पूजयेत् परमेश्वरम् ॥ ८६ ॥

मामाराध्य तथा याति तद्विष्णोः परमं पदम् ।
वैष्णवा हि महाभागाः पुनन्ति सकलं जगत् ॥ ८७ ॥

संस्मृतः कीर्त्तितो वाऽपि दृष्टः स्पृष्टोऽसि वा प्रिये ।
पुनाति भगवद्भक्तश्चाण्डालोऽपि यदृच्छया ॥ ८८ ॥

एतज्ज्ञात्वा तु विद्वद्भिः पूजनीयो जनार्दनः ।
वेदोक्तविधिना भद्रे आगमोक्तेन वा सुधीः ॥ ८९ ॥

यम उवाच

एतच्छ्रुत्वा महाभागा धरणी शंसितव्रता ।
समाराध्य जगन्नाथं विधिना तल्लयं गताः ।
अतो यत्नेन वै साध्यं वैष्णवत्वं विपश्चिता ॥ ९० ॥

ये वैष्णवा महात्मानो विष्णुपूजनतत्पराः ।
तेषां नैवास्त्ययं लोको यान्ति तत्परमं पदम् ॥ ९१ ॥

ये सकृद्द्वादशीमेतामुपोष्यन्ति विधानतः ।
प्रबोधनाख्यां सुधियस्ते यान्ति परमं पदम् ॥ ९२ ॥

न यमं यातनादण्डान्नरकं न च किङ्करान् ।
पश्यन्ति द्विजशार्दूल इति सत्यं मयोदितम् ॥ ९३ ॥

एतत्ते सर्वमाख्यातं यथादृष्टं यथा श्रुतम्[1] ।
कथितं मे महाभाग यत्त्वया परिपृच्छितम् ॥ ९४ ॥

स्वयंभुवा यथा प्रोक्तं गुह्याख्यानं महामुने ।
तत्ते सर्वं समासेन आख्यातं[2] धर्मवत्सल ॥ ९५ ॥

इति वाराहपुराणे प्रबोधिनीमाहात्म्यं नाम
एकादशाधिकद्विशततमोऽध्यायः ।



१. यथा तत्त्वं यथा श्रुतमिति वा पाठः ।   २. व्याख्यातमिति ( ग ) ।

# द्वादशाधिकद्विशततमोऽध्यायः

नारद उवाच

साधु साधु महाराज सर्वधर्मविदां वर।
त्वया तु कथिता दिव्या कथेयं धर्मसंहिता ॥ १ ॥
अतोऽहमपि सुप्रीतस्तव धर्मपथे स्थितः।
तव वाक्यानि सृष्टानि प्रोक्तानि च श्रुतानि च ॥ २ ॥

त्वयाहं चैव राजेन्द्र पूजितश्च विशेषतः।
गच्छामि त्वरितो लोकान्यत्र मे रमते मनः ॥ ३ ॥

स्वस्ति तेऽस्तु महाराज अकम्पो भव सुव्रत।
एवमुक्त्वा ततो यातो नारदो मुनिसत्तमः ॥ ४ ॥

तेजसा द्योतयन् सर्वं गगनं भास्करो यथा।
विचचार दिवं रम्यां कामचारो महामुनिः ॥ ५ ॥

गते तस्मिंस्तु सुचिरं स राजा धर्मवत्सलः।
मां दृष्ट्वा सुमनो विप्रा वाक्यैश्चित्रैश्च वन्दयन् ॥ ६ ॥

कृत्वा पूजां च मे युक्तां प्रियमुक्त्वा च सुव्रत।
विसर्जयामास विभुः सुप्रीतेनान्तरात्मना ॥ ७ ॥
एतद्वः कथितं विप्रास्तस्य राज्ञः पुरोत्तमे।
यथा दृष्टं श्रुतं चैव यथा चेहागतो ह्यहम् ॥ ८ ॥

वैशम्पायन उवाच

तस्य तद्वचनं श्रुत्वा हृष्टपुष्टास्तपोधनाः।
केचिद्वैखानसास्तत्र केचिदासन्निरासनाः ॥ ९ ॥
साधु साध्विति चैवोक्त्वा विस्मयोत्फुल्ललोचनाः।
यायावरास्तथा चान्ये वानप्रस्थास्तथापरे ॥ १० ॥

शालीनां च तथा केचित् कापोतीं वृत्तिमास्थिताः।
तथा चान्ये जगुर्वृत्तिं सर्वभूतदयां शुभाम् ॥ ११ ॥
शिलोञ्छाश्च तथैवान्ये काष्ठान्तश्च महौजसः।
अपाकपाचिनः केचित् पाकिनश्च कश्चित्पुनः ॥ १२ ॥

नानाविधिधराः केचिज्जितात्मानस्तु केचन।
स्थानमौनव्रताः केचित्तथान्ये जलशायिनः ॥ १३ ॥

तथोर्ध्वशायिकाश्चान्ये तथान्ये मृगचारिणः ।
पञ्चाग्नयस्तथा केचित् केचित् पर्णफलाशिनः ॥ १४ ॥

अब्भक्षा वायुभक्षाश्च तथान्ये शाकभक्षिणः ।
अतोऽन्येऽप्यतितीव्रं वै तपश्चैव प्रपेदिरे ॥ १५ ॥

तपसोऽन्यत्र चास्तीति चिन्तयित्वा पुनः पुनः ।
जन्मनो मरणाच्चैव केचिद्धीरा महर्षयः ।
त्यक्त्वा धर्ममधर्मं च शाश्वतीं धियमास्थिताः ॥ १६ ॥

श्रुत्वा चैव कथामेतामृषयो दिव्यवर्चसः ।
जगृहुर्नियमांस्तांस्तान् भयहेतोरनिन्दिताः ॥ १७ ॥

नाचिकेतोऽपि धर्मात्मा पुत्रं दृष्ट्वा तपोधनम् ।
प्रीत्या परमया युक्तो धर्ममेवान्वचिन्तयत् ॥ १८ ॥

वेदार्थममितं विष्णुं शुद्धं चिन्मयमीश्वरम् ।
चिन्तयामास धर्मात्मा तपः परममास्थितः ॥ १९ ॥

इदं तु परमाख्यानं भगवद्भक्तिकारकम् ।
शृणुयाच्छ्रावयेद् वापि सर्वकामानवाप्नुयात् ॥२०॥

इति वाराहपुराणे भगवच्छास्त्रे संसारचक्रोपाख्याने प्रबोधनीयं नाम द्वादशाधिकद्विशततमोऽध्यायः ।



# त्रयोदशाधिकद्विशततमोऽध्यायः

सूत उवाच

पुरा देवैर्विनिहते सङ्ग्रामे तारकामये ।
अत्युच्छ्रिते प्रतिबले दानवानां बले तथा ॥ १ ॥
लब्धपदे सहस्राक्षे क्षीणशत्रौ गतास्पदे ।
सम्यक् प्रसूतिमापन्ने त्रैलोक्ये सचराचरे ॥ २ ॥
शृङ्गे चैवाचलेन्द्रस्य मेरोः सर्वहिरण्मये ।
मणिविद्रुमविद्धे च विपुले पङ्कजासने ॥ ३ ॥
सुखोपविष्टमेकाग्रं स्थिरचित्तं[1] कृतेक्षणम् ।
निवृत्तकार्यं मुदितं सूर्यवैश्वानरद्युतिम् ॥ ४ ॥
प्रणम्य मूर्ध्ना चरणावुपगृह्य समाहितः ।
ब्रह्माणं परिपप्रच्छ कुमारः सनत्पूर्वकः ॥ ५ ॥

सनत्कुमार उवाच

भगवञ्छ्रोतुमिच्छामि पुराणमृषिसंस्तुतम् ।
पुराणं तु महाभाग त्वत्तस्तत्त्वविदां वर ॥ ६ ॥
कथमुत्तरगोकर्णं दक्षिणं च कथं विभो ।
शृङ्गेश्वरस्य परमं कथं सम्यक् प्रतिष्ठितम् ॥ ७ ॥
क्षेत्रस्य किं प्रमाणं स्यात् किंच तीर्थफलं स्मृतम् ।
कथं पशुपतिस्तत्र भगवान् मृगरूपधृक् ॥ ८ ॥
सर्वैस्त्वत्प्रमुखैर्देवैः कथमासादितं पुनः ।
मृगरूपं कथं चास्य शरीरं क्व प्रतिष्ठितम् ॥ ९ ॥
[2]यथा यत्र च यस्तत्र विधिः सम्यगनुष्ठितः ।
तत्सर्वं निखिलेनाशु ब्रूहि मे वाग्विदां वर ॥ १० ॥
एवमुक्तः स भगवान् ब्रह्मा ब्रह्मविदां वरः ।
उवाच तस्मै पुत्राय गुह्यमेतत्पुरातनम् ॥ ११ ॥

ब्रह्मोवाच

शृणु वत्स महाभाग यथा तत्त्वं ब्रवीमि ते ।
पुराणमेतद् ब्रह्मर्षे सरहस्यं यथाश्रुतम् ॥ १२ ॥

---

१. स्थिरचित्तमिति वा पाठः ।
२. यथा यत्र च वने इति वा पाठः । यथा तत्र चयस्तत्रेति ( ग ) ।

अस्ति भूधरराजस्य मन्दरस्योत्तरे शुचौ ।
मुञ्जवान्नाम शिखरो नन्दनोपवनद्युतिः ॥ १३ ॥
वज्रस्फटिकपाषाणः प्रवालाङ्कुरशर्करः ।
नीलामलशिलावर्णो गुहानिर्झरकन्दरः ॥ १४ ॥
विचित्रकुसुमोपेतैर्लतामञ्जरिधारिभिः ।
रेजे यः प्रांशुभिः शृङ्गैरुल्लिखद्भिरिवाम्बरम् ॥ १५ ॥
दर्यस्तत्राधिकं रेजुर्नानाधातुपरिस्रवैः ।
शिलीन्ध्रकुसुमोपेताश्चित्रिता इव सर्वतः ॥ १६ ॥
तेऽत्र केतकिखण्डाश्च कुन्दखण्डाश्च पुष्पिताः ।
उन्मीलिता इवाभान्ति धातकीवनराजिभिः ॥ १७ ॥
भिन्नेन्द्रनीलविमलैर्धौतैः प्रस्रवणाम्बुभिः ।
चित्रैः कुसुमसंछन्नैः शिलाप्रस्तरविस्तरैः ॥ १८ ॥
शक्रचापनिभैः रम्यैः कुबेरभवनद्युतौ ।
तस्मिन्नगवरे रम्ये महोरगनिषेविते ॥ १९ ॥
क्रीडद्भिर्देवमिथुनैर्नृत्यद्भिश्चाप्सरोगणैः ।
कूजद्भिः शिखिभिर्मत्तैः सेविते च नगोत्तमे ॥ २० ॥
कल्हारकुसुमोपेते हंससारससेविते ।
प्रसन्नसलिलाकीर्णे सरैरुत्फुल्लपङ्कजैः ॥ २१ ॥
गजयूथानुकीर्णाभिर्जुष्टाभिर्मृगपक्षिभिः[1] ।
सेविताभिर्मुनिगणैः सरिद्भिरुपशोभिते ॥ २२ ॥
किन्नरोद्गीतकुहरे परपुष्टनिनादिते ।
विद्याधरशताकीर्णे देवगन्धर्वसेविते ॥ २३ ॥
धारापातैश्च तोयानां विस्फुलिङ्गैः सहस्रशः ।
प्रज्वालितातुले शृङ्गे रम्ये हरितशाद्वले ॥ २४ ॥
सर्वर्तुकवनोद्याने पुष्पाकरसुशोभिते ।
यक्ष किं पुरुषावासे गुह्यकानामथाश्रये ॥ २५ ॥
तस्मिन् गिरिवरे रम्ये सेवितव्ये सुशोभने ।
धर्मारण्ये तपःक्षेत्रे मुनिसिद्धनिषेविते ॥ २६ ॥
वरदस्तत्र भगवान् स्थाणुर्नाम महेश्वरः ।
सर्वामरगुरुर्देवो नित्यं सन्निहितः प्रभुः ॥ २७ ॥

१. मृगपक्षिणः इति ( ग ) ।

भक्त्यानुकम्पी[1] स श्रीमान् गिरीन्द्रसुतया सह।
स ह्यध्यास्ते गिरिवरं[2] पार्षदैश्च गुहेन च ॥ २८ ॥
विमानयायिनः सर्वे तं देवमजमव्ययम्।
आजग्मुः सेवितुं देवा वरेण्यमजमव्ययम्।
अन्ये देवनिकायाश्च सेवितुं प्रपतन्ति[3] तम् ॥ २९ ॥
ततस्त्रेतायुगे काले नन्दी नाम महामुनिः।
आरिराधयिषुः शर्वं[4] तपस्तेपे सुदारुणम् ॥ ३० ॥
ग्रीष्मे पञ्चतपास्तिष्ठेत् शिशिरे सलिलाश्रयः।
ऊद्ध्र्वबाहुर्निरालम्बस्तोयाऽनिलहुताशनैः ॥ ३१ ॥
व्रतैश्च विविधैरुग्रैस्तपोभिर्नियमैस्तथा।
जपपुष्पोपहारैश्च काले काले मुनिः सदा ॥ ३२ ॥
शङ्करं विधिवद्भक्त्या सोऽर्च्चयद्द्विजपुङ्गव।
उग्रेण तपसात्मानं योजयामास सुव्रतः ॥ ३३ ॥
काष्ठभूतो यदा विप्रः कृशो धमनिसन्ततः।
क्षामोऽभूत् कृष्णवर्णश्च ततः प्रीतश्च शङ्करः ॥ ३४ ॥
सम्यगाराधितो भक्त्या नियमेन च तोषितः।
तदात्मदर्शनं प्रादात् स मुनेर्वृषभध्वजः ॥ ३५ ॥
उक्तवांश्च मुनिं शर्वश्चक्षुर्दिव्यं ददामि ते।
अदृश्यं पश्य मे रूपं वत्स प्रीतोऽस्मि ते मुने ॥ ३६ ॥
यत्पश्यन्तीह विद्वांसो रूपमप्रतिमौजसम्।
सहस्रसूर्यकिरणं ज्वालामालिनमूर्जितम् ॥ ३७ ॥
बालार्कमण्डलाकारं प्रभामण्डलमण्डितम्[5]।
जटाजूटतटाश्लिष्टं चन्द्रालङ्कृतशेखरम् ॥ ३८ ॥
जगदालोचनं श्रीमत्प्रदीप्तत्रयलोचनम्।
प्रादेशमात्रं रुचिरं शतशीर्षं शतोदरम् ॥ ३९ ॥
सहस्रबाहुचरणं सहस्राक्षिशिरोमुखम्।
अणीयसामणीयांसं बृहद् बृहद् बृहत्तरम् ॥ ४० ॥
अक्षमालापवित्राङ्गं कमण्डलुकरोद्यतम्।
सिंहचर्माम्बरधरं व्यालयज्ञोपवीतिनम् ॥ ४१ ॥

---

१. भक्तानुकम्पीति ( ग )। २. गिरिवरे इति ( ग )
३. प्रयतन्तीति पाठान्तरम्। ४. सर्वमिति ( ग )।
५. प्रभामण्डलसेवितमिति ( ग )।

दृष्ट्वा देवं महादेवं हृष्टरोमा महातपाः ।
प्राञ्जलिः प्रणतो भूत्वाऽगृणद् ब्रह्म सनातनम् ॥ ४२ ॥
नमो धात्रे विधात्रे च शम्भवे वरदाय च ।
जगद्गोप्त्रे त्रिनेत्राय शङ्कराय शिवाय च ॥ ४३ ॥
भवाय भवगोप्त्रे च मुनये कृत्तिवाससे ।
नीलकण्ठाय भीमाय भूतभव्यभवाय च ॥ ४४ ॥
लम्बभ्रुवे करालाय हरिनेत्राय मीढुषे[1] ।
कपर्दिने विशालाय मुञ्जकेशाय धीमते ॥ ४५ ॥
शूलिने पशुपतये विभवे स्थाणवे तथा ।
गणानां पतये स्रष्ट्रे संहर्त्रे भीषणाय च ॥ ४६ ॥
सौम्याय सौम्यतपसे भीमाय त्र्यम्बकाय च ।
प्रेतवासनिवासाय रुद्राय वरदाय च ॥ ४७ ॥
कपालमालिने तस्मै हरिश्मश्रुधराय च ।
भक्तप्रियाय सततं नमोऽस्तु परमात्मने ॥ ४८ ॥
एवं नन्दी भवं स्तुत्वा नमस्कृत्य च सर्वशः ।
प्रणम्य शिरसा देवं पुनः पुनरवन्दत ॥ ४९ ॥
ततस्तु भगवान् प्रीतस्तस्मै विप्राय शङ्करः ।
उवाच च वचः साक्षात् तमृषिं[2] वरदः प्रभुः ॥ ५० ॥
वरान् वृणीष्व विप्रेन्द्र यानिच्छसि महामुने ।
तांस्ते सर्वान् प्रयच्छामि दुर्लभानपि मारिष ॥ ५१ ॥
प्रभुत्वममरत्वं वा शक्रत्वमिति वा प्रभो ।
ब्रह्मत्वं लोकपालत्वमपवर्गमथापि वा ॥ ५२ ॥
अथाष्टगुणमैश्वर्यं गाणपत्यमथापि वा ।
यदिच्छसि मुने शीघ्रं तद्ब्रूहि द्विजपुङ्गव ॥ ५३ ॥
इत्युक्तोऽसौ भगवता शर्वेण मुनिपुङ्गवः ।
प्रोवाच वरदं देवं प्रहृष्टेनान्तरात्मना ॥ ५४ ॥
न प्रभुत्वं न देवत्वं नेन्द्रत्वमपि वा प्रभो ।
ब्रह्मत्वं लोकपालत्वं नापवर्गं वरप्रद ॥ ५५ ॥
नैवाष्टगुणमैश्वर्यं गाणपत्यं न च प्रभो ।
स्पृहये देवदेवेश प्रसन्ने त्वयि शङ्कर ॥ ५६ ॥

---

१. मील्हुषे इति वा पाठान्तरम् ।
२. वाचोवाच वचः साक्षात् तमृषिमिति ( ग ) ।

यदि प्रीतोऽसि भगवन्ननुक्रोशतया मम ।
अनुग्राह्यो ह्ययं देव त्वयावश्यं सुराधिप ॥ ५७ ॥

यथाऽन्ये न[1] भवेद्भक्तिस्त्वत्तो नित्यं महेश्वर ।
तथाऽहं भक्तिमिच्छामि सर्वभूताशये त्वयि ॥ ५८ ॥

यथा न च भवेद् विघ्नं तपस्यानिरतस्य मे ।
कोटिजप्येन रुद्राणामाराधनपरस्य च ॥ ५९ ॥

एतत्तु वचनं श्रुत्वा नन्दिनः स महेश्वरः ।
प्रहस्योवाच तं प्रीत्या ततो मधुरया गिरा ॥ ६० ॥

प्रीतोऽस्म्युत्तिष्ठ विप्रर्षे तप्यमानेन सुव्रत ।
आराधितश्च भक्त्याहं त्वया शुद्धेन चेतसा ॥ ६१ ॥

पर्याप्तं ते महाभाग तपः कर्त्तुं तपोधन ।
निवर्त्तयति मां वत्स मत्पादाराधने रतः ॥ ६२ ॥

जप्ता ते त्रिगुणा कोटी रुद्राणां पुरतो मम ।
पूर्णं वर्षसहस्रं च तपस्तीव्रं महामुने ॥ ६३ ॥

न कृतं यत्पुरा देवैर्नासुरैर्ऋषिभिर्न च ।
कृतं सुमहदाश्चर्यं त्वया कर्म सुदुष्करम् ॥ ६४ ॥

संक्षोभितमिदं सर्वं त्रैलोक्यं सचराचरम् ।
आगमिष्यन्ति ते द्रष्टुं देवाः सर्वे सवासवाः ॥ ६५ ॥

अक्षयश्चाव्ययश्च त्वमतर्क्यः ससुरासुरैः ।
दिव्यतेजोवपुः श्रीमान् दिव्याभरणभूषितः ॥ ६६ ॥

मत्तुल्यो मत्प्रभावश्च त्वमेकः ससुरासुरैः ।
मद्रूपधारी मत्तेजास्त्र्यक्षः सर्वगुणोत्तमः ।
भविष्यसि न सन्देहो देवदानवपूजितः ॥ ६७ ॥

अनेनैव शरीरेण जरामरणवर्जितः ।
दुष्प्राप्येयमवाप्ता ते देवैर्गाणेश्वरी गतिः ॥ ६८ ॥

पार्षदानां वरिष्ठस्त्वं मामकानां द्विजोत्तम ।
नन्दीश्वर इति ख्यातो भविष्यसि न संशयः ॥ ६९ ॥

प्राप्तमष्टगुणं सत्यमैश्वर्यं ते तपोधन ।
द्वितीयां मे तनुं त्वां तु नमस्यन्ति च देवताः ॥ ७० ॥

---

१. यथा नान्ये इति ( ग )।

अद्यप्रभृति देवाग्र्य देवकार्येषु सर्वतः ।
प्रभुस्त्वं भविता लोके मत्प्रसादान्मुनीश्वर ॥ ७१ ॥
त्वामेवाभ्यर्चयिष्यन्ति सर्वभूतानि सर्वतः ।
मत्तः समभिवाञ्छन्तिप्रसादं पार्षदाधिपः ॥ ७२ ॥
वरान् वरार्थिनां दाता विधाता जगतः सदा ।
भविष्यसि च धर्मज्ञ भीतानामभयप्रदः ॥ ७३ ॥
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ।
नावयोरन्तरं किञ्चिदम्बरानिलयोरिव ॥ ७४ ॥
द्वारे तु दक्षिणे नित्यं त्वया स्थेयं गणाधिपः ।
वामे तु विभुना चापि महाकालेन सर्वदा ॥ ७५ ॥
प्रतीहारो भवानद्य सर्वदा त्रिदशोत्तमः ।
शिरो मे रक्षतु भवान् महाकालोऽपि मे गणः ॥ ७६ ॥
न वज्रेण न दण्डेन न चक्रेण न चाग्निना ।
कश्चिच्छक्नोति वै बाधां कर्त्तुं वै भुवनत्रये ॥ ७७ ॥
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।
त्वामेव संश्रयिष्यन्ति मद्भक्ताः पुरुषाश्च ये ॥ ७८ ॥
त्वयि तुष्टे ह्यहं तुष्टः कुपिते कुपितस्त्वहम् ।
त्वत्तः प्रियतरो नास्ति ममान्यो द्विजपुङ्गव ॥ ७९ ॥
एवं तस्य वरान् दत्त्वा प्रीतः स्वयमुमापतिः ।
उवाच भूयः स्पष्टेन स्वरेणाम्बरचारिणा ॥ ८० ॥
आगतान् विद्धि सर्वान् वै त्रिदशान् समरुद्गणान् ।
दिदृक्षया भद्रं ते कृतकृत्यश्च साम्प्रतम् ॥ ८१ ॥
यदीरितं मया वत्स वरं प्रति वचस्त्वयि ।
प्रविष्टं न श्रुतिपथं दिवि सर्वदिवौकसाम् ॥ ८२ ॥
नारायणं पुरस्कृत्य सेन्द्रास्ते समरुद्गणाः ।
प्रेमार्थे चागमिष्यन्ति वरार्थं तपसाऽमराः ॥ ८३ ॥
यक्षविद्याधरगणाः सिद्धगन्धर्वपन्नगाः ।
मुनयश्च महात्मानस्तपोलब्धाः सहस्रशः ॥ ८४ ॥
ते बुद्ध्वा त्वद्गतामृद्धिं प्रतप्ताः परमेष्ठ्यया ।
तपांसि विविधान् पुत्र विविधान् नियमांस्तथा ॥८५॥

चर्तुं समभिवाञ्छन्ति सदाभ्यासे वरार्थिनः ।
वरदं मामभिज्ञाय मेरौ मौञ्जावति स्थितम् ॥ ८६ ॥

अत्रैते यावदागम्य न मां पश्यन्ति मानवाः ।
तावदेव इतः शीघ्रं गमिष्यामि महामुने ॥ ८७ ॥

अद्य ते तु मया सर्वे देवा ब्रह्मपुरोगमाः ।
द्रष्टव्याश्चानुमन्तव्या मत्तोऽनुग्रहकाङ्क्षिणः ॥ ८८ ॥

अभिप्रायं च सर्वेषां जानामि द्विजसत्तम ।
अनुगृह्य वरैस्तैश्च तत्रैवान्तरधीयत ॥ ८९ ॥

इति वाराहपुराणे भगवच्छास्त्रे गोकर्णेश्वरमाहात्म्ये
त्रयोदशाधिकद्विशततमोऽध्यायः ।



## चतुर्दशाधिकद्विशततमोऽध्यायः

ब्रह्मोवाच

अन्तर्हिते ततस्तस्मिन् भवे वै भूतनायके ।
बभूव दिव्यः स तदा नन्दी गणचमूपतिः ॥ १ ॥
चतुर्भुजस्त्रिनयनो दिव्यसंस्थानसंस्थितः ।
दिव्यवर्णवपुश्चारुर्दिव्यागुरुसमन्वितः ॥ २ ॥
त्रिशूली परिघी दण्डी पिनाकी मौञ्जमेखली ।
शुशुभे तेजसा तत्र द्वितीय इव शङ्करः ॥ ३ ॥
आस्थितः पादमाकृष्य आह्वयन्निव स द्विजः ।
त्रिभिः क्रमैः क्रान्तुमनास्त्रिविक्रम इवोद्यतः ॥ ४ ॥
तं दृष्ट्वा खचराः सर्वा देवताः परिशङ्किताः ।
आख्यातुं पुरुहूताय संभ्रान्ताः प्रययुर्दिवम् ॥ ५ ॥
तेभ्यः श्रुत्वा सहस्राक्षः सर्वे चान्ये दिवौकसः ।
विषादं परमं गत्वा चिन्तामापेदिरे भृशम् ॥ ६ ॥
अयं कश्चिद् वरं लब्ध्वा उमाकान्तात् महेश्वरात् ।
अत्यूर्जितबलः श्रीमांस्त्रैलोक्यं प्राप्स्यति ध्रुवम् ॥ ७ ॥
यादृशोऽस्य महोत्साहस्तेजोबलसमन्वितः ।
नूनमेषो महासत्त्वो हरेत्स्थानं दिवौकसाम् ॥ ८ ॥
यावन्नैवोजसा नाकमसौ चङ्क्रमते प्रभुः ।
प्रसादयामो वरदं तावदेव महेश्वरम् ॥ ९ ॥
एवमुक्त्वा तु ते तत्र मया सह सुरोत्तमाः ।
गिरेर्मौञ्जवतः[1] शृङ्गमाजग्मुर्देवनिर्मितम् ॥ १० ॥
विधाता भगवान् विष्णुः प्रभुस्त्रिभुवनेश्वरः ।
अभ्यधावंस्ततः सोऽथ स हि जानाति हृद्गतम् ।
कृतेन तेन विबुधाः पश्यन्ति मुनयश्च ते ॥ ११ ॥
ततः स भगवान् विष्णुः सहदेवः सधातृकः ।
जगाम तत्र यत्रासौ नन्दी तिष्ठति देववत् ॥ १२ ॥

नन्द्युवाच

सफलं जीवितं मेऽद्य सफलश्च परिश्रमः ।
यन्मे दृष्टः सुराध्यक्षः सर्वलोकगुरुर्हरिः ॥ १३ ॥

---

१. 'गिरिं मौञ्जवतम्'—इति ऐ० सो० मुद्रितपाठः ।

पर्याप्तं तन्ममाद्येह[1] कृतकृत्योऽस्मि तेन वै ।
यत्र मे प्रभुरव्यग्रः प्रीतः पापहरो हरः ॥ १४ ॥
विधाय पार्षदत्वं मे वरानिष्टान् ददौ शिवः ।
परो मेऽनुग्रहः सोऽत्र पूतोऽस्मि खलु साम्प्रतम् ॥१५॥
यच्चोक्तं विधिना वाक्यं देवान् प्रति महात्मना ।
मामुद्दिश्य हितं तथ्यं तथैव च न चान्यथा ॥ १६ ॥
यन्मां देवर्षयः प्रीत्या समागत्य प्रियंवदाः ।
तेनास्मि परमप्रीत आदृतः परमेष्ठिना ॥ १७ ॥

देवा ऊचुः

वयं तं वरदं देवं द्रक्ष्यामस्ते वरप्रदम् ।
तवैष तपसा तुष्टः स्वयं प्रत्यक्षतां गतः ॥ १८ ॥
इत्युक्तवन्तस्ते देवाः पुनरूचुर्द्विजोत्तमम् ।
कुत्र द्रक्ष्यामहे देवं भगवन्तं कपालिनम् ॥ १९ ॥

नन्द्युवाच

अनुगृह्य तु मां देवस्तत्रैवादर्शनं गतः ।
न जाने कुत्र वा देवं कुत्रास्ते तद् गवेष्यताम् ॥ २० ॥

सनत्कुमार उवाच

किमाह नन्दिनं देवो येनासौ नोक्तवान् प्रभुम् ।
तन्मे कथय देवेश गुह्यं किं चास्ति शूलिनः ॥ २१ ॥

ब्रह्मोवाच

यदुक्तवान् महेशानो नाख्येयोऽस्मि सुरान् प्रति ।
किमुक्तवान् महादेवो नन्दिनं तच्छृणुष्व मे ॥ २२ ॥

ईश्वर उवाच

अस्ति कश्चित् समुद्देशः क्षितेः सिद्धोऽद्रिसंकटः ।
पारे हिमवतः पुण्ये तपोवनगुणैर्युतः ॥ २३ ॥
तत्र श्लेष्मातको नाम वसते पन्नगोत्तमः ।
सोऽनुग्राह्यो मयावश्यं तपसा दग्धकिल्बिषः ॥ २४ ॥
तदभ्यासे च रुचिरं न चासौ वानराश्रयः ।
तस्य नाम्ना च तत्स्थानं दिव्यं चिरतपोभृतम्[2] ॥ २५ ॥

---

१. ममाचक्ष्वेति वा पाठः । २. चिरतपोभृशमिति वा पाठः ।

श्लेष्मातकवनं नाम पुण्यशीलशिलोच्चयम् ।
मृगरूपेण चरता तत्र वै त्रिदशा मया ।
द्रष्टव्याः सञ्जिघृक्षन्तः खिन्नाश्चान्वेषणे मम ॥ २६ ॥
नाख्यातव्यं त्वया तेषां देवताप्सरसामिदम् ।
अनुगृह्य वरैस्तैश्च तत्रैवान्तरधीयत ॥ २७ ॥
विद्योतयन् दिशः सर्वास्त्रिदशैः परिवारितः ।
बालुकेन्दुनिभं दिव्यमर्च्चितं दिव्यबिन्दुभिः ॥ २८ ॥
कामगं रथमारुह्य महेन्द्रः समरुद्गणः ।
आयातः शैलपृष्ठं तमोजसा पूरयन्निव ॥ २९ ॥
वरदो गणवृत्तश्च वरुणो यादसांपतिः ।
वज्रस्फटिकचित्रेण विमानेनातितेजसा ॥ ३० ॥
तप्तकाञ्चनवर्णेन रत्नचित्रेण भास्वता ।
विमानेनागतः शृङ्गे द्योतयन् वै धनाधिपः ।
विमानशतकोटीभिरागतो यक्षराक्षसैः ॥ ३१ ॥
श्रीमद्भिर्बहुभिर्दिव्यैर्विमानैः सूर्यसन्निभैः ।
अधिष्ठितः सुकृतिभिः प्रायाद् वैवस्वतोपमः ॥ ३२ ॥
चन्द्रादित्यौ ग्रहाः सर्वे समग्रमृक्षमण्डलम् ।
विमानैरग्निसूताभैराजग्मुः खान्महीधरम् ॥ ३३ ॥
रुद्रास्त्वेकादशायाताः सूर्या द्वादश एव तु ।
आगतावश्विनौ देवौ मौञ्जवन्तं महागिरिम् ॥ ३४ ॥
विश्वेदेवाश्च साध्याश्च गुरुश्च तपसान्वितः ।
सन्ध्यावैरावतपथं सहसाभ्याययुर्द्रुतम् ॥ ३५ ॥
स्कन्दश्चैव विशाखश्च भगवांश्च विनायकः ।
सम्प्राप्तस्तं गिरिवरं मयूरशतनादितम् ॥ ३६ ॥
नारदस्तुम्बुरुश्चैव विश्वावसुपरावसू ।
हाहा हूहूस्तथा चान्ये सर्वे गन्धर्वसत्तमाः ॥ ३७ ॥
वैहायसैर्यानवरैर्विविधैर्वासवाज्ञया ।
अनिलश्चानलश्चैव धर्मः सत्यो ध्रुवोऽपरः ॥ ३८ ॥
देवर्षयश्च सिद्धाश्च यक्षा विद्याधरास्तथा ।
गुह्यकाश्च महात्मानः सर्व एव समागताः ॥ ३९ ॥
गन्धकाली घृताची च बुद्धा गौरी तिलोत्तमा ।
उर्वशी मेनका रम्भा पञ्चस्था च तथापरा ॥ ४० ॥

एताश्चान्याश्च तच्छैलमाजग्मुर्देवयोषितः ।
पुलस्त्योऽत्रिर्मरीचिश्च वसिष्ठो भृगुरेव च ॥ ४१ ॥
कश्यपः पुलहश्चापि विश्वामित्रोऽथ गौतमः ।
भारद्वाजोऽग्निवेश्यश्च तथा वृद्धपराशरः ॥ ४२ ॥
मार्कण्डेयोऽङ्गिरा गर्गः संवर्त्तः क्रतुरेव च ।
मरीचिर्जमदग्निश्च भार्गवश्च्यवनस्तथा ॥ ४३ ॥
नियोगान्मम विष्णोश्च शक्रस्य त्रिदिवस्पतेः ।
सिन्धुश्च पुरुषश्चैव सरयूश्च महानदी ॥ ४४ ॥
ताम्रारुणा चारुभागा वितस्ता कौशिकी तथा ।
पुण्या सरस्वती कोका नर्मदा बाहुदा तथा ॥ ४५ ॥
शतद्रुश्च विपाशा च गण्डकी च सरिद्वरा ।
गोदावरी च वेणी च तापी च सरिदुत्तमा ॥ ४६ ॥
करतोया च शीता च तथा चीरवती नदी ।
नन्दा च परनन्दा च तथा चर्मण्वती नदी ॥ ४७ ॥
पर्णाशा देविका चैव वितस्ता च तथा परा ।
सिन्धुश्च पुरुषश्चैव प्रभासः सोम एव च ॥ ४८ ॥
लोहितश्चाययुस्तत्र[1] गङ्गासागर एव च ।
अन्यानि चापि मेदिन्यां तीर्थान्यायतनानि च ॥ ४९ ॥
निजस्वरूपाण्याजग्मुस्तत्र पुण्यान्यनेकशः ।
उपागताः सुरेन्द्रस्य नियोगादुत्तमं गिरिम् ॥ ५० ॥
शैलोत्तमो महामेरुः कैलासो गन्धमादनः ।
हिमवान् हेमकूटश्च निषधश्च महागिरिः ॥ ५१ ॥
विन्ध्यो महेन्द्रः सह्यश्च मलयो दर्दुरस्तथा ।
माल्यवांश्चित्रकूटश्च तथा द्रोणः शिलोच्चयः ॥ ५२ ॥
श्रीपर्वतो लतावेष्टः पारियात्रश्च शैलराट् ।
आगताः सर्व एवैते शैलेन्द्राः काननौकसः ॥ ५३ ॥
सर्वे यज्ञाः सर्वविद्या वेदाश्चत्वार एव च ।
धर्मः सत्यं दमः स्वर्गः कपिलश्च महान् ऋषिः ॥ ५४ ॥
वासुकिश्च महाभागः अमृताशी भुजङ्गराट् ।
ज्वलत्-फणसहस्रेण अनन्तश्च धराधरः ॥ ५५ ॥

१. लोहितश्चापयुक्तश्चेति वा पाठः ।

फणीन्द्रो धृतराष्ट्रश्च किर्मीराङ्गश्च नागराट् ।
अम्भोधरश्च स[1] श्रीमान् नागराजो महाद्युतिः ॥५६॥
अर्वुदो न्यर्वुदवलस्तथा चक्षुःश्रवाधिपः ।
विद्युज्जिह्वो द्विजिह्वेन्द्रः[2] शङ्खवर्चो महाद्युतिः॥ ५७ ॥
ख्यातस्त्रिभुवने धीमान् नहुषो निमिषेश्वरः ।
विरोचनसुतः सत्यस्फुटामणिशतश्रितः ॥ ५८ ॥
फणाशतधरो रूपी भूरिशृङ्ग इवाचलः ।
अरिमेजयसंयुक्तः प्रज्ञावान् भुजगेश्वरः ॥ ५९ ॥
विनतो नागराजश्च कम्बलाश्वतरौ तथा ।
भुजगाधिपतिर्वीर एलापत्रस्तथैव च ॥ ६० ॥
उरगानामधिपती कर्कोटकधनञ्जयौ ।
एवमाद्याः समायाता भुजगेन्द्रा महाबलाः ॥ ६१ ॥
अहोरात्रे तथा पक्षा मासाः संवत्सरास्तथा ।
द्यौर्मे दिनी दिशश्चैव विदिशश्च समागताः ॥ ६२ ॥
ततश्चैवागतैर्देवैर्यक्षैः सिद्धैश्च सर्वशः ।
अपूर्यत गिरेः शृङ्गं वेलाकाले यथोदधिः ॥ ६३ ॥
तस्मिन् देवसमाजे तु रम्ये शैलेन्द्रमूर्द्धनि ।
पुष्पाणि मुमुचुस्तत्र तरवो ह्यनिलार्दिताः ॥ ६४ ॥
प्रगीता देवगन्धर्वाः प्रनृत्ताप्सरसोगणाः ।
पक्षिणः संप्रहृष्टाश्च कूजन्ति मधुरं तदा ॥ ६५ ॥
पुण्यगन्धाः सुखस्पर्शास्तत्र वान्ति च वायवः ।
एवमागत्य ते सर्वे देवा विष्णुपुरोगमाः ॥ ६६ ॥
श्रिया ज्वलन्तं ददृशुर्नन्दिनं पुरतः स्थितम् ।
स च तानागतान् दृष्ट्वा गन्धर्वाप्सरसां गणान् ॥६७॥
सहितान् देवराजेन सार्द्धमन्यैश्च दैवतैः ।
मूर्द्ध्ना प्रणम्य चरणौ प्राञ्जलिः प्रयतात्मवान्॥ ६८ ॥
संभ्रान्तः सहसा तेभ्यो नमस्कर्त्तुं प्रचक्रमे ।
नमस्कृत्य च तान् सर्वान् स्वागतानभिभाष्य च ॥ ६९ ॥
अर्घ्यपाद्यादिभिः शीघ्रमासनैश्च न्यमन्त्रयत् ।
प्रणिधानेन तस्यार्थं श्रुत्वा तत्प्रतिपूजयेत् ॥ ७० ॥

---

१. 'अम्भोधरश्चेशः' इति वा पाठान्तरम् ।
२. विद्युन्मेघः सुजिह्वेन्द्र इति ( ग ) ।

आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि ।
साध्या विश्वे सगन्धर्वा गुह्यकाश्च प्रपूजयेत् ॥ ७१ ॥

विश्वावसुर्हाहाहूहू तथा नारदतुम्बुरौ ।
चित्रसेनादयः सर्वे गन्धर्वास्तमपूजयन् ॥ ७२ ॥

तं वासुकिप्रभृतयः पन्नगेन्द्रा महौजसः ।
सौम्यमभ्यर्चयन्ति स्म दृष्ट्वा नन्दीश्वरं तथा॥ ७३ ॥

सिद्धचारणसङ्घाश्च विद्याश्चाप्सरसां गणाः ।
सत्कृतं देवदेवेन गणास्तमभिपूजयन् ॥ ७४ ॥

यक्षविद्याधराश्चैव ग्रहाः सागरपर्वताः ।
सिद्धाः ब्रह्मर्षयश्चैव गङ्गाद्याः सरितस्तथा ।
आशिषः प्रददुस्तस्य सर्वं एव मुदान्विताः ॥ ७५ ॥

देवा ऊचुः

स सुप्रीतोऽस्तु ते[1] देवः सदा पशुपतिर्मुने ।
सर्वत्र चाप्रतिहता गतिश्चास्तु तवानघ ॥ ७६ ॥

भवान् देवैस्तु वा न स्यादत ऊर्ध्वं द्विजोत्तम ।
निरामयोऽमृतीभूतश्चरिष्यति विभुः सुखी ॥ ७७ ॥

लोकेषु सप्तसु विभो त्र्यम्बकेन सहाच्युत ।
इत्युक्तस्त्रिदशैर्नन्दी पुनस्तान् प्रत्युवाच ह ॥ ७८ ॥

नन्दिकेश्वर उवाच

यद्भवद्भिः प्रियं सर्वैः प्रीतिमद्भिः सुरोत्तमैः ।
आशिषानुगृहीतोऽस्मि नियोज्योऽहं सदा हि वः ॥ ७९ ॥

ब्रूत यूयं किमस्माभिः कर्त्तव्यं भवतामिह ।
आज्ञापयध्वमाज्ञप्तस्तस्माद् विबुधसत्तमाः ।
तस्य तद्वचनं श्रुत्वा शक्रः प्रोवाच तं तदा ॥ ८० ॥

शक्र उवाच

कुत्रासौ प्रस्थितो भद्र कुत्र वा स गतोऽपि वा ।
पश्यामो विप्र तं सर्वे देवानामधिपं विभुम् ॥ ८१ ॥

स्थाणुमुग्रं शिवं देवं शर्वमेव स्वयं मुने ।
यदि जानासि भगवानीश्वरो यत्र तिष्ठति ॥ ८२ ॥

---

१. सुसुप्रीतोऽस्त्विति ( ग ) ।

तत्स्थानं न समाख्याहि महर्षे शीघ्रमेव हि ।
तच्छ्रुत्वा वचनं धीमानीरितं वज्रपाणिना ।
प्रत्युवाच ततः शक्रं नन्दी पशुपतिं स्मरन् ॥ ८३ ॥

नन्दिकेश्वर उवाच

श्रोतुमर्हसि देवेन्द्र यथा तत्त्वं दिवस्पते ।
अस्मिन् गिरौ मुञ्जवति स्थाणुरभ्यर्चितो मया ॥ ८४ ॥
प्रीतोऽसौ मां वरैर्दिव्यैरनुगृह्य हरः प्रभुः ।
प्रीतो विनिर्गत इतस्तं विज्ञातुं बिभेम्यहम् ॥ ८५ ॥
यद्याज्ञापयसे देव अहं त्वच्छासने स्थितः ।
मार्गयामो हि यत्नेन भगवन्तं तु वासव ॥ ८६ ॥

इति वाराहपुराणे गोकर्णमाहात्म्ये नन्दिकेश्वरवरप्रदानिको नाम चतुर्दशाधिकद्विशततमोऽध्यायः ।



## पञ्चदशाधिकद्विशततमोऽध्यायः

ब्रह्मोवाच

ततः शक्रः सुरगणैः सह सर्वैः समेत्य च ।
बुद्धिं चकार गमने मार्गितुं यत्र शङ्करः ॥ १ ॥
तत उत्थाय ते देवाः सर्व एव शिलोच्चयात् ।
विहायसा ययुः शीघ्रं तेनैव सह नन्दिना ॥ २ ॥

स्वर्लोकं ब्रह्मलोकं च नागलोकं च सर्वशः ।
बभ्रमुस्त्रिदशाः सर्वे रुद्रान्वेषणतत्पराः ।
खिन्नाः क्लिष्टाश्च सुभृशं न पुनस्तत्पदं विदुः ॥ ३ ॥
चतुःसमुद्रपर्यन्तां सप्तद्वीपवतीं महीम् ।
सशैलकाननोपेतां मार्गयद्भिर्हि तं सुरम्[1] ॥ ४ ॥
कन्दरेषु महाद्रीणां तुङ्गेषु शिखरेषु च ।
विततेषु निकुञ्जेषु विहारेषु च सर्वतः ॥ ५ ॥

विचिन्वद्भिः क्षितिमिमां तृणं द्विविदलीकृतम् ।
न प्रवृत्तिः क्वचिदपि शम्भोरासाद्यते सुरैः ॥ ६ ॥
यदा निर्विण्णमनसो मार्गमाणाः सुरास्तदा ।
न पश्यन्ति शिवं तत्र तदैषां भयमाविशत् ॥ ७ ॥
भीतास्ते संविदं कृत्वा सञ्चिन्त्य गुरुलाघवम् ।
सम्भूयान्योऽन्यममरा[2] मामेव शरणं ययुः ॥ ८ ॥

तमेकाग्रेण मनसा शङ्करं लोकशङ्करम् ।
उपायमात्रं दृष्टं मे ध्यायंस्तद्वेषभूषणैः ॥ ९ ॥
यथा यत्र च सोऽस्माभिर्द्रष्टव्यो वृषभध्वजः ।
सर्वं त्रैलोक्यमस्माभिर्विचितं वै निरन्तरम् ।
श्लेष्मातकवनोद्देशं स्थानं मुक्त्वा महीतले ॥ १० ॥

आगच्छध्वं गमिष्यामस्तमुद्देशं सुरोत्तमाः ।
इत्येवमुक्त्वा तैः सर्वैस्तामाशां प्रस्थिता वयम् ॥ ११ ॥
तत्क्षणादेव सम्प्राप्ता विमानैः शीघ्रयायिभिः ।
श्लेष्मातकवनं पुण्यं सिद्धचारणसेवितम् ॥ १२ ॥

---

१. हरमिति ( ग ) । २. सम्भूतान्योऽन्यममरा इति ( ग ) ।

तस्मिन् सुरमणीयानि विविधानि शुचीनि च ।
ध्यानस्थानानि रम्याणि बहूनि गुणवन्ति च ॥ १३ ॥
आश्रमारण्यभागेषु दरीणां विवरेषु च ।
विभ्राजद् वनराजीका नद्यश्च विमलोदकाः ॥ १४ ॥
सिंहशार्दूलमहिषगोलाङ्गूलर्क्षवानरैः ।
नादितं गजयूथैश्च मृगयूथैश्च तद्वनम् ॥ १५ ॥
प्रमुखे वासवं कृत्वा विविशुस्ते सुरास्तदा ।
विमुच्य रथयानानि पद्भिः सिद्धादिसंकटम् ॥ १६ ॥
कन्दरोदरकूटेषु तरूणां गहनेषु च ।
सर्वदेवमयं रुद्रं मार्गमाणाः शनैः शनैः ॥ १७ ॥
प्रविशन्तश्च ते देवा वनोद्देशे क्वचिच्छुभे ।
कदलीवनसंछन्ने फुल्लपादपशोभिते ॥ १८ ॥
गिरिनद्यास्तु पुलिने हंसकुन्देन्दुसन्निभे ।
गन्धामोदेन पुष्पाणां वासितं मधुगन्धिमत् ॥ १९ ॥
मुक्ताचूर्णनिकाशाभिर्वालुकाभिस्ततस्ततः ।
विक्रीडमानां ददृशुः कन्यां काञ्चिन्मनोरमाम् ॥ २० ॥
तत्र ते विबुधा दृष्ट्वा सर्वे मां समचोदयन् ।
आद्योऽहं सर्वदेवानां कथं मे तद्भवेदिति ॥ २१ ॥
मुहूर्त्तं ध्यानमास्थाय विज्ञाता सा मया तदा ।
ध्रुवं शैलेन्द्रपुत्रीयमुमा विश्वेश्वरेश्वरी ॥ २२ ॥
ततस्तदुच्चशिखरमारुह्य विबुधेश्वराः ।
अधो विलोक्य ते सर्वे ददृशुस्तं सुरोत्तमम् ॥ २३ ॥
मध्ये मृगसमूहस्य गोमारमिव संस्थितम् ।
एकशृङ्गैकचरणं तप्तहाटकवर्चसम् ॥ २४ ॥
चारुवक्त्राक्षिदशनं पृष्ठतः शुक्लविन्दुभिः ।
शुक्लेनोदरभागेन राजतेरूपशोभितम् ॥ २५ ॥
पीनोन्नतकटिस्कन्धं निमग्नांसशिरोधरम् ।
बिम्बोष्ठं ताम्रजिह्वास्यं दंष्ट्राङ्कुरविराजितम् ॥ २६ ॥
तं दृष्ट्वा विबुधाः सर्वे शिखरान् प्रतिधाविताः ।
सर्वोद्यमेन तरसा तं मृगेन्द्रं जिघृक्षवः ॥ २७ ॥
शृङ्गाग्रं प्रथमं धृत्वा गृहीत्वा वज्रपाणिना ।
मध्यं मया तस्य तदा गृहीतं प्रणतात्मना ॥ २८ ॥

जग्राह केशवश्चापि मूलं तस्य महात्मनः ।
त्रिभिरेवं गृहीतं तु त्रिधा भूतमभज्यत ॥ २९ ॥
शक्रस्याग्रं स्थितं हस्ते मध्यं हस्ते मम स्थितम् ।
विष्णोर्मूलं स्थितं हस्ते प्रविभक्तं त्रिधागतम् ॥ ३० ॥
शृङ्गस्यैव गृहीतस्य त्रिधास्माकं मृगाधिपः[१] ।
विषाणरहितस्तस्य[२] प्रनष्टः पुनरत्र वै ॥ ३१ ॥
अन्तर्हितोऽन्तरीक्षस्थः प्रोवाचास्मानुपालभन् ।
भो भो देवा मया यूयं वञ्च्यमानानवाप्स्यथ[३] ॥ ३२ ॥
सशरीरोऽहं युष्माभिर्वशाप्तः[४] प्रगतस्त्वितः ।
शृङ्गमात्रेण सन्तुष्टा भवन्तस्ते न वञ्चिताः ॥ ३३ ॥
यद्यहं सशरीरः स्यां गृहीत्वा स्थापितोऽभवम् ।
तदा चतुष्पात्सकलो धर्मः स्यात् प्रतिपादितः ॥ ३४ ॥
कामं शृङ्गाणि मेऽत्रैव श्लेष्मान्तकवनेऽमराः ।
न्यायतः स्थापयिष्यध्वं लोकानुग्रहकाम्यया ॥ ३५ ॥
अत्रापि महती व्युष्टिर्भविष्यति न संशयः ।
पुण्यक्षेत्रे सुमहति मत्प्रभावानुभाविते ॥ ३६ ॥
यावन्ति भुवि तीर्थानि आसमुद्रसरांसि च ।
क्षेत्रेऽस्मिंस्तानि तीर्थानि आगमिष्यन्ति मत्कृते ॥ ३७ ॥
अहं पुनः शैलपतेः पादे हिमवतः शुभे ।
नेपालाख्ये समुत्पत्स्ये स्वयमेव महीतलात् ॥ ३८ ॥
दीप्ततेजोमयशिराः शरीरश्च चतुर्मुखः ।
शरीरेश इति ख्यातः सर्वत्र भुवनत्रये ॥ ३९ ॥
तत्र नागह्रदे घोरे स्थास्याम्यन्तर्जले ह्यहम् ।
त्रिंशद् वर्षसहस्राणि सर्वभूतहिते रतः ॥ ४० ॥
यदा वृष्णिकुलोत्पन्नः कृष्णश्चक्रेण पर्वतान् ।
पाटयित्वेन्द्रवचनाद् दानवान् निहनिष्यति ॥ ४१ ॥
तदा सदेशो भविता सर्वम्लेच्छैरधिष्ठितः ।
ततोऽन्ये सूर्यवंशीयाः क्षत्रियास्तान्निहत्य च ॥ ४२ ॥
वसिष्यन्ति च तं देशं ब्राह्मणैः संप्रवर्तितान् ।
धर्मान् संस्थापयिष्यन्ति राज्य प्राप्स्यन्ति शाश्वतम् ॥ ४३ ॥

---

१. नराधिप इति वा पाठः । २. सोऽथ इति समीचीनः ।
३. वञ्चितान् स्वानवाप्स्यथ इति समीचीनः । ४. न प्राप्त इति वा पाठः ।

ततो लिङ्गार्च्चनं तत्र प्रतिष्ठास्यन्ति पार्थिवाः ।
क्षत्रियाः सूर्यवंशीयाः शून्ये लप्स्यन्ति मां नृपाः ॥ ४४ ॥
ततो जनपदस्तत्र भविष्यति महांस्तदा ।
स्फीतो ब्राह्मणभूयिष्ठं सर्ववर्णाश्रमैर्युतः ॥ ४५ ॥
सम्यक् प्रवृत्ता राजानो भविष्यन्त्यायतौ स्थिताः ।
एवं सम्यक् स्थिते तस्मिन् देशे पौरजने तथा ॥ ४६ ॥
तत्र मामर्च्चयिष्यन्ति सर्वभूतानि सर्वदा ।
तत्राहं यैः सकृद् दृष्टो विधिवद् वन्दितस्तु यैः ।
गत्वा शिवपुरं ते मां द्रक्ष्यन्ते दग्धकिल्विषाः ॥ ४७ ॥
उत्तरेण तु गङ्गाया दक्षिणे चाश्विनीमुखात् ।
क्षेत्रं हि मम तज्ज्ञेयं योजनानि चतुर्दश ॥ ४८ ॥
हिमाद्रेस्तुङ्गशिखरात् प्रोद्भूता वाग्मती नदी ।
भागीरथ्याः शतगुणं पवित्रं तज्जलं स्मृतम् ॥ ४९ ॥
तत्र स्नात्वा हरेर्लोकानुपस्पृश्य दिवस्पतेः ।
मुक्त्वा देहं नरा यान्ति मम लोकं न संशयः ॥ ५० ॥
अपि दुष्कृतकर्माणः क्षेत्रेऽस्मिन्निवसन्ति ये ।
नियतं पुरुहूतस्य श्रिताः स्थाने वसन्ति ते ॥ ५१ ॥
देवदानवगन्धर्वाः सिद्धविद्याधरोरगाः ।
मुनयोऽप्सरसो यक्षा मोहिता मम मायया ॥ ५२ ॥
तद्वै गुह्यं न जानन्ति यत्र सन्निहितो ह्यहम् ।
तपस्तपोधनानां च सिद्धक्षेत्रं हि तत्स्मृतम् ॥ ५३ ॥
प्रभासाच्च प्रयागाच्च नैमिषात् पुष्करादपि ।
कुरुक्षेत्रादपि बुधाः क्षेत्रमेतद् विशिष्यते ॥ ५४ ॥
श्वशुरो मे स्थितो यत्र हिमवान् भूधरेश्वरः ।
प्रभवन्ति यतः सर्वा गङ्गाद्याः सरितां वराः ॥ ५५ ॥
तस्मिन् क्षेत्रवरे पुण्ये पुण्याः सर्वाः सरिद्वराः ।
सर्वे प्रस्रवणाः पुण्याः सर्वे पुण्याः शिलोच्चयाः ॥ ५६ ॥
आश्रमस्तत्र भविता सिद्धचारणसेवितः ।
शैलेश्वर इति ख्यातः शरीरं यत्र मे स्थितम् ॥ ५७ ॥
स्रवन्तीनां वरा पुण्या वाग्मती पर्वतोत्तमात् ।
भागीरथी वेगवती कलुषं दहते नृणाम् ॥ ५८ ॥
कीर्तनादेव संशुद्धे दर्शनाद् भूतिमाप्स्यति ।
पानावगाहनात्तस्यांस्तारयेत् सप्त वै कुलान् ॥ ५९ ॥

लोकपालस्तु चरति तीर्थख्यातिं च तत्स्वयम् ।
तत्र स्नात्वा दिवं यान्ति मृतास्ते त्वपुनर्भवाः ॥ ६० ॥
स्नात्वा स्नात्वा तु ये तत्र नित्यमभ्यर्च्चयन्ति माम् ।
उद्धराम्यहमेतान् वै प्रीतः संसारसागरात् ॥ ६१ ॥
यस्तस्या वारिणा पूर्णमेकं च घटमुद्धरेत् ।
स्नापनार्थे मम शुचिः श्रद्दधानोऽनसूयकः ॥ ६२ ॥
वेदवेदाङ्गविदुषा श्रोत्रियेण विशेषतः ।
आहूतस्याग्निहोत्रस्य यत्फलं तस्य तद्भवेत् ॥ ६३ ॥
तस्यास्तीरे जलोद्भेदं मन्मूलादभिनिःसृतम् ।
मृगश्रृङ्गोदकं नाम नित्यं मुनिजनप्रियम् ॥ ६४ ॥
तत्राभिषेकं कुर्वीत उपस्पृश्य समाहितः ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥ ६५ ॥
तीर्थं पञ्चनदं प्राप्य पुण्यं ब्रह्मर्षिसेवितम् ।
अग्निष्टोमफलं तत्र स्नातमात्रः प्रपद्यते ॥ ६६ ॥
षष्टिं धेनुसहस्राणि[1] यानि रक्षन्ति वाग्मतीम् ।
न तां पापाः कृतघ्नो वा कदाचित् प्राप्नुयान्नरः ॥६७॥
शुचयः श्रद्दधानाश्च सत्यसन्धाश्च ये नराः ।
वाग्मत्यां ते नराः स्नान्ति लभन्ते चोत्तमां गतिम् ॥६८॥
आर्त्ता भीताश्च सन्तप्ता[2] व्याधितोऽव्याधितोऽपि वा ।
वाग्मत्याः सलिले स्नात्वा ये मां पश्यन्ति संस्कृताः ।
तेषां शान्तिर्भवेन्नित्यं पुरुषाणां न संशयः ॥ ६९ ॥
मत्प्रभावात्तु स्नातस्य सर्वं नश्यति किल्बिषम् ।
ईतयः समुदीर्णापि प्रशमं यान्ति सर्वशः ॥ ७० ॥
वाग्मत्याः सलिले स्नात्वा ये मां पश्यन्ति संस्कृताः ।
वाग्मती सरितां श्रेष्ठा यत्र यत्राऽवगाह्यते ।
तत्र तत्र फलं दद्याद् राजसूयाश्वमेधयोः ॥ ७१ ॥
योजनाभ्यन्तरं क्षेत्र समन्तात् सर्वतो दिशम् ।
मूलन्तत्र तु विज्ञेयं रुद्रेणाधिष्ठितं स्वयम् ॥ ७२ ॥
तत्र पूर्वोत्तरे पार्श्वे वासुकिर्नाम नागराट् ।
वृतो नागसहस्रैस्तु द्वारि तिष्ठति मे सदा ॥ ७३ ॥

---

१. षष्टिधनुःसहस्राणीति ( ग ) ।
२. आतापिताश्च सन्तप्ता इति वा पाठः ।

स विघ्नं कुरुते नृणां तत्क्षेत्रं विशतां सदा ।
प्रथमं स नमस्कार्यस्ततोऽहं तदनन्तरम् ।
अनेन विधिना पुंसामविघ्नं विशतां भवेत् ॥ ७४ ॥
वन्दते परया भक्त्या यो मां तत्र नरः सदा ।
पृथिव्यां स भवेद् राजा सर्वलोकनमस्कृतः ॥ ७५ ॥
गन्धैर्माल्यैश्च मे मूर्त्तिमभ्यर्च्चयति यो नरः ।
उत्पत्स्यते स देवेषु तुषितेषु न संशयः ॥ ७६ ॥
यस्तु दद्यात् प्रदीपं मे[1] पर्वते श्रद्धयान्वितः ।
सूर्यप्रभेषु देवेषु तस्योत्पत्तिर्विधीयते ॥ ७७ ॥
गीतवादित्रनृत्यैस्तु स्तुतिभिर्जागरेण वा ।
ये मे कुर्वन्ति सेवां वै मत्संस्थास्ते भवन्ति हि ॥ ७८ ॥
दध्ना क्षीरेण मधुना सर्पिषा सलिलेन वा ।
स्नापनं ये प्रयच्छन्ति ते तरन्ति जरान्तकौ ॥ ७९ ॥
यः श्राद्धे भोजनं दद्यात् विप्रेभ्यः श्रद्धयान्वितः ।
सोऽमृताशी भवेन्ननं त्रिदिवे सुरपूजितः ॥ ८० ॥
व्रतोपवासैर्होमैर्वा नैवेद्यैश्चारुभिस्तथा ।
यजन्ते ब्राह्मणा ये मां परया श्रद्धयान्विताः ॥ ८१ ॥
षष्टिवर्षसहस्राणि उषित्वा दिवि ते ततः ।
ऐश्वर्यं प्रतिपद्यन्ते मर्त्यलोके पुनः पुनः ॥ ८२ ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रः स्त्री वापि सङ्गताः ।
शैलेश्वरं तु तत्स्थानं भक्तितः समुपासते ।
मत्पार्षदास्ते जायन्ते सततं सहिताः सुरैः ॥ ८३ ॥
शैलेश्वरं परं गुह्यं गतिः शैलेश्वरः परा ।
शैलेश्वरात् परं क्षेत्रं न क्वचिद् भुवि विद्यते ॥ ८४ ॥
ब्रह्महा गुरुहा गोघ्नः स्पृष्टो वै सर्वपातकैः ।
क्षेत्रमेतदनुप्राप्य निर्मलो जायते नरः ॥ ८५ ॥
विविधान्यत्र तीर्थानि सन्ति पुण्यानि देवताः ।
येषां तोयैर्नरः स्पृष्टः सर्वपापैः प्रमुच्यते ॥ ८६ ॥
क्रोशं क्रोशं सुरैरूपं संहृत्य तच्च निर्मितम् ।
तीर्थं क्रोशोदकं नाम पुण्यं मुनिजनप्रियम् ॥ ८७ ॥
तत्र स्नात्वा शुचिर्दान्तः सत्यसन्धो जितेन्द्रियः ।
विमुक्तः किल्बिषैः सर्वैः सर्वमेव फलं लभेत् ॥ ८८ ॥

---

१. यस्तु दद्यात् त्वत्प्रदीपं मे इति ( ग ) ।

अनाशकं व्रजेद् यस्तु दक्षिणेन महात्मनः ।
शैलेश्वरस्य पुरुषः स गच्छेत् परमां गतिम् ॥ ८९ ॥
भृगुप्रपतनं कृत्वा[1] कामक्रोधविवर्जितः ।
विमानेन दिवं गच्छेद् वृतः सोऽप्सरसां गणैः ॥ ९० ॥
भृगुमूले परं तीर्थं ब्रह्मणा निर्मितं स्वयम् ।
ब्रह्मोद्भेदेति विख्यातं तस्यापि शृणु यत्फलम् ॥ ९१ ॥
संवत्सरं तु यस्तत्र स्नापते नियतेन्द्रियः ।
स ब्रह्मलोके विरजे गच्छते नात्र संशयः ॥ ९२ ॥
तत्र गोरक्षकं नाम गोवृषः पदविक्षतम् ।
दृष्ट्वा च तानि हि पुमान् गोसहस्रफलं लभेत् ॥ ९३ ॥
गौर्यास्तु शिखरं तत्र गच्छेत् सिद्धनिषेवितम् ।
यत्र सन्निहिता नित्यं पार्वती शिखरप्रिया ॥ ९४ ॥
लोकमाता भगवती लोकरक्षार्थमुद्यता ।
तस्याः सालोक्यमायाति दृष्ट्वा स्पृष्ट्वाभिवाद्य च ॥९५॥
त्यजते पतितुं तस्या अधस्तात् वाग्मतीतटे ।
उमालोके व्रजेदाशु विमानेन विहायसा ॥ ९६ ॥
स्तनकुण्डे उमायास्तु यः स्नायात् खलु मानवः ।
स्कन्दलोकमवाप्नोति भूत्वा वैश्वानरद्युतिः ॥ ९७ ॥
तीर्थं पञ्चनदं प्राप्य पुण्यं ब्रह्मर्षिसेवितम् ।
अग्निहोत्रफलं तत्र स्नानमात्रेण लभ्यते ॥ ९८ ॥
नकुलोहेन मतिमान्[2] स्नपयेत् प्रयतात्मवान् ।
जातिस्मरः स तु भवेत् सिध्यते चास्य मानसम् ॥९९॥
तस्यैवोत्तरतस्तीर्थमपरं सिद्धसेवितम् ।
नाम्ना प्रान्तकपानायं गुह्यं गुह्यकरक्षितम् ॥ १०० ॥
संवत्सरं यस्तु पूर्णं तत्र स्नायान्नरः सदा ।
गुह्यकः स भवेदाशु रुद्रस्यानुचरः सुधीः ॥ १०१ ॥
देव्याः शिखरवासिन्या ज्ञेयं पूर्वोत्तरेण वै ।
दक्षिणेन तु वाग्मत्याः प्रसुतं कन्दरोदरात् ।
तीर्थं ब्रह्मोदयं नाम पुण्यं पापप्रणाशनम् ॥ १०२ ॥
तत्र गत्वा जलं स्पृष्ट्वा स्नात्वा चाभ्युक्ष्य मानवः ।
मृत्युलोकं न पश्येत कृच्छ्रेषु च न सीदति ॥ १०३ ॥
गत्वा सुन्दरिकातीर्थं विधिना तीर्थमादिमम् ।
तत्र स्नात्वा भवेत्तोये रूपवानुत्तमद्युतिः ॥ १०४ ॥

१. भृगुप्रयतनं कृत्वेति क्वचित् पाठः । २. नकुलोहेमप्रतिमानिति वा पाठः ।

त्रिसन्ध्यं तत्र गच्छेत पूर्वेण विधिवन्नरः ।
तत्र सन्ध्यामुपासित्वा द्विजो मुच्येत किल्विषात् ।।१०५।।
वाग्मत्या मणिवत्याश्च संभेदे पापनाशने ।
अहोरात्रं वसेद् यस्तु रुद्रजापो[1] द्विजः शुचिः ।। १०६ ।।
स भवेद् वेदविद् विद्वान् यज्वा पार्थिवपूजितः ।
तारितं च कुलं तेन सर्वं भवति साधुना ।। १०७ ।।
वर्णावरोऽपि यः कश्चित् स्नात्वा दद्यात् तिलोदकम् ।
तर्पिताः पितरस्तेन भवेयुर्नात्र संशयः ।। १०८ ।।
यत्र यत्र च वाग्मत्यां स्नाति वै मानवोत्तमः ।
तिर्यग्योनिं न गच्छेत समृद्धे जायते कुले ।। १०९ ।।
वाग्मतीमणिवत्योश्च[2] संभेदो ऋषिसेवितः ।
धीमान् गच्छेत विधिना कामक्रोधविवर्जितः ।। ११० ।।
गङ्गाद्वारे तु यत्प्रोक्तं स्नानपुण्यफलं महत् ।
स्नानस्य तद्दशगुणं भवेदत्र न संशयः ।। १११ ।।
अत्र विद्याधराः सिद्धा गन्धर्वा मुनयः सुराः ।
स्नानमेतदुपासन्ते[3] यक्षाश्च भुजगैः सह ।। ११२ ।।
स्वल्पमप्यत्र यत्किञ्चिद् द्विजेभ्यो दीयते धनम् ।
तदक्षयं भवेद्दातुर्दानपुण्यफलं महत् ।। ११३ ।।
तस्मात् सर्वप्रयत्नेन करणीयं च देवताः ।
वरिष्ठं क्षेत्रमेतस्यान्नान्यदेव हि विद्यते ।। ११४ ।।
तस्मिन् श्लेष्मातकवने पुण्ये त्रिदशसेविते ।
यत्र यत्र मया देवाश्चरता मृगरूपिणा ।। ११५ ।।
आसितं स्वपितं यातं विहृतं वा समन्ततः ।। ११६ ।।
तत्र तत्राभवत् सर्वं पुण्यक्षेत्रं च सर्वशः ।। ११७ ।।
शृङ्गमेतत्त्रिधाभूतं सम्यक् प्रश्रयतामराः[4] ।
गोकर्णेश्वर इत्येतत् पृथिव्यां ख्यातिमेष्यति ।। ११८ ।।
एवं सन्दिश्य विबुधान् देवदेवः सनातनः ।
अदृश्य एव विबुधैः प्रययावुत्तरां दिशम्[5] ।। ११९ ।।

इति वाराहपुराणे भगवच्छास्त्रे भगवद्गोकर्णेश्वरमाहात्म्ये जलेश्वर-माहात्म्यवर्णनो नाम पञ्चादशाधिकद्विशततमोऽध्यायः ।

१. रुद्रयाजीति क्वचित् पाठः । २. मणिवत्याश्चेति सर्वत्र पाठः ।
३. स्नानमेकमुपासते इति तु समीचीनः । ४. सुश्रूयतां मराः इति ऐ० सो० मुद्रितपाठः ।
५. प्रयातस्तूत्तरां दिशमिति ( ग ) ।

## षोडशाधिकद्विशततमोऽध्यायः

ब्रह्मोवाच

तस्मात् स्थानादपक्रान्ते त्र्यम्बके[1] मृगरूपिणि ।
अन्योऽन्यं मन्त्रयित्वा तु मया सह सुरोत्तमाः ॥ १ ॥
त्रिधा विभक्तं तच्छृङ्गं पृथक्पृथगवस्थितम् ।
सम्यक् स्थापयितुं देवा विधिदृष्टेन कर्मणा ॥ २ ॥
स्थापितं दिवि नीत्वा वै शृङ्गाग्रं वज्रपाणिना ।
मया तत्रैव तन्मध्यं स्थापितं विधिवत्प्रभो ॥ ३ ॥
देवैर्देवर्षिभिश्चैव सिद्धैर्ब्रह्मर्षिभिस्तथा ।
गोकर्ण इति विख्यातिः[2] कृता वैशेषिकी वरा ॥ ४ ॥
विष्णुना देवतीर्थेन तन्मूलं स्थापितं ततः ।
तस्य शृङ्गेश्वर इति नाम तत्राभवन् महत् ॥ ५ ॥
तत्र तत्रैव भगवांस्तस्मिन् शृङ्गे त्रिधा स्थिते ।
सान्निध्यं कल्पयामास भागेनैकेन सोन्मनाः ॥ ६ ॥
शतं तेन तु भागानामात्मनो निहितं मृगे ।
तस्माद्विकं तु भागानां शृङ्गाणां त्रितये न्यधात् ॥ ७ ॥
मार्गेण तच्छरीरेण निर्याय भगवान् विभुः ।
शैशिरस्य गिरेः पादं प्रपेदे स्वयमात्मनः ॥ ८ ॥
शतसंख्या स्मृता व्युष्टिस्तस्मिञ्छैलेश्वरे विभोः ।
त्रिधा विभक्ते शृङ्गेऽस्मिन्नेकाग्रगतिनि प्रभोः ॥ ९ ॥
ततः सुरासुरगुरुर्देवं भूतमहेश्वरम् ।
तपसोग्रेण संसेव्य वव्रिरे विविधान् वरान् ॥ १० ॥
देवदानवगन्धर्वाः सिद्धयक्षमहोरगाः ।
श्लेष्मातकवनं कृत्स्नं सर्वतः परिमण्डलम् ।
तीर्थयात्रां पुरस्कृत्य प्रादक्षिण्यं च चक्रुः ॥ ११ ॥
फलान्निर्दिश्य तीर्थानां तथा क्षेत्रफलं महत् ।
यथा स्थानानि ते तस्मान्निवृत्ताश्च सुरादयः ॥ १२ ॥
एवं तस्मान्निवृत्तेषु दैवतेषु तदा ततः ।
पौलस्त्यो रावणो नाम भ्रातृभिः सह राक्षसैः ॥ १३ ॥

---

१. 'अम्बिके'—इति वा पाठः । २. 'विख्याता'—इति वा पाठः ।

अगम्योग्रेण तपसा देवमाराधयद् विभुम् ।
शुश्रूषया च परया गोकर्णेश्वरमव्ययम् ॥ १४ ॥
यदा तु तस्य तुष्टो वै वरदः शङ्करः स्वयम् ।
तदा त्रैलोक्यविजयं वरं वव्रे स राक्षसः ॥ १५ ॥
प्रसादात् तस्य तत्सर्वं वाञ्छितं मनसा हि यत् ।
अवाप्य च दशग्रीवस्तदिष्टं परमेश्वरात् ।
त्रैलोक्यविजयायाशु तत्क्षणादेव निर्ययौ ॥ १६ ॥
त्रैलोक्यं स विनिर्जित्य शक्रं च त्रिदशाधिपम् ।
तदुत्पाट्यानयामास पुत्रेणेन्द्रजिता सह ॥ १७ ॥
शृङ्गाग्रं यत्पुरा नीत्वा स्थापितं वज्रपाणिना ।
तदुत्पाट्यनयामास पुत्रेणेन्द्रजिता सह ॥ १८ ॥
तद्यावद्रावणः स्थाप्य मुहूर्त्तमुदधेस्तटे ।
सन्ध्यामुपासते तत्र लग्नस्तावदसौ भुवि ॥ १९ ॥
न शशाक यदा रक्षस्तदुत्पाटयितुं बलात् ।
वज्रकल्पं समुत्सृज्य तदा लङ्कां विनिर्ययौ ॥ २० ॥
स तु दक्षिणगोकर्णो विज्ञेयस्ते महामते ।
स्वयं प्रतिष्ठितस्तत्र स्वयं भूतपतिः शिवः ॥ २१ ॥
एतत्ते कथितं सर्वं मया विस्तरतो मुने ।
यथावदुत्तरस्तस्य गोकर्णस्य महात्मनः ॥ २२ ॥
दक्षिणस्य च विप्रर्षे तथा शृङ्गेश्वरस्य च ।
शैलेश्वरस्य च विभो स्थित्युत्पत्तिर्यथाक्रमम् ॥ २३ ॥
व्युष्टिः क्षेत्रस्य महती तीर्थानां च समुद्भवः ।
प्रोक्तं सर्वं मया वत्स किमन्यच्छ्रोतुमिच्छसि ॥ २४ ॥

इति वाराहपुराणे गोकर्णशृङ्गेश्वरादीनां
माहात्म्यं नाम षोडशाधिक-
द्विशततमोऽध्यायः ।



## सप्तदशाधिकद्विशततमोऽध्यायः

सनत्कुमार उवाच

उक्तं भगवता सर्वं यथावत् परमेष्ठिना ।
पृष्टेन संशयं सम्यक् परं कृत्वार्थनिश्चयम् ॥ १ ॥
भगवद् विश्वरूपस्य स्थाणोरप्रतिमौजसः ।
क्रीडतो लोकनाथस्य कानने मृगरूपिणः ॥ २ ॥
यथा शरीरं शृङ्गं च पुण्यक्षेत्रे प्रतिष्ठितम् ।
हिताय जगतस्तत्र तीर्थानि च यथाभवन् ।
तन्मे ब्रूहि महाभाग यथातत्त्वं जगत्पते ॥ ३ ॥

ब्रह्मोवाच

पुलस्त्यो वक्ष्यते शेषं यदतोऽन्यन्महामुने ।
सर्वेषामेव तीर्थानामेषां फलविनिश्चयम् ॥ ४ ॥
कुरुराज्यं पुरस्कृत्य मुनीनां पुरतो वने ।
पुत्रो मे मत्समः सम्यग् वेदवेदाङ्गतत्त्ववित् ॥ ५ ॥
यच्छ्रुत्वा पुरुषस्तात विमुक्तः सर्वकिल्विषैः ।
यशस्वी कीर्त्तिमान् भूत्वा वन्द्यते[1] प्रेत्य चेह च॥६॥
श्रोतव्यमेतत् सततं[2] चातुर्वर्ण्यैः सुसंयतैः ।
मङ्गल्यं च शिवं चैव धर्मकामार्थसाधकम् ॥ ७ ॥
श्रीभूतिजननं [3]पुण्यमायुष्यं विजयावहम् ।
धन्यं यशस्यं स्वस्तीयं पापघ्नं शान्तिकारकम् ॥ ८ ॥
श्रुत्वैवं पुरुषः सम्यङ् न दुर्गतिमवाप्नुयात् ।
कीर्तयित्वा व्रजेत् स्वर्गं कल्यमुत्थाय मानवः ॥ ९ ॥

सूत उवाच

इत्युक्त्वा भगवान् देवः परमेष्ठी प्रजापतिः ।
सनत्कुमारं सन्दिश्य विरराम महायशाः ॥ १० ॥
एतद्वः कथितं सर्वं मया तत्त्वेन सत्तमाः ।
वराहभूमिसंवादं सारमुद्धृत्य सत्तमाः ॥ ११ ॥

---

१. 'नन्दते'—इति वा पाठः । २. 'एतत्सकलं'—इति वा पाठः ।
३. चैवमिति ( ग ) ।

यश्चैव कीर्त्तयेन्नित्यं शृणुयाद् वापि भाक्तितः ।
सर्वपापविनिर्मुक्तः स याति परमां गतिम् ॥ १२ ॥
प्रभासे नैमिषारण्ये गङ्गाद्वारेऽथ पुष्करे ।
प्रयागे ब्रह्मतीर्थे च तीर्थे चामरकण्टके ॥ १३ ॥
यत्पुण्यफलमाप्नोति तत्कोटिगुणितं भवेत् ।
कपिलां द्विजमुख्याय सम्यग्दत्त्वा तु यत्फलम् ॥ १४ ॥
प्राप्नोति सकलं श्रुत्वा अध्यायं तु न संशयः ।
श्रुत्वाऽस्यैव दशाध्यायं शुचिर्भूत्वा समाहितः ॥१५॥
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ।
यः पुनः सततं शृण्वन्नैरन्तर्येण बुद्धिमान् ॥ १६ ॥
पारयेत् परया भक्त्या तस्यापि शृणु यत्फलम् ।
सर्वयज्ञेषु यत्पुण्यं सर्वदानेषु यत्फलम् ॥ १७ ॥
सर्वतीर्थाभिषेकेन यत्फलं मुनिभिः स्मृतम् ।
तत्प्राप्नोति न सन्देहो वराहवचनं यथा ॥ १८ ॥
यदेतत् पारयेद् भक्त्या मम माहात्म्यमुत्तमम् ।
अपुत्रस्य भवेत् पुत्रः सपुत्रस्य सुपुत्रकः ॥ १९ ॥
यस्येदं लिखितं गेहे तिष्ठते पूज्यते सदा ।
तस्य नारायणो देवः सन्तुष्टः स्याद्धि सर्वदा ॥ २० ॥
यश्चैतच्छृणुयाद् भक्त्या नैरन्तर्येण मानवः ।
श्रुत्वा तु पूजयेच्छास्त्रं यथा विष्णुं सनातनम् ॥ २१ ॥
गन्धपुष्पैस्तथा वस्त्रैर्ब्राह्मणानां च तर्पणैः ।
यथाशक्त्या नृपो ग्रामैः[1] पूजयेच्च वसुन्धरे ॥ २२ ॥
श्रुत्वा तु पूजयेद् यस्तु पौराणं नियतः शुचिः ।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ २३ ॥

इति वाराहपुराणे भगवच्छास्त्रे धरणिवराहसंवादे फलश्रुतिर्नाम सप्तदशाधिकद्विशततमोऽध्यायः ।



१. 'ग्रासैः'—इति वा पाठः ।

## अष्टादशाधिकद्विशततमोऽध्यायः

त्रिःसप्तषट्क्षितिमिते नृपविक्रमस्य
काले गते भगवतो हरिबोधनस्य ।
वीरेश्वरेण सह माधवभट्टनाम्ना
काश्यां वराहकथितं लिखितं पुराणम् ॥ १ ॥
काशीविश्वेश्वराभ्यां नमः[1] ।

वराहस्य पुराणस्य वृत्तान्तान् प्रब्रवीम्यहम् ।
आदौ संबन्धकथनं वृत्तान्तश्चादिकर्मकः ॥ २ ॥
आदिसृष्टिस्ततः प्रोक्ता चरितं दुर्जयस्य च ।
वृत्तान्तोद्देशभागश्च[2] श्राद्धकल्पस्ततः परम् ॥ ३ ॥

आदिवृत्तान्तकथने सरमाख्यानमेव च ।
महातपोपाख्यानं च अग्न्युत्पत्तिस्ततः परम् ॥ ४ ॥
अश्विनोरपि चोत्पत्तिर्गौर्युत्पत्तिस्तथैव च ।
विनायकस्य चोत्पत्तिर्नागोत्पत्तिस्तथैव च ॥ ५ ॥

स्कन्दोत्पत्तिश्च भानोश्च उत्पत्तिः समुदाहृता ।
कामादीनां तथोत्पत्तिः देव्युत्पत्तिस्तथैव च ॥ ६ ॥
धनदस्य तथोत्पत्तिः परापरविनिर्णयः ।
धर्मोत्पत्तिस्तथोत्पत्ती रुद्रस्य च ततः स्मृता ॥ ७ ॥

सोमोत्पत्तिरहस्यं च क्षितेश्चापि समासतः ।
उक्तः प्रागितिहासश्च व्याधोपाख्यानमेव च ॥ ८ ॥
ततः सत्यतपोपाख्या मत्स्यद्वादशिका तथा ।
कूर्मद्वादशिका चापि वराहद्वादशी तथा ॥ ९ ॥

नृसिंहद्वादशी चापि वामनद्वादशी तथा ।
भार्गवद्वादशी चापि श्रीरामद्वादशी तथा ॥ १० ॥
कृष्णद्वादशिका चापि बुद्धद्वादशिका तथा ।
कल्किद्वादशिका चापि पद्मनाभस्य द्वादशी ॥ ११ ॥

धरणीव्रतं ततः प्रोक्तं गीतागस्त्यस्य चोत्तमा ।
पशुपालस्य चाख्यानं भर्त्तृप्राप्तिव्रतं तथा ॥ १२ ॥

---

१. एष पाठः ( ग ) पुस्तके नास्ति । २. 'द्वैपभागश्चेति'—इति वा पाठः ।

शुभव्रतं धन्यव्रतं कान्तिव्रतमतः स्मृतम् ।
सौभाग्यव्रतमाख्यातमविघ्नव्रतमेव च ॥ १३ ॥
शान्तिव्रतं सामव्रतमारोग्यव्रतमेव च ।
पुत्रप्राप्तिव्रतं शौर्यव्रतं वं सार्वभौमिकम् ॥ १४ ॥
पुराणस्तवनं चैव नारायणेश्वरेण च ।
रुद्रगीता ततः पुंसां प्रकृतेश्चापि निर्णयः ॥ १५ ॥
ततो भुवनकोषस्य वर्णनं समुदाहृतम् ।
जम्बूद्वीपस्य मर्यादावर्णनं परिकीर्त्तितम् ॥ १६ ॥
भरतादिसमुद्देशः सृष्टिसम्भाग एव च ।
नारदस्य च संवादो महिषेण प्रकीर्त्तितः ॥ १७ ॥
शक्तिमाहात्म्यकथनं महिषासुरघातनम् ।
रुद्रमाहात्म्यकथनं[1] पर्वाध्यायस्ततः परम् ॥ १८ ॥
श्वेतोपाख्यानमत्रोक्तं तिलधेनुविधिस्ततः ।
जलधेनूरसधेनुर्गुडधेनुस्ततः परम ॥ १९ ॥
ततश्च शर्कराधेनुर्मधुधेनुस्ततः परम् ।
दधिधेनुश्च लवणधेनुः कार्पासधेनुका ॥ २० ॥
धन्याधेनुश्च भगवच्छास्त्रलक्षणमेव च ।
बिष्णुस्तोत्रं ततो नाना प्रश्नाः प्रोक्ता हरिं प्रति ॥२१॥
ततो भागवतानां च लक्षणं परिकीर्त्तितम् ।
लक्षणं सुखदुःखानां द्वात्रिंशदपराधकाः ॥ २२ ॥
नानामन्त्रास्ततः प्रोक्ता देवोपकरणे विधिः ।
भोज्याभोज्यस्य कथनं सन्ध्योपस्थानकारणम् ॥२३॥
वियोगिगर्भमोक्षश्च कोकामुखप्रशंसनम् ।
भगवच्छास्त्रकथने माहात्म्यं पुष्पगन्धयोः ॥ २४ ॥
रूपकारणमत्रोक्तं मायाचक्रं ततः परम् ।
कुब्जाम्रकस्य माहात्म्यं वर्णदीक्षां ततः परम् ॥ २५ ॥
कङ्कताञ्जनदर्पाणां मन्त्राः प्रोक्तास्ततः परम् ।
राजान्नभक्षणे प्रायश्चित्तं प्रोक्तं ततः परम् ॥ २६ ॥
दन्तकाष्ठाद्यकरणे प्रायश्चित्तं ततः परम् ।
शवादिस्पर्शने मन्त्रत्यागे चोक्तं तत परम् ॥ २७ ॥

---

१. पूर्वाध्याय इति ( ग ) ।

नीलवस्त्रपरिधाने क्रोधयुक्तस्य चार्चने ।
रक्तवस्त्रपरिधाने अन्धकारे प्रपूजने ॥ २८ ॥
कृष्णवस्त्रपरिधाने धौतवस्त्रस्य धारणे ।
क्रोडादिमांसभक्ते च प्रायश्चित्तं प्रकीर्त्तितम् ॥ २९ ॥
दीपोच्छिष्टस्य तैलस्य करलेपेन पूजने ।
श्मशानगमने स्पृष्टपूजने चैव शोधने ॥ ३० ॥
पिण्याकभक्षणे चैव उपानद्गूढपादके[1] ।
भगवच्छास्त्रविहिताकरणे शोधने ततः ॥ ३१ ॥
शूकरक्षेत्रमहिमा ततो जम्बूकगृध्रयोः ।
खञ्जरीटस्य चाख्यानं पुनः कोकामुखस्य च ॥ ३२ ॥
बदरीखण्डमाहात्म्यं गुह्यधर्मप्रकीर्तनम् ।
मन्दारगुह्यमहिमा शालग्रामप्रशंसनम् ॥ ३३ ॥
सोमेश्वरस्य महिमा मुक्तिक्षेत्रस्य चापि हि ।
त्रिवेण्याश्चैव माहात्म्यं माहात्म्यं गण्डकीभवम् ॥ ३४ ॥
चक्रतीर्थस्य महिमा हरिक्षेत्रसमुद्भवः ।
देवह्रदस्य चाख्यानं रुरुक्षेत्रस्य चापि हि ॥ ३५ ॥
गोनिष्क्रमस्य महिमा द्वारवत्यास्ततः परम् ।
तत्रत्य तीर्थमहिमा लौहार्गलमतः परम् ॥ ३६ ॥
मथुरातीर्थमाहात्म्यं प्रादुर्भावस्तथैव च ।
यमुनातीर्थमाहात्म्यमक्रूरस्य[2] च तीर्थकम् ॥ ३७ ॥
देवारण्यस्य माहात्म्यं चक्रतीर्थस्य चोत्तमम् ।
कपिलस्यापि महिमा तथा गोवर्धनस्य च ॥ ३८ ॥
तथा आख्यायिकायुक्तं विश्रान्तेश्च ततः परम् ।
गोकर्णस्य च माहात्म्यं सरस्वत्यास्तथैव च ॥ ३९ ॥
यमुनोद्भेदमहिमा कालिञ्जरसमुद्भवः ।
गङ्गोद्भेदस्य महिमा शापः शाम्बस्य वै तथा ॥ ४० ॥
मधुकप्रतिमायाश्च स्थापनं संप्रकीर्त्तितम् ।
शैलार्चास्थापनं चापि मृण्मयार्चास्थितिस्तथा ॥ ४१ ॥
ताम्रार्चास्थापनं चापि कांस्यार्चास्थापनं तथा ।
रौप्यार्चास्थापनं चाथ सौवर्णप्रतिमास्थितिः ॥ ४२ ॥

---

१. उपानद्गूढपादपे इति ( ग ) ।
२. अक्रूरान्त्यं च इति वा पाठः । अक्रूरासं च इति ( ग ) ।

श्राद्धोत्पत्तिस्ततः प्रोक्तं पिण्डं संकल्प एव च ।
पिण्डोत्पत्तिस्ततः प्रोक्ता पितृयज्ञविनिर्णयः ॥ ४३ ॥

मधुपर्कदानफलं संसारचक्रवर्णनम् ।
दुष्कृतकर्मकरणं सुखवर्णनमेव च ॥ ४४ ॥

कृतान्तदूतकथनं यातनारूपमेव च ।
वर्णनं नरकाणां च किङ्कराणां च वर्णनम् ॥ ४५ ॥

तथा कर्मविपाकश्च यादृशं कर्म तादृशम् ।
पापकर्मस्य कथनं दूतप्रेषणकर्म च ॥ ४६ ॥

शुभाशुभस्य कथनं शुभकर्मफलोदयम् ।
लोभनं पुरुषस्यापि निमेराख्यानमद्भुतम् ॥ ४७ ॥

प्रबोधिनीकथां दिव्यां गोकर्णेशसमुद्भवाम् ।
नन्दिनो वरदाने च जलेशशैलयोस्तथा ॥ ४८ ॥

शृङ्गेश्वरस्य महिमा एवं वृत्तान्तरसंग्रहः ।
एतच्छ्रुत्वाप्नुयान्मर्त्यो वराहश्रवणात् फलम् । ४९ ॥

इत्यनुक्रमणिका नाम अष्टादशाधिकद्वि-
शततमोऽध्यायः ।

॥ समाप्तं वाराहं शुभम् ॥

यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयताम् ॥



